"अकर्त्तरि च कारके" पा० । कर्त्तृभिन्ने, क्रियाशून्ये च "पुरुषोऽकर्त्ता भोक्ता"चेति सांख्यमतम् ।

**अकर्म्मक** त्रि० नास्ति कर्म्म यस्य ब० कप् । व्याकरणोक्ते कर्म्मशून्ये धातौ, "लः कर्म्मणि च भावे चाकर्म्मकेभ्य इति" पा० । "फलव्यापारयोरेकनिष्ठतायामकर्म्मक इति" हरि० । स्त्रियां टापि कापि अतइत्त्वम् अकर्म्मिका । "प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति" हरि ।

**अकर्म्मण्य** त्रि० न कर्म्मणे प्रभवति कर्म्मन्+यत् न०त० । कर्म्मानर्हे "अकर्म्मण्यं तिथिमलं विद्यादेकादशीं विनेति" ति०त० ।

**अकर्म्मन्** अनुपलम्भादिवत् अर्थाभावे न० त० । कर्म्माभावे "कर्म्मणोह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः । अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणोगतिरिति" गीता अकर्म्मणः अक्रियाया इति तद्भाष्यम् । दुष्टं कर्म्म अप्राशस्त्ये न० त० । दुष्टकार्य्ये "अकर्म्मादावभिरत इति स्मृति । न०ब० । कार्य्यशून्ये त्रि० "अकर्म्मा दस्युरभित" इति वेद ।

**अकल** पु० नास्ति कलाऽवयवोऽस्य । निर्गुणे परमात्मनि "विभयसाहितोऽयस्य निष्कलस्ये"त्युक्तेस्तस्य तथात्वम् । गीतादिकलाशून्ये, अवयवशून्ये च त्रि० ।

**अकल्कन** त्रि० कल्कनं दम्भ न०ब० । दम्भरहिते "अकल्कनो निरारम्भ" इति गीता । वैद्यकोक्तौषधपाकविशेष कल्कन, तच्छून्ये च । नास्ति कल्कोऽस्य ब०कप् । अकल्ककोऽप्यत्र । अत एव गीतायामकल्कक इत्यपि क्वचित् पाठ ।

**अकल्का** स्त्री० न कल्कः मलोयस्य न० ब० । निर्मलत्वेन शुभ्रायां ज्योत्स्नायाम् । मलादिशून्ये त्रि० ।

**अकल्य** त्रि० कलासु साधु कला+यत् कल्यः निरामय न० त० । अस्वास्थ्ययुक्ते । कल्यते इति कल-यत् कल्य कलनीय मिथ्याभूतं न० त० । सत्ये "अपि त्वमीनयदपनीतदोषमयस्त्वमकल्यसन्ध इति दशकु० । अकल्यसन्ध सत्यसन्ध इत्यर्थः ।

**अकवा** त्रि० न कव्यते वर्ण्यते कव-आ न०त० । अवर्णनीये "न प्रकावन्ते अकवा महोभिरिति" वेदः ।

**अकस्मात्** अव्य० न कस्मात् किञ्चित्कारणाधीनत्वं यत्र अलुक् स० । कारणानधीने अतर्कितोपनते । "कथमयमकस्मादसमचारिणामाकाशे करुणध्वनिः श्रूयते" इति नाटकम् "बालाम्बुदच्छाया कस्मादकस्मात् परिलुप्यते" इति उद्भटः । "अकस्मात् नगरोपान्ते कथं धूमायते चितेति" शाका० । पा० चार्वादिगणे तथा पाठात् न पञ्चम्या लुक् तेन आपतितमसाद्यर्थे ठञि टिलोपे आकस्मिक इति ।

**अकाण्ड** त्रि० न०त० । असमये अनुचितकाले "तातस्त्वमकाण्डे एव प्राणहरमतीकारसदसर्वमिति" नाट० । अस्य नि० एतदन्तत्वमिति केचित् । ब० । स्कन्धशून्ये वृक्षे पु० ।

**अकाम** त्रि० न कामयते काम-णिङ्-अच् । इच्छाशून्ये "नाकामो दातुमर्हतीति" स्मृति । कामनाविषयफलानभिध्यायिनि । "अकामो विष्णुकामोवेति" स्मृति स्मरविकारशून्ये च । "भयादकामाऽपि हि दृष्टिविभ्रममिति" शकु० ।

**अकामतस्** अ० अकाम+पञ्चम्यास्तसिल् । अनिच्छात इत्यर्थे "अकामतः कामचारे चौरवद्दण्डमर्हतीति" स्मृतिः ।

**अकाय** पु० नास्ति कायोऽस्य । कायशून्ये राहौ तस्य चामृताहरणकाले विष्णुना छिन्नमस्तकत्वेऽपि अमृतप्राशनेन अमरणमित्युपाख्येयम् । "अमृतास्वादनविशेषाच्छिन्नमपि शिरः किलासुरस्येदम् । प्राणैरपरित्यक्तं ग्रहता यातं वदन्त्येके इति" बृहत्स० । देहशून्ये त्रि० । परमात्मनि पु० । निष्कलस्याशरीरिणइत्युक्तेस्तस्य तथात्वम् ।

**अकार** पु० अ+स्वरूपार्थे कार । अस्वरूपे वर्णे एवमिकारादयोऽपि तत्तद्वर्णस्वरूपेषु । कार करणं न० ब० । क्रियारहिते त्रि० ।

**अकारण** त्रि० नास्ति कारणं हेतुरुद्देश्यं वा यस्य । हेतुरहिते उद्देश्यरहिते च "किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते" इति कुमा० "ततोऽकारणवैरी न "कारणादपरे परे इति" नैषधम् । निष्प्रयोजने च । न० त० । कारणभिन्ने "अकारणगुणोत्पन्ना" इति भाषा० ।

**अकारिन्** त्रि० कृ-णिनि न०त० । कर्त्तृभिन्ने, करणाक्षमे च ।

**अकार्पण्य** त्रि० नास्ति कार्पण्यं यस्य । दैन्यशून्ये, कृपणताशून्ये च ।

**अकार्य्य** न० अप्रशस्तं कार्य्यम् अप्राशस्त्ये न० त० । कुत्सितकार्य्ये निषिद्धकार्य्ये च । "अकार्य्यमिव पश्यामि स्वमांसमिव भोजनं" । "किमकार्य्यं कदर्य्याणामिति" हितो० । कर्त्तव्यभिन्ने त्रि० ।

**अकाल** पु० अप्राशस्त्ये न०त० । अप्रशस्तकाले विहितकर्म्मसु पर्य्युदस्ततयाऽभिहिते गुरुशुक्रादास्तकालादौ, स च मलमास, गुरुशुक्रबाल्यवार्द्धक्यास्तमय, सिंहमकरस्थतद्गुरुस्थिति, पूर्व्वराशिमनागतातिचारिगुरुकवत्सर, पूर्व्वराशिसंक्रमिप्रमाचारि चारिगुरुकपक्षत्रय, पक्षग्रस्तात्रयोदशतिदिवस, भूमिकम्पाद्युत्पाताह, सिंहादित्य, गुर्वादित्य, पौषमासचतुर्दशाद्य—

अक्षसंख्या (योजनसंख्या) भवतीति । निरक्षदेशात् क्षितिषष्ठांशे किल मेरुरत्र भवति" पलांशाः (अक्षांशाः) इति च तत्रैवोक्तम् । पाशके कर्षपरिमाणे च न० विभीतकवृक्षे (वयडा) तुषे, आत्मनि रुद्राक्षे सर्पे जाताक्षे गरुडे च पु० । तत्र रुद्राक्षे अक्षमाला । कर्म अनुभवति धाराभिरक्षमालाभिरिति, विभीतके "यथा वै द्वे आमलके, द्वे वा कोले द्वौ वाक्षौ इति" श्रुतिः । व्यवहारे अक्षदर्शकः । रावणसुतभेदे पु० । तत्कथा रामा० सु० ४१ अ० ।

अक्षक पु० अक्ष इव कायति कै-क । तिनिशवृक्षे । स्वार्थे कन् । अक्षशब्दार्थे प्रकृतिलिङ्गम् । [कम् । तत्रैव ।

अक्षकूट पु० अक्षस्य चक्षुषः कूटइव । नेत्रतारायाम्, स्वार्थे

अक्षक्षेत्र न० अक्षनिमित्तं क्षेत्रम् शा०त० । ज्योतिषोक्तेषु अक्षसाधनार्थं क्षेत्रतया कल्पितेषु अक्षभवेषु अष्टसु क्षेत्रेषु । तानि च सिद्धान्तशिरोमणौ गणिताध्याये दर्शितानि यथा । "भुजोऽक्षभा कोटिरिनाङ्गुलो ना कर्णोऽक्षकर्णः १ खलु मूलमेतत् क्षेत्राणि यान्यक्षभवानि तेषां विद्धेव मानार्थयश ग्रसा-माम् ॥ लम्बज्यका कोटिरथाक्षजीवा भुजोऽत्र कर्णस्त्रिभज्या २ त्रिभज्या । कुज्या भुजः कोटिरपक्रमज्या कर्णोऽग्रका च त्रिभुजं तथेदम् ३ ॥ तथैव कोटिः समवृत्तशङ्कुर्ज्या भुजस्तद्धृतिरत्र कर्णः ४ । भुजोऽपमज्या समना च कर्णः कुज्योनिता तद्धृतिरत्र कोटिः ५ ॥ अग्रादिखण्डं कथिता च कोटिस्तद्धृतमा दोः श्रवणोऽपमज्या६ । उन्नता कोटिरथाग्रकाग्रखण्डं भुजस्तच्छ्रवणः क्षितिज्या ७ ॥ खण्डं यदूर्ध्वं समवृत्तशङ्कोर्यस्तद्धृतेस्तावथ कोटिकर्णौ । अग्रादिखण्डं भुजः ८ एवमष्टौ क्षेत्राण्यमून्यक्षभवानि तावत् ॥" क्षेत्राणि दर्शयेत्, "तत्र दक्षिणोत्तरमण्डले विषुवद्वृत्तसम्पातादधो यावांल्लम्बः क्षितिजसमसूत्रपर्यन्तं सा तत्र कोटिः, लम्बनिपातकुमध्ययोरन्तरं साऽक्षज्या तत्र भुजः, भूमध्याल्लम्बाग्रगामिसूत्रं त्रिज्या सा तत्र कर्णः, इदमाद्यक्षेत्रम्, इष्टाहोरात्रवृत्तं यत्र क्षितिजे लग्नं तस्य प्राक्स्वस्तिकस्य चान्तरमग्रा (चापांशाः) तेषां ज्याऽग्रा तावती च प्रत्यक्क्षितिजे अग्राग्रयोर्मिथः सूत्रमुदयास्तसूत्रम् अहोरात्रवृत्तोन्मण्डलसम्पातस्य प्राच्यपरसूत्रस्य च यदन्तरं सा क्रान्तिज्या, सा तत्र कोटिः, अग्रा कर्णः, तदग्रयोरन्तरं सा कुज्या स भुजः इदमपरक्षेत्रम्, तथाहोरात्रवृत्तसममण्डलसम्पातादधोवलम्ब, समवृत्तशङ्कुः सा कोटिः, अग्रा भुजः, अहोरात्रवृत्ते व्यासखण्डक तद्धृतिः कर्णः, इदमपरम्, तथा कुज्योनिता तद्धृतिरहोरात्रवृत्ते व्यासार्धं सा कोटिः, उन्मण्डले क्रान्तिज्या स भुजः, समवृत्तशङ्कुः कर्णः, इदमन्यक्षेत्रम्, तथाहोरात्रोन्मण्डलयोः सम्पातादवलम्ब उन्मण्डलशङ्कुः स भुजः, उन्मण्डलवृत्ते क्रान्तिज्या कर्णः, उन्मण्डलशङ्कुमूलस्य प्राच्यपरसूत्रस्य च यदन्तरं तदग्रादिखण्डं सा तत्र कोटिः, इदमपरक्षेत्रं, तथोन्मण्डलशङ्कुः कोटिः, शङ्कुमूलोदयास्तसूत्रयोरन्तरमग्राग्रखण्डं स भुजः, कोटिभुजाग्रयोरन्तरसूत्रं सा कुज्या स तत्र कर्णः, इदमपरक्षेत्रं, तथोन्मण्डलशङ्कुना हीनः समशङ्कुस्तत्समशङ्कोरूर्ध्वखण्डं सा कोटिः, कुज्योना तद्धृतिस्तद्धृतेरूर्ध्वखण्डं स कर्णः, अग्रादिखण्डं स भुजः, इदमपरक्षेत्रम् एतान्यष्टौ तावत्कथितानि एवमन्यान्यपि भवन्ति ।

अक्षज न० अक्षात् इन्द्रियसन्निकर्षात् जायते जन-ड । इन्द्रियविषयसन्निकर्षोत्पन्ने प्रत्यक्षज्ञाने वज्रे अरिवक्ष्मा-ययजातत्वात्तस्य तन्नामत्वम् । प्रागुक्ताक्षजाते त्रि० । ज्योतिषोक्ते अक्षभवे क्षेत्रादौ च ।

अक्षणिक त्रि० न क्षणिकः न० । स्थिरे निश्चले च । "हरिवीक्षणादक्षणिकचक्षुषेति" माघ । अक्षणिकचक्षुषा स्थिरदृष्ट्या स्तिमितनेत्रयेत्यर्थ इति मल्लिनाथ ।

अक्षण्वत् त्रि० अक्षमस्यास्ति मतुप् मस्य व । नेत्रयुक्ते "पश्यदक्षण्वान्न विचेद्" इति "अक्षण्वन्तः कर्णवन्तः सखायो" इति च वेदः ।

अक्षत पु०न० न क्षतः । "अक्षताश्च यवाः प्रोक्ता इति का० स्मृत्युक्ते यवे । नपुंसकमिति केचित् "दूर्वाक्षतानि" चेति पुराणम् । तण्डुले, "अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकमिति" तन्त्रम् । शस्यमात्रे न० । क्षतयुक्तभिन्ने उपकर्णान्विते अविदारिते च त्रि० । "अक्षता वा क्षता वा पीति" मनुः । क्षण-भावे क्त न०त० । क्षताभावे न० । "अक्षतञ्चारिष्टं चास्तु" इति श्राद्धविमसमीपे कृतकर्मणोऽक्षयप्रार्थना ।

अक्षदर्शक पु० अक्षाणामृणादानादिव्यवहाराणां दर्शकः दृश-ण्वुल् ६त० । विवादनिर्णेतरि धर्माधिकरणाध्यक्षे । द्यूतदर्शके त्रि० ।

अक्षदृश् पु० अक्षान् व्यवहारान् पश्यति दृश-क्विन् कुत्वम् । अक्षदर्शकशब्दार्थे । अक्षार्थद्रष्टरि त्रि० ।

अक्षदेविन् त्रि० अक्षैर्दीव्यति दिव-णिनि ३त० । पाशकादि द्यूतक्रीडाकारके । [कारके ।

अक्षद्यु त्रि० अक्षैर्दीव्यति दिव-क्विप् ऊठ् । पाशकादिद्यूत-

**अक्षद्यूत** न० अक्षैर्द्यूतम् ३त० । पाशकादिक्रीडायाम् ।

**अक्षद्यूतादि** पु० ब०। "निर्वृत्तेऽक्षद्यूतादिभ्य" इति पाणिन्युक्ते ठक्प्रत्ययनिमित्ते शब्दसमूहे । स च अक्षद्यूत, जानुप्रहृत, जङ्घाप्रहृत जङ्घाप्रहृत, पादस्वेदन, कण्टकमर्द्दन, गतानुगत, गतागत-यातोपयात, अनुगत इति । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिक वैरमित्यादि ।

**अक्षधर** पु० अक्षं चक्रं रथावयवं तत्कीलकमिव कण्टकं वा धरति धृ-अच् ६त० । विष्णौ चक्रे शाखोटकवृक्षे च चक्रधारकमात्रे त्रि० । [समा०। चक्राग्रे चक्रभारे च ।

**अक्षधुर्** स्त्री० अक्षस्य चक्रस्य धूरग्रं भारो वा ६त० न च

**अक्षधूर्त्त** त्रि० अक्षे तद्देवने धूर्त्तः । द्यूतकर्म्मणि द्यूतकारिणि च (जुयारि)। [शकटवाहनकर्त्तरि वृषे ।

**अक्षधूर्त्तिल** पु० अक्षस्य शकटस्य धूर्त्तिं भारं लाति ला-क ।

**अक्षन्** न० अक्ष-बाहु० कनिन् । नेत्रे "दक्षिणेऽक्षन्" इति वृह० उप० "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः" इति वेदः ।

**अक्ष(क्षि)पटल** न० अक्ष्णः नेत्रस्य पटलमिवाच्छादकत्वात् । नेत्रस्यावरके कोषभेदे नेत्ररोगभेदे (छानि) च । पटलस्य रोगभेदादि सुश्रुते उक्तं यथा
"मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम् । खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः ॥ आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् । शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥ रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे । पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम् ॥ सिराभिरभिसम्प्राप्य विगुणोऽभ्यन्तरे भृशम् । प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः ॥ अव्यक्तानि स रूपाणि सर्वाण्येव प्रपश्यति । दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते । मक्षिकाः मशकान् केशान् जालकानि च पश्यति । मण्डलानि पताकाश्च मरीचीः कुण्डलानि च ॥ परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा । दूरस्थान्यपि रूपाणि मन्यते च समीपतः ॥ समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् । यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥ ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते । महान्त्यपि च रूपाणि च्छादितानीव वाससा ॥ कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते ॥ यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि ॥ अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते । पार्श्वस्थिते तथा दोषे पार्श्वस्थानीव पश्यति ॥ समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति। दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥ द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते । तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः ॥ रुणद्धि सर्वतो दृष्टिं लिङ्गनाशः स उच्यते । तस्मिन्नपि तमोभूते नातिरूढे महागदे ॥ चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः । निर्म्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ॥ स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः" इति ।
अक्षाणां व्यवहाराणां पटलमक्षस्य च ६त० । अक्षदर्शके धर्म्माध्यक्षे पु० ।

**अक्षपरि** अव्य० अक्षेण पाशकेन विपरीतं वृत्तम् । अक्षशलाकेत्यादिना परिणा अव्य० । पाशकक्रीडायां यथा गुटिकापाते जयो भवति तद्विपरीतपातने ।

**अक्षपाटक** पु० अक्षे व्यवहारे पाटयति दीप्यते पट दीप्तौ-ण्वुल् । व्यवहारनिर्णेतरि धर्म्माध्यक्षे ।

**अक्षपाद** पु० अक्षं नेत्रं दर्शनसाधनतया जातः पादोऽस्य । न्यायसूत्रकारके गौतमे मुनौ, स हि स्वमतदूषकस्य व्यासस्य मुखदर्शनं चक्षुषा न कर्त्तव्यमिति प्रतिज्ञाय पश्चात् व्यासेन प्रसादितः पादे नेत्रं प्रकाश्य तं दृष्टवानिति पौराणिकी कथा । "अक्षपादप्रणीते च काणादे सांख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोऽंश इति" पद्मपुराणम् ।

**अक्षपीडा** स्त्री० अक्षमिन्द्रियं रसनारूपं पीडयति आस्वादनात् पीड-अच् । यवतिक्तालतायाम् । पीड-भावे अङ्+६त० । इन्द्रियपीडायाम् ।

**अक्षम** त्रि० न क्षमते क्षम-अच् न० त० । असमर्थे । क्षम-भावे अङ् क्षमाया अभावे न० त० । क्षमाभावे ईर्ष्यायाम् स्त्री । "अक्षमा भवतः केयमिति" भारतम् । न०ब० । क्षमारहिते त्रि० ।

**अक्षमाला** स्त्री अक्षाणां रुद्राक्षाणां माला । रुद्राक्षबीजग्रथितमालायाम् । अकारादिक्षकारान्तः अक्षस्तत्कृता तत्प्रतिनिधीभूता वा माला शा० त० । एकपञ्चाशद्वर्णमालायाम् तत्प्रतिनिधीभूतायां स्फटिकादिग्रथितायाम् वाक्प्रमालायाञ्च "शोध्यमानघुसृणस्फुटबीज घण्यमनाक्षमालमिति" काद०। "विभान्तमक्षस्फटिकाक्षमालयेति" माघः । तद्विवरणम् । "क्रमोत्क्रमगते माला मातृकार्णैः सुमेरुके । आवर्त्तनैः साष्टवर्गैरन्तर्यजनकर्म्मणीति" सनत्कुमारीये । "पद्मबीजादिभिर्माला बहिर्यागे प्रशस्यताः । रुद्राक्षपद्मपद्माक्षपुत्रजीवकमौक्तिकैः । स्फाटिकैर्मणिरत्नैश्च सुवर्णैर्विद्रुमैस्तथा । रजतैः कुशमूलैश्च गृहस्थस्याक्षमालिकेति" तन्त्रसारे एतद्विचारस्तत्रागन्तव्यः । अक्षस्य

नक्षत्रचक्रस्य मालेव भूषणत्वात्। अरुन्धत्यां, सा हि उत्तरस्यां दिशि गगने सप्तर्षिमण्डलचक्रे वशिष्ठसमीपे-मालाक्रमेण वर्त्तते सर्व्वेभ्यश्च उज्ज्वलत्वात्तस्या मालाक्रमेण स्थितत्वाच्च नक्षत्रचक्रभूषणत्वम्।

**अक्षय** त्रि० नास्ति क्षयोऽस्य। क्षयरहिते सर्व्वदा वर्त्तमाने "गयायामक्षयवटे पितॄणां दत्तमक्षयमिति" वायुपुराणम् "अभिजिद्रोहिणोदये यद्दत्तं दीयते अन्नोत्सदक्षयस्तदा-हृतमिति" स्मृतिः। परमात्मनि पु०। क्षयोनास्ति, तच्छून्ये अनिकेतने संन्यासिनि, दरिद्रे च। अक्षय पुण्य-मत्रास्ति अच्। अक्षयपुण्यसाधने तिथिभेदे च "अमा वै सोमवारेण रविवारेण सप्तमी। चतुर्थी भौमवारेण अक्ष-यादपि चाक्षयेति" भविष्यपुराणम्।

**अक्षयतृतीया** स्त्री कर्म्म०। वैशाखशुक्लपक्षतृतीयायाम्। "वैशाखे मासि राजेन्द्र! शुक्लपक्षे तृतीयिका। अक्षया सा तिथिः प्रोक्ता कृत्तिकारोहिणीयुता। तस्यां दानादिकं सर्व्वमक्षय समुदाहृतमिति"। "या शुक्ला कुरुशार्दूल! वैशाखे मासि वै तिथिः। तृतीया साक्षया लोके गीर्व्वाणैरभिवन्दि-तेति" च भविष्यपुराणम्। "वैशाखस्य सिते पक्षे तृतीयाऽ-क्षयसंज्ञितेति" स्कन्दपुराणम्।

**अक्षय्य** त्रि० क्षेतुं शक्यं क्षि-यत् नि० न०त०। क्षयानर्हे। अक्षये च "तेषां पिण्डो मया दत्तोह्यक्षय्यमुपतिष्ठतामिति" वायु०

**अक्षय्योदक** न० अक्षय्य अक्षय्य उदक यत्र श्राद्धे पिण्ड दानानन्तर देये मधुतिलमिश्रिते उदके। "अक्षय्योदक दानन्तु अर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्य्यात् न चतुर्थ्यां कदाचनेति" छन्दोगप०।

**अक्षर** न० न क्षरतीति क्षर-चलने अच् न०त०। परम-ब्रह्मणि कूटस्थे चैतन्ये "अक्षरं परमं ब्रह्मेति" गीता। क्रियाशून्ये त्रि० जीवे परमात्मनि च पु०। "क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते इति "यस्मात् क्षरमतीतो-ऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति" च गीता। क्षरणशून्ये स्थिरे त्रि०। अश्नुते व्याप्नोति वेदादिशास्त्राणि अश-सरन्। अकारादि-वर्णे न० "अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य चेति" गीता। वर्णाकारलिपिसन्निवेशे, "अक्षरं वर्णनिर्माणं वर्णमप्यक्षरं विदुः। अक्षरं न क्षरं विद्यादश्नोतेर्वा सरे-ऽक्षरमिति" उज्ज्वल०। उदके मोक्षे च न०।

**अक्षरचणा** त्रि० अक्षरेण वर्णविन्यासक्रियया वित्तः अक्षर+चणप्। लेखकजीवके। [चु(च)ञ्चुप्। लेखकजीवके।

**अक्षर(चु)चञ्चु** त्रि० अक्षरेण वर्णविन्यासक्रियया वित्तः अक्षर+

**अक्षरच्छन्दस्** न० अक्षरेण वर्णसंख्यया कृतं छन्दः। वर्ण-वृत्ते "छन्दस्तु द्विविधं प्रोक्तं वृत्त जातिरिति द्विधा वृत्त-मक्षरसंख्यातं जातिर्मात्राकृता भवेदिति" छन्दोम० तस्य च तत्कृतत्वात्तथात्वम्। अक्षरं नियत छन्दोऽभि-प्रायोऽस्य ब०। परमेश्वरे पु०। दृढाध्यवसाये त्रि०।

**अक्षरजननी** स्त्री अक्षराणां जननीव। लेखन्याम् (कलम्)।

**अक्षरजीवक** त्रि० अक्षरेण तल्लिपिलेखनेन जीवति जीव-ण्वुल् ३त०। अक्षरलेखनोपजीवके।

**अक्षरतूलिका** स्त्री अक्षराणां तल्लिपिलेखानां तूलिकेव साधनत्वात्। लेखन्याम् (कलम्)।

**अक्षरन्यास** पु० अक्षराणि तदाकारकाकारविशेषा न्यस्यन्ते अत्र+नि+अस-आधारे घञ् ६त०। लिप्याम्, पत्रिकायाम्। भावे घञ् ६त०। अक्षराकाररेखा-द्याकारविशेषलेखने, हृदयाद्याधारस्पर्शपूर्व्वक तत्तदक्ष-राणां आरोपणक्रमे तन्त्रप्रसिद्धे वर्णन्यासे, "सबिन्दुं वा न्यसेदेताम् निर्ब्बिन्दुं वा यथाक्रममिति" तन्त्रम्। विस्तारः मातृकान्यासशब्दे द्रष्टव्यः। अक्षरविन्यासो-ऽस्त्यत्रार्थेषु। [प्रयोऽस्य। लिपिलेखनोपजीविनि।

**अक्षरजीविक** त्रि० अक्षर तल्लिपिलेखनं जीविका वर्त्तनो-

**अक्षरजीविन्** त्रि० अक्षरेण तल्लिपिलेखनेन जीवति जीव-णिनि ३त०। अक्षरलेखनेन वृत्तिनिर्व्वाहकारके। स्त्रियां ङीप्।

**अक्षरमुख** त्रि० अक्षराणि तन्मयानि शास्त्राणि वा मुखे यस्य। शास्त्राभिज्ञे अक्षराभिज्ञे च ६त०। अकारादिमे वर्णे न०।

**अक्षरशस्** अव्य० अक्षरमक्षरमिति वीप्साय कारके शस्। प्रत्यक्षरमित्यर्थे, "पञ्च अक्षरशः इति" स्मृतम्।

**अक्षरसंस्थान** न० अक्षराणां तदाकाररेखाविशेषाणां संस्थानमत्र ब०। वर्णाकार-रेखाविशेषयुक्त-लिप्याम्। "लिखिताक्षरसंस्थानमित्यमरः"।

**अक्षराङ्ग** न० अक्षराणामङ्ग तदाकाररेखाविशेषाणामवयवः ६त०। लिप्याम्, लेखनसाधनद्रव्ये च।

**अक्षराज** पु० अक्षेण तत्क्रीडया राजेव। द्यूतासक्ते।

**अक्षरी** स्त्री अश्नुते गगनाभोग मेघैः अश-सरन् गौ० ङीप्। वर्षायाम्

**अक्षवती** स्त्री अक्षाः पाशकाः साधनत्वेन विद्यन्तेऽत्र अक्ष+मतुप् मस्य व ङीप्। द्यूतक्रीडायाम्।

**अक्षवाट** पु० अक्षाणां पाशकक्रीडानां वाटः वाचस्थानम्।

द्यूतस्थाने, पाशकाधारे फलके च। अक्षस्य रथचक्र धुरस्थानस्येव पाटः। मल्लभूमौ तत्र हि रथचक्रधुर-पांशुसदृशपांशुमत्त्वात् तत्सदृशत्वम्।

**अक्षविद्** त्रि० अक्षं पाशकक्रीडां व्यवहारं वा वेत्ति विद-क्विप्। अक्षविद्याभिज्ञे व्यवहाराभिज्ञे च अक्षवेत्त्रादयो ऽप्यत्र। स्त्रियाम् अक्षवेत्त्री।

**अक्षविद्या** स्त्री ६त०। पाशकादिद्यूतविद्यायाम्।

**अक्षवृत्त** न० अक्षं राशिचक्ररूपं वृत्तं वेष्टनाकारं कोण शून्यं क्षेत्रम्। राशिचक्ररूपे वृत्तक्षेत्रे। अक्षे पाशक क्रीडायां वृत्तः व्यापृतः ७त०। पाशकक्रीडासक्ते "यदक्ष-वृत्तमनु दत्त न एतदिति" श्रुतिः। [द्यूतक्रीडाकुशले।

**अक्षशौण्ड** पु० अक्षेषु तत्क्रीडायां शौण्डः प्रवीणः ७त०।

**अक्षसूत्र** न० अक्षस्य जपमालायाः सूत्रम्। जपमालाग्रथ नसाधने सूत्रे "साक्षसूत्रकमण्डलुरिति" पुराणम्।

**अक्षाग्रकीलक** न० अक्षस्य रथनाभिक्षेत्रस्थापनस्य कीलकम्। ६त०। चक्रनाभिक्षेत्राग्रप्रोते कीलके।

**अक्षानह्** न० अक्षे चक्रे आनह्यते बध्यते आ+नह-क्विप्। चक्रसंबद्धे काष्ठभेदे। "अक्षानहो नह्यतनोत सोम्या" इति वेदः। [क्रोधे च। न०ब०। क्षमाशून्ये त्रि०।

**अक्षान्ति** स्त्री० क्षम-क्तिन् विरोध्यर्थे न०त०। ईर्ष्यायां,

**अक्षारलवण** त्रि० क्षारेण उपरमृत्तिकया निर्वृत्तं क्षण् क्षारं कृत्रिमं लवणं न०त०। अकृत्रिमलवणे "मुन्य-न्नानि पयः सोमोमांसं यच्चानुपाकृतम्। अक्षारलवणञ्चै-वेति" मनुः। "चतुर्थकालमश्नीयादक्षारलवणं तथेति" मनु अक्षारलवणमकृत्रिमलवणमितिमाध० रघु०। क्षार-लवणभिन्ने सैन्धवलवणे न०। "नैतस्या रात्राधन् पचेयुस्त्रिरात्रमक्षारलवणाशिनः सुहृदिक्षरात्रं मह्य-गुरुष्विति, आश्वलायनगृह्यम्।" अक्षारलवणं क्षार-मृत्तिकादि-कृतलवणभिन्नं सैन्धवं समुद्रि चेति मु० रघु०। "गोधौरं गोघृतञ्चैव धान्यमुद्गाक्तिलायवाः। सामुद्रं सैन्धवञ्चैव अक्षारलवणं स्मृतम्" इति स्मृत्युक्ते गोघृतादि-द्रव्यगणे च।

**अक्षावपन** न० अक्षान् पाशकान् आवपति क्षिपत्यस्मिन् आ+वप-आधारे ल्युट् ६त०। पाशकपातनाधारे फलके।

**अक्षावली** स्त्री ६०त०। जपसाधन-रुद्राक्षबीजावली जप-मालायाम् "रत्नावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती"तिकाद०।

**अक्षावाप** त्रि० अक्षान् पाशकान् आवपति क्षिपति आ+वप-अण् उप०स०। द्यूतकारके, तदध्यक्षे च।

**अक्षि** न० अश्नुते विषयान् अश-क्सि। नेत्रे, इन्द्रियमध्ये तस्यैव विषयदेशं प्राप्य विषयग्राहकत्वं सर्व्वशास्त्रसम्मतमन्ये-षान्तु सर्व्वमते न तथात्वमतोऽस्य विषयव्यापकता। एतदन्त बहुव्रीहेः स्वाङ्गपरत्वे षजन्तता पद्माक्षः पद्माक्षी, अस्वाङ्ग-परत्वे अजन्तता दीर्घाक्षा वेणुयष्टिः, अव्ययीभावे अजन्तता प्रत्यक्षं समक्षमित्यादि तत्पुरुषे ऽस्वाङ्गपरत्वेऽजन्तता गवाक्षः। इदञ्च शब्दादिषु षाड्ग्रेन्द्रियग्राह्यविशेषगुणेषु मध्ये रूपस्यैव ग्राहकतया तैजसं नेत्रगोलकेऽधिष्ठितं किञ्चित् वस्तु। तैजसत्वाच्चास्य सूर्य्यादिकिरणवदाशुदूरपर्य्यन्ता-नुधावनमागमनञ्च। तच्च परमाणुतुल्यमिति नैयायि-कादयः तदपेक्षया स्थूलमिति सांख्यादयः। उभयमते-ऽपि न तस्य प्रत्यक्षयोग्यता। तदाधारगोलके द्वे बाह्ये आन्तराणि च चत्वारि कोषवत् पटलानि, मांसादयः पञ्चांशाः, पक्ष्मादीनि पञ्च मण्डलानि षट् सन्धयश्च सन्ति। तद्विवरणं यथा "विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम्। द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषग्नयनबुद्बुदम्॥ सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम्। पलं भुवो, ऽग्नितो, रक्तं, वातात् कृष्णं, सित जलात्॥ आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे। दृष्टिश्चात्र तथा वक्ष्ये यथाबादीहिविशारदः॥ नेत्रायामत्रि-भागन्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः॥ मण्डलानि च सन्धींश्च पटलानि च लोचने। यथाक्रमं विजानीयात् पञ्च षट् च षडेव च॥ पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां (५) मण्डलानि तु। अनुपूर्व्वन्तु तन्मध्यास्त्वत्वारोऽन्ये यथोत्तरम्॥ पक्ष्मवर्त्मगतः सन्धिर्वर्त्म शुक्लगतोऽपरः। शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपर॥ ततः कनीनकगतः षष्ठश्चापाङ्गग स्मृत। द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि। जायते तिमिरं येषु व्याधिः परमदारुणः। तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम्॥ मेदस्तृतीयं पटलमाश्रितन्त्वस्थि चापरम्। पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते इति सुश्रुते॥

**अक्षिक** पु० अक्षाय चक्रावयवाय हितम् ठन्। रञ्जनद्रुमे (आतरुच)। [तारायाञ्च।

**अक्षिकूटक** न० अक्ष्णः कूट इव कन्। नेत्रगोलके नेत्र-

**अक्षिगत** त्रि० अक्ष्णि गतः सर्व्वदाभावनावशादसन्नि कृष्टोऽपि उपस्थित इव। द्वेष्ये शत्रौ नेत्रगोचरे च। "त्वयि किलाक्षिगते भयमैस्त्रिभिरिति नै०। [तुल्यत्वम्।

**अक्षितर** न० अक्षीव तरति तॄ-अच्। जले निर्मलत्वादक्ष

**अक्षिभ्रू** स्त्री अक्ष्णः भ्रूविषयः। चक्षुर्गोचरे प्रत्यक्षे, सत्ये

पैतृमपितं पारिमएडलमिति” रघु॰ । “न गिराखिल-यापि वापिका प्रससाद प्रतिच्छेन मानिनीति” नै॰ ।

**अग** इदित् गतौ भ्वादि॰ पर॰ । अङ्गति । आङ्गीत् । ल्युट् अङ्गनम् असुन् अङ्गः । [यति ।

**अग** वक्रगतौ भ्वादि॰पर॰घटादि । अगति आगीत् । अग-

**अग** पु॰ न गच्छतीति गम-ड न॰त॰ । वृक्षे, पर्व्वते, च । गमनाकर्त्तरि भूमृदादौ त्रि॰ । न गच्छति वक्रगत्या पश्चिमम् । सूर्य्ये तस्य हि वक्रगत्यभावः ज्योतिषप्रसिद्धः । “वक्रयोरगतिश्चैव भवेत् भौमादिपञ्चके” इत्युक्तेः आर्य्यभट्ट मते तु पृथिव्या एव गतिमत्त्वेन दिनरात्रिसम्भवात् सूर्य्यस्य न गतिमत्त्वम् । सप्तर्षिव्याख्याञ्च कुलाचलानां सप्तत्वेन तेषाञ्च प्राधान्यात् “प्रधानेन व्यपदेशा भवन्तीति” न्यायात् तथात्वम् ।

**अगच्छ** पु॰ गम-श॰ न न॰त॰ । वृक्षे ।

**अगज** न॰ अगात् पर्व्वतविशेषात् जायते जन-ड । शिला-जतुद्रव्ये । पर्व्वतजातमात्रे त्रि॰ ।

**अगण्य** त्रि॰ गणयितुमशक्यम् गण-शक्यार्थे यत् न॰ त॰ । गणयितुमशक्ये असङ्ख्ये । “गुणैरगण्यैरतियोगयाजिभि-रिति” । अर्हे यत् न॰त॰ । गणनानर्हे, अकिञ्चित्करे त्रि॰ ।

**अगति** स्त्री गम-क्तिन् न॰त॰ । उपायाभावे । बहु॰ । गतिशून्ये, उपायशून्ये च त्रि॰ । स्वार्थे कन्, शेषाद्वा कप् तत्रैवार्थे त्रि॰ “मामगतिकमिति” शङ्कराचार्य्यः ।

**अगद** पु॰ नास्ति गदो रोगो यस्मात् ५ब॰ । औषधे इब॰ । “औषधान्यगदोविद्या दैवी च विविधा स्थितिः । तपसैव प्रसिध्यन्तीति” पुराणम् । रोगशून्ये त्रि॰ । गद-भाषणे अच्-न॰त॰ । अकथके त्रि॰ । [दीत् ।

**अगद** नीरोगत्वे कण्ड्वा॰ पर॰ । अगद्यति आगद्यीत्—आग-

**अगदङ्कार** पु॰ अगदं करोति अगद+कृ-अण् मुम् च । वैद्ये । [न्तरि त्रि॰ ।

**अगम** पु॰ न गच्छतीति गम-अच् न॰त॰ । वृक्षे । अग-

**अगम्य** त्रि॰ न-गन्तुमर्हति गम-यत् न॰त॰ । गमनानर्हे “अगम्या सा भवस्त्र यत्राभूत् न महारथ इति” भारते । अन्त्यजातिस्त्रिया स्त्री । “अगम्यां च स्त्रियं गत्वेति” “अगम्यागमनञ्चैव जातिभ्रंशकराणि षडिति” च स्मृति दुर्बोध्ये “योगिनामप्यगम्योऽसाविति” पुराणम् ।”

**अगदी** स्त्री नास्ति गदो विषं यस्याः ५ब॰ गौ॰ ङीष् । भूमिक-विषहारिणि देवताडवृक्षे । विषहारिणि द्रव्यमात्रे त्रि॰ ।

**अगरु** न॰ न गिरति गॄ-उ न॰त॰ । सनामप्रसिद्धे अगुरु-चन्दने । “कौसुमस्रजमेताञ्च चन्दनागरुचर्च्चितामिति” दुर्गापूजामन्त्रः “चन्दनागुरु” इति पाठान्तरम् ।

**अगर्हित** त्रि॰ न॰त॰ । निन्दितभिन्ने शुद्धे, “यत्किञ्चित्-स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितमिति” स्मृतिः ।

**अगस्ति** पु॰ अगम् विन्ध्याचलम् अस्यति अस्—क्तिच् शक-न्ध्वादि॰ । अगस्त्यनामके मुनौ । अगस्त्यस्यापत्यानि बहुषु यञो लुक् । तद्गोत्रापत्येषु ब॰व॰ । तत्सम्बन्धित्वात् दक्षिणस्यां दिशि । अगस्त्यजन्मकथा च । “तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्व्वशीम् रेतश्चस्कन्द तत् कुम्भे न्यपतद्वासतीवरे तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ, अगस्त्यश्च वशिष्ठश्च तावृषी सम्बभूवतुः । बहुधा पतितं रेतः कलसे च जले स्थले । स्थले वशिष्ठस्तु मुनिः संभूत ऋषिसत्तमः । कुम्भे-त्वगस्त्यः सम्भूतः जले मत्स्यो महाद्युतिः । उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः इति” पुराणम् । तस्य च विन्ध्याचलस्तम्भनकथा काशीखण्डेऽनुसन्धेया । बृहत्-संहितायामस्य गगनमण्डले दक्षिणस्यां ताराकृपेण स्थिति-रुक्ता तच्च अगस्त्यचारशब्दे द्रष्टव्यम् ।

**अगस्तिद्रु** पु॰ अगस्तिप्रियः द्रुमः शाक॰ त॰ । वकवृक्षे । अगस्तिवृक्षादयोऽप्यत्र ।

**अगस्त्य** पु॰ अगं विन्ध्याचलं स्त्यायति स्तभ्नाति स्त्यै-क । अगस्त्यनामके मुनौ । अगस्त्यचरितामाशां प्रतस्थे दिग्-जिगीषयेति” रघुः । वस्त्या॰ यञ् । अगस्त्यस्यापत्ये ।

**अगस्त्यगीता** स्त्री अगस्त्येन गीता विद्याभेदः । भारते शान्तिपर्व्वणि प्रसिद्धे विद्याभेदे ।

**अगस्त्यचार** पु॰ अगस्त्यस्य नक्षत्ररूपेण दक्षिणस्यस्य चारः शुभाशुभसूचकगत्यादि । वराहसंहितोक्तो अगस्त्यनामक-नक्षत्रस्य उदयादौ । यथा “विन्ध्यस्तम्भयद्यस्य तस्योदयः श्रूयताम्” इत्युपक्रम्य । “उदये च मुनेरगस्त्यनाम्नः कु-समायोगमलप्रदूषितानि । हृदयानि सतामिव स्वभावात् पुन-रम्बूनि भवन्ति निर्म्मलानि ॥ पार्श्वद्वयाधिष्ठितचक्रवाकामा-पुष्णतो हंसकुलप्रपङ्क्तिम् । ताम्बूलरक्तोत्कचितापदन्ती विभाति योषेव सरित्सुहासा ॥ इन्दीवरासवसितोत्पलका-ञ्चिता सरिद्भ्रमत्षट्पदपङ्क्तिभूषिता । भ्रूलतारक्षपकटाक्ष-वीक्षणा विदग्धयोषेव विभाति सस्वरा ॥ इन्दो पयोदवि-गमोपहितां विभूतिम् दृष्टुं तरङ्गवलया कुमुदं निशासु । उन्मीलयत्यलिनिलीनदल सुपक्ष्म वापी विलोचनमिवा-सिततारकान्तम् ॥ नानाविचित्राम्बुजहंसकोककारण्डवा-पूर्णतडागहस्ता । रत्नैः प्रसूतैः कुसुमैः फलैश्च भूर्भ्राजती

पार्श्वमगस्त्यनाम्नः ॥ सलिलममरमाधयोज्झितं यत्न-परिवेष्टितमूर्त्तिभिर्भुजङ्गैः । फणिजनितविषाग्निसम्प्रदुष्टं भवति शिवं तदगस्त्यदर्शनेन ॥ अस्याप्यदपि पापमपाकुरुते किमुत ? स्तुतिभिरुपासितस्तु । मुनिभिः कथितोऽस्य यथार्घविधिः कथयामि तथैव नरेन्द्र ! तवाम् ॥ अस्याभिधानात् प्रतिदेशमस्य विज्ञाय सन्ध्यागमनादिवेलाम् । तथ्योक्ष्णयिन्यामगतस्य कन्यां भागे स्वराख्ये स्फुट-भास्करस्य ॥ दीपप्रभिन्ने ऽरुणरश्मिजालैर्नैशेऽन्धकारे दिशि दक्षिणस्याम् । यावत्प्रसादेदितदिग्विभागे भूयोऽर्घमर्घ्यो प्रयतः प्रयच्छेत्" ॥ इत्युक्तान्ते उपचरत यथा "दृश्यते स किल प्रागतेऽर्के रोहिणीसप्तगतेऽस्तमुपेतीति" ।

**अगस्त्यसंहिता** स्त्री अगस्त्यनिर्मिता संहिता । रामचन्द्र-विष्णुवामनादिपूजेतिकर्त्तव्यताबोधके शास्त्रभेदे ।

**अगस्त्योदय** पु० अगस्त्यस्य नक्षत्ररूपेण दक्षिणस्यस्य उदयः । अगस्त्यनक्षत्रोदये तस्य च नक्षत्रस्य दक्षिणस्थितत्वेन उत्तरदिग्वासिनां सर्वदा दर्शनयोग्यता नास्ति, तस्योदयश्च भाद्रशेषे भवति "यस्तु भाद्रपदे मासि उदिते कलशोद्भवे इति" पुराणम् । तद्विवरणम् अगस्त्यचारशब्दे दर्शितम् ॥ तस्योदये जलादीनां प्रसन्नत्व 'प्रसमारोदयादम्भः कुम्भयो-नेर्महौजस इति" रघावुक्तम् ।

**अगाध** त्रि० गाध-प्रतिष्ठायाम् घञ्-न०त० । अतिगभीरे । छिद्रे न० । गाधः निम्नतोया स नास्ति यस्येति । नौचलीमारहिते "साम्राज्गाधे गये मज्जेति" पुरा० दुर्बोधे च । "अगाधसत्त्वगुणा" इत्यमरः । [ह्रदे ।

**अगाधजल** पु० अगाधं जलमस्य । अतिगभीरजले

**अगार** न० अगम् न गच्छन्तं ऋच्छति प्राप्नोति अग+ऋ-अण् । गृहे । "तलागार धनपतिगृहस्थानिति मेघ० ।

**अगिर** पु० न गीर्य्यते दुःखेन गृ-का० क न०त० । स्वर्गे ।

**अगिरौकस्** पु० अगिरः स्वर्गः ओकः वासस्थानं यस्य । देवे ।

**अगु** पु० न गौः किरणोऽस्य । राहुग्रहे सूर्य्यालोकाभावे तमसि । गोशून्ये त्रि० ।

**अगुण** पु० न०त० । गुणविरोधिनि दोषे । "तद सर्वं मयक्षामि प्रसन्ने च गुणागुणमिति" स्मृति न०ब० । गुणरहिते त्रि० "गच्छिमीतिप्रणयरहितं भामदम्भाद्यपेतं चेतोऽस्माक गुणवदगुण गोडुङ्गी देहमेतत्" इत्युद्धवदूतः ।

**अगुरु** न० न गुरुर्यस्मात् । स्वनामप्रसिद्धे, अगुरुचन्दने "धूपैरगुरुगन्धिभिरिति" शिंशपा वृक्षे (शिशु) च । गुरु-भिन्ने, उपदेशकशून्ये त्रि० । गुरुवर्णभिन्ने लघुवर्णे पु० "अगुरुचतुष्कं भवति गुरू द्वौ घनकुचयुग्मे, शशिवदना-सामिति" श्रुतबोध । गौरवरहिते गौरवविपरीतलाघव-युति त्रि० ।

**अगुरुशिंशपा** स्त्री अगुरु सारो यस्याः तादृशी शिंशपा मध्यपदलोपित० । (शिशु) इति प्रसिद्धे शिंशपावृक्षे ।

**अगूढगन्ध** न० न गूढो गन्धो यस्य ६ब० । हिङ्गुद्रव्ये । तस्य यौगस्रोतःकटगन्धत्वात्तथा । अगुरुप्रसौरभे द्रव्यमात्रे त्रि० ।

**अगृभीत** त्रि० न गृहीतम् छान्दसत्वात् हस्य भ । अगृहीते, "जयमय जह्यगृभीतगुणामिति, भाग०स्कं० ।

**अगौकस्** पु० अगः पर्वतः ओकः स्थानं यस्य । शरभे पशौ पर्वतवासिनि त्रि० ।

**अग्नामरुत्** पु० द्वि० द्व० आनङ् । एकहविर्हस्वयोः तन्नामकदेवयोः । तौ देवते अस्य अण् । आग्निमारुत हवि । [देवयो ।

**अग्नाविष्णु** पु० द्वि०द्व० आनङ् । एकहविर्भोक्त्रोस्तन्नामकयोः

**अग्नायी** स्त्री अग्नि+ऐङ्-ङीप् । अग्नेर्भार्येति स्वाहा-ख्यायाम् । "वरुणानी मघाग्नायी तस्याः सिमन्तिनी समेति" भट्टि । सा च दक्षकन्या तस्यायाग्निभार्य्याकथा महाभारते "दक्षस्याहं प्रिया कन्या स्वाहा नाम महा-भुज ! ॥ बाल्यात् प्रभृति नित्यञ्च जातकामा हुताशने स न मे कामना पुत्र ! सम्यग् जानाति पावकः । इच्छामि शाश्वतं वासं वस्तुं पुत्र ! सहाग्निना । स्कन्द उवाच । हव्यं कव्यञ्च यत् किञ्चिद्द्विजाः नामाय संस्कृतम् । होष्यन्त्यग्नौ सदा देवि ! स्वाहेत्युक्त्वा समुद्धृतम् । अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः । एवमग्निस्त्वया सार्द्धं सदा वत्स्यति शोभने" । वन० मार्कं० प० ।

**अग्नि** पु० अङ्गति ऊर्द्ध्वं गच्छति अगि-नि नलोपः । अग्नौ स्वनामप्रसिद्धे तेजोभेदे, तेजसि आकाशाद्वायुर्वायो-रग्निरग्नेरापोऽद्भ्यः पृथिवी, इति" श्रुतिः । तत्र तेन पदार्थस्तावद्द्विविधः सूक्ष्मः स्थूलश्च । सूक्ष्म-वायुसम्भूत सूक्ष्मवायुसम्भूतः सूक्ष्मः पञ्चीकृतस्तु स्थूलः "तासां त्रिवृतं त्रिवृतमेकैकां करोतीति" श्रुतौ त्रिवृत्करणस्य पञ्चीकरणस्याप्युपलक्षणत्वम् । पञ्चीकरणप्रकारश्च पञ्चीकरणशब्दे वक्ष्यते । तथा च भूतान्तराष्टमभागमिश्रितेन स्वस्यार्द्धभागेन उत्पन्नः पञ्चीकृतः । तस्य च पञ्चात्मकत्वेऽपि "वैशेष्यात्तद्वाद इति" शारीरकोक्ते भूयस्त्वात् तैजसत्वव्यवहारः । सोऽयं स्थूलो वह्निः प्रकारान्तरेण त्रिविधः भौमः

दिव्य जाठरश्चेति भेदात् । तत्र पार्थिवकाष्ठादिप्रभवः भौमः स्थानपाद्यग्निः, जलवाय्वादिभवः दिव्यः विद्युदुल्कावज्रादिः । उभावपि ऊर्द्ध्वज्वलनस्वभावः । उदरे भवस्तृतीयः । त्रयोऽप्यमी स्वसंयुक्तपाकदाहप्रकाशन समर्थाः । सर्व्वेऽप्यमी लोके शास्त्रे च वह्न्यादिशब्देन व्यवह्रियन्ते तेषां विशेषगुणाः शब्दस्पर्शरूपाणि "योयो-यावतिथश्चैषां स स तावद्गुणः स्मृतः" इति मनुना भूतमध्ये तृतीयस्य तेजसः त्रिगुणत्वमुक्तं व्यासेन महाभारते शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रय इति "अत एव "वह्नौ भृगभुगध्वभिरिति" पञ्चदशसाधकम् वह्नेश्च तेजोजलभूम्यात्मकत्वेन लोहितशुक्लकृष्णरूपत्वम् अत एव छान्दोग्ये त्रिवृत्करणानन्तरम् वह्नेस्त्रिरूपत्वमुक्तं यथा "यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्येति" विवृतञ्चैतद्भाष्यकृता "यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते । उदाहरणं नामैकदेशप्रसिद्ध्याऽशेषप्रसिद्ध्यर्थमुदाह्रियत इति । तदेतदाह यदग्नेः त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि । तथा यच्छुक्लं रूपमग्ने तदपामत्रिवृत्कृतानामेव यत् कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया इति विद्धीति" । अत एव तन्त्रशास्त्रकाव्यादिषु वह्नेररुणरूपतया वर्णनं दृश्यते । अग्निमूर्त्तिध्याने च अरुणरूपत्वमनुपद दर्शयिष्यते । लोके चारुणत्वेनैव प्रत्यक्षेणासावुपलभ्यते एवञ्च नैयायिकोक्तं तेजसः शुक्लभास्वररूपत्वं प्रत्यक्षवेदविरुद्धत्वादुपेक्ष्यमेव । तत्र भौमदिव्ययोः प्रायशो लोकसिद्धत्वेन दिव्यस्य च दिव्यशब्दे वक्ष्यमाणत्वाच्च जाठरे वह्नौ विशेषोऽभिधीयते । "नाभेरूर्द्ध्वं हृदयादधस्तादामाशयमाचक्षते तत्र सौरं तेजः पित्तमित्याचक्षते" इति भाष्यविवरणे आनन्दगिरिः वैद्यकवचनत्वेनोपात्त । अत एव तस्य कौक्षेय इति संज्ञा । छान्दोग्ये च "या हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहित इति" । व्याख्यातञ्चैतद् भाष्यकृता । "अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलादिव रश्मयस्ता एताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्त्तन्त इत्यर्थः । तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्य्यम् । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कात् पिङ्गलं भवति, सौरं तेजः पित्ताख्यम् । तदेव वातभूयस्त्वान्नीलं भवति । तदेव च कफभूयस्त्वाच्छुक्लं, कफेन समतायां पीतम्, शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः । कथं भवतीति ? श्रुतिस्त्वाहादित्यसम्बन्धादेव, तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा" इति । कथमसौ वाऽऽदित्यः पिङ्गलो" ? वर्णत एष आदित्य शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव, तस्य चाध्यात्मरसस्य नाडीद्वारसम्पर्कप्राप्त वर्णविशेष" इत्यानन्दगिरिः । अस्यैव जाठरस्य पिपासाहेतुत्वं छान्दोग्ये उक्तं यथा "अथ यत्रैतत् पुरुषः पिपासति नाम तेज एव तत् पीतं नयते इति" । व्याख्यातञ्च भाष्यकृता "पूर्व्ववदशितस्यान्नस्य नेतारः आपोऽन्नगुणं देहं क्लेदयन्त्यः शिथिलीकुर्य्युः अप्लावयेयुः, यदि तेजसा न शोष्येत । नितरां च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पिपासा पुरुषस्य जायते तदा "पुरुषः पिपासति नाम, तदेतदाह "तेज एव तत्तदा पीतमबादि शोषयत् देहलोहितादिभावेन नयते परिणमयतीति" । तत्र रसपाकप्रकारमाह योगार्णवे । "आयुष्यं भुक्तमाहारं स वायुः कुरुते द्विधा संप्रविश्यान्नमध्यन्तु, पृथक् किट्टं पृथग् जलम् (किट्टम् अन्नमलभेदम्) । अग्नेरूर्द्ध्वं जलं स्थाप्य तदन्नं च जलोपरि । जलस्याधः स्वयं प्राप्य स्थित्वाग्निं धमते शनैः (धमते संधुक्षयति) वायुनाध्मायमानोऽग्निरत्युष्णं कुरुते जलम् । अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः । द्विधा भवति तत् पक्वं पृथक् किट्टं पृथग् रसम् । रसेन तेन ता नाडीः प्राणः पूरयते पुनः । प्रत्यर्पयन्ति सम्पूर्णा रसानि ताः समन्तत इति" । एवं रसपाकोत्तरं धातुपाकोऽभिहितः शुद्धार्थादर्शे । यथा "त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः । तत्र सुश्रुत चोक्ता त्वक् रक्तोदरवह्निना । पक्वान्नमेदसरसादेवं रक्तादिनिस्सृताः । स्वस्वोष्माग्निना पाकात् प्रजायन्ते त्वगादय इति" । एतन्मूलमेव "तत्र षोढा शरीराणि षट् त्वचो धारयन्ति चेति" याज्ञवल्क्यवचनव्याख्यायां मिताक्षराकृता सङ्गृहीतम् यथा तत्र्यात्मकोयानि जरायुजाण्डजादीनि शरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन । तथाहि अन्नरसो जाठरवह्निना पच्यमानो रक्ततां प्रतिपद्यते, रक्तः स्वकोष-

स्वाग्निना पच्यमानं मांसत्वम्, मांसञ्च स्वकीयस्वाग्निपरिपक्वं मेदस्त्वम्, मेदोऽपि स्वकीयवह्निना पक्वमस्थिताम्, अस्थ्यपि स्वकीयाग्निपरिपक्वं मज्जत्वम्, मज्जापि स्वकीयपाचकपरिपच्यमानं परमधातुतया परिणमते इति" जाठरस्य प्रकारान्तरेण पाचनादिदशविधकर्म्मकारित्वात् दशविधत्वमुक्तं पदार्थादर्शे यथा "भ्राजकोरञ्जकश्चैव क्लेदकः स्नेहकस्तथा धारको बन्धकश्चैव द्रावकाख्यश्च पञ्चमः। व्यापकः पाचकश्चैव श्लेष्मको दशधा मत इति"। वैद्यकेऽपि अस्य चतुर्विधकार्य्यविशेषकारित्वाच्चातुर्विध्यमुक्तम्। विषमश्च समस्तीक्ष्णो मन्दश्चेति चतुर्विधः। कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः। विषमो वातजान् रोगान्, तीक्ष्णः पित्तनिमित्तजान्, करोत्यग्निस्तथामन्दो विकारान् कफसम्भवान्। समा समोऽग्निरशितमात्राः सम्यक् पचत्यसौ" इति। अग्नेरतितीक्ष्णत्वे भस्मकसंज्ञा स हि सम्यगाहाराभावे शोणितादिधातूनपि पाचयित्वा आशु देहं नाशयतीति रक्षित आकरः। अधिकं भस्मकशब्दे वक्ष्यते। शास्त्रान्तरे भौमस्याग्नेः कर्म्मविशेषे नामान्तराणि विधानपारिजाते। यथा

"लौकिके पावकोह्यग्निः प्रथमः परिकीर्त्तितः। अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्त्तितः। पुंसवने चमसो नाम शोभनः शुभकर्म्मसु। (शुङ्गकर्म्मणीति रघु०)। तत्र सीमन्तोन्नयनान्तर्गतकर्म्मभेदः। सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्म्मणि॥ पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः। सत्यनामा तु चूडायां व्रतादेशे समुद्भव॥ गोदाने सूर्य्यनामा स्यात् केशान्ते याजकः स्मृतः। वैश्वानरो विसर्गे स्याद्विवाहे वरदः स्मृतः॥ चतुर्थीकर्म्मणि शिखी धृतिरग्निस्तथाऽपरे। (अपरे कर्म्मणि) आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः। ब्रह्माग्निर्गार्हपत्ये स्याद्दक्षिणाग्निरथेश्वरः। विष्णुराहवनीये स्यादग्निहोत्रे त्रयोमता॥ लक्षहोमेऽभीष्टदः स्यात् कोटिहोमे महाशनः। एते हुतार्चिषां प्राहुरग्निध्यानपरायणाः॥ रुद्रादौ तु मृडो नाम शान्तिके शुभकस्तथा। आदित्यव्रात् चतुरद्ध्यतव्रातिरद्रा-मयन्ते। (पूर्णाहुत्यां मृडो नामेति रघु०)। पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारके। वश्यार्थे शमनो नाम वरदाने तु मोमकः। उदरे जठरो नाम क्रव्यादः शवभक्षणे। समुद्रे वाडवो ह्यग्निः क्षये संवर्त्तकस्तथा॥ सप्तविंशतिसंख्याता अग्नयः कर्म्मसु स्मृताः। तं तमावाह्य होतव्यं यो यत्र विहितोऽनलः॥ अन्यथा विफलं कर्म्म सर्व्वं तद्भावमश्नुते। आदित्यादिग्रहाणां च साम्प्रतं ह्यग्निरुच्यते॥ आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते। धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे स्मृत॥ बृहस्पतौ शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहौ केतौ हुताशनः इति।" प्रकारान्तरे तु पञ्च भेदाः "आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च। अन्वाहार्य्यो गार्हपत्य इत्येते पञ्च वह्नयः" इति भा०रा०। "पञ्चाग्नयो ये च त्रिणाचिकेता" इति श्रुति। अग्नेर्ध्येयरूपं यथा "रुद्रतेज समुद्भूतं द्विमूर्द्धानं द्विनासिकम्। षण्नेत्रं च चतु श्रोत्रं त्रिपादं सप्तहस्तकम्। वामभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम्। स्रुचं स्रुवञ्च शक्तिं च अक्षमालां च दक्षिणे। तोमरं व्यजनं चैव घृतपात्रन्तु वामके। बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम्। दक्षिणञ्च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखम्। द्वादशकोटिमूर्त्त्याख्यं द्विपञ्चाशत्कलायुतम्। स्वाहास्वधावषट्कारैरङ्कित मेषवाहनम्। रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम्॥ रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम्"। इति रुद्रकल्पः। अग्नेर्भौतिकत्वेऽपि कर्म्माङ्गहोमसाधनतया एवं ध्यातव्यता।

अग्न्यभिमानिनि चेतनाधिष्ठिते शरीरादावपि उपचारात् अग्निशब्दप्रयोग। अग्न्यधिष्ठातरि देवभेदे "अग्निं दूतं वृणीमहे होतारं विश्ववेदस" मित्यादौ वेदे तस्यैव आह्वानपूर्व्वकोपास्यत्वमुक्तम्। तदधिष्ठितदेहभेदेऽपि, स एव विश्वनराज्जाताद्य अग्निलोकाधिपत्यं चकारेति काशीखण्डे उक्तं तत्कथा वैश्वानरशब्दे वक्ष्यते। अग्निदेवताके कृत्तिकानक्षत्रे "अग्नियमदहने"त्यादिना ज्योतिषे कृत्तिकानक्षत्रस्य तत्स्वामिकत्वोक्तेः तद्देवताके प्रतिपत्तिथौ वक्ष्य-माणाधिपत्यं तिथिशब्दे वक्ष्यते। तस्य एकत्वेऽपि वेदत्रयभेदेन दक्षिणाग्निगार्हपत्याहवनीयनामतया प्राधान्येन त्रित्वात् "प्रधानेन व्यपदेशा भवन्तीति" न्यायात् तत्संख्यायुक्तत्वात् त्रित्वसंख्यान्विते, सोदयात् साग्निकम (१०) "बहुभुक्तं भोक्ष्यं त्वेषत्रयोदिति" नीलकण्ठ। चित्रकवृक्षे (चिते) तस्य तत्तेजोजातत्वात्तथा तत्कथा अग्निरेतःशब्दे वक्ष्यते भल्लातकवृक्षे (भेला) निम्बुकवृक्षे (नेबु) पित्ते धातौ तस्य तद्गुणवत्त्वात्तथा कथा च तस्य तद्गुणवत्त्वं तत्रोक्तं मान्। तत्स्वामिके अग्निकोणे च। एवमग्निवाचकाः सर्व्वेऽपि शब्दाः कृत्तिकानक्षत्रादौ वर्त्तन्ते। चित्रं मङ्गलं कार्य्यविधिरत्ना मध्ये कृतान्ते नवमिति तिथित०। "हुताशे अग्निकोणे" अमरकविमुमता-

धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्ना ॥ उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः । विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति ॥ तारा फलपादकरी फलार्द्धदात्री प्रकीर्त्तिता धिष्ण्या । तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चेति ॥ अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु । निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥ विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा । कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता ॥ धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम् । ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन ॥ तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा । तिर्य्यगधश्चोर्द्ध्वं वा याति वियत्युह्यमानेव ॥ उल्का शिरसि विशाला निपतन्ती वर्द्धते प्रतनुपुच्छा । दीर्घा भवति च पुरुषं भेदा बहवो भवन्त्यस्याः ॥ प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गलमृगाभाः । गोधाहिधूमरूपा पापा या चोभयशिरस्का ॥ ध्वजझषकरिगिरिकमलेन्दुतुरगसन्तप्तरजतहंसाभाः । श्रीवृक्षवज्रशङ्खस्वस्तिकरूपाः शिवसुभिक्षाः ॥ अम्बरमध्याद्बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय । बम्भ्रमती गगनोपरि विभ्रममाख्याति लोकस्य ॥ संस्पृशती चन्द्रार्कौ तद्विसृता वा सभूप्रकम्पा च । परचक्रागमनृपवध-दुर्भिक्षावृष्टिभयजननी ॥ पौरेतरमुल्कापसव्यकरणं दिवाकरहिमांश्वोः । उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः ॥ शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णाभा । क्रमशश्चैतान् हन्युर्मूर्द्धोरःपार्श्वपुच्छस्थाः ॥ उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा । ऋज्वी स्निग्धाखण्डा नीचोपगता च तद्वृद्ध्यै ॥ श्यामा वारुणनीलासृग्दहनासितभस्मनिभा रूक्षा । सन्ध्यादिनजा वक्राटलिता च परागमभयाय ॥ नक्षत्रग्रहघाते तद्भक्तीनां क्षयाय निर्दिष्टा । उदये घ्नती रवीन्द्वोः पौरेतरमृत्यवेऽस्ते वा ॥ भाग्यादित्यधनिष्ठामूलेष्वुल्काहतेषु युवतीनाम् । विप्रक्षत्रियपीडा पुष्यानिलविष्णुदैवेषु ॥ ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम् । क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते ॥ कुर्वन्त्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम् । शक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडाम् ॥ आशाग्रहोपघाते तद्देश्यानां खले कृषिरतानाम् । चैत्यतरौ सम्पतिता सत्कृतिपीडां करोत्युल्का ॥ द्वारि पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः । ब्रह्मायतने विप्रान् विनिहन्याद्गोमिनो गोष्ठे ॥ क्ष्वेडास्फोटितवादितगीतोत्क्रुष्टस्वना भवन्ति यदा । उल्का निपातसमये भयाय राष्ट्रस्य सनृपस्य ॥ यस्याश्चिरं तिष्ठति खेऽनुषङ्गो दण्डाकृतिः सा नृपतेर्भयाय । या चोह्यते तन्तुधृतेव खस्था या वा महेन्द्रध्वजतुल्यरूपा ॥ श्रेष्ठिनः प्रतीपगा तिर्य्यगा नृपाङ्गनाः । हन्त्यधोमुखी नृपान् ब्राह्मणानथोर्द्ध्वगा ॥ बर्हिपुच्छरूपिणी लोकसंक्षयावहा । सर्पवत् प्रसर्पिणी योषितामनिष्टदा ॥ हन्ति मण्डला पुरं सच्छत्रा पुरोहितम् । वंशगुल्मवत् स्थिता राष्ट्रदोषकारिणी ॥ व्यालसूकरोपमा विस्फुलिङ्गमालिनी । खण्डशोऽथ वा गता सस्वना च पापदा ॥ सुरपतिचापप्रतिमा राज्यं नभसि विलीना जलदान् हन्ति । पवनविलोमा कुटिलं याता न भवति शस्ता विनिवृत्ता वा ॥ अभिपतति यत पुरं बलं वा भवति भयं तत एव पार्थिवस्य । निपतति च यया दिशा प्रदीप्ता जयति रिपूनचिरात्तया प्रयातः” ॥ तत्कारणमुक्तं गर्गसंहितायाम् “अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्म्मतः । नरापचारान्नियतमुपसर्गः प्रवर्त्तते । ततोऽपराधान्नियतमपवर्ज्जन्ति देवताः । ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान् । त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः । विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च” इति । अनिष्टसूचकरूपभेदाश्च बृहत्संहितावाक्ये प्राक् दर्शिताः । तल्लक्षणं काश्यपेन सामान्यत उक्तम् “दर्शयित्वा च रूपाणि रक्तनीलविषोल्बणा । भीरवेव समासेन उल्का नानाविधा स्मृतेति” ।

अग्न्युद्धार पु० अग्नेः आधानार्थमुद्धारः अरणिमन्थनेन उत्पादनम् । अरणिद्वयमन्थनेनाग्न्युत्पादने । तत्प्रकारस्तु “अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः । तस्य या प्राङ्मुखी शाखा उदीची चोर्द्ध्वगापि वा ॥ अरणिस्तन्मयी प्रोक्ता तन्मय्येवोत्तरारणिः । सारवद्दारवं चात्रमोविली च प्रशस्यते ॥ संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते । अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः ॥ चतुर्विंशतिरङ्गुष्ठं दैर्घ्यं षडपि पार्थिवम् । चत्वार उच्छ्रये मानमरण्योः परिकीर्त्तितम् ॥ अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् । ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ अङ्गुष्ठाङ्गुलमानन्तु यत्र यत्रोपदिश्यते । तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥ गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तमवातकम् । व्याममात्रं नेत्रं स्यात् प्रमथ्यस्तेन पावकः ॥ मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।

अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुलं वक्त्र उच्यते ॥ अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् । एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम् ॥ ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् । अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः ॥ यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते । अस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः । प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥ उत्तरारणिनिष्पन्नः प्रमन्थः सर्व्वदा भवेत् । योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥ आर्द्रा सशुषिरा चैव घूर्णाङ्गी पाटिता तथा । न हिता यजमानानामरणिश्चोत्तरारणिः ॥ परिधायाऽहतं वासः प्रावृत्य च यथाविधि । बिभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ॥ चत्रबुध्नप्रमन्थाग्रं गाढं कृत्वा विचक्षणः । कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत् ॥ चत्राग्रकीलकाग्रस्थामोविलीमुदगग्रकाम् । विष्टम्भाद्धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः" इति कात्या० स० ॥

**अग्न्युपस्थान** न० अग्निरुपस्थीयतेऽनेन उप+स्था ल्युट् ६त०। वह्नेरुपासनमन्त्रे। स्त्रियां ङीप्। भावे ल्युट् ६त०। वह्नेरुपासने न०।

**अग्र** न० अङ्ग–रक् नलोपः । उपरिभागे, शेषभागे, आलम्बने पूर्व्वभागे, उत्कर्षे समूहे च । प्रधाने, अधिके, प्रथमे च त्रि० । तत्र पूर्व्वभागे अग्रकायः "अथाग्रहस्ते मुकुलीकृताङ्गुलाविति" कुमा० । उपरि "स्कन्नाग्रदत्तान्यवरोहणानि इति" कु० । आलम्बने, "मनुमेकाग्रमासीनमिति" मनुः प्रधाने "अथाग्रमहिषी राज्ञ" इति प्रथमे अग्रजाग्रयायीत्यादिरिति । पुरोऽर्थे, अग्रतः । शेषभागे, "कुशाग्रीयकुशेषु दर्भाङ्कुरेष्विति" रघु । "सूच्यग्रेण न दातव्यं विना युद्धेन केशवेति" "बालाग्रशतभागस्य शतधा कल्पितस्य चेति" "आराग्रमात्रोह्यपरोऽपि दृष्ट इति" च श्रुतिः । अधिके "अथाग्रयमयाशिषेति" । समूहे, "कैलासाग्रमासीनमिति" तन्त्रम् उत्कर्षे, अग्रादग्रं रोहतीति ता० ब्रा० अग्रमुत्कर्षमिति माधवाचार्य्यः अधिके "साग्रं वर्षशतमिति" रामा० अहर्गणपलपरिमाणे (ज्योतिषोक्तस्य अहर्गणपलस्य परिमाणार्थे शब्दभेदे) च । अर्कक्षेत्रसाधनार्थाया सिद्धान्तशिरोमण्युक्तायाम् अर्कक्षेत्रकर्णेन गुणितायां त्रिज्यया हृतायां क्रान्तिज्यायां स्त्री । "क्रान्तिज्यका कर्णगुणे विभक्ते कोट्या भुजेनाथ मितास्यधाग्रा स्यात्" इति सि० शि० । "क्रान्तिज्या श्रवणगुणेन गुणिता हि स्यात्रा एकत्र त्रिकोट्या भक्ता सतो अग्रा भवतीति" प्रमिता० । "रेखा प्राच्यपरा साध्या विषुवच्छायगा तथा । इष्टच्छायाविषुवतोर्मध्यमग्राभिधीयते" इति सूर्य्यसिद्धान्तपारिभाषिकेऽर्थे च स्त्री । विवृतञ्चैतत् रङ्गनाथेन यथा "अथाग्राज्ञानार्थमाह । तस्मिंश्चतुरस्रे पूर्व्वापररेखात उत्तरभागे विषुवच्छायगान्त्यभागप्रदेशस्थाग्रमाङ्गुलान्तरितेत्यर्थः । प्राच्यपरा रेखा पूर्व्वापररेखानुकारा रेखा तथा सर्वतस्तुल्यान्तरेण अथेष्टच्छायाग्ररेखाप्रसान्तरेण कार्य्या । अनन्तरमिष्टच्छायाविषुवतोरिष्टच्छायाग्ररेखाक्षभाग्ररेखयोरित्यर्थः । मध्यं चतुरस्रेऽङ्गुलात्मकमन्तरालं सर्वतस्तुल्यम् । अग्रा कर्णवृत्ताग्रोच्यते । अत्रोपपत्तिः । भुजस्य कर्णवृत्ताग्रा पलभासंस्काराग्रा उक्ता तद्दक्षिणगोले पलभाधिकोत्तरभुजत्वाभावेन पलभोनो भुजोऽग्रेति, प्राच्यपरसूत्रादुत्तरभागेऽक्षभाग्ररेखा भुजमध्ये भवतीति द्वयो रेखयोरन्तरमग्रा पलभोनभुजरूपा । एवमुत्तरगोले उत्तरभुजस्य पलभाल्पत्वाद् गोलपलभागेति पलभारेखा प्राच्यपरसूत्रादुत्तरभागस्था भुजरेखातोऽप्यग्रान्तरेणोत्तरदिशीति द्वयो रेखयोरन्तरं भुजोनपलभारूपं कर्णवृत्ताग्रा । एवं दक्षिणभुजस्य पलभोनाग्रात्वात् पलभायुतोऽग्रेति प्राच्यपरसूत्राद्याम्यापलभाग्रारेखयो क्रमेण याम्योत्तरत्वात् तयोरन्तरालं पलभाभुजैक्यरूपमग्रा पलभायाः सर्वदोत्तरत्वात् सदोत्तरत्वच्छायासम्बन्धाद्युक्तम्" इति । "अग्रमर्धस्यावयवरूपैकदेशपरत्वे हस्ताग्रं तद्वत्परत्वे अग्रहस्त" इति वचोक्तम् वामनेन, "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदादिति" । अग्र+भवाद्यर्थे यत् । अग्र्य । च अग्रियम् । कुशाग्रमिव च । कुशाग्रीयः । स्वार्थे घाद्यादि० व अग्रः ॥ अग्रः ऋषिभेदस्तद्गोत्रापत्ये नडादि० फक् । आग्रायणः । तत्तदर्थेषु । [यत् अग्र्य० । देहपूर्व्व भागे ।

**अग्रकाय** पु० अग्रं कायं अवयवावयविनोरभेदात् अग्रहस्त-

**अग्रग** त्रि० अग्रे गच्छतीति गम–ड ७त० । पुरोगामिनि ।

**अग्रगण्य** त्रि० अग्रे गण्यते गण–यत् ७त० । अग्रगणनीये, प्रधाने च ।

**अग्रगामिन्** त्रि० अग्रे गच्छति गम–णिनि ७त० । पुरोगामिनि । "प्रणोऽग्रगामिनीति" पा० । अत्रोपात्तनिर्द्देशात् अग्रगामिनेत्यादौ न णत्वम् । स्त्रियां ङीप् ।

**अग्रज** पु० अग्रे पुरस्तात् जायते जन–ड । अग्रजाते ज्येष्ठभ्रातरि "अगादग्रे गतोऽग्रजम्" इति माघ ।

ज्येष्ठभगिन्यां स्त्री । वर्णेषु मध्ये अग्रजातत्वात् विप्रे । [मु० । जङ्घाग्रभागे ।

**अग्रजङ्घा** स्त्री अग्रा जङ्घा अवयवावयविनोरभेदात् क०

**अग्रजन्मन्** पु० अग्रे जन्म यस्य जन-मनिन् व्यधि० बहु० । ज्येष्ठभ्रातरि, विप्रे च । अग्रजातमात्रे त्रि० । अग्रात् प्रधानाङ्गात् मुखात् जन्मास्य व्य०ब० । ब्रह्मणोमुखोत्पन्ने विप्रे, तस्य तन्मुखोत्पत्तिश्च ताण्ड्यब्राह्मणे उक्ता यथा "सोऽकामयत यज्ञं सृजेयेति स मुखत एव त्रिवृतमसृजत तं गायत्रीच्छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणोमनुष्यो वसन्त ऋतुस्तस्मात्त्रिवृत् स्तोमानां मुखं, गायत्री छन्दसाम्, अग्निर्देवतानां, ब्राह्मणो मनुष्याणां, वसन्त ऋतूनां, तस्माद्ब्राह्मणो मुखेन वीर्य्यङ्करोति मुखतो हि सृष्ट" इति । व्याख्यातञ्चैतत् भाष्ये "सः प्रजापतिरकामयत किमिति"? यज्ञसाधकं यज्ञं सृजेयेति स एतमग्निष्टोममपश्यत् तमाहरदित्युक्तस्यैवेदं विवरणं स प्रजापति मुखत आत्मनो मुखादेव त्रिवृतमाख्यत्रिस्तवसाध्यमेतन्नामकं स्तोममसृजत तं त्रिवृतमनु पश्चाद्गायत्रीछन्द गायत्रं नाम छन्दोऽसृज्यत तदनु अग्निर्देवताऽसृज्यत तमनु मनुष्यो ब्राह्मणोऽसृज्यत तथा तमनु वसन्तास्यय ऋतुरसृज्यत यस्मादेते मुखतएव सृष्टा तस्मादेते त्रिवृदादयः स्वस्वजातीयानां मध्ये मुख्या अभवन् त्रिवृदादीनां मुख्यानां मध्ये ब्राह्मणस्य मुख्यत्वप्रयुक्तं वीर्य्यं लोकसिद्धं दर्शयति तस्मान्मुखसृष्टत्वेन मुख्यत्वात् ब्राह्मणो मुखेनेदानीमपि वीर्य्यं स्वाध्यायप्रवचनादिजन्यं सामर्थ्यं करोति तस्मादित्युक्तं विवृणोति हि यस्माद्ब्राह्मणो मुखतः सृष्टस्तस्मादित्यर्थः ।एवमुक्तमर्थं यो वेद सोऽपि मुखेन वीर्य्यं करोति मुखसाध्येन स्वाध्यायप्रवचनादिनैवाभीष्टं साधयतीत्यर्थः" इति । "ब्राह्मणोऽस्य मुखमासीदिति" पुरुषसूक्तम् अत एव विप्रस्य मुखजातत्वेन मुखसाध्यस्वाध्यायाभ्यसने एव वीर्य्यं भवतीत्युक्तम् अतएव मनुना "वेदमेव सदाभ्यसे"दित्युक्तम् हारीतसंहितायां तु "षट् कर्म्माणि, निजान्याहुर्ब्राह्मणस्य महात्मनः । तैरेव सततं यस्तु वर्त्तयेत् सुखमेधते अध्यापनं चाध्ययनं याजनं यजनं तथा । दानं प्रतिग्रहश्चेति षट्कर्म्माणीति चोच्यते" इति "वेदस्यैव सदाभ्यसेत् शुचौ देशे समाहित. धर्म्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः वेदवत् पठितव्यञ्च श्रोतव्यञ्च दिवानिशि स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च दानं भोजनमन्यच्च दत्तं कुर्वन्ति नाशनम् । तस्मात् सर्वप्रयत्नेन वेद शास्त्रं पठेत्,,द्विज इति" च । "सत्त्वप्रधाना विप्रा' स्युरिति भारतोक्ते विप्रस्य सत्त्वप्रधानतया "ब्राह्मणक्षत्त्रियविशां शूद्राणाञ्च परन्तप! । कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः । शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजमिति" गीतायां सात्त्विकधर्म्माएवास्य स्वाभाविका इत्युक्तम् । विवृतञ्चैतत् श्रीधरस्वामिना "तत्र ब्राह्मणस्य स्वाभाविकानि कर्म्माण्याह शम इति, शमश्चित्तोपरमः (बाह्यविषयाच्चित्तस्य शमः) दमो बाह्येन्द्रियोपरमः (स्वस्वविषयाच्चित्तस्य दमः) तपः पूर्व्वोक्तं (सगुणब्रह्मोपासनादि) शौचं बाह्यमाभ्यन्तरञ्च । क्षान्ति (शीतोष्णादिद्वन्द्वसहिष्णुता) आर्जवम् अवक्रता (बाह्याभ्यन्तरयोः कापट्याभावः) ज्ञानं शास्त्रीयं विज्ञानमनुभवः आस्तिक्यम् अस्ति परलोक इति निश्चयः । एतत् शमादि ब्राह्मणस्य स्वभावात् जातं कर्म्मेति" । "मुखजातादयोऽप्यत्र अग्रे प्रथमं जन्म यस्य । चतुर्मुखे ब्रह्मणि, "यो वै ब्रह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदमिति" "हिरण्यगर्भः समवर्त्तताग्रे" इति च श्रुतौ परब्रह्मणः तस्य प्रथमोत्पत्तिरुक्ता, तदुत्पत्तिप्रकारस्तु मनुना "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधा प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इत्यनेनोक्तः ।

**अग्रजात** पु० अग्रे जातः जन-क्त ७त० । ज्येष्ठभ्रातरि, विप्रे च । ज्येष्ठभगिन्यां स्त्री । पूर्व्वजातमात्रे त्रि० ।

**अग्रजाति** पु० अग्रा श्रेष्ठा जातिर्यस्य, जन-क्तिन् कर्म० । विप्रे ।

**अग्रजिह्वा** स्त्री अग्रा जिह्वा अग्रहस्तवत् क० । जिह्वाग्रभागे ।

**अग्रणी** त्रि० अग्रे नीयतेऽसौ नी-क्विप् ७त० णत्वम् । प्रधाने श्रेष्ठे च । अग्रं नयति देवेभ्य इति । वह्नौ पु० यथाचास्याग्रणीत्वं तथाग्निपर्व्वे निरुक्तव्याख्यायामुक्तम् ।

**अग्रतस्** अव्य० अग्रे अग्राद्वा अग्र+तसिल् । पूर्व्वदिक्त्वे, पूर्व्वभागावच्छिन्ने च । [अग्रगामिनि । स्त्रियां ङीप् ।

**अग्रतःसर** त्रि० अग्रतः सरति गच्छति सृ-ट ७त० ।

**अग्रदानिन्** पु० अग्रे दानं उद्देश्यापेक्षयास्य अग्रदान+इनि प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि "अग्रदानीति" ख्याते विप्रे । "लोभी विप्रस्य शूद्राणामग्रे दानं गृहीतवान् । ग्रहणात्तस्य दानानामग्रदानी बभूव स" इति पुरा० ।

**अग्रदानीय** पु० अग्रे दानमर्हति छ । अग्रदानिविप्रे ।

**अग्रनख** पु० अग्रो नखः अग्रहस्तवत् क० । नखाग्रे ।

कर्म० षत्वम् । अग्रयायिसैन्ये । "अग्रयाणीकं रघुव्याघ्रो राक्षसानां बभञ्जतुः इति" रामा० ।

**अग्रायणीय** न० अग्रं श्रेष्ठमयनं ज्ञानं तत्र साधु छ । बौद्धागमसिद्धे प्रवादभेदे "उत्पादपूर्व्वमग्रायणीयमथ वीर्य्यता प्रवाद स्यात् इति" हेमचन्द्रः ।

**अग्रावलेहित** न० अग्रं प्रथमभाग उद्धृत्यावलेहितमास्वादितं यस्य । श्राद्धाद्यर्थप्रस्तुतान्नादग्रभागमुद्धृत्यास्वादनेन श्राद्धदानाद्यनर्हताप्रयोजकदोषदुष्टे अन्नादौ "हिःस्विन्नं परिदग्धञ्च तथैवाग्रावलेहितमिति" श्राद्धवर्ज्ये ब्रह्मपुराणम् "अग्रावलेहितं श्राद्धार्थोपकल्पित सहृदुपभुक्ताग्रभागमिति" रघु० ।

**अग्रासन** न० अग्रमर्घादिदानात् पूर्व्वं कल्पितमासनम् । श्राद्धभोजनार्थे अर्घदानादितोऽग्रे कल्पिते विप्रस्योपवेशनार्थे आसने "मामग्रासनतोऽवकृष्टमवशमिति" मुद्रा० ।

**अग्राह्य** त्रि० ग्रह-ण्यत्-न० त० । ग्रहणायोग्ये शिवनिर्म्माल्यादौ प्रतिग्रहायोग्ये तिलाश्वादौ च । "अग्राह्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलमिति" पुरा० । "ब्राह्मण प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा । अव्यस्वमपि मातङ्गतिललौहांश्च वर्ज्जयेत् । कृष्णाजिनहयग्राही न भूयः पुरुषोभवेत् । शय्यालङ्कारवस्त्रादि प्रतिगृह्य कृतस्य च । नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा" । तथा "ब्रह्महत्या सुरापानमपि स्तेयं तरिष्यति । आतुराद्यद्गृहीतन्तु तत् कथं ? वै तरिष्यति" । "एतदादिद्रव्यादानं गर्ह्यादोषजनकम्" इति रघु० । "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः । अन्यत्र कुलटाषण्डपतितेभ्यो द्विषस्तथेति" मनु । तेन कुलटादिद्रव्यम् अग्राह्यम् । शौचादौ कर्म्मणि अनुपादेयमृत्तिकायाम् स्त्री । "अन्तर्जले देवगृहे वल्मीके मूषिकस्थले । कृतशौचावशिष्टे च अग्राह्याः पञ्च मृत्तिका" इति स्मृति । अविचारणीये त्रि० "अग्राह्यस्त्वनिवेदित" इति स्मृति । आवेदनकालेऽनिवेदितः पश्चात् निवेदितोऽपि व्यवहारे न विचारणीयः इति तदर्थः ।

**अग्रिम** पु० अग्रे भवः अग्र+डिमच् । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे च त्रि० । "वीराणामग्रिमो भूत्वा युयुधे पार्थिवैः सहेति" पुरा० ।

**अग्रिय** पु० अग्रे भवः अग्र+घ । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे, अग्रजातमात्रे च त्रि० । "धन्या अग्रिया भवन्तीति" ता० ब्रा० ।

**अग्रीय** पु० अग्रे भवः अग्र+छ । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे च त्रि० । "अग्रीयभागं ददतेऽस्य देवा" इति वेदः ।

**अग्रु (ग्रू)** स्त्री अगि-क्रु नलोपः वा ऊङ् । नद्यामङ्गुल्याञ्च । निरुक्ते तन्नाम्नोरेतस्या उक्तेस्तदर्थत्वम् । "अग्रीयन्तोऽग्र्युव" इति वेदः ।

**अग्रेग** त्रि० अग्रे गच्छतीति गम-ड अलुक् स० । पुरोगन्तरि ।

**अग्रेगा** त्रि० अग्रे गच्छति गम-विट् अलुक् स० । पुरोगन्तरि ।

**अग्रेगू** त्रि० अग्रे गच्छतीति गम-डू अलुक् स० । पुरोगामिनि सेवके ।

**अग्रेदिधिषु (षू)** पु० दिधिं धैर्य्यं स्यति निरस्यति, सो-कु पत्यम् दिधिषूः द्विरूढा पुनर्भूर्योषित् अग्रे गणनीया दिधिषूर्यस्य अलुक् स० कपभावः ह० वा ह्रस्वः । पुनर्भूविवाहकारिणि । प्रागनूढज्येष्ठभगिन्याः प्रागूढकनिष्ठभगिन्यां स्त्री । "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृतेति, मनुः एतद्वचने च अग्रे ज्येष्ठाविवाहात् पूर्व्वं दिधिषूः ज्येष्ठाविवाहकाला सहनरूपधैर्य्यस्योपकारिणीति विग्रहः । दीर्घान्त एवायम् ।

**अग्रेदिधिषूपति** पु० ६त० । अनूढज्येष्ठाया भगिन्याम् सत्यां कनिष्ठायाभगिन्या वोढरि "यश्चाग्रेदिधिषूपतिरिति" स्मृतिः ।

**अग्रेपा** त्रि० अग्रे स्थित्वा पाति पा-क्विप् अलुक् स० । पुरतो भूत्वा पालके "अग्रेपा ऋभवो मन्दसाना" इति वेदः ।

**अग्रेपू** त्रि० अग्रे कृत्वा पूयते पू-क्विप् अलुक् स० । पुरः पवित्रकारके "सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुव" इति वेद ।

**अग्रेवण** वनस्याग्र-राज०पूर्व्व० अलुक् स० णत्वम्, नि० एदन्तत्वम् । वनाग्रभागे । [गामिनि । स्त्रियां ङीप् ।

**अग्रेसर** त्रि० अग्रे सरति सृ-ट-अलुक् स० । पुरो-

**अग्रेसरिक** त्रि० सृ-भावे-अप् अलुक् स० अग्रे सरे अग्र गतौ प्रसृत ठन् । पुरोगामि-सेवके ।

**अग्रोपहरणीय** त्रि० अग्रमुपह्रियते यस्मै उप+हृ-सम्प्रदाने अनीयर् । श्राद्धाद्यर्थमुपकल्पितश्राद्धादेरग्रे दातोद्देश्ये वास्तुदेवादौ । अग्रे उपह्रियते कर्म्मणि अनीयर् । प्रथमदानार्हे द्रव्ये । ["दृश्यते त्वग्र्यया बुद्ध्येति" गीता ।

**अग्र्य** पु० अग्रे जातः यत् । ज्येष्ठे भ्रातरि । श्रेष्ठे त्रि०

**अघ** इदित् गतौ भ्वादि०आत्म० सक०सेट् । अङ्घते । आनङ्घे । क्वि-अघ्रि, असुन् अङ्घः ।

**अघ** पापकरणे चुरा० उभय० अक० । अघयति-ते । आजिघत् त । अघ्-अचम् अघः ।

भवतीति" । अत्र पापगौरवलाघवस्य संयतेन मासैकं यावत् जलमवगाह्याघमर्षणसूक्तं त्रिरावर्त्य स्नातव्यम् । तथा च मनुयम' "महापातककर्त्तारश्चत्वारश्च विशेषतः । अग्निं प्रविश्य शुध्यन्ति स्नात्वा वाघ इति क्रतौ । रहस्यकरणे चैव मासमभ्यस्य पौरुषम् । अघमर्षणसूक्तं वा सूक्तं शुध्येदन्तर्जलेस्थित" इति । छन्दोगः "अथ ब्रह्महत्यां कृत्वा मार्गीं वा उदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेध्मेनाग्निं प्रज्वाल्याघमर्षणं साष्टसहस्रमावर्त्य जुहुयात् तस्मात् पापात् पूतो भवतीति" । शातातपः "अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्ययेति" । वृद्धापस्तम्ब "अकार्य्यकरणे चैव अभक्ष्यस्य च भक्षणे । अघमर्षणसूक्तेन पीत्वाप शुध्यते नरः" । वशिष्ठ "मनसा पापं कृत्वा अघमर्षणं जपेत्" इति । वृद्धापस्तम्ब "क्षत्रियागमने वैश्यागमने चैव तापसीम् । त्रिरावर्त्य विशुद्धः स्यात् शूद्रागाम्यघमर्षणम्" इति । तापसीमिति तापसीम् ऋचमित्यर्थः यद्धलिखितौ "ब्रह्महा "त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरावर्त्तयेत्" इति । याज्ञवल्क्यः त्रिरात्रोपोषितोऽलस्ता ब्रह्महा त्वघमर्षणम् । अन्तर्जले विशुद्धस्तु दत्त्वा गान्तु पयस्विनीम्" इति । प्रकारान्तरे बौधायनः "तीर्थं गत्वा तत शुचिरात्मा उदकान्ते स्थण्डिले उद्धृत्य सकृत्क्लिन्नवाससा सकृत् पूर्णेन पाणिना आदित्याभिमुख' अघमर्षणमध्यायमधीयीत इति" ।

षडङ्गन्यासं कृत्वा वामहस्ते जलं निधाय दक्षिणहस्तेन जलमाच्छाद्य ह य र ल व इति त्रिरभिमन्त्य मूलमुच्चरन् गलितोदकविन्दुभिस्तत्त्वमुद्रया सप्तधा मूर्द्धानमभ्युक्ष्य शेषजलं दक्षिणहस्ते समादाय तोजोरूप ध्यात्वा इड़यालक्ष्य देहान्तःपापं प्रक्षाल्य कृष्णवर्णं तज्जलं ध्यात्वा पिङ्गलया विरेच्य पुरः कल्पितवज्रशिलायां क्षिपेदिति तन्त्रं च पापपुरुषस्वरूपं तज्जलं निःक्षिपेदित्यघमर्षणम् इति तन्त्रसारे तान्त्रिकाघमर्षणक्रमः तत्प्रमाणं तु तत्रैवागमग्रन्थः ।

**अघमार** त्रि० अघं मारयति मृ-णिच्-अण् उप०। पापनाशके देवादौ, "यमोऽङ्गलुरघमारो निर्ऋत" इति वेद ।

**अघरुद्** त्रि० अघं रोदिति सकर्म्मकत्वतया यस्मात् रुद-अपादाने क्विप् इत० । पापापनोदनहेतौ, पापनाशने मन्त्रे । "मा त्वाघरुदोऽरुदन्" इति वेद । अघं व्यसने रोदिति न तु तत्प्रतीकाराय यतते रुद+कर्त्तरि क्विप् । रोदनेनैव व्यसनोत्तारके तत्प्रतीकारार्थमनुद्यते त्रि०।

**अघर्म्म** पु० म०त० । उष्णविरोधिधर्मीते तद्वति त्रि० । "अघर्म्म काल" इति काद० ।

**अघल** त्रि० अघं लाति स्वीकरोति नाशयतीति ला-क । पापापनोदके । "अत्योर्येअघलादूता" इति वेद ।

**अघवत्** त्रि० अघमस्त्यस्य मतुप् मस्य व । पापवति सम्बोधने अघो—अघवन् । "अघोयजेति" मुग्धबोधम् ।

**अघविष** पु० अघं व्यसनकारि-विषं यस्य । सर्पे ।

**अघशंस** पु० अघमनिष्टं शंसति इच्छति शंस—अच् उपस० । अनिष्टसंपादके चौरे "अघायमघशंसमुद्रताभरातिमिति' वेद । भावे अच् इत० । व्यसनसूचने पु० ।

**अघशंसिन्** त्रि० अघं शंसति सूचयति शंस—णिनि इत० । व्यसनसूचके "व्यसनार्थसाकर्त्तरि "मनः क्रूरं मयोऽघशंसिनेति । स्त्रियां ङीप् ।

**अघायु** त्रि० अघं पापं परव्यसनं वा कर्त्तुमिच्छति अघ+क्यच्-उ । पापाचरणेच्छावति, परव्यसनाभिकांक्षके च । "ता इत्था अघायवोविदन्" इति यजु० । परस्याघं कर्त्तुमिच्छन्तीति वेददीप' । अघमायाति आ+या उ इत० । हिंसानिरते । "वधोऽघायूनामिति" ता०ब्रा० ।

**अघायुस्** त्रि० अघं पापसाधनमायुरस्य । सर्व्वावस्थासु पापकारके "अघायुरिन्द्रियारामोमोघं पार्थेति" गीता ।

**अघारिन्** त्रि० अघं व्यसनमृच्छति ऋ-णिनि । व्यसनयुक्ते स्त्रियां ङीप् । "अघारिणीर्विकेशोरुदत्य" इति वेदः ।

**अघासुर** पु० कर्म० । असुरभेदे अघनामकस्तद्वे तत्कथा ।

**अघाह** पु० अघस्य व्यसनस्याह अघस्य अ० । अशुभदिने अशौचदिने "अघाहं नैव वर्द्धयेदिति" "अघाहेषु निष्टेषु प्रयाताः ततमङ्गलं । आशौचाद्वितमङ्गलम् इति" च स्मृतिः ।

**अघोर** त्रि० न घोरः भयानकः । भयानकभिन्ने सौम्यरूपे, "या ते रुद्र ! शिवा तनूरघोरा पापकाशिनी" इति वेद । "अघोरा सौम्या अत एव पापकाशिनी शिवा च इति" वेददीप' । नास्ति घोरो यस्मात् । अतिभयानके त्रि०। रुद्रमूर्त्तिभेदे पु० । "ईशानाघोरनामानौ, वामदेवस्ततः परम् । सद्योजात इति प्रोक्ताः क्रमशोऽपंचकर्म्मणीति पुरा० । अघोर. शिव उपास्यत्वेनास्त्यस्याम् अघोर+अच् । भाद्रकृष्णचतुर्द्दश्यां स्त्री । "भाद्रे मासि सिते पक्षे ह्यघोराख्या चतुर्द्दशी । तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवमिति" पुरा० ।

**अघोष** पु० नास्ति घोषोऽस्यास्य वा । वर्णोत्पादकार्थे वाह्य

**अङ्कपाश** पु० अङ्कः पाश इव बन्धनेनेव पातनहेतुरत्र । लीलावत्युक्ते एकाद्यङ्कानां स्थानविनिमयेन संख्याभेदबोधके, तदैक्यसंख्यासङ्कलनोपयोगिनि च प्रक्रियाभेदे "स्थानान्तमेकादिचयाङ्कघातः सङ्ख्याविभेदा नियतैः स्युरङ्कैः । भक्तोऽङ्कमित्याङ्कसमासनिघ्नः स्थानेषु युक्तो मितिसंयुतिः स्यादिति"। यथा १, २, एतयोरङ्कयोः स्थानद्वये, स्थितिः तयो स्थानविनिमये कति भेदाः, भेदभिन्नानाञ्च सङ्ख्यैक्यमिति कथेति १ च दृष्टे अनेनैव प्रकारेण १२, २२, एतौ द्वौ भेदौ ऐक्याङ्कमितिः" ३३ इत्युत्तरं तत्स्थानेनैव भवति । "न गुणो न हरो न कृतिर्न घनः पृष्टस्तथापि दुष्टानाम् । गर्वितगणकबटूनां स्यात् पातोऽवश्यमङ्कपाशेऽस्मिन्निति" लीलावती ।

**अङ्कपूरण** न० अङ्कयोस्तत्संख्ययोः पूरणं गुणनम् । अङ्कयोर्गुणने । [परितोऽङ्कस्य बन्धनम् ।

**अङ्कबन्ध** पु० अङ्कस्य बन्धः । क्रोडबन्धे । यथा पर्यङ्कबन्ध ।

**अङ्कलोढ्य** पु० अङ्केन लोढ्यतेऽसौ लोड-ण्यत् ३त० । चिञ्चोड़वृक्षे ।

**अङ्कलोप** पु० अङ्कस्य वियोज्यसंख्याया इष्टसंख्यातो लोपः वियोजनम् । इष्टसंख्यातः कस्याश्चित् संख्याया वियोजने यथा नवाङ्कसंख्यात पञ्चाङ्कसंख्याया वियोजने चतुःसंख्याऽवशिष्यते । एवम् अन्यत्रापि ।

**अङ्कस्** न० अन्च-असुन् कुत्वम् । चिह्ने, शरीरे च । "यथामङ्कास्यापनीफलदिति" वेदः ।

**अङ्कस** न० अङ्कोऽस्त्यस्य अच् । चिह्नयुक्ते । "श्येनस्येव व्रजतोऽङ्कसं परीति" यजुः । अङ्कसं पक्षमापपदिकमिति ।

**अङ्काङ्क** न० अङ्के मध्ये अङ्का शतपत्रादिचिह्नानि यस्य । जले "आपो वै अङ्काङ्कं छन्दः" इति, अङ्काङ्कं छन्द इति च श्रुतिः । [कारैरङ्कित मेघवाहनमिति" वह्निध्यानम् ।

**अङ्कित** त्रि० अङ्क-क्त । चिह्नयुक्तीकृते, "स्वाहास्वधावषट्-

**अङ्किन्** त्रि० अङ्क आलिङ्गनस्थानत्वेन अस्यास्ति अङ्क+इनि । अङ्केनालिङ्ग्य वादनीये मृदङ्गादिवाद्यभेदे, क्रोडविशिष्टे च । "पाशायामङ्किनो ये चरन्तीति" वेद ।

**अङ्किनी** स्त्री अङ्कानां चिह्नानां समूहः खलादि० इनि ङीप् । चिह्नसङ्घाते । मत्वर्थे इनि ङीप् । अङ्कयुक्तस्त्रियाम् ।

**अङ्कुर** अस्त्री० अङ्क-उरच् । बीजादभिनवोत्पन्ने, अस्थिकाण्डस्थि जाते तृणलतादौ "दर्भार्धकुट्टैः तृणाङ्कुरैर्विति" रघुः । जले, लोमोत्पत्तिसाधनत्वात् रुधिरे, लोम्नि च मुकुले च "चूताङ्कुरास्वादकषायकण्ठ" इति कुमा० ।

**अङ्कुरक** पु० अङ्क्यते तृणादिना सञ्चीयतेऽसौ अन्च-उरच् तत क । पक्षादीनां वासस्थाने (वासा इति) ख्याते ।

**अङ्कुरित** त्रि० अङ्कुरः जातोऽस्य ता० इतच् । जाताङ्कुरे ।

**अङ्कुश** अस्त्री० अन्च-उशच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्रभेदे (डाङश) इति ख्याते । "तिरोगतं साङ्कुशमुद्वहन् शिर" इति माघः । "सन्निवेश्य कुथायस्यां रिपुनागाङ्कुश कुर्यामिति" रघुः । प्रतिबन्धे च "निरङ्कुशा कवय इति" मल्लिनाथ पक्षा० फक् । आङ्कुशायन अङ्कुशसन्निकृष्टस्थाने त्रि० ।

**अङ्कुशग्रह** पु० गृह्णातीति ग्रह-अच् ६त० । अङ्कुशधारिणि निषादिनि । "अन्वेतुकामोऽवमताङ्कुशग्रह" इति माघ ।

**अङ्कुशदुर्द्धर** पु० दुःखेन धार्य्यते व्यवस्थाप्यते दुर्-धारि-खल् तुस्य अङ्कुशेन—दुर्द्धरः ३त० । दुर्दान्तहस्तिनि ।

**अङ्कुशधारिन्** पु० अङ्कुशं धारयति धारि-णिनि । हस्तिपालके ।

**अङ्कुशमुद्रा** स्त्री अङ्कुशाकारा मुद्रा । "ऋज्वीञ्च मध्यमा कृत्वा तन्मध्यपर्वमूलतः । तर्ज्जनीं किञ्चिदाकुञ्चेत् सा मुद्राऽङ्कुशसंज्ञितेति" तन्त्रोक्ते तीर्थावाहनाद्यर्थं कल्पिते अङ्गुलिसन्निवेश रूपमुद्राभेदे ।

**अङ्कुशी** स्त्री अङ्कुश चित्तनागरोधनोपाय विवेक अस्त्यस्याः अच् गौ० । जैनीयदेवीभेदे । [तृणादौ ।

**अङ्कूर** पु० अङ्क-खर्ज्जूरादित्वात् ऊरच् । अभिनवोत्पन्ने

**अङ्कूष** अस्त्री० अङ्क-ऊषच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहमयेऽस्त्रभेदे (डाङश) ।

**अङ्कोट(ठ)** (ल) पु० अङ्क्यते लक्ष्यते कीलाकारकण्टैः । अङ्कोट (कोठ) (कोल) वा । पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले (आकोड) इति ख्याते वृक्षे ।

**अङ्कोलक** पु० अङ्कोल+स्वार्थे-क । आकोड इति ख्याते वृक्षे ।

**अङ्कोलिका** स्त्री वल-अच् नि० संप्रसारणे—उल अङ्काय तद्दानाय उल स्वार्थे क । आलिङ्गनक्रियायाम् । [विषभेदे ।

**अङ्कोलसार** पु० अङ्कोलस्य सारः ६त० । अङ्कोटवृक्षजाते

**अङ्कोल्लिका** स्त्री । पृ० साधु । अङ्कोठवृक्षे ।

**अङ्क्य** पु० अङ्के क्रोडे स्थापयित्वा वाद्यतेऽसौ यत्, अङ्के साधु अङ्क+य वा । "शार्ङ्ग तालत्रयायाम चतुर्यावस्तानमः । हरीतक्याकृतिर्यः स्यादङ्क्योऽङ्के स हि वाद्यते इत्युक्ते" क्रोडे स्थापनपूर्ब्बकं वादनीये मृदङ्गादौ । अङ्कनीये त्रि० ।

**अङ्ग** चिह्नयुक्तकरणे अदन्तचुरादि उभय० सकर्म्मक सेट् । आङ्क्य-ति ते आञ्चिग-त् त । मतान्तरे अङ्कापयति ते ।

अङ्ग न० अगि-गत्यादौ बा० अच्। चित्ते (अङ्गजः कामः) "हिरण्यगर्भाङ्गभुवमिति" देहे "उत्सेधलग्नं तदङ्गमिन्द्रः" इति कुमा०। अङ्गशब्दस्य चेष्टावदन्त्यावयविरूपावयविवाचित्वेऽपि तदवयवेऽपि हस्तपादादौ व्यवहारः अवयवत्वसामान्यात् तेषाञ्च तत्तच्छब्देनापि व्यवहारः। तत्राङ्गशब्दस्य देहार्थत्वे तदीयस्वरूपं तदवयवभेदाश्च सुश्रुते दर्शिताः। यथा "शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छितं गर्भ इत्युच्यते तञ्च चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्त्याकाशं विवर्द्धयति। एवं विवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते तच्च षडङ्गं शाखाश्चतस्रो, मध्यं पञ्चमं, षष्ठं शिर इति।

"अतःपरं प्रत्यङ्गानि वक्ष्यन्ते। मस्तकोदरपृष्ठनाभिललाटनासाचिबुकबस्तिग्रीवा इत्येता एकैकाः। कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्वस्फिग्जानु-बाहूरुप्रभृतयो द्वे द्वे, विंशतिरङ्गुलयः। स्रोतांसि च वक्ष्यमाणानि। एष प्रत्यङ्गविभाग उक्तः। तस्य पुनः संख्यानम्। त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जवः सेवन्यः सङ्घाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्म्माणि शिरा धमन्यो योगवहानि स्रोतांसि च॥

त्वचः सप्त। कलाः सप्त। आशयाः सप्त। धातवः सप्त। सप्त शिराशतानि। पञ्च पेशीशतानि। नव स्नायुशतानि। त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धिशते। सप्तोत्तरं मर्मशतम्। चतुर्विंशतिर्धमन्यः। त्रयो दोषाः, त्रयो मलाः। नव स्रोतांसीति समास इति"॥

अवयवे "शेषाङ्गनिर्माणविधौ विधातुरिति" कुमा०। अपाङ्ग इति।

उपाये, "सर्व्वकार्य्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकमिति" "मन्त्रो योध इवाधीरः सर्व्वाङ्गैः संवृतैरपीति" च माघः। प्रधानोपयोगिनि उपकरणे, "फलवत्सन्निधावफलं तदङ्गमिति" मीमांसा। "प्रधानस्य क्रिया यत्र साङ्गं तत् क्रियते पुनः तदङ्गस्याक्रियायान्त्विति" स्मृतिः। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमिति" सम्बोधने अव्य०। "त्वमङ्ग यस्मात् पतिरस्मि तत्क्षम" इति नैषधम्। अङ्गमस्त्यस्य अच्। अङ्गवति "येनाङ्गविकार इति" पा० अङ्गस्याङ्गिन इत्यर्थः अन्तिके च त्रि०। जन्मादिलग्ने न० "अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुतो वीक्षितो वेति" जातकम्। देशभेदे पु०। तस्य विवरणम् अङ्गाधिपशब्दे। "अङ्गेषु वङ्गेषु खगेषु योज्या" इति "अङ्गवङ्गकलिङ्गेष्वेति" च ज्योतिषम् अङ्गानां राजा आङ्गः बह्वर्थे अङ्गाः। अङ्गदेशे भवः अण्। आङ्गः। बह्वर्थे अङ्गाः। अङ्गेन देशेन निर्वृत्तः ठक्। आङ्गिकः। अङ्गदेशजराजाजनो वा भक्तिरस्य अण् आङ्गः। अङ्गस्येदम् अङ्गीयं। "यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति" पाणिनिपरिभाषिते प्रत्ययावधिभूते शब्दभेदे, "इच दीर्घं कुर्व्वन्निटो धोऽङ्गादिति" मा०। अङ्गादागतम् अण्। आङ्गं अङ्गनिमित्ते कार्य्ये "अस्मादाङ्गं बलीय इति" परिभा०। उपकरणानि च यथा सप्ताङ्गानि दिङ्मात्रमत्रोच्यते। तत्र "स्वाम्यमात्यसुहृत्कोषो राष्ट्रं दुर्गं बलानि च राज्याङ्गानीत्युक्तानि" "स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा। सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते" इत्युक्तानि राज्याङ्गानि। दर्शादौ च प्रयाजादीनि, वैदिककर्म्मणाञ्च तत्तत्क्रियासम्पादकतत्तद्द्रव्याणि चाङ्गानि "अङ्गानि वैदिककर्म्मणः फलावश्यम्भाव इति" मीमा०। वेदस्य व्याकरणादीनि अङ्गानि, "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसाञ्चितिः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु इति"। एतेषाञ्च लक्षणादिकमग्रे वक्ष्यते। एतेषां वेदार्थज्ञानोपयोगित्वादङ्गत्वम् अतएव श्रुतौ "ब्राह्मणेन निष्कारणः षडङ्गः साङ्गोपवेदोऽध्येतव्य" इत्युक्तम् शिक्षायां तेषां वेदार्थज्ञानोपयोगित्वादङ्गत्वं दर्शितम् यथा

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते इति" अतो वेदार्थज्ञानोपयोगितया एतेषां षण्णां वेदाङ्गत्वम्। "द्वे विद्ये वेदितव्ये" इत्युपक्रम्य "परा चापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति अथ परा यया तदक्षरमधिगम्यते" इति श्रुतौ व्याकरणादीनामपरविद्यात्वेन कीर्त्तनं "तेषाञ्च साधनभूतधर्म्महेतुत्वात् षडङ्गसहितानां धर्म्मसाधनत्वेनापरविद्यात्वमिति" भाष्ये उक्तम्। आयुर्वेदादीनामुपवेदत्वं न्यायादीनामुपाङ्गत्वं यथा च तेषां तथात्वं तथा तत्तच्छब्दे दर्शयिष्यते।

फलम् । षड्वर्गाष्टकस्पष्टं तथाऽह्निफलं वदेत् ॥ ताजिकाज्जन्मलग्नस्य साधनञ्च परिस्फुटम् । वर्षमासदिनालग्नन्त दशान्तर्दशफलन्तत ॥ छायोन्नतांसं त्रिधा वक्ष्ये विषुवच्छे दिनेष्टकम् । दिनमानं त्रिंशं भुक्तोदयम् घटीषु च निजच्छायाभिर्ष्ठाश्च दृष्टमासप्रविशति । लग्नोदयान् स्वदेशीयान् तेभ्यो लग्नस्य साधनम् । लग्नमानन्तथा होराद्रेष्काणं सप्तमांशकम् । नवांश द्वादश त्रिंशम् उदये सप्तसाधनम् ॥ तिथे नक्षत्र वक्ष्ये वारजातयोगजम् । योगाख्यं करणाख्यञ्च मुहूर्त्तान् सक्रमोद्भवम् ॥ चन्द्रताराबलञ्चैव पक्षभेदेन संयुतम् । शुभाशुभांश्च योगांश्च तिथिवारर्क्षयोगजान् ॥ सिद्धं संवर्त्तकञ्चैव तथा वारशुभाशुभम् । अयनान्निदिन वक्ष्ये ततो योगत्रिपुष्करम् ॥ यमघण्ट यमदंष्ट्रा क्रकचार्गलपातकान् । कुमारन्तरुण दुष्टं स्थूलातिस्थूलयोगिनीम् । वारस्थूलतया कालं कालवेलां परिस्फुटम् । कालहोरार्द्धयामञ्च कुलिकञ्च घटकद्वयम् ॥ फलं ग्रहस्य विष्णास्य वज्रभार्गवयो फलम् । दशां चान्तर्दशां स्थूलां वक्रातिचारयो फलम् ॥ पीडास्थानानि खेटानां ग्रहावस्थां तथैव च । भावफल सन्निकर्षं चतानेधत्तपयहान् ॥ गोमवक्रपशोहेमन्तोवर गोचरव्यधम् । विवाहञ्च प्रतिष्ठाञ्च दीक्षायात्राप्रवेशनम् ॥ वास्तुदोषोद्भविन्यासं कालविशेषकांस्तथा । जलयोगार्घकाण्डञ्च वर्षमासदिनार्द्धतत् ॥ तिथ्यादिपञ्चक खेटञ्चन्द्रनतकाल सम्भवम् । अवस्थाञ्चतुर्दिश्य लोकपिन्नां यदाप्रश्नम् ॥ आयुर्जन्मादि सर्वाणि कालचिह्नानि यानि च । दुष्टरिष्टान्यहं वक्ष्ये तथा शेषाञ्च शान्तिकम् ॥ ज्योतिरङ्गमिदं सर्वं ये जानन्ति मनीषिण । दीपवत्ताज्ज्ञानोयाज्ज्योहन्धकारनाशने" इति ॥

गर्गसंहितायां तु चतुर्विंशतिसङ्ख्यानि अङ्गानि उपाङ्गानि चत्वारिंशदिति ज्योतिरङ्गानि वट षट्त्रिंशदङ्गानि यथा "यथैव वेदस्याङ्गानि षडङ्गानि मनीषिभि । चतुःषष्ट्याङ्गानि ज्योतिषस्य विदुर्बुधा" इत्युपक्रम्य गणितज्ञानपूर्वकं तत्प्रयोगमावश्यकमित्युक्त्वा तद्विभागा दर्शिता यथा "तस्मात् कृत्स्नमधीत्यादौ वेदाङ्ग कालसाधनम् । ज्योतिषामयनाङ्गानि चतुःषष्टिततः पठेत् । येषामध्ये कर्मगुणौ चन्द्रलग्ने त्वनन्तरम् । नक्षत्रकेन्द्रभे चैव द्विवर्गं प्रथम स्मृत । राहौ वृहस्पतौ शुक्रे, धूमकेतौ शनैश्चरे । अङ्गारके बुधेऽर्के च चारानष्टौ तत पठेत् । चक्रोऽयनान्तर चक्र मृगचक्र तथैव च । श्वचक्रं वातचक्रं च वक्राङ्गेषु चतुष्टयम् । वास्तुविद्याङ्गविद्या च वायसानां तथैव च । ज्ञेयाविज्ञस्तु विद्यैता हस्तगर्भमता शुभा । स्वातीयोग तथाषाढारोहिणीयोगमेव वा । एतान् कृत्स्नान् विजानीयात् प्रयोगान् वै विशेषत । दृष्टस्य चेतोह्याङ्गानि चतुर्विंशतिरीरिता । अतऊर्द्ध्वं प्रवक्ष्यामि उपाङ्गानीह नामत । आनुपूर्व्याद्विधानेन चत्वारिंशच्च नामत । षट्कोणो षट्युत षट्शृङ्गाटकं तथा । कृत्स्नं चन्द्रेश्वराणाञ्च ग्रहपाकास्तथैव च । विषयाश्चाग्निवर्णाश्च उमानुकूलास्तथैव च । मयूरचित्रोपनिषदुपहारप्रयाणय । तत्वान्तिके तुलाकोशोऽङ्गवन्तोपधारयेत् । सर्वभूतहिताचैव तथा पुष्पलतां विदु । उपानद्रोलस्तथा छेदोपच्छेदस्तथैव च । तन्तुलोभुवनकोषश्च गर्भाधानादिकं तथा निर्घातो भूमिकम्पश्च परिवेषास्तथैव च । अतुलभावा सन्त्येव तथोल्काचोपधारयेत् । सांवत्सरस्तथा युक्त शास्त्राणां देवकोऽभवेत् । बलाबल तु विज्ञेयं बहु यत्र प्रभ वदेत् । चतु षष्ट्यङ्गमेतत्तु चतुःसरसदाहृतमिति" । एतच्च गणितादित्रय प्रधानाङ्गत्वात् स्कन्धत्रयम् अन्यानि तु अप्रधानान्यङ्गानीति कश्चित् सङ्क्षेपत उक्तानि, कश्चित् विस्तरत इति विशेष । गर्गोक्तविभागाभिप्रायेणैव मुद्राराक्षसे "कृतपरिश्रमोऽस्मि चतु षष्ट्यङ्गे ज्योतिषे" इति सूत्रधारवाक्यम् । बृहत्संहितायां तु गर्गोक्तान्येव प्रायशोऽङ्गानि प्रदर्शितानि तेषां स्वरूपादिकं तत्तच्छब्दे वक्ष्यते ।

दृश्यकाव्ये मुखप्रतिमुखगर्भविमर्षोपसंहृतिरूपपञ्चसन्धिपञ्चकस्य चतु षष्टिरङ्गानि यथोक्त साहित्यदर्पणे "उपक्षेप परिकर परिन्यासो विलोभनं । युक्ति प्राप्ति समाधान विधान परिभावना ॥ उद्भेद करण भेद एतान्यङ्गानि वै मुखे"(इति मुखस्य १२) "विलास परिसर्पश्च विधूत तापनं तथा । नर्म नर्मद्युतिश्चैव तथा प्रगमन पुन । विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् । पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि" (इति प्रतिमुखस्य १३)। "अभूताहरणं मार्गो रूपोदाहरणं क्रम । सङ्ग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च । तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा (इति गर्भस्य१२)। "अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युति । शक्ति प्रसङ्ग खेदश्च प्रतिषेधो विरोधनम् ॥ प्ररोचना विमर्षे स्यादादानं छादन तथा (इति विमर्षस्य १३)। "सन्धिर्विबोधो ग्रथनं निर्णय परिभाषणम् । कृति प्रसाद आनन्द समयोऽप्युपगूहनम् ॥ भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च । प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामत " (उप-

**अनास्** त्रि० आस्यते निरास्यते क्षेपणसमेन आ+अस–क्षेपे करणे क्विप् आः मुखं नास्ति तत् साधनत्वेनास्य । आस-व्यापारशब्दरहिते । "अनासोदस्यूँरमृण" इति ऋ० ५,२९, १०, "अनासः आस्यरहितानि तद्व्यापारशून्यानीति" भा० ।

**अनासिक** त्रि० नास्ति नासिकाऽस्य । भग्ननासिके निकृत नासिके च ।

**अनास्था** स्त्री आ+स्था–अङ् आस्था आदरः अभावार्थे न०त० । अनादरे । "स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सतामिति" कुमा० "अनास्थया सूनकरप्रसारिणीमिति" नैष० । न०ब० । आदररहिते त्रि० ।

**अनास्थान** त्रि० आस्थीयतेऽस्मिन् आ+स्था–आधारे ल्युट् आस्थानोभूप्रदेशः न०त० । आस्थानायोग्ये जलादौ । "अनारम्भणे तदवीरयेथामनास्थाने" इति ऋ० १,११६,५ । आस्थानं सभा । तच्छून्ये च ।

**अनास्राव** आ+स्रु–वेदे घञ् न०ब० । क्लेशरहिते । लोके तु अप् अनास्रव इति । "तेषामसि त्वमुत्तममनास्रावमरोगणमिति" अथ० २,२,२ ।

**अनाह** पु० नह–घञ् न०त० । मलादिबन्धाभावोपलक्षिते-पक्वणोरोगे ।

**अनाहत** न० आ–हन–भावे क्त आहत छेदो भोगो वा न० ब० । छेदभोगादिरहिते नवीने वस्त्रे । तन्त्रशास्त्रे प्रसिद्धे हृदयस्थिते सुषुम्णामध्यस्थे द्वादशदलपद्मे "शब्दो ब्रह्ममय, शब्दोऽनाहतो यत्र दृश्यते अनाहताख्यं तत् पद्मं मुनिभिः परिकीर्त्तितमित्युक्तलक्षणे । नाभिस्थं मणिपूरं चक्रं वर्णयित्वा "तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् । कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् । तन्मध्ये वाण लिङ्गन्तु सूर्य्यायुतसमप्रभम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परमिति" तन्त्रसारे उक्तम् । अस्मिन् पद्मे च आहतमाघातः कण्ठताल्वाद्यभिघात नास्ति साधनत्वेनास्य तादृशः शब्दः अस्त्यस्मिन् अर्श आदित्वात् अच् । अनाहतपदेन च परा, पश्यन्ती, मध्यमा, वैखरीतिप्रसिद्धानां वागवस्थानां मध्ये मध्यमा वाक् कथ्यते तस्याश्च हृदयपद्मे कण्ठादिस्थानमनाहत्यैवोत्पन्नत्वादनाहतत्वम् अधिकं मध्यमाशब्दे वक्ष्यते । ब० । आघातरहिते वस्तुमात्रे त्रि० ।

**अनाहार** पु० न आहारः अभावार्थे न०त० । भोजनाभावे "अनाहारेणात्मानं तव द्वारि व्यापादयिष्यामीति" हितो० । "अनाहारेण देहिन" इति पुरा० ।

**अनाहार्य्य** त्रि० आहार्य्यं कृत्रिमं आहरणीयञ्च न०त० । अकृत्रिमे स्वाभाविके, आहरणीयभिन्ने च ।

**अनाहिताग्नि** पु० न आहित. अग्निर्येन । विधिना अकृताग्न्याधाने निरग्नौ द्विजभेदे । "योऽनाहिताग्निः शतगुरयज्वा च सहस्रगु"रिति मनु. । 'अनाहिताग्निश्रुतेश्चेति' कात्या० ४,१,२९, "अनाहिताग्नेरपि पितृयज्ञः श्रूयते" इति तद्व्याख्या सा च श्रुतिस्तत्रैव दर्शिता "अप्यनाहिताग्निना कार्य्य इति" "यदि स दर्शाङ्गं स्यात् अनाहिताग्नेर्दर्शपौर्णमासाभावाच्च श्रूयेतेति" तद्व्याख्या ।

**अनिकेत** पु० नास्ति निकेतः नियमेन निवासो यस्य ब० । नियतनिवासशून्ये परिव्राजके । "अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशन" इति "अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेदिति" च मनु "अनिकेतः स्थिरमतिरिति" गीता अनिकेतनोऽप्यत्रार्थे ।

**अनिक्षु** न० न इक्षुः सादृश्ये, अप्राशस्त्ये वा न०त० । इक्षुसदृशे गुडहेतौ (नटा) इति ख्याते काशभेदे ।

**अनिगीर्ण** त्रि० न निगीर्णः । अनपह्नुतभेदे, "विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् सारोपा स्यादिति" सा०द० । (अनिगीर्णस्य) अनपह्नुतभेदस्य (विषयस्य) आरोपविषयस्य आरोप्यमाणस्य, (अन्यस्य) आरोपाश्रयस्य तादात्म्यभेदस्तत्प्रतीतिकृत् तद्बोधसाधन वृत्तिः सारोपा लक्षणेति तदर्थः यथा अश्वः श्वेतो धावतीत्यादौ श्वेतगुणवानश्वोऽनपह्नुतभेद सन् स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते इत्यतस्तत्र सारोपा लक्षणा ।

**अनिच्छा** स्त्री न इच्छा अभावार्थे न०त० । इच्छाभावे "स्फुटामनिच्छां विवरीतुमुत्सुकामिति नैष० । "चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छयेति" मनुः ।

**अनित्य** त्रि० न नित्य । नश्वरे, जन्ये च । "नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा । अनित्या तु तदन्या स्यादिति" भाषा० । "यदि नित्यमनित्येन निर्मलं मलवाहिना । यशः कायेन लभ्येतेति" हितो० "एकपक्षमनित्यस्य भूतावासमिमं त्यजेदिति" मनुः । अस्थिरे "अनित्योविजयो यस्मात् दृश्यते युध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेदिति" मनु. । कृताकृतप्रसङ्गि नित्यं विरोधि न०त० । कृताकृतप्रसङ्गशून्ये वैकल्पिके "समासान्तविधेरनित्यत्वमिति" पा०भा० । यावदाश्रयमवस्थानायोग्ये, "वर्णे चानित्ये" इति पा० । अव्यवस्थिते, (यावदाश्रयमदनवस्थिते) "इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा आमे फले, ये रसादयस्ते

**अनिराकरण** न० निराकरणमभावार्थे न०त० । निराकरणाभावे "अनिराकरणात् कर्त्तुस्त्यागात्कर्मणोचितमिति" स्मृतिः ।

**अनिरुक्त** त्रि० निष्क्रान्त उक्तमवयवार्थं निर्वचनमवयवार्थो येन वा निरुक्तं निर्वचनम् न०त० । विशेषरूपेण निर्वचनशून्ये "एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते" इति श्रुतिः । निर्वचनञ्च निरुक्ते यास्केन दर्शितं यथा "अथ निर्वचनम् तद्येषु पदेषु स्वरसंस्कारौ समर्थौ, प्रादेशिकेन गुणेनान्वितौ स्यातां, तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् नत्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत विशयवत्यो हि वृत्तयो भवन्ति । यथार्थं विभक्तीः सन्नमयेत्प्रत्तमवत्तमिति धात्वादी एव शिष्येते । अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति, अथाप्यन्तलोपो भवति गत्वा गतमिति, अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति, अथाप्युपधाविकारो भवति राजा दण्डीति, अथापि वर्णलोपो भवति तत्त्वा यामीति अथापि द्विवर्णलोपः तृच इति, अथ आदिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्कु इति अथाप्यन्तव्यापत्तिर्भवति" इति । तथा प्रकृतिप्रत्ययानपेक्ष्यैव समुदायेन विशिष्टार्थबोधकमपि निरुक्तं यथोक्तम् ऋ० भा० माधवेन यथा "प्रकृतिप्रत्ययार्थमनपेक्ष्य निर्दिष्टकार्थबोधकं पदं निरुक्तमिति" । अनिर्दिष्टे "अनिरुक्तमात'सवन प्रथम" इति कात्या० २२,५,७, "अनिरुक्तं प्रात'सवनं यस्यासौ प्रथम" इति तद्व्याख्या ।

**अनिरुद्ध** पु० न केनापि युद्धेन निरुद्ध नि+रुध—क्त न०त० । कामदेवसुते, उषापतौ, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्य चतुर्व्यूहस्य परमेश्वरस्य कथमप्यनिरोध्यस्य अत्यन्तबलस्य चेतसोऽधिष्ठातरि अनिरुद्धाख्ये अंशे च "अनिरुद्ध सुरानन्द" इति विष्णु० स० । "न केनापि प्रादुर्भावेषु निरुध्यते" इति भा० "अनिरुद्धोऽप्रतिरथ" इति विष्णु सह०। "चतुर्षु व्यूहेष्वनिरुद्ध" इति भा० "संकर्षणोवासुदेवप्रद्युम्नश्चानिरुद्धक । व्यूहचतुर्विधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणमिति" रामा० दर्श० । विवरणं रामानुजशब्दे वक्ष्यते । अप्रतिरुद्धे त्रि० ।

**अनिरुद्धपथ** न० न निरुद्धः पन्था यत्र ब० । आकाशे तत्र हि कस्यापि गतिरोधनाभावः । रुद्धवर्त्मभिन्ने त्रि० ।

**अनिरुद्धभाविनी** स्त्री ६त० । उषायां बाणकन्यायां तस्यास्तत्पत्नीभवनकथा च उषापतिशब्दे दृश्या ।

**अनिर्ज्ञात** त्रि० न निर्ज्ञातः निश्चितो प्राप्तो वा । अप्राप्ते, अनिश्चिते च "क्रिया हि अनिर्ज्ञातकालादिक्रियायाः परिच्छेदकत्वात् लक्षणं भवतीति" प्रौ० मनो० । अनिर्ज्ञातप्राप्त्यर्थं प्रतीक्षणं प्रतीक्षेति कठ०उ०भा० । प्राप्तं हि यथा स्वरूपं प्राप्तुं शक्यते नाप्राप्तमित्यतोऽप्राप्तस्यानिर्ज्ञातत्वम् । [धारणाभावे ।

**अनिर्णय** न निर्णय' अभावे न०त० । निश्चयाभावे अव-

**अनिर्दश** त्रि० न निर्गतानि दश दिनानि यस्य ब०व्रा० । अनपगतदशाहे । "उष्ट्राक्षं सूतिकाक्षञ्च पर्युषितान्नमनिर्दशमिति" अनिर्दशस्य प्रेतान्नमिति, "तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशमिति" "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशमिति" "अनिर्दशाया' गो क्षीरमौष्ट्रमेकशफं तथेति च" मनु' । अनिर्दशाहमप्यत्र त्रि० । "अनिर्दशाहां गां सूतामिति" मनु' ।

**अनिर्देश्य** त्रि० न निर्देश्य जातिगुणक्रियासंज्ञाभिर्निर्देष्टुमशक्यम् निर्+दिश्—शक्यार्थे यत् न०त० । निर्विशेषे निर्धर्मके परमात्मनि तस्य जातिगुणाद्यभावेन "इदं तदिति" निर्देशायोग्यत्वात्तत्त्वम् । "यत्तत् सूक्ष्ममनिर्देश्यमिति" श्रुति । "ब्रह्मन् ! ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तय" इति भाग० १०म स्क० । अनिर्देश्यवपु' श्रीमानिति विष्णु स०। "इद तदिति निर्देष्टु यन्न शक्यते परस्मै, स्वयं वेद्यत्वादिति" भाष्यम् । [श्चिते ।

**अनिर्धारित** त्रि० न निर्धारित' । अवधारितभिन्ने अनि-

**अनिर्माल्या** स्त्री निर्—मल—ण्यत् न०त० । दृक्कानामकौषधौ शब्दरत्ना० ।

**अनिर्वचनीय** पु० निर्वचनं निरुक्ति लक्षणादिना ज्ञापनम् । एवंरूपतया निर्वक्तुमशक्ये परमात्मनि । सत्त्वासत्त्वाभ्यामेकतररूपेण निर्वक्तुमशक्ये वेदान्तिमते जगति, अज्ञाने च न० । "अज्ञानञ्च सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति" वे०सा० ।

**अनिर्वचनीयसर्वस्व** न० अनिर्वचनीयं सर्वस्वं यस्य । श्रीहर्षप्रणीते खण्डनखण्डखाद्यापरपर्याये ग्रन्थभेदे तत्र हि सर्वेषां पदार्थानामिदन्तया निर्वक्तुमशक्यता व्यवस्थिता ।

**अनिर्वृति** स्त्री न निर्वृतिः स्वाच्छन्द्यमभावार्थे न०त० । स्वाच्छन्द्याभावे तद्रूपोपलक्षिते दारिद्र्ये च "अनिर्वृति-

मध्ये पुलस्त्योक्तिः । "श्रूयताम् पूर्व्वमरुतामुत्पत्तिं कथयामि ते । स्वायम्भुवं समारभ्य यावन्मन्वन्तरं त्विदम् ॥ स्वायम्भुवस्य पुत्रोऽभून्मनोर्नाम प्रियव्रतः । तस्यासीत् सवनो नाम पुत्रस्त्रैलोक्यपूजितः ॥ स सुतूपपाताथ स कामचारी सर्व्वमहिष्या सुमानपुत्रया । रराम तन्व्या सह कामचारी ततोऽम्बरात् माल्यमतास्य शुक्रम् ॥ पतितैः सनतुष्ताता पप्प पुष्करसंस्थितम् । तं शुक्रं पार्थिवेन्द्रस्य मन्यमानास्तदाम्रुतम् ॥ पीतमात्रेण शुक्रेण पार्थिवेन्द्रोभङ्गेन च । ब्रह्मतेजोविहीनास्ता जाता पत्न्यस्तपस्विनाम् ॥ सुषुवुः सप्त तनयास्ते रुदन्तोऽथ भैरवम् । तेषां रुदितशब्देन सर्व्वमापूरितं जगत् ॥ अथाजगाम भगवान् ब्रह्मलोकात् पितामहः । समभ्येत्याब्रवीद्बालान् मा रुदध्वं महाबलाः ! ॥ मरुतो नाम यूयं वै भविष्यध्वं वियच्चराः । इत्येवमुक्ता देवेशो ब्रह्मा लोकपितामहः ॥ तानादाय वियच्चारी मारुतानादिदेश ह । ते चासन् मरुतश्चाद्या मनोः स्वायम्भुवान्तरे" ॥ स्वारोचिषे तु मरुतो वक्ष्यामि शृणु नारद ! । स्वारोचिषस्य पुत्रस्तु श्रीमानासीत् क्रतुध्वजः ॥ तस्य पुत्राभवन् सप्त सप्तार्च्चिःप्रतिमा मुने ! । तपोऽर्थं ते गता शैलं महामेरुं नगेश्वराः ॥ आराधयन्तो ब्रह्माण पदमैन्द्रमभीप्सव । ततो विपर्चित्रामा स सहस्राचो भयातुरः ॥ पूतनामप्सरोमुख्यां प्राह नारद ! वाक्यवित् । यथा हि तपसो विघ्नं तेषां भवति सुन्दरि ! ॥ तथा कुरुष्व मा तेषु, सिद्धिर्भवतु वै यथा । इत्येवमुक्ता शक्रेण पूतना रूपशालिनी ॥ तत्राजगाम त्वरिता यत्र तप्यन्ति ते तपः । आश्रमस्याविदूरे तु नदी मन्दोदवाहिनी ॥ तस्यां स्नातुं समायाता सर्व्वएव सहोदराः । सा तु स्नातुं सुचार्व्वङ्गी त्ववतीर्णा महानदीम् ॥ ददृशुस्ते नृपाः स्नातुं ततश्चुक्षुभिरे मुने ! । तेषाञ्च प्राच्यवत् शुक्रं, तत् पपौ जलचारिणी ॥ शङ्खिनी ग्राहरूपस्य महाशङ्खस्य वल्लभा । ते वै विनिष्टतपसो जग्मू राज्यन्तु पैतृकम् ॥ अथो बहुतिथे काले सा ग्राही शङ्खरूपिणी । सच्छुता महाजालैर्मत्स्यबन्धेन मार्गिणो ॥ स तां दृष्ट्वा महाग्राहीं स्वलस्थां मत्स्यजीवनः । निवेदयामास तदा क्रतुध्वजसुतेषु वै ॥ तथाथेत्य महात्मानो योगिनो योगधारिणः । नीत्वा स्वमन्दिरं सर्वे पुरव्यापां सहतृहजन् ॥ ततः क्रमाच्छङ्खिनी सा सुषुवे सप्त वै शिशून् । जातमात्रेषु पुत्रेषु मोक्षमावमगाच्च सा ॥ असमातृपितृका बाला जलमध्य

विचारिणः । स्तन्यार्थिनो वै रुरुदुरथाभ्यागात् पितामहः ॥ मा रुदध्वमिति प्राह मरुतो नाम पुत्रका ! । यूयं देवा भविष्यध्वं वायवोऽम्बरचारिणः ॥ इत्येवमुक्ताथादाय सर्व्वांस्तान् देवतान् प्रति । नियोज्य च मरुन्मार्गे वैराजभवनं गतः ॥ एवमासन् मरुतो मनो स्वारोचिषान्तरे । औत्तमे मरुतो ये च तान् शृणुष्व तपोधन ! ॥ औत्तमस्यान्ववाये च राजासीन्निषधाधिपः । वपुष्मानिति विख्यातो वपुषा भास्करोपमः ॥ तस्य पुत्रो गणश्रेष्ठो ज्योतिष्मान् धार्म्मिकोऽभवत् । स पुत्रार्थी तपस्तेपे नदीं मन्दाकिनीमनु ॥ तस्य भार्य्या च सुश्रोणी देवाचार्य्यसुता शुभा । तपश्चरणयुक्तस्य बभूव परिचारिका ॥ तेजोयुक्ता सुचार्व्वङ्गी दृष्टा सप्तर्षिभिर्व्वने । ता तथा चारुसर्व्वाङ्गी दृष्ट्वाथ तपसा कृशाम् । पप्रच्छुस्तपसो हेतुन्तस्यास्तद्भर्त्तुरेव च । साऽब्रवीत्तनयार्थाय आवाभ्यां वै तपः क्रिया ॥ ते चास्यै वरदा ब्रह्मन् ! जाता सप्त महर्षयः । व्रजध्व तनया सप्त भविष्यन्ति न संशयः ॥ युवयोर्गुणसंयुक्ता महर्षीणां प्रसादतः । इत्येवमुक्ता जग्मुस्ते सर्व्व एव महर्षयः ॥ सोऽपि राजर्षिरगमत् सभार्य्यो नगरं निजम् । ततो बहुतिथे काले सा राज्ञो महिषी प्रिया ॥ अवाप गर्भं तन्वङ्गी तस्मात् नृपतिसत्तमात् । गुर्व्विण्यामथ भार्य्यायां ममाराशी नराधिपः ॥ सा चाप्यारोढुमिच्छन्ती भर्त्तारं वै पतिव्रता । निवारिता तदामात्यैर्न तथापि व्यतिष्ठत ॥ त समालिङ्ग्य भर्त्तारं चितायामारुरोह सा । ततोऽग्निमध्यात् सलिले मांसपेश्यपतन्मुने ! ॥ साम्भसा सुखशीतेन संसिक्ता सप्तधाऽभवत् । तेऽजायन्ताथ मरुत औत्तमस्यान्तरे मनोः ॥ तामसस्यान्तरे ये च मरुतोऽप्यभवन् पुरा । तानहं कीर्त्तयिष्यामि गीतनृत्यकलिप्रिय ! ॥ तामसस्य मनोः पुत्र ऋतध्वज इति श्रुतः । स पुत्रार्थी जुहावाग्नौ स्वमांसं रुधिरं तथा ॥ अस्थीनि रोम केशांश्च स्नायुमज्जायकृद्धनम् । शुक्रं च विलसो राजा सुतार्थी चेति नः श्रुतम् ॥ सप्तार्च्चिर्मध्याश्च तत शुक्रपातादनन्तरम् । मा मा क्षिपस्वेत्यसरत् शब्दः सोऽपि नृपो मृतः ॥ ततस्तस्मात्तुतमन्दात् सप्त तत्तेजसोपमाः । शिशव समजायन्त ते रुदन्तश्च तन्मुने ! ॥ तेषान्तु ध्वनिमाकर्ण्य भगवान् पद्मसम्भवः । समागम्य निवार्य्याथ स चक्रे मरुतः सुतान् ॥ ते त्वासन्मरुतो ब्रह्मन् तामसे देवतागणाः । येऽभवन्नैवते तांश्च शृणुष्व त्वं तपोधन ! ॥ रैवतस्यान्ववाये तु राजासीद्रिपु-

जिद्वरो । रिपुजिन्नाम स ख्यातो न तस्यासीत् सुत क्षितौ ॥ स समाराध्य तपसा भास्करं तेजसां निधिम् । अवाप कन्यां सुरतिं तां प्रगृह्य गृहं ययौ ॥ तस्यां पितृगृहे ब्रह्मन् ! वसत्यास्तु पिता मृत । सापि तु सपरीताङ्गी स्वां तनुं त्यक्तुमुद्यता ॥ ततस्तां वारयामासु र्ऋषयः सप्त मानसाः । तस्यामासक्तचित्तास्तु सर्व्व एव तपोधनाः ॥ वारयन्ती तदुत्स प्रज्वाल्याग्निं विवेश ह । ते चापश्यन्त ऋषयस्तच्चित्ता भाविताशया ॥ तां मृतां ऋषयो दृष्ट्वा कष्टं कष्टेति वादिन । प्रजग्मुश्च क्रमाच्चापि सप्ताजायन्त दारकाः ॥ ते च माता विना भूता रुरुदुर्वान् पितामहः । निवारयित्वा कृतवान् लोकनाथो महत्त्वान् ॥ रैवतस्यान्तरे जाता मरुतोऽमी तपोधन ! । स्वयम्भु कीर्त्तयिष्यामि चाक्षुषस्यान्तरे मनो ॥ चाक्षोन्वाङ्गीति विख्यातो तपस्वी सत्यवाक् शुचिः । सप्तसारस्वते तीर्थे सोऽतप्यत महत्तपः ॥ विघ्नार्थं तस्य तपसो देवैः सम्प्रेषिता वधूः । सा चाभ्येत्य नदीतीरे क्षोभयामास भामिनी ॥ ततोऽस्य प्राच्यवच्छुक्रं सप्तसारस्वते जले । तां चैवाप्यशपन्मूढा ऋषिर्म्मङ्कणको वधूम् ॥ गच्छालक्ष्येऽतिमूढे । त्वं पापस्यास्य फलं महत् । विध्वंसयिष्यति क्रुद्धो भवतीं यत्र सर्षिद् ॥ एवं मत्वा ऋषिः श्रीमान् जगामाथ स्वमाश्रमम् । सारस्वतोऽथ सम्भूय सप्त वै मरुतोऽभवन् । एते तवोक्ता मरुतः पुरा यथा जाता वियद्व्याप्तिकरा महर्षे ! । येषां श्रुते जन्मनि पापहानिर्भवेच्च धर्म्माभ्युदयो महार्षे" ॥ अतः परं प्रवक्ष्यामि मरुतोऽग्नीन् पितॄन् पृथक् । आवहो निवहश्चैव उद्वह संवहस्तथा ॥ विवह प्रवहश्चैव परिवाहस्तथैव च । अन्तरीक्षे च वाह्यैते पृथङ्मार्गविचारिण ॥ महेन्द्रप्रविभक्ताङ्गा मरुत सप्त कीर्त्तिता । सूर्य्याग्निश्च शुचिर्नामा वैद्युत पावक स्मृत ॥ निर्मथ्य पवमानोऽग्निस्त्रय प्रोक्ता इमेऽनघ । अग्नीनां पुत्रपौत्राश्च चत्वारिंशन्नवैव तु । मरुतामपि सर्वेषां विज्ञेयाः सप्त सप्तका इति" ॥ तेषां नामान्युक्तानि वह्निपुराणे यथा

'एकज्योतिश्च द्विज्योतिस्त्रिज्योतिर्ज्योतिरेव च । एकचक्रो द्विचक्रश्च त्रिचक्रश्च महाबल ॥ इन्द्रश्च मत्यइद्रश्च ततः प्रतिसकृत्परः । मितश्च सम्मितश्चैव अमितश्च महाबल ॥ ऋतजित् सत्यजिच्चैव सुषेण सेनजित्तथा । अन्तिमित्रोऽनमित्रश्च पुरुमित्रोऽपराजितः ॥ ऋतश्च ऋतवाक्श्च धर्त्ता च धरुणो ध्रुव । विधारणो नाम तथा देवदेवो महाबल ॥ ईदृक्षान्यादृक्षश्च एते दश मिताशिन । प्रतिम प्रसदृक्ष समरश्च महायशा ॥ धाता दुर्गो धृतिर्भीमस्त्वभियुक्तस्त्वपात् सह । द्युतिर्वपुरनाधृष्योऽथ राम कामो जयो विराट् ॥ इत्येकोनाश पञ्चाशन्मरुत पूर्वमभाषत इति" ॥ एतस्य अनिलस्य अनलवायव्वादिदेवत्वेन सप्तभेदत्वेन च गणदेवतात्वम् अथ वायव्यकोणाधिष्ठाता दिक्पालभेद तस्य च गन्धवतीनामिका पुरी मेरौ वरुणकुवेरपुरयोर्मध्येऽस्ति । तस्य पूर्व्वादिदिग्भेदेन वहनभेदेन च शुभाशुभसूचकत्वमुक्तं "पूर्व्वः पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश्चन्द्रार्कांशुजटाभिघातकलितो वायुर्यदा वाति च । नैकान्तस्थितनीलमेघपटलां शारद्यसस्यान्वितां कालेनोत्कटसस्यमण्डिततलां विद्यात्तदा मेदिनीम् ॥ यदाग्नेयो वायुर्मलयशिखरास्फालनपटुः प्रवात्यविच्छिन्नो मृगपति पतङ्गे प्रवसति । तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला खगालीमोक्षार्थैर्व्वहति वसुधा भस्मनिकरम् ॥ तालीपत्रलतावितानतरुभिः याम्याम्बुगावर्त्तवन् योगेऽभिन् ध्वनति ध्वनन् सपरुषो वायुर्यदा दक्षिणः । सर्व्वोद्योगसमुन्नताश्च गजवत्सावाङ्गुर्व्वर्हिताः कीनाशा इव सान्द्रशारिकणिकामुञ्चन्ति मेघास्तदा ॥ स्रग्वैलालवलीलवङ्गनिचयान् व्याधूर्णयन् सागरे भानोरस्तमये प्रवत्यविरतो वायुर्यदा नैरृत । शुष्यत्क्षीणसमुदायसस्यकलमप्रस्तारभारस्तदा मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते ॥ यदा रेणूत्पाते प्रविकटघटाटोपचपलः प्रवात प्रत्यार्द्धे दिनकरकरापातसमये । तदा सक्षोभैता प्रवरनृपदारावृतमरा धरा स्थाने स्थाने व्यविरतवसामांसरुधिरा ॥ आषाढीपर्व्वकाले यदि किरणपतेरस्तकालोपपत्तौ वायव्यो वायुवेगः प्लवति मनरिपु पन्नगादानुकारी । जानीयाद्वारिधाराप्रमुदितवसुदितां सस्यसम्पत्सुकण्ठां सस्योल्लासैकचित्तां प्रवलकुलतया भाग्यसेनामिवोर्व्वीम् । मेरुप्रस्थमरीचिमण्डलतले प्रोद्भाषमाने रवौ मात्यामोदिकदम्बगन्धसुरभिर्व्वायुर्यदा कौवेर । विद्युद्भ्रान्तिसमस्तकान्तिकलमानसास्तदा तोयदा उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभि ॥ ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत् पुन्नागागुरुपारिजातसुरभिर्व्वायुः प्रचण्डध्वनिः । आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला धर्म्मिष्ठ प्रवरास्तथो नृपतयो रक्षन्ति वर्णांस्तदा" इति वृहत्संहितायाम् ॥ अथ वैद्यकोक्ता दिग्भववायुगुणा । "प्राग्वातो मधुर वारी वह्निमान्द्यकरो गुरु । पैरस्य गौरवोष्णानि करोत्यमृक्शोपयोगेषु च ॥ भग्नोत्पिष्टक्षताद्येषु रागश्वयथुदाहकृत् । वह्नि-

यातज्वरश्वासस्वग्दोषार्शोविषक्रमीन् ॥ कोपयेदामवातञ्च श्रमसंघातकारणम्, ॥ दाक्षिणो मारुतोबल्यश्चक्षुष्यः शस्य-वातकः । मधुरश्चाम्लदाही च कषायानुरसो लघुः ॥ रक्त-पित्तप्रशमनो न च मारुतकोपनः । गण्डूपदादिकीटानां जनकः प्राणकारकः, ॥ पश्चिमोऽग्निप्रवर्णबलारोग्यविवर्द्धनः । कषायः शोषणः स्वर्यो रोचनो विशदो लघुः ॥ अपां लघुत्वं शैघ्र्यं शैत्यं वैमल्यकारकः । सर्व्वद्रव्येष्वभिव्यक्त-प्रभावरसवीर्य्यकृत् ॥ अपथ्यं रोपणस्तत्त्वो दाहशोषतृषा-पहः, ॥ औत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च । कषायानुरसः शीतः सर्वदोषप्रकोप(ण)नः ॥ क्षीणक्षत-विषार्त्तानां हितोदाहतृषापहः । शीताधिकः समीहारः स विद्युत्स्तनयित्नुमान्, ॥ विष्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् । सर्वर्त्तुनिन्दको हन्ता बल्योत्पातगुरु स्वरः” इति ॥ तालादिव्यजनवायुगुणाः । मूर्च्छादाहतृषास्वेद-श्रमघ्नो व्यजनानिलः । तालवृन्तभवो वातस्त्रिदोषशमनो लघुः । वंशव्यजनजो वातो रूक्षोष्णो वातपित्तदः । चामरव्यजनमौजस्यं मक्षिकादीन् व्यपोहति ॥ मायूरा वस्त्रजा वैत्रा वाता दोषत्रयापहाः” इति ।

स्थूलस्तु वायुः शरीरस्थः प्राणादिभेदेन दशविधः दश-विधकार्य्यकरणात्। यथोक्तम् वैद्यके

“प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ प्राणस्तु प्रथमो वायुर्नराणामधिपः प्रभुः । नित्यमानामयेत् सर्व्वान् प्राणिनामुरसि स्थितः ॥ निःश्वासोच्छ्वासकश्चैव प्राणो जीवं समाश्रितः । प्रसाराकुञ्चनो वायुः प्रकाशो धारणस्तथा ॥ प्राणस्त्वेवंविधं कुर्य्यात् प्राणिनां प्राण-धारकः । प्राणनं कुरुते यस्मात् तस्मात् प्राणः प्रकी-र्त्तितः । प्राणो हि भगवान् ईशः प्राणो विष्णुः पिता-महः । प्राणेन धार्य्यते लोकः सर्वं प्राणमयं जगत् ॥ इन्द्रियाणि प्रवर्त्तन्ते यावत् प्राणानिलो हृदि । नष्टे न लभ्यते सर्वं तस्मात् प्राणन्तु रक्षयेत्, ॥ रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः । गुणबद्धस्तथा जीवः प्राणा-पानेन कृष्यते, ॥ अपानयस्तथाहारं नराणां यतोऽ-धमः । गुह्यमूलगजो वायुरपानस्तेन कीर्त्तितः, ॥ पीत-भक्षितमाघ्रातं रक्तं पित्तकफानिलान् । समं नयति गात्रेषु समानो नाम मारुतः ॥ समानोऽग्निसमीपस्थः कोष्ठे च वाति सर्वतः । अन्नं गृह्णाति पचति विरेचयति मुञ्चति ॥ स्पन्दयत्यधरं वक्त्रं नेत्रगात्रप्रकोप(न)णः ।

उद्वेजयति मर्म्माणि उद्गमो नाम मारुतः ॥ व्यानो-विनामयत्यङ्गं व्यानो व्याधिप्रकोप(न)णः । प्रीतेर्विना-शकश्चायं मार्द्दवोत्पादकस्त्रिधा इति ॥

प्राणादीनां स्थानानि । “शिरसो नासिकायाश्च हृदयान्त-स्थानमुच्यते । नाभेः पादतलं यावदपानस्य प्रकीर्त्तितम् ॥ शरीरव्यापको व्यानः प्राणः सकलनायकः । उद्गारे नाग इत्युक्तः कूर्मश्चोन्मीलने स्थितः ॥ कृकरः क्षुधिते चैव देवदत्तो विजृम्भिते । धनञ्जयस्थितो मेढ्रे मृतस्यापि न मुञ्चति ॥ भूतानामिन्द्रियाणां तस्याजायतेन्द्रियगोचरात् ॥ उत्साहो-च्छ्वासनिःश्वासचेष्टा धातुगतिः समा । – समो मोक्षो गतिमतां वायोः कर्म्माविकारजम्” इति सुखबोधः ॥ प्राणादयश्च पञ्चसूक्ष्मभूतरजोगुणेभ्यः समस्तेभ्य उत्पद्यन्ते इति वेदान्तिमतम् सकलेन्द्रियाणां व्यापार एव प्राणो न पदार्थान्तरमिति सांख्यमतं विवरणं प्राणशब्दे दृश्यम् ।

उदानादीनां कर्म्मविशेषा उक्ता यथा “उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिप्रवृत्ति-कुपितस्तु सः ॥ ऊर्द्ध्वजत्रुगतान् रोगान् विदधाति विशेषतः ॥ यो वायुः प्राणनामासौ हृदि गच्छति देहधृक् ॥ सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते । प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ आमपक्वाशयचरः समानो वह्निसङ्गतः । सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि ॥ स दुष्टो वह्नि-मान्द्यातिसारगुल्मान् करोति हि । पक्वाशयालयोऽपानः काले कर्षति चाप्ययम् ॥ समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवा-न्यधः । क्रुद्धस्तु कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥ शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान् । कृत्स्नदेहचरो व्यानो रसव्यूहनो यतः ॥ स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि । गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥ प्रायः सर्व्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् । प्रस्यन्दनोद्वहने पूरणञ्च विरेचनम् ॥ धारणञ्चेति पञ्चैतास्तेष्टाः प्रोक्ता नभस्वतः । क्रुद्धः स कुरुते रोगान् प्रायशः सर्वदेहगान् ॥ युगपत् कुपिता एते देहं भिन्द्युरसंशयम् इति च वैद्यके उक्तम् ।

तत्र देहस्थस्य वायोर्विकारहेतुलक्षणादिकमुक्तं वैद्यके “व्यायामादपतर्पणात् प्रपतनाद्भङ्गात् क्षयाज्जागरात् वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेत् वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च” ॥ विकृतवायुलक्षणम् ।

साक्षिद्वैविरुद्धमिति” च मनुः । नागमलताया स्त्री ।
यज–क्त न०त० । अकृतयागे देवादौ ।

**अनिष्टिन्** त्रि० न इष्टमनेन यज–भावे क्त ततः इनि न०त० । कृतयागभिन्ने । “अनिष्टिनोवाजपेयेन” इति कात्या० १५,१,२ ।

**अनिष्पत्र** न० निष्कृतं पत्रं यस्योऽस्य तादृशं न भवति । अनिष्कृतपत्रकशरेण वेधनादौ । “विशाख्या वा स्तोर्णा-ह्यकृत वा विध्यन्त्यनिष्पत्रमिति” कात्या० १२,२,१२, “अनिष्पत्रमित्यनि सुतपत्रकं विध्यन्ति क्षत्रिया” इति तद्व्याख्या ।

**अनीक** पु०न० अनित्यनेन अन–ईकन् अर्द्धर्चादि । सैन्ये, तस्य हि जीवनरक्षकत्वम् । न नीयते अपसार्य्यतेऽस्मात् । नी–क्विप् ब० कप् ह्रस्वाभावः । युद्धे, ततोहि प्रायोमरणा-दपुनरागतिः । “रथेषु योऽनीकेष्वधिश्रिय” इति ऋ०८,२०, १२ अनीकेषु सेनासङ्घेष्विति भा० । “दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदेति” गीता मुखे, तस्य प्राणवायुनि सा-रव्यवहारत्वात् तथात्वम् “अग्नेरनीकमपआविवेशापामिति” यजु० ८,२४, “अनीकं मुखमिति” वेददीप ।

**अनीकस्थ** त्रि० अनीके युद्धे तिष्ठति स्था–क । युद्धगते सैन्ये ।

**अनीकिनी** स्त्री अनीकानां सङ्घः अनीकं युद्धं प्रयोजनतया अस्त्यस्या वा अनीक+इनि । सेनासंघे हस्त्यादिसंख्या विशेषवत्यां सेनायाञ्च तत्संख्या चोक्ता भारते “एको रथो गजश्चैको नराः पञ्च पदातयः । त्रयश्च तुर-गास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिन्तु त्रिगुणामेता-माहुः सेनामुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विच-क्षणैः ॥ चमूस्तु पृतनास्तिस्रस्तिस्रस्त्वनीकिनीति” । तत्र हस्तिनः २१८७ । रथाः २१८७ । अश्वाः ६५६१ । पदातयः १०९३५ समुदिताः २१८७० ।

**अनीश** पु० नास्ति ईशो नियन्ता यस्य न० । सर्वनियन्तरि विष्णौ, स्वामिशून्ये त्रि० । न०त० । ईश्वरभिन्ने “भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोरिति” मनु । असमर्थे, “एकोऽप्यनीशः सर्वत्रेति” व्यास स्मृतिः । ईश–भावे अच् न०त० । दीनभावे स्त्री “निमग्नोऽनी-शया मोदतीति” मु०उ० । दीनभावोऽनीशेति भा० ।

**अनीश्वर** न०त ईश्वरः नियन्ता यत्र । नियन्तृशून्ये साङ्ख्या-दिमते जगति “जगदाहुरनीश्वरमिति” गीता ईश्वरस्य न भवति असम०स० । ईश्वरसम्बन्धिभिन्ने “ध्यानेनानी-श्वरान् गुणानिति” मनुः । नियन्तृशून्ये, स्वामिशून्ये च ।

**अनीह** त्रि० ईह–भावे अच् न०ब० । स्पृहाशून्ये, निश्चेष्टे च ।

**अनु** अव्य० अन–उ । “अनु वेदाध्ययनानुष्ठानसामीप्यपश्चा-द्भावानुबन्धसाम्याभिमुख्यविसर्गलक्षणेष्विति” गणरत्नोक्तेषु अर्थेषु तत्र वेदे अनुवाक इति । अध्ययने अन्वधीते, अनुष्ठाने, अनुतिष्ठति, सामीप्ये अनुमेघं वर्षति, पश्चाद्भावे तदनु, अनुबन्धने, अनुशेते अनुशयः, साम्ये, अनुकरोति, आभिमुख्ये अनुमातरं वत्सोधावति, हीने अनु हरिं सुराः विसर्गे (प्रत्यक्रमतिसम्बन्धे) अनुजानीते, लक्षणे अनु वन-मशनिर्गतः” । “अनुर्लक्षणे” इति “तृतीयार्थे” इति (सहार्थे) “हीने” इति, लक्षणेत्थम्भूताख्यानभाग वीप्सासु प्रतिपर्य्यनव इति, च (पा०) उक्तेषु अर्थेषु, तत्र लक्षणे, जपमनुप्रावर्षत् । “हेतुभूतजपोपलक्षितम् वर्षणम्” सि०कौ० सहार्थे, नदीमनु अवसिता सेना, “नद्या सह संबद्धा सेना” सि०कौ० हीने, हरिमनु सुराः हरेर्हीना इत्यर्थः, लक्षणे वृक्षमनु विद्योतते विद्युत्, तत्र च वृक्षप्रका-शेन विद्युद्विद्योतदेशज्ञापनात् वृक्षो लक्षणमिति मो०मनो० । (इत्थम्भूत) कञ्चित् प्रकार प्राप्तः आख्यायते अनेन, इत्थ-म्भूताख्यानं प्रकारविशेषनिरूपकं तस्मिन्नर्थे, यथा भक्तोहरि-मनु, हरेरित्थम्भूतः भक्तिविशेषयुक्त इत्यर्थः । भागे भागो-ऽस्यास्ति अर्शआद्यच् भागस्वामिनि, हरिमनु लक्ष्मी, हरिस्वामिकभागवतीत्यर्थः । वीप्सायां, विषयभूतायां, वृक्षं वृक्षमनु सिञ्चति, यावद्वृक्षव्यापकं सेक । इयांस्तु भेदः अन्यत्रानुशब्द तत्तदर्थस्य द्योतक अत्र तु द्विवचनेनैव व्याप्तिबोधनात् अनोस्तद्विषयत्वमात्रम् । पाणिन्युक्तेष्वे-षार्थेष्वस्य कर्म्मप्रवचनीयसंज्ञा तेन तद्योगे द्वितीया एवं कर्म्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधनात् न षत्वादि न वा अनुव्यचलदित्यादौ गतिर्गतावित्यादिना निघातः । “अनुर्यत् समया इति” “यस्य चायाम इति च” (पा०) उक्ते सामीप्ये, अनुवनमशनिर्गत इति वनसमीपं गत इत्यर्थः आयामे, अनुगङ्गं वाराणसी, गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता वाराणसीत्यर्थः नित्यसमासः योग्यत्वे च । अनुरूपम् । “रूपादियोग्यमिति” सि०कौ०, अनुक्रमम् । क्रमानतिक्रमे अत्रापि नित्यसमासः० एतेषामुदाहरणानि भाष्यकारैरु ह्यानि दिङ्मात्रमुदाह्रियते । तत्र पश्चादर्थे “तदनु मनु कयाशौ भूपि यातोऽभ्यवशोति” सीता० । “तदनु ज्वलनं मदर्पितमिति” कुमा० अस्मै “कुमारसम्भवोऽनु-

जात" इति रघु । "रथ्या च सागरमनुप्रयात" इति कुमा० अनुष्ठाने, "शैलाधिपत्यं स्वयमन्वतिष्ठदिति" कुमा० सादृश्ये, "अनुगर्जितसन्दिग्धा" इति कुमा० । अनुगर्जितं गर्जनसदृशं प्रतिरूपगर्जितमित्यर्थः । अनुगताद्यर्थे नित्यसमासः । तथैव सोऽभूदन्वर्थो "राजा प्रकृतिरञ्जनादिति" रघुः । तत्र अन्वर्थः अनुगतोऽर्थो यस्येति प्रा०ब०वा अनित्यसमास उत्तरपदलोपो वा इति तत्र अनुगतार्थोपीति भेदः । एवमेव अनूप इत्यादावपि । उपासने च "अन्वासितमरुन्धत्येति" रघुः "यथाऽपवेगमपर्णसेवायां धातोर्लक्षणायामनुर्द्योतकः । एवम् एतद्योगे वसते आधारस्य कर्मता अनुवसति ग्रामं देवदत्त "मथुरामनूष्येति" सु०बो० क्रियासमभिव्याहृतस्यानुशब्दस्य तत्तत्क्रियासहचरितत्तत्क्रियाया लक्षणाद्योतकत्वं तत्र आद्यक्रियाश्रयस्य कर्मत्वम् यथा मातरमनुरोदितीत्यादौ मातृरोदनसहचररोदनस्य बोधनेन प्रथमरोदनाश्रयस्य मातुः कर्मत्वमेवमन्यत्र । कर्मणि तिङाद्युक्ते तु प्रथमा ।

**अनुक** त्रि० अनुकामयते अनु+कामतय्यर्थे कन् । कामुके "अनुकाभिकाभीकः कमयितेति" पा० "वाचमनुकामाक्रमोऽकुरुतेति" कौ० ब्रा० ।

**अनुकम्** अव्य० अनुकामयते अनु-कम-क्विप् । वितर्के । चादेराकृतिगणत्वात् अस्य चादिगणे पाठ इति मो०मनो० ।

**अनुकम्पक** त्रि० अनुकम्पते दयते अनु-कम्प-ण्वुल् । दयाकारके । "सर्व्वभूतानुकम्पक" इति मनु० ।

**अनुकम्पन** त्रि० अनु+कम्प-युच् । दयाशीले । "सर्वभूतानुकम्पन" इति रामा० । भावे ल्युट् । दयायां न० ।

**अनुकम्पा** स्त्री अनु+कम्प-अङ् । दयायाम्, दयया हि दुःखितमन्यकम्प दृष्ट्वा तत्सदृशकम्पकरणात् दयायास्तथात्वम् अतएवानुकम्पधातोरनुरोदनवत् सकर्मकत्वम् । दया च परदुःखप्रहरणेच्छा अनुपूर्व्वककम्पतेस्तदर्थपरत्वमित्येके धात्वर्थसङ्गृहीतकर्म्मकत्वेन तत्राकर्मकत्वमिति भेदः । "तेषामेवानुकम्पार्थं प्रदेयं प्रीतिपूर्व्वकमिति" स्मृतिः । "भूतानुकम्पा तव चेदियं गौरिति" रघुः । किञ्चिच्चलने च ।

**अनुकम्प्य** त्रि० अनुकम्पमर्हति अनुकम्प+यत् । तरस्विनि वेगवति । अनुकम्प्यते अर्हार्थे यत् । दयार्हे त्रि० । "दुष्हितरमनुकम्प्यामद्रिरादाय दोर्भ्यामिति" कुमा० ।

**अनुकरण** न० सादृश्ये अनु+कृ-ल्युट् । सदृशक्रियादिकरणे । तच्च गुणक्रियावयवादिभि सदृशीकरणम् । अनुक्रियतेऽनेनेति करणे ल्युट् । सदृशीकरणसाधने । यथा पटत्वाप्रभृतिशब्दाः अव्यक्तशब्दानुकरणानि । "अव्यक्तस्यानुकरणस्यात इतौ" इति पा० ।

**अनुकर्ष(ण)** पु० अनुकृष्यते सम्बन्धेन चक्रे च अनु+कृष-घञ् । रथाधःस्थिते चक्रोपरि बद्धे काष्ठे । कर्त्तरि ल्यु । मान्तोऽप्यत्रार्थे । भावे ल्युट् । पूर्व्वमात्रयोगार्थपदादेरुत्तरत्राप्ययार्थमाकर्षणे, आकर्षमात्रे च न० ।

**अनुकल्प** पु० कल्प्यते विधीयते इति कृप-णिच्-अच् कल्पो विहितः हीनः कल्पः मुख्यकल्पादधमः प्रा०स० । गौणकल्पे, प्रतिनिधौ । "एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेय" इति । "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते" इति च मनुः "समर्थः प्रथमे कल्पे योऽनुकल्पे प्रवर्त्तते" इति स्मृतिः । "भार्य्याः कार्य्याः सजातीयाः सर्वेषां श्रेयसः स्मृतिस्ताः कल्पतोऽनुकल्पस्तु ततस्तेसामग्रकल्पस्येत्यादि" पैठीनसि स्मृतिः । अनुकल्पश्च मुख्यद्रव्यस्याभावे तत्सदृशद्रव्यान्तरादि प्रतिनिधिरूपम् । यथा "यवाद्यभावे गोधूमाः मध्वाद्यभावे गुडादयः । एवं उपवासासामर्थ्ये नक्तं "हविष्याशनादि स्मृतिषूक्तं वेदितव्यम् । अनुगत कल्प भेदाद्भेदम् अव्या०स० । कल्पानुगते ग्रन्थे अनुकल्पप्रतिपादकग्रन्थे च तद्वेत्तरि उक्थादि०ठक् । आनुकल्पिक अनुकल्पग्रन्थवेत्तरि त्रि० ।

**अनुकाम** पु० अनुरूप काम प्रा०स० । येप्साभिलाषे । सदृशं कामस्य सादृश्यार्थे काममनतिक्रम्य याथार्थ्ये वा अव्ययी० । कामसादृश्ये यथाकामे च अव्य० । "अनुकाम तर्पयेथामिति ऋ० १,१७,२, "अनुकामं परा दा इति" ऋ०८,४८,८, "अनुकामं यथाकाममिति" भा० । अनुकामयते अनु+काम-अच् । अतिकामुके त्रि० ।

**अनुकामीन** त्रि० कामस्य अभिलाषस्य सदृशमनुकाम सादृश्येऽव्ययी० तत गच्छतीत्यर्थे ख । यथेष्टगमनशीले । "अनुकामीनतां त्यजेति" भट्टि । [विवरणमनुकरणशब्दे दृश्यम्

**अनुकार** पु० अनु-कृ-घञ् । गुणक्रियादिभि सदृशीकरणे ।

**अनुकारिन्** त्रि० अनुकरोति अनु+कृ-णिनि स्त्रियां ङीप् । गुणक्रियादिभि सदृशीकारके । "अनुकारिणि पूर्व्वेषां युक्तरूपमिदं तव" इति रामा० ।

**अनुकार्य्य** अनुक्रियतेऽसौ अनु+कृ-कर्मणि अर्हार्थे वा ण्यत् । अनुकरणीये सदृशीकरणार्हे पश्चात्करणीये च । "य पश्चात् पूर्व्वकार्य्याणि कुर्य्यादैश्वर्य्यमोहितः पूर्व्वं चैवानुकार्य्याणीति" रामा० ।

**अनुकाल** अव्य० कालस्य योग्यम् याथार्थ्ये अव्ययी० । काल-

भोक्तव्ये । "भोजनाच्छादनं दद्यादनुकार्यं विशेषतः" इति ।

**अनुकीर्त्तन** न० अनु+कॄत–णिच्–ल्युट् कीर्त्तादेशः । कथने "पापं भवति तत् सर्वं क्षरेन्नानुकीर्त्तनादिति" श्रुतिः ।

**अनुकूल** त्रि० कूलमावरणं स्रोतसामनुगतम् इति यावत् अनुगतसम् अत्या०स० । सहचरे, सहाये, स्वपक्षपातिनि, "नारीणामनुकूलमाचरसि चेज्जानासीति" का० प्र० । "अनुकूलयतीन्द्रोऽपि सर्गान्तमविभूयवैरिति" कुमा० अनुकूलयति अनुकूलं करोतीति नामधातुः । दन्तीवृक्षे स्त्री राजनि० । अलङ्कारशास्त्रप्रसिद्धे "अनुकूल एकरत" इत्युक्ते नायकभेदे "एकस्यामेव नायिकायामासक्तोऽनुकूलनायक" इति तदर्थः यथा "अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं, नो वक्रा गतिरुद्धतं, न हसितं, नैवास्ति कश्चिन्मदः । किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्" इति । "अनुकूलं प्रातिकूल्यमानुकूल्यानुबन्धि चेत्" इति (सा० द०) इत्युक्तेऽर्थालङ्कारभेदे न० । यथा "कुपितासि यदा तन्वि ! निधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥" "सर्वेषामात्मत्वेनानुकूले परमेश्वरे पु० "अनुकूलः शतावर्त्त" इति विष्णुस० । सर्वेषामात्मत्वादनुकूलो न हि कश्चिन् प्रतिकूलमाचरतीति" भा० ।

**अनुकृति** स्त्री अनु+कृ–क्तिन् । "अनुकरणे । ओमित्येतदनुकृतिर्ह स्म वा" इति श्रुति. ।

**अनुकृष्ट** अनु+कृष–कर्म्मणि क्त । कृताकर्षणे, अनुवर्त्तिते च ।

**अनुक्त** त्रि० न उक्तः । अनभिहिते अकथिते उक्तिश्च प्रायेण तिङ्कृत्तद्धितसमासैः "तत्र तिङा हरिः सेव्यते, कृता श्रियेण गतः, तद्धितेन, शतेन क्रीतः शत्यः । समासेन, आरूढो वानरो यमिति वाक्ये आरूढवानरो वृक्षः सर्वत्र कर्म्मण उक्तत्वात् प्रातिपदिकार्थे प्रथमा । तैरनभिधाने तु ग्रामं गच्छति, ग्रामं गतः, वेदोऽधीतो, इत्यादौ "अनभिहिते" इति द्वितीयाद्येव एवमन्यकारकेऽप्युदाहार्य्यम् "अनुक्तसत्त्वप्रचकार" इति रघु० अनियोक्तिरि च "यथानुक्तोऽपि सहाय एव इति" कुमा० ।

**अनुक्थ** त्रि० नास्ति उक्थं स्तोत्रं यस्य । स्तोत्रशून्ये "किं त्वामनिन्द्रा अनुक्थाः" इति ऋ०१,२,२, "अनुक्थाः अस्तुताः" इति भा० ।

**अनुक्रम** त्रि० अनुगतः क्रमम् अत्या०स० । अनुगतक्रमे क्रमानुयायिनि, अनुक्रमश्च यथोत्तरं यस्य पाठः करणं वा उचितं तदनतिक्रमेण तस्यानुष्ठानरूपा परिपाटी । "भवक्रमे वस्तु भवत्क्रमेण" इति रघु० । क्रमश्च स्थानं तत्स्वरूपादि क्रमशब्दे वक्ष्यते । क्रममनतिक्रम्य यथार्थे अव्ययी० । क्रमानतिक्रमे अव्य० ।

**अनुक्रमणिका** स्त्री अनुक्रम्यते यथोत्तरं परिपाट्या आरभ्यतेऽनया अनु+क्रम–करणे ल्युट् स्त्रीत्वात् ङीप् स्वार्थे कनि ह्रस्वः । अनुक्रमज्ञापके, ग्रन्थाद्यंशभेदे उक्तस्य वक्तव्यस्य वार्थसमूहस्य ग्रन्थशेषे, क्वचिदादौ वा संग्राहके पुराणादेरंशविशेषे । स्वार्थे काभावेऽनुक्रमणीत्यपि, तत्रैव । तत्र आदौ यथा "भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः पर्वानुक्रमणी पूर्वं द्वितीयः पर्वसंग्रहः" भार० आदि० । अन्ते यथा "अनुक्रमणिकाध्यायं तथा माहात्म्यमुत्तममिति" काशीख० । एवमन्यत्र द्रष्टव्यम् ।

**अनुक्री** पु० अनुक्रियते अनु–कृ–उणा० बा० ई किच्च । साद्यस्क्रक्रतुभेदे, "षट् साद्यस्क्रा ऋतुपक्रस्य "होनस्यानुक्री." इति कात्या० २२,२,१८, उक्तम् "अनुक्रीर्नाम साद्यस्कः क्रतुः स होनस्य भवतीति" तद्व्याख्या ।

**अनुक्रोश** पु० अनुक्रोशत्यनेन अनु+क्रुश–आह्वाने रोदने च घञ् । दयायाम् । परदुःखप्रहरणेच्छारूपदयया हि परक्रोशं दृष्ट्वा तदनु रोदनं क्रियते इति तस्यास्तथात्वम् । अनुगतः क्रोशं गतिस० । मानक्रोशाध्वके त्रि० ।

**अनुक्षण** न० वीप्सायाम् अव्ययी० । प्रतिक्षणे अनवरते, अनुगतं क्षणम् अत्या०स० । अजस्रवृत्तौ त्रि० ।

**अनुग** त्रि० अनुगच्छति अनु+गम–ड । पश्चाद्गामिनि, "गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति" "निवारयेत् सर्वं मन्त्रकरणस्यानुगमिति" "प्रमदामनुसृत्य नेत्र कामक्रोधवशानुगमिति" च मनु । सहचरे, आनुलोम्यं गते, सेवके च । "तद्भूतनाथानुग ! नार्हसि त्वमिति" रघु० ।

**अनुगङ्ग** अव्य० गङ्गायाम् विभक्त्यर्थे अव्ययी० । गङ्गायामित्यर्थे । परिलखा० अत्र । आनुगङ्गम् अनुगङ्गभवे त्रि० ।

**अनुगत** त्रि० अनु+गम–क्त । पश्चाद्गते, सङ्गते, आनुलोम्यं गते, नानात्वधर्मसम्बन्धेन संस्कृतीतेऽखिले विशेषे, अधीने च । "आगच्छथात काकुत्स्थ वर्गाव उपपास्यतः विमानवरकोटीभिर्देवैरनुगतस्तदेति" रामा० ।

**अनुगति** स्त्री अनु+गम–क्तिन् । अनुगमने, पश्चाद्गतौ, "बलस्य नवरक्तस्य नायकानुगतिर्नैव" इति "गतानुगतिकन्यायः" ।

**अनुगम** पु० अनु+गम–अप् वृद्धभावः । पश्चाद्गमने, "इहते- धीतोरर्थानुगमादिति" भा०भा० । सहायीभवने, सामा-

**अनुजात** त्रि० अनु+जन—क्त । यथाज्ञातमात्रे, "ज्ञलजाते-तुजाते च ज्ञातपूर्वे च सस्थिते" इति मनुः । अनुजाते ज्ञलजन्मानन्तरं सस्थित इति" कुल्लू० "आतद्यमनुजाताऽहं भुङ्क्ष्व भक्तमिदं शुभम्" इति श्रुतिः । "असौ कुमार-स्तमजोऽनुजात" इति रघुः । अनन्तरजाततयात् तत्तुल्ये तथात्वम् ।

**अनुजावर** त्रि० अनुजादप्यवर । अत्यन्तनिकृष्टे । "एता-मेवानुजावराय कुर्य्यादिति" ता० ब्रा० । अनु पश्चाज्जायते इत्यनुजः कनीयान् सहि निकृष्टः तस्मादप्यवरो निकृष्ट इति भा० वेदे न कर्मधा० लोके तु अनुजावरस्त्रैं ।

**अनुजीविन्** त्रि० अनुजीवितुमर्थयितुं शीलमस्य अनु+जीव-णिनि । सेवके, याचिते च । [पोष्ये सेव्ये ।

**अनुजीव्य** त्रि० अनुजीव्यतेऽसौ अनु+जीव—ण्यत् । आश्र-

**अनुज्ञा** स्त्री अनु+ज्ञा—अङ् । सर्वप्रवृत्तस्यास्य महत्त्व-विख्यातकरणेन प्रवर्त्तनारूपायामनुमतौ । "गुरोरनुज्ञामधि-गम्य मातुः" । इति रघु । "तद्वा एतदनुज्ञाक्षरं यद्धि-किञ्चानुजानात्योमित्येव तदाहेति" श्रुतिः ।

**अनुज्ञात** त्रि० अनु+ज्ञा—क्त । कृतानुज्ञे यत्र करणायानुज्ञा कृता तस्मिन् जने ।

**अनुज्येष्ठ** त्रि० अनुगतो ज्येष्ठम् प्रा०स० । ज्येष्ठानुगते । ज्येष्ठमनतिक्रम्य यथार्थ्ये अव्ययी० । ज्येष्ठानुरूपे ज्येष्ठानति-क्रमे च अव्य० । [राधे देशे गुरुत्वादौ, भ्रातरे ।

**अनुतर** न० अनुतीर्य्यतेऽनेन अनु—तॄ—करणे अप् । नदीपा-

**अनुतर्ष** न० अनुतृष्यतेऽनेनेदं वा करणे कर्मणि वा घञ् । सुरापानपात्रे, मद्ये च । भावे घञ् । मद्यपाने, अभिलाषे, पानेच्छायाञ्च । "कोपकारणमपास्तविचारं सानुतर्षमतन-र्पदेनेति" माघः ।

**अनुताप** पु० अनु+तप—घञ् । इदमनुचितं कृतमिति सन्त-पस्तुनो दुःखजनकतया मानेन पश्चात्तापे । "खानुपनेना-नुतापेन" इति" मनुः । "वक्षाः करिष्यामि दृढानुताप-मिति" कुमा० ।

**अनुतिल** त्रि० अनुगतोतिलम् अत्या० स० । तिलानुगते तैलादौ, तिले विभक्त्यर्थे अव्ययी० तत्र भवः परिमुखादि० अञ् । आनुतिलम्यः तिलभवे त्रि० ।

**अनुतूलन** न० तूलेनानुकृष्णाति तूलावयवं तूलेनानुकृष्णाति अनु+तूल+अनुकोषणे णिच्—भावे ल्युट् । तूलेन तूला-पादेरनुकूले ।

**अनुत्क** त्रि० न०त० । उत्कण्ठितभिन्ने जने ।

**अनुत्कर्ष** पु० न उत्कर्षः अभावे न०त० । उत्कर्षाभावे न० । उत्कर्षशून्ये त्रि० ।

**अनुत्त** त्रि० न+ उन्द—क्त नसत्तनिषत्तानुत्तेत्यादिना नि० । अक्लिन्ने "इन्द्र ! तुभ्यमिदद्रिवोऽनुत्तमिति" ऋ० १,८०,७, तुद—क्त न०त० । अनुन्ने अप्रेरिते । "अनुत्तमाते मघव-न्निति" ऋ० १,१६५,६, 'अनुत्तमप्रेरितमिति" भा० ।

**अनुत्तम** न० न उत्तमोयस्मात् । अत्युत्कृष्टे । "वाञ्छन् गति-मनुत्तमामिति," "इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुख-मिति" "यशोऽस्मिन् लोके प्राप्नोति प्रेत्य चानुत्तमं सुखमिति" च मनु ।

**अनुत्तर** त्रि० उत्तरउत्तम न० ब०स० । अत्यन्तश्रेष्ठे । ६त० । उत्तरदानरहिते "भवत्ययशा च भवत्यनुत्तरादिति" नैष० । न०त० । उत्तरदिग्भिन्नायां तद्विरोधिन्यां दक्षिणस्यां दिशि, स्त्री । उत्तमभिन्ने अपकृष्टे त्रि० । न उत्तरति चलति उद्+तॄ—अप न०त० । स्थिरे त्रि० ।

**अनुत्तान** त्रि० न उत्तान विरोधे न०त० । उत्तानभिन्ने अयताने अधोमुखे ।

**अनुत्तरङ्ग** त्रि० उद्गततरङ्गो वीचिवाहुल्यं वा यस्मात् प्रा० ब०न०त० । अनुद्गततरङ्गे अचञ्चले च "अपामिवाधार-मनुत्तरङ्गमिति" कुमा० निवातवत् अचञ्चलमित्यर्थः ।

**अनुत्पत्ति** स्त्री न उत्पत्तिः अभावे न०त० । उत्पत्त्यभावे "अयं केचिदुपायस्य दुरितस्य प्रवक्ष्यते । अनुत्पत्तिं तथा चान्ये मन्यवायस्य मन्वते" स्मृतिः ।

**अनुत्पत्तिक** त्रि० नास्ति उत्पत्तिर्यस्य कप् । उत्पादशून्ये ।

**अनुत्पन्न** त्रि० न उत्पन्न न०त० । उत्पन्नभिन्ने अजन्ये ।

**अनुत्पाद** पु० न उत्पाद उत्पत्ति अभावार्थे न०त० । उत्पत्त्यभावे । ब० । उत्पत्तिशून्ये त्रि० ।

**अनुत्साद** पु० न उत्साद अवसादनम् भावे न०त० । अव-सादाभावे उच्छेदाभावे । न०ब० । उच्छेदशून्ये त्रि० ।

**अनुत्साह** पु० न उत्साह अभावे न०त० । उत्साहाभावे ब० । उत्साहशून्ये त्रि० ।

**अनुत्सिक्त** त्रि० न उत्सिक्तः गर्वितः । अगर्विते गर्वशून्ये ।

**अनुत्सुक** त्रि० न०त० । उत्सुक-भिन्ने उत्कण्ठाशून्ये ।

**अनुत्सूत्र** त्रि० उत्क्रान्तः सूत्रम् अत्या०स० न०त० । सूत्रानुगते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धनेति" माघ । इह पाणिनीयपक्षे नीतिपक्षश्चेति विवेक ।

**अनुद** त्रि० न ददाति नुद—क न०त० । प्रेरकभिन्ने अनु-ददाति तुल्यं ददाति अनु+दा क । तुल्यरूपदातरि,

**अनुधावन** न० अनु+धाव–ल्युट् । पश्चाद्गमने, तत्तत्क्रियायाम् अनुसरणे, अनुसन्धाने च । [आसक्तौ च ।

**अनुध्या** स्त्री अनु+ध्यै–अङ् । गुणानुचिन्तने, अनुध्याने,

**अनुध्यान** न० अनु+ध्यै–ल्युट् । अनुक्षणचिन्तने "या न प्रीतिर्विरूपाक्ष ! त्वदनुध्यानसम्भवेति" कुमा० ।

**अनुध्याय** पु० अनु+ध्यै–कर्त्तरि घञ् । अनुचिन्तने गुणानुचिन्तने । "चावयाशयवतस्य वा तदनुध्यायमनसेति" प्रा०त० स्मृतिः ।

**अनुध्येय** त्रि० अनु+ध्यै–कर्म्मणि यत् । अनुध्यातव्ये यदीयगुणानुचिन्तनं क्रियते तस्मिन् । "अनुदध्युरनुध्येय सान्निध्यैः प्रतिमागतैरिति" रघुः ।

**अनुनय** पु० अनु+नी+अच् । विनये, प्रणिपाते, प्रार्थने, सान्त्वने च । "कथं नु ? शक्योऽनुनयो महर्षेर्विश्राणना-द्यन्यपयस्विनीनामिति" रघु' । [अनुरूपयत्ने ।

**अनुनाद** पु० अनुरूपो नादः प्रा०स०। प्रतिध्वनौ प्रतिशब्दे

**अनुनादिन्** त्रि० अनु+नदति अनु+नद–णिनि । प्रतिरूपशब्दकारके "गम्भीरेणानुनादिनेति" रामा० ।

**अनुनायिका** स्त्री अनुगता नायिकाम् । नायिकानुगतायाम् "सखी प्रव्रजिता दासी प्रेष्या धात्रेयिका तथा । अन्याश्च शिल्पकारिण्यो विज्ञेया ह्यनुनायिका" इत्युक्तदास्यादौ ।

**अनुनाश** पु० अनु+नश–घञ् । अनुमरणे । अदूरदेशाद्यर्थे बह्वाद्यादि० यञ आनुनाश्य तददूरदेशादौ त्रि० ।

**अनुनासिक** त्रि० अनुगतो नासिकाम् अत्या०स०। नासिकया सह मुखस्थानेनोच्चार्य्यमाणेषु वर्णभेदेषु । ते च "अमोऽनुनासिका न ह्रौ" इति शिक्षायां दर्शिता ङकारञकारणमकारा अमप्रत्याहारान्तर्गता वर्णाः । "मुखनासिकावचनोऽनुनासिक" इति पाणिन्युक्तेस्तेषां तत्तत्स्थान सहितनासिकयोच्चार्य्यमाणत्वात्तत्त्वम् "उपदेशेऽजनुनासिक" इति पा० । अमप्रत्याहारमध्ये हरिमका यवलाः निरनुनासिकाः सानुनासिकाश्च तत्रानुनासिकस्थाने उत्तमयवलानेव सानुनासिकत्वम् "यवलौ द्विधा निरनुनासिक सानुनासिकः । अमोऽनुनासिकत्वेन तत्स्थाने सानुनासिक" इत्यभियुक्तोक्तेः यथा सय्यँन्ता विहाल्लिखति, सवँत्सरः अन्ये निरनुनासिकाः । वेदाङ्गक्तौ "अचोऽप्रगृह्यस्यानुनासिक" इति पाणिन्युक्तेरप्रगृह्या एवाचोऽनुनासिकाः ।

**अनुनीत** त्रि० अनु+नी–क्त । कृतानुनये यस्य सान्त्वनार्थं मिनवादिकं क्रियते तस्मिन् । "न चानुनीतोऽस्मि कथं कुतोऽपीति" भारतम् ।

**अनुनेय** त्रि० अनु+नी–कर्म्मणि यत् । अनुनयकरणार्हे, अनुनेतुं योग्ये च ।

**अनुपकार** पु० न उपकार' अभावार्थे न०त० । उपकाराभावे विरोधे न०त० । अपकारे । [स्त्रियां ङीप् ।

**अनुपकारिन्** त्रि० न उपकारी विरोधे न०त०। अपकारिणि

**अनुपक्षित** त्रि० उप+क्षि–क्त वेदे निष्ठातस्य न नत्वम् न०त० । अनुपक्षीणे । "सुवीर्यं रयिष्ठमनुपक्षितम् ऋ० १,११,७ अनुपक्षितम् "अनुपक्षीणमिति" भा० । लोके तु अनुपक्षीणः त्रि० ।

**अनुपठित** न० अनु+पठ–भावे क्त । गुरुवक्त्रपाठानुसारिपाठे अनुपठितमनेन इष्टादि० इनि । अनुपठिनी कृतानुपाठे त्रि० स्त्रियां ङीप् । [पतने च ।

**अनुपतन** न० अनु+पत–ल्युट् । अनुकूलपतने, अनुरूप-

**अनुपति** अव्य० पत्युः सामीप्यम् अव्ययी० । पतिसमीपे । "अनुपति पत्नीवत्तर उत्तर" इति कात्या० १२,२,१६, दीक्षाकर्त्ता पतिसमीपे तत्पत्नीः दीक्षयतीति तद्व्याख्या ।

**अनुपथ** पु० अनुकूलः पन्था अच् समा० । अनुकूलमार्गे "अनत्यथा अनुपथा" इति ऋ० ५,५२,१०, अनुपथा' अनुकूलमार्गा" इति भा० । पथ समीपे पथि वा अव्ययी० । पथिसमीपे पथीत्यर्थे वा अव्य० । परिमुखा० अञ् । आनुपथ्यम् पथिभवादौ त्रि० ।

**अनुपद** न० अनुरूपं पदम् प्रा०समा० । अनुकूलपदे अनुरूपस्थाने "आशिषामनुपदमिति" "अर्थानुपदमाशिष" इति च रघु । पदस्य पश्चात् अव्ययी० । पदस्य पश्चादित्यर्थे पश्चाद्गमने च । भवादौ परिमुखा० अञ् आनुपद्य तत्र भवादौ त्रि० । सुप्तिङन्तं पद तत्सहयं ग्रन्थमधीते वेत्ति वा उक्था० ठक् । आनुपदिक तदध्येतरि तद्वेत्तरि च त्रि० ।

**अनुपद्** न० अनुपद्यते प्रतिदिन बध्यते अनु+पद्–क्विप् । प्रतिदिनबध्येऽर्थे । "अनुपदस्यानुपदे त्वा" य० १५,८, "प्रतिदिनमनुपद्यतेऽनुपदस्तमिति" वेददीप ।

**अनुपदिक** त्रि० अनुपदमन्वेष्टा गन्तृत्वेन ठन् । पश्चाद्गमते

**अनुपदिन्** अनुपदमन्वेष्टा अनुपद+इनि । अनुपदम् अन्वेष्टरि (अन्वेषणकर्त्तरि) "अनुपद्यन्वेष्टेति" पा० "अनुपदानुपदी रामो जगाम गजविक्रम" इति भट्टिः ।

**अनुपदिष्ट** त्रि० उप+दिश–क्त न०त० । उपदेशाकर्म्मणि ।

**अनुपदीना** स्त्री अनु पदस्य आयामतुल्यायामः खाबाभेऽव्ययी० अनुपद बद्धार्थे च । पादतुल्यायामवत्यां पादबद्धायां पादुकायाम् (मोजा) इत्यादि ख्यातायाम् ।

अनुपधि त्रि० नास्ति उपधिश्छद्म यत्र । निष्कपटे व्यव-व्यवहारे । [ग्राणलक्षणाधीनग्रागाविषयीभूते त्रि० ।

अनुपनीत पु० न उपनीत न०त० । अकृतोपनयनसंस्कारे

अनुपन्यास त्रि० न उपन्यास अभावे न०त० । उपन्यासा-भावे कथनाभावे । न०ब० । कथनशून्ये वाग्मारम्भशून्ये त्रि० ।

अनुपपत्ति स्त्री उप+पद—क्तिन् उपपत्तिर्युक्तिः न०त० । युक्त्यभावे, असङ्गतौ च । "तातृपर्य्यानुपपत्तित" इति भाषा० । उपपत्तिश्च न्यायादिमते व्यतिरेकव्याप्तिज्ञाना-धीनानुमितिः" व्यापादकज्ञानाधीना व्यापकनिश्चयरूपा ऽनुभूतिर्वा । यथा पीनोदेवदत्तो दिवा न भुङ्क्ते इत्युक्ते दिवाऽभोजिनः पीनत्व रात्रिभोजन विनानुपपन्नमिति" अभोक्तु. पीनत्वाख्यबलेन रात्रिभोजनं निश्चीयते तथा हि पीनत्वस्य भोजनव्याप्यतया पीनत्वाभावस्य च रात्रिभोजि-त्वाभावव्याप्यतानिश्चयेन पीनत्वेन रात्रिभोजनमनुमीयते सा चानुमिति अर्थापत्तित्वेन व्यवह्रियते इति नैया-यिकाः । मीमांसकवेदान्तिभिस्तु कल्पयामि इत्यर्थापत्त्या-मीति विलक्षणानुभवात् अनुमितिभिन्नैव सेति स्वीक्रि-यते । अधिकमर्थापत्तिशब्दे वक्ष्यते ।

अनुपपन्न त्रि० उप+पद—क्त न०त० । उपपत्तिशून्ये ।

अनुपबाध त्रि० नास्ति उपबाधा प्रतिबन्धोऽस्य । प्रति-बन्धशून्ये ।

अनुपम त्रि० नास्ति उपमा यस्य । अतुल्ये अन्यसादृश्यरहिते अत्युत्कृष्टे । "वर्ष प्रमाणं धर्मिश्च परैरनुपमं ममेति रा० । कुमुददिग्गजयोषिति स्त्रीत्यमर । सुप्रतीकदिग्गजस्त्रियां स्त्रीति मेदिनि ।

अनुपमेय त्रि० केनापि न उपमीयतेऽसौ उप+मि—कर्मणि यत् न०त० । अन्यैरतुल्ये, अन्यसादृश्यरहिते ।

अनुपयुक्त न उपयुक्तम् उचित भुक्तं वा न०त० । अनुचित-भिन्ने अननुरूपे भुक्तभिन्ने च ।

अनुपयोग पु० न उपयोग आनुकूल्यं भोजनं वा न०त० । आनुकूल्याभावे, भोजनाभावे च । न०ब० । आनुकूल्य-शून्ये भोजनशून्ये च त्रि० । [रागनिवृत्तिशून्ये ।

अनुपरत त्रि० उपरत निवृत्त न०त० । अनिवृत्ते विषय-

अनुपरति स्त्री न उपरति विषयरागः अभावे न०त० । विषयरागाभावे । [पितामाते अतर्किते ।

अनुपलक्षित त्रि० न उपलक्षितः विशेषेण ज्ञातः । विशे-

अनुपलब्धि स्त्री न उपलब्धि अभावे न०त० । ज्ञाना-भावे प्रत्यक्षाद्यभावे च । तत्र अनुपलब्धिश्च न केवल इन्द्रियादिसन्निकर्षाभावमात्रेण, किन्तु वस्तुसत्त्वेऽपि कारणान्तरादपि भवति यथोक्तं सांख्यतत्त्वे । "सौक्ष्म्या-त्तदनुपलब्धिरिति" । तदेव कारिकायां विवृतम् 'अति-दूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्या-द्व्यवधानादभिभवात् समानाभिहारादिति "नास्ति घटो-ऽनुपलब्धेरिति" । योग्यपदार्थस्यानुपलब्धिश्च अभावज्ञान-सामग्री । तद्विवरणं योग्यानुपलब्धिशब्दे वक्ष्यम् ।

अनुपवीत पु० न उपवीत यज्ञसूत्र विधिना जातमस्य । अनुपनीते मानवके । उपवीतरूपयज्ञसूत्रशून्ये च ।

अनुपशम पु० न उपशम शान्ति निवृत्तिर्वा अभावे न०त० । शान्त्यभावे, निवृत्त्यभावे च ।

अनुपसंहारिन् पु० न्यायमते परिभाषिते दुष्टहेतुविशेषे । स च अन्वये व्यतिरेके च दृष्टान्तराहित्येन दुष्टोहेतुः । यथा सर्वमनित्यं प्रमेयत्वादित्यनुमाने सर्वस्यापि पक्षत्वेन अन्वये दृष्टान्तो नास्ति नापि व्यतिरेके दृष्टान्त', सर्वस्यापि प्रमेयतया तदभावस्य कुत्राप्यसिद्धेः । "तथैवानुपसंहारी केवलान्वयिपक्षकः" इति । "आद्य साधारणस्तु स्याद-न्योऽसाधारणो मतः । तथैवानुपसंहारी त्रिधा नैकान्तिको मत" इति च भाषा० सुज्ञावस्थानात् सर्वमभिधेयं प्रमेयत्वा-दित्यादिकं तदुदाहरणत्वेनोपन्यस्तं "केवलान्वयिपक्षक इत्यस्य च केवलान्वयिसाध्यक इत्येतत् परतया व्याख्यातम् । यथा "केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात् सामान्याधिकरण्य-ग्रहस्यस्थानान्तराभावात्रानुमितिः इदन्तु न सम्यक् । पर्वतैक-देशे वटहस्थानात्मकेऽपि मतेरभावात् अस्तु वा सह-चारग्रहस्थानतापि पक्षे अज्ञानरूपासिद्धिरेव न तु-हेतुताभावत तस्य, तथापि केवलान्वयिसाध्यकत्वं तल्लक्ष-णत्वम् । उपसंहाराकारके त्रि० ।

अनुपसेचन त्रि० नास्ति उपसेचन व्यञ्जन यत्र । दध्यादि-व्यञ्जनशून्ये अन्ने "स अस्तदन्नस्य भक्षिमानं विद्यादि" सुपक्रम्य 'नास्य इति सूत्राद्यानुपसेचन" इति उक्तम्, अथ० १२,५,४ ।

अनुपस्कृत त्रि० उप+कृ—प्रतियत्ने क्त सुट् न०त० । अकृत-माल्यादिसंस्कारे अविकृते च "सन्यकानिनय धीमो मांस मन्यानुपस्कृतमिति" मनुः अनुपस्कृत' माल्यादिसंस्काररहित-मिति रघु० । "अविकृतमिति" कुल्लू० । अमरटीकृते "अक्रमघ्रमयश्चैव राजतश्चानुपस्कृतमिति' मनुः । दृष्ट-प्रयोजनानपेक्षे, "मानुष्यार्थे गयार्थे वा देवस्यानोऽनुपस्कृत"

इति मनु "इष्टमयोजनमासमेव" इति कुल्लू०। अनिन्दिते च "एषोऽनुपस्कृत प्रोक्तः" इति मनु अनुपस्कृत अनिन्दित इति कुल्लू०। [भावे न०त०। तच्छून्ये त्रि०।

**अनुपस्थान** न० न उपस्थानम् अभावे न०त०। उपस्थाना-

**अनुपस्थाप्य** त्रि० न उपस्थाप्यः। अबोध्ये। प्रथमान्तपदानुपस्थाप्यत्वादिति जग०। [भावे, स्मृत्यभावे च।

**अनुपस्थिति** स्त्री० न उपस्थितिः अभावे न०त०। उपस्थित्य-

**अनुपहत** न० न उपहतं भोगच्छेदादिना। अदृष्टे नवे अभुक्ते वस्त्रे "अनुपहतमतिधवलमिति" कात्या०। उपघातशून्ये त्रि०। [स्पर्शादिसंस्कार उपाकरणं तद्रहिते।

**अनुपाकृत** त्रि० उप-आ-कृ-क्त न०त०। मन्त्रैर्यज्ञे पशौ-

**अनुपात** पु० अनुरूपः त्रैराशिकेन पातः। पाटीगणितोक्ते त्रैराशिकेन युक्तसंख्यापाते। "पुरान्तरं चेदिदमुत्तरं स्यात् तदक्षविश्लेषलवैस्तदा किम्?। चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम्" सि०शि०। "निरक्षदेशः स्वदेशाद्यथा यथा दक्षिणतो भवति तथा तथा स्वस्तिकाद्ध्रुवदृक्तं नतम् तयोरन्तरेऽक्षांशाः। ते च निरक्षदेशजाम्यान्तरयोजनैरनुपातेनोत्पद्यन्ते। अत कश्चित् पुरेऽक्षांशान् ज्ञात्वा तस्मात् पुरादुत्तरतोऽन्यस्मिन् पुरे ज्ञेयाः। ततस्तेषामन्तरांशैः पुरान्तरयोजनैश्चानुपातः। यद्यन्तरांशैः पुरान्तरयोजनानि लभ्यन्ते तदा चक्रांशैः ३६० किमिति फलं भूपरिधियोजनानि" इति प्रमि०। तदानयनञ्च "प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः, फलमन्यजाति मध्ये, तदिच्छाहतमाद्यहृत् स्यादित्युक्तत्रैराशिकरीत्या अन्तरयोजनसंख्याङ्केन राशिचक्रसंख्या ३६० ऽङ्के गुणिते पुरान्तरयोजनाङ्केन विभक्ते लब्धं परिधिमानसंख्या। पश्चात्पतने च। अनुगतः पातं पाठक्रमपाठभेदम्। पातपठनानुगते। अनु+पत-णिच् अच्। पश्चादनुपातविशेषार्थे अव्य०। किन्तु कर्म्मोपपदेन सह "कर्मैवाभ्यवेनेति" पा० नित्यसमासः "लतानुपातं कुसुमान्यगृह्णादिति" भट्टि।

**अनुपातक** न० अनुपातयति नरकं गमयति पत-णिच्-ण्वुल्। पातकं ब्रह्महत्यादि तत्तुल्यम् प्रा०स०। ब्रह्महत्यादिमहापातकतुल्ये वेदनिन्दादिजन्ये पापविशेषे तानि च पञ्चविधानि यत्प्रकारैर्महत्त्वेन तावत्तुल्यत्वानि अनुरत्न शास्त्रे तेन पतनहेतुमहापातकतुल्यत्वादस्य अनुपातकत्वमिति प्रा० वि०। तानि च विष्णुना दर्शितानि यथा "यागस्थस्य क्षत्रियस्य वैश्यस्य च, रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति, कौटसाक्ष्यं सुहृद्वधः एतौ सुरापानसमौ। ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम्। पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम्। पितृष्वसृमातृष्वसृस्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनञ्च स्वसुः सख्याः सगोत्राया उत्तमवर्णायाः कुमार्य्या अन्त्यजाया रजस्वलायाः शरणागताया प्रव्रजिताया निक्षिप्तायाश्च। अनुपातकिनस्त्वेते महापातकिनो यथा अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा इति"। नरकाण्यभिधाय "एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्य्यायेण कल्पं पच्यन्ते, मन्वन्तरं तु महापातकिनः, अनुपातकिनश्च, उपपातकिनश्चतुर्युगमिति विष्णु०स०। तथा च महापातकसदृशान्येतानि पातकानि। अन्यान्यपि मनुना संक्षिप्य दर्शितानि यथा "अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया॥ ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः। गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्॥ निक्षेपस्यापहरणं नराश्वरजतस्य च। भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम्॥ रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च। सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुरिति"॥

**अनुपातकिन्** त्रि० अनुपातकमस्त्यस्य इनि स्त्रियां ङीप्। अनुपातकयुक्ते "अनुपातकिनस्त्वेते महापातकिनस्तथा" स्मृ०।

**अनुपातिन्** त्रि० अनुपतति अनुगच्छति अनु+गम-णिनि अनुगामिनि।

**अनुपान** न० अनु भेषजेन सह पश्चाद्वा पीयते कर्म्मणि ल्युट्। औषधेन सह, तत्पश्चाद्वा पेये मधुगुडादौ। पानस्य जलस्य समीपे अव्ययी०। जलसामीप्ये अव्य०।

**अनुपावृत्त** त्रि० न उपावृत्तः। अपरावृत्ते।

**अनुपुष्प** पु० अनुगतं पुष्पं तद्विकाशम् अत्या०स०। शरदृक्षे तस्य पुष्पेणैव प्रकाशात्तथात्वम्।

**अनुपूर्व्व** त्रि० अनुगतः पूर्व्वं परिपाटी गतिस०। यथाक्रमप्राप्ते यथाहान्यनुपूर्व्वं भवति ऋ० १०, १८, ५ "यथावदनुपूर्व्वशः" इति "वर्णानामनुपूर्व्वशः" इति च मनु। अनुपूर्व्व+णम्। अनुपूर्व्वेण। "हस्तानुपूर्व्वं च न यातिदीर्घ" इति कुमा० "ततोऽनुपूर्व्वायतवृत्तबाहुरिति" भारवि पूर्व्वमनुगतौ गोपुच्छाकारावित मल्लि०, अनुगतः पूर्व्वम्। पश्चाद्गामिनि त्रि०। "आग्नेयं प्रथमो गव्यश्चपारक्यो-

योज्यत्वादन्त्यानुप्रास एव सः"॥ "यथावस्थमिति" यथा सम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः। पादान्तगो यथा "केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः। चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्"॥ पदान्तगो यथा। "मन्दं हसन्तः पुलकं वहन्त इत्यादि। "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः। लाटानुप्रास इत्युक्तोऽनुप्रासः पञ्चधा ततः" इति। यथा "स्मेर-राजीवनयने! नयने किं निमीलिते?। पश्य निर्जित-कन्दर्पं कन्दर्पवशगं प्रियम्॥ अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्म्मिरूपस्याभिन्नार्थत्वाल्ला-टानुप्रासत्वमेव। "नयने तस्यैव नयने" अत्र द्वितीय नयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः। यथा वा। "यस्य न सविधे दयिता दवदहन-स्तुहिनदीधितिस्तस्य। यस्य च सविधे दयिता दवदहन-स्तुहिनदीधितिस्तस्य"॥ अत्रानेकपदानां पौनरुक्त्यम्। एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रास" इति।

अनुप्लव पु॰ अनु+प्लु—अच्। सहाये, अनुचरे, दासे च। "सानुप्लवः प्रभुरपि क्षणदाचराणामिति" रघु।

अनुबन्ध पु॰ अनु+बन्ध—यथायथं भावादौ घञ्। बन्धने, इच्छापूर्वकदोषविशेषाभ्यासे, "अनुबन्धादिकं ज्ञात्वा सर्वं कार्य्यं यथाक्रममिति" स्मृति। "अनुबन्ध्य पौन पुण्येना-भिनिवेश" इति रघु०। शास्त्रस्यादौ वक्तव्येषु अधिकारि-विषयप्रयोजनसम्बन्धेषु, "अनुबन्धोनामविषयप्रयोजनाधिका-रिसम्बन्ध" इति "अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धै-स्तद्वत्तासिद्धेरिति च"वेदा॰सा॰"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः स प्रयो-जन" इत्युक्ते विषयप्रयोजनादीनामारम्भप्रयोजकत्वात् तदेकत्वम्। अस्मिन् पक्षे च अनुबध्यते अनेनेति करणे घञ्। मुख्यानुयायिनि अप्रधाने, बालकादौ प्रकृत-स्यानुवर्त्तने, संबन्धे, वातपित्तादिदोषाणामप्राधान्ये, प्रकृतिप्रत्ययागमादेशानां विकरणागमगुणवृद्ध्यादिकार्य्य-विशेषार्थमनुबध्यमानीये परिनिष्पन्नपदकालेषु अश्रूयमाणतया अचरे इत्संज्ञतया लक्षणीये वर्णादौ, "पदान्निर्द्दिष्टविक-रणाद्यनुबन्धगणोदितम् कर्म्मोच्चारणमात्रेण सत्फलानु-बन्धत इति" कविकल्पद्रुमः। फलसाधने पुन पुनरनु-ष्ठानाभ्यासे, "अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः। सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेदिति" मनुः। बन्धेऽपि मेदिनिः। आरम्भे, शब्दरत्ना॰। अनु-सरणे "शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नर इति" सुश्रुतम्। सन्ततसम्बन्धे (अविच्छेदे) "सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः" इति रघुः। अनुबध्यते अनुरुध्यते कर्म्मणि घञ्। पश्चाद्भाविनि शुभाशुभे। "अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्" इति गीता पश्चात्सम्बन्धे च। "यदग्रे चानुबन्धे च सुखं मोहनमा-त्मनः" इति गीता।

अनुबन्धिन् त्रि॰ अनुबध्नाति अनु+बन्ध—णिनि। सहचरे, अनुगते, अनुरोधिनि, व्यापके च। स्त्रियां ङीप्। "गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव" इति रघु। "अधश्च मूलान्यनुसन्ततानि कर्म्मानुबन्धीनि मनुष्यलोके" इति गीता। "तृष्णानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुरिति" "मेदः कषायैः खलु रोग एष सुदुस्तरो वर्ष-गणानुबन्धी" इति च सुश्रुतम्।

अनुबन्धी स्त्री अनुबध्यतेऽतिश्वासेन व्याप्रियतेऽनया अनु+बन्ध—घञ् गौरा॰ ङीष्। हिक्कारोगे, तृष्णायाञ्च।

अनुबन्ध्य त्रि॰वधार्थं बध्योऽनुबन्ध्यः अनु+बन्ध-कर्म्मणि ण्यत्। वधार्थं वध्ये गवादौ। "नानुबन्ध्यावधोऽपि वा। तयो-श्चारविभागश्च नैव संप्रति वर्त्तते" इति स्मृतिः।

अनुबोध पु॰ अनु+बुध—णिच्—घञ्। पूर्व्वलिप्तचन्दनादेर्गन्धो-द्दीपनार्थं पुनर्मर्द्दनादौ, पश्चाद्बोधे च।

अनुब्राह्मण न॰ब्राह्मणं मन्त्रेतरवेदभागस्तत्सदृशम्। ब्राह्मण सदृशे ग्रन्थे। तदधीते वेद वा इनि। अनुब्राह्मणी ब्राह्मण-सदृशग्रन्थाध्यायिनि, तद्वेत्तरि च त्रि॰ स्त्रियां ङीप्।

अनुभव पु॰ अनु+भू—अप्। स्मृतिभिन्ने ज्ञाने। विषयानु-रूपभवनाद्वुद्धिवृत्तेरनुभवत्वम्। "ह्रस्वैशारूप्यमितरत्र" पात॰ सूत्रे, विषयानुरूपत्वं चित्तवृत्तेरभिहितम्। तथाहि यथा यथ प्रणाल्या क्षेत्रादिकं प्राप्य चतुरस्राद्या कारेण परिणमते एवमेव इन्द्रियादिप्रणाल्याऽन्तःकरणं बहिर्निःसृत्य विषयाकारेण परिणमते तादृशपरिणाम-रूपवृत्त्या च विषयगतमज्ञानं निवारयतीति अन्तःकरणस्य विषयरूपानुरूपभवनात् अनुभवत्वम्। स्मृतौ तु विषय-सन्निकर्षाभावात् न विषयाकारताप्राप्तिरिति तद्भिन्ने ज्ञाने एवास्य प्रयोगोपाधिता इति साङ्ख्यवेदान्तिमतम्। अनु-भवस्य प्रत्यक्षानुमानोपमानशाब्दभेदेन चतस्रो विधाः इति नैयायिकादय। वेदान्तिनो मीमांसकाश्च अर्थापत्त्यनुप-लब्धिरूपमधिकं तद्भेदद्वयमूरीचक्रुः। वैशेषिका सौगताश्च

न्यथानुभावरूपमेव अनुभवद्वयं स्वीचक्रुः अनयोर्वा शब्दोपमानयोरन्तर्भावात् । सांख्यादयः प्रत्यक्षानुमानाभ्यां त्रेति भेदत्रयीमङ्गीचक्रुः । चार्वाकाः प्रत्यक्षमात्रमिति भेदः । "अनुभवं वचसा सखि लुम्पसीति" नैष० ।

**अनुभाव** पु० अनुभावयति अवबोधयत्यनेन अनु+भू–णिच्–करणे–घञ् । कोषदण्डादिजाते राज्ञां तेजोविशेषे । सामर्थ्ये च । कर्त्तरि अण् । अलङ्कारशास्त्रप्रसिद्धे रसव्यञ्जके "भावं मनोगतं साक्षात् स्वगतं व्यञ्जयन्ति ये । तेऽनुभावा" इति ख्याता, इत्युक्तलक्षणे भ्रूभङ्गादौ । "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथेति" सा०द० । अनुभावस्य लक्षणभेदादिकमुक्तं दर्पणे । "उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् । लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः । यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणैः रामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनरनुभावः । कः पुनरसावित्याह । "उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः । तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि" ॥ तद्रूपा अनुभावस्वरूपाः । तत्र च यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने तत्र तत्र दर्शित । तत्र सात्त्विकाः । "विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः" । सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्म्मः । "सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः" । गोबलीवर्द्दन्यायेन इति शेषः । के ते इत्याह । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ तत्र । स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः । वपुर्जलोद्गमः स्वेदो रतिघर्म्मश्रमादिभिः ॥ हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया । मदसंमदपीडाद्यैर्वैस्वर्य्यं गद्गदं विदुः ॥ रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः । विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥ अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् । प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः इति" ॥ "अनुभावविशेषात्तु सेनापरिगतैरिव" रघु । तेजसि च । "गुरुभिरभिनिविष्टं लोकपालानुभावैरिति" रघुः । माहात्म्ये, "आने बो रक्षसाक्रान्तावनुभावपराक्रमौ इति" रघुः ।

**अनुभावक** त्रि० अनुभावयति बोधयति अनु–भू–णिच्–ण्वुल् । बोधके "यत्पदेन विना यस्याननुभावकता भवेत् आकाङ्क्षेति" भाषा० । "येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षेति" सिद्धान्तमुक्तावली ।

**अनुभाविन्** त्रि० अनुभवति अनु+भू–णिनि । साक्षात्कारादिकारके । "अनुभावी तु यः साक्षी कुर्यात् साक्ष्यं विवादिनामिति" मनुः । अनुपश्चात् भवति । पश्चाज्जाते कनिष्ठादौ । "अनुभाविनां परिवापर्णमिति" आप०श्रौत । अनुपश्चाद्भवतीति अनुभाविन कनिष्ठा इति रुद्रदत्तः "सर्वोऽयमनुभवतीति अनुभवकारका" इति सु०त०स्तु० ।

**अनुभावन** न० अनु लक्षितं भावनम् । लक्षभावने ।

**अनुभू** स्त्री अनु+भू–क्विप् । अनुभवरूपे ज्ञानभेदे "अबलाना रुचोऽनुभूरिति" ह०ग्र० । "सत्त्वं ज्ञानमनन्तं ब्रह्मेति" श्रुत्या ब्रह्मणो ज्ञानरूपत्वात् तस्य ज्ञानरूपत्वम् ।

**अनुभूत** त्रि० अनु+भू–कर्म्मणि क्त । अनुभवविषयीभूते पदार्थे अनु+भू–कर्त्तरि क्त । पश्चाज्जाते त्रि० ।

**अनुभूति** स्त्री अनु+भू–क्तिन् । अनुभवे तस्य लक्षणमनुभवशब्दे दृश्यम् । "अनुभूतिश्चतुर्विधा प्रत्यक्षमप्यनुमितिस्तथोपमितिशाब्दजे" इति भाषा० ।

**अनुभूतिप्रकाश** पु० अनुभूतेरनुभवस्य वेदान्तप्रतिपाद्यस्य प्रकाशो यत्र माधवाचार्य्यप्रणीते उपनिषत्तात्पर्य्यप्रकाशके ग्रन्थभेदे

**अनुमत** त्रि० अनु+मन–क्त । अप्रतिषेधे इदं क्रियतामिति प्रोत्साहनार्थमनुज्ञाते । अनुमोदिते च "मतमनुमतं दृष्टं वा यदिदं गुरु पातकमिति" वेणी० । "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि" इति मनु । "कन्यास्मिनेवानुमतो ...तायेति" च रघु । "उभयानुमत सर्वोति" स्मृति ।

**अनुमति** स्त्री अनु+मन–क्तिन् । अनुज्ञायाम् । "अनुमत्या ग्रहेयादिति" स्मृतिः । अनुमन्यते कलाहीनत्वेऽपि पूर्णत्वाभिजनयागादिकरणायानुज्ञायते ऽस्याम् अधिकरणे क्तिन् । कलाहीनचन्द्रयुक्तायां शुक्लचतुर्दशीयुतपूर्णिमातिथौ । अनुमतो राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राकेति विज्ञायते । अनुमतिरनुमननात् । "अनुमतिराकासिनीवालीकुह्वस्तदस्य" इति का० १८,६,२१, कुर्यात् "चैवानुमत्यै च प्राजापत्य एव चेति" मनु ।

**अनुमन्तृ** त्रि० अनु+मन–तृच् । स्वयमुदासीने कार्य्यादौ प्रवृत्तस्यान्यस्योत्साहवर्द्धनार्थमनुज्ञाकर्त्तरि । "अनुमन्ता विशसिता नियन्ता क्रयविक्रयीति" मनुः 'उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वर" इति गीता । "अनुमन्ता अनुमोदयितैव सन्निधिमात्रेणानुग्राहक" इति श्रीधरः ।

**अनुमन्त्रण** पु० अनु मन्त्रोच्चारणात् पश्चात् मन्त्रणम् मन्त्रेण

संस्कारादिकरणम् । मन्त्रोच्चारपूर्व्वके यागादिषु संस्कार-
भेदे "प्रयाजाननुमन्त्रयमिति" कात्या० १,१,२ ।

**अनुमरण** न० अनु+मृ—ल्युट् । भर्त्तरि मृते तद्देहाप्राप्तौ तत्पादुकादिग्रहणेन पृथक्‌चितारोहणेन स्त्रीणां देहत्यागे । "भर्त्त्रानुमरणं काले याः कुर्व्वन्ति तथाविधाः । कामात् क्रोधात् भयाद्वापि सर्व्वाः पूताः भवन्ति ताः" इति स्मृतिः अनुपूर्व्वकमरणस्य मरणाद्यप्रमरणार्थकत्वेन सकर्म्मकत्वम् अतएव "भवता मानुमृतापि लभ्यते" इति रघौ कर्म्मणि क्तप्रयोगः । अनुमरणं च भर्त्तुः देशान्तरादिमरणे देहाद्यलाभे एव "देशान्तरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् । निधायोरसि संशुद्धा प्रविशेज्जातवेदसमिति" स्मृतिः । तत्र क्षत्रियादीनामेवाधिकारो न विप्रायाः, यथोक्तम् । "पृथक्‌चितिं समारुह्य न विप्रा गन्तुमर्हतीति" शु०त०स्मृतौ ।

**अनुमा** स्त्री अनु+मा—अङ् । परामर्शज्ञानाधीने (व्याप्यधूमादिलिङ्गविशिष्टज्ञानाधीने) ज्ञानभेदे यथा "पर्व्वतो वह्निमानित्यादि" तथाहि धूमादिहेतौ महानसादौ प्राक् भूयःसहचारदर्शनात् धूमत्ववह्नित्वसामान्यधर्म्मेण सकलवह्निधूमादिव्याप्तिनिश्चयः अनन्तरं देशान्तरं गतवतो वह्न्यर्थिनः पर्व्वतादौ धूमदर्शने सति तत्र वह्निव्याप्तिस्मृतिर्जायते एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया नियमेन, धूमदर्शनात् धूमगतायाः वह्निव्याप्तेः स्मरणसम्भवात् । ततस्तादृशधूमवान् अयं पर्व्वत इति निश्चयरूपपरामर्शेन तत्र वह्निमानयमिति निश्चिनोति सोऽयं निश्चयः अनुमितिरूप अनुभवभेद इति । तत्र च धूमादिलिङ्गज्ञानमेव करणं नतु ज्ञायमानलिङ्गं करणमिति नव्यनैयायिकसिद्धान्तः प्राचीनमते ज्ञायमानलिङ्गमेवेति भेदः "अनुमायां ज्ञायमानं लिङ्गं तु करणं न हीति" भाषा० । "सोऽयं नियमितार्थत्वात् प्रत्यक्षं न चानुमेति" ग०रा०प० ।

**अनुमातृ** त्रि० अनु+मा—तृच् । अनुमानकर्त्तरि "अग्नि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः" इति वाचस्पतिः ।

**अनुमान** न० अनु—मि—मा—वा भावादौ ल्युट् । व्याप्यस्य ज्ञानेन व्यापकस्य निश्चये, यथा वह्निर्धूमस्य व्यापक इति धूमस्तस्य व्याप्य इत्येवं तयोः भूयः सहचारं पाकस्थानादौ दृष्ट्वा पश्चात् पर्व्वतादौ उद्भूयमानाविच्छिन्न धूमस्य दर्शने तत्र वह्निरस्तीति निश्चीयते । करणे ल्युट् । तद्धेतुभूते धूमादौ । "तच्चानुमानं त्रिविधमिति" चिन्तामणिः । श्रुतेरेव स्वतः प्रामाण्यं, यत्र श्रुतिः साक्षात् न श्रूयते तत्र स्मृतिवाक्यात् श्रुतिवाक्यमनुमीयते इति श्रुत्यनुमापकं स्मृतिवाक्यमप्यनुमानपदेनाभिधीयते इति मीमांसकाः । "विरोधे त्वनपेक्षमसति ह्यनुमानमिति" जै०सू० । इयं स्मृतिः वेदमूलिका आप्तवाक्यत्वादित्येवमनुमानाकारः इति । "दृष्टमनुमानमाप्तवचनञ्च सर्व्वप्रमाणसिद्धत्वादिति सा०का० । "अतीन्द्रियस्य सिद्धिरनुमानादिति" सांख्य०सू० "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते" इति वाच० "प्रत्यक्षमनुमानं च शास्त्रञ्च विविधागममिति मनुः । "एवमनुमाने निरूपिते तस्मात् पुरुषधौरेयसिद्धिरिति" चिन्ता० "नानुमानं रसादीनामिति सा०द० "सपरिकरमनुमानं निरूपितमिति" चिन्तामणिदीधितिः ।

**अनुमानचिन्तामणि** पु० गङ्गेशोपाध्यायकृते न्यायशास्त्रस्यानुमानतत्त्वज्ञापके प्रकरणभेदे । तत्र च आदौ अनुमितिस्वरूपादिनिरूपणं ततस्तत्कारणव्याप्तिज्ञानार्थं व्याप्तिनिरूपणम् ततोव्याप्तिग्रहोपायनिरूपणम् ततो व्याप्तिग्रहानुकूलतर्कनिरूपणम्, उक्तासु बह्वीषु व्याप्तिषु कथङ्कार तासामनुगमस्तन्निरूपणम्" ततः व्याप्तिज्ञानोपायतया सामान्यलक्षणानिरूपणम् ततो हेतोः परिशुद्धिज्ञानार्थमुपाधिनिरूपणम् । ततोऽनुमित्यङ्गपक्षतानिरूपणम् परार्थानुमानस्य पञ्चावयवन्यायसाध्यतया तन्निरूपणम् । अनुमितौ परामर्शस्य ( साध्यव्याप्तिमद्धेतुविशिष्टज्ञानात्मकस्य ) स्वरूपादिनिरूपणम् ॥ ततोहेतुत्रैविध्यस्य ( केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिरूपस्य ) निरूपणम् ततो वर्ज्जनीयतया हेतोर्दोषाणां ( हेत्वाभासानाम् ) निरूपणम् तत्रादौ सामान्यतोहेत्वाभासलक्षणम् ततः सव्यभिचारस्य, साधारणस्य, असाधारणस्य, अनुपसंहारिणः, असिद्धेश्च क्रमशः, ततो बाधस्य निरूपणम् इत्येतत्पर्य्यन्त सपरिकरमनुमानं ज्ञेयतया तद्दोषांश्च निरूप्य तादृशानुमानेन ईश्वरस्य सिद्धिर्दर्शिता तस्याराधनफलत्वेन षोडशपदार्थतत्त्वज्ञानेनात्यन्तिकदुःखनिवृत्तिरूपापवर्गसिद्धिरित्येते पदार्थाः तत्रत्या अवधेयाः ।

**अनुमानदीधिति** स्त्री अनुमानरूपचिन्तामणेर्दीधितिरिव । रघुनाथशिरोमणिकृतायामनुमानचिन्तामणिव्याख्यायाम् ।

**अनुमार्ग** अव्य० मार्गे विभक्त्यर्थे यथार्थ्ये, पश्चादर्थे वा अव्ययी० । मार्गे इत्यर्थे, मार्गानुरूपे, मार्गस्य पश्चादर्थे च । "अनुमार्गगताया इति" काद० ।

**अनुमाघ** अव्य० माघे विभक्त्यर्थे अव्ययी० । माघे इत्यर्थे । परिसंख्या० अच् । अनुमाघ्यः तत्प्रसादौ त्रि० ।

**अनुमास** अव्य० वीप्सार्थे अव्ययी० । प्रतिमासे, अनुमासे

**अनुयोगिन्** त्रि० अनुयुङ्क्ते अनु+युज–घिनुण् । प्रश्नकारके ।

**अनुयोज्य** त्रि० अनुयुज्यते नियुज्यते "अनु+युज–गत्यर्थे आवश्यकार्थे वा ण्यत् । प्रश्नार्हे आवश्यनियोज्ये, त्वया कथमिदं कृतमित्याक्षेपेण प्रष्टव्ये, आज्ञाकारके, दासादौ च "दासवदनुयोज्यो दृश्यन्तः प्रणमति" शकु० ।

**अनुरक्त** त्रि० अनु+रन्ज क्त । अनुरागयुक्ते, अनुगतः रक्तं रागम् अत्या० स० । प्राप्तरक्तवर्णे ।

**अनुरक्ति** स्त्री अनु+रन्ज–क्तिन् । अनुरागे ।

**अनुरञ्जक** त्रि० अनुरञ्जयति अनुरक्तं करोति अनु+रन्ज–णिच्–ण्वुल् । अनुरागयुक्तकारके ।

**अनुरञ्जन** न० अनु+रन्ज–णिच्–भावे ल्युट् । अनुरागयुक्तकरणे "विश्वेषामनुरञ्जनेन जनयन्नानन्दमिति" रामा० । कर्त्तरि ल्यु । अनुरञ्जके त्रि० ।

**अनुरञ्जित** त्रि० अनु+रन्ज–णिच्–कर्म्मणि क्त । यस्य अनुरागः कृतः तस्मिन्, अनुरक्तीकृते जने ।

**अनुरणन** अनु+रण–ल्युट् । घण्टादिशब्दस्य प्रतिध्वन्यात्मके शब्दस्थाने व्यञ्जनरूपशब्दशक्तिभेदे, ध्वनिभेदे च ।

**अनुरत** त्रि० अनु+रम–कर्त्तरि क्त । अनुरक्ते, अभिरते च ।

**अनुरति** स्त्री अनु+रम–भावे क्तिन् । अनुरागे ।

**अनुरस** त्रि० अनुगतो रसम् । माधुर्य्यादिरसानुगते "भूमिजं गुरु मालिकातक्तं भूमितखालानुरसं" इति "मधुरानुरसं रूक्षं लवणानुरसं लघु । शाल्यास्तु मधुरं ज्ञेयं कषायानुरसं हिममिति" च सुश्रुतम् ।

**अनुरहस** त्रि० अनुगतं रहः अत्या० स० अच्समा० । निर्ज्जनदेशानुगते ।

**अनुराग** पु० अनु+रन्ज+घञ् । आयत्तप्रीतौ, स्नेहे च । अनुरूपो रागः प्रा० स० । अनुरूपरागे । "अनुरागवन्तमपि लोचनयोरिति" माघ "भावादस्तु यत्र स्यादनुरागजः" इत्यमरः । "प्रियानुरागस्य मनः समुन्नतेरिति" रघु । अनुगतो रागं गतिस० । प्राप्तलोहितवर्णे त्रि० ।

**अनुरागिन्** त्रि० अनु+रन्ज–घिनुण् कुत्वम् । अनुरागयुक्ते स्त्रियां ङीप् । "वेश्यास्त्वामनुरागिणीमिति" सा० द० ।

**अनुरात्र** अव्य० रात्रौ विभ० अव्ययी० अच्समा० । रात्रिविषये, प्रतिरात्रे च । "तस्मात् स्वप्नरात्र पत्थाविच्छते" इति श्रुतिः । अनुगतो रात्रिम् । रात्रानुगते त्रि० ।

**अनुराधा** स्त्री० अनुगता राधां विशाखाम् अत्या० स० । सप्तविंशतिभागविभक्तस्य राशिचक्रस्य सप्तदशभागात्मके नक्षत्रभेदे "देवयुक्तरटोर्द्दिशोम्मृगशिरोमूलानुराधामघेति" ज्योति० । "राधे विशाखे पुष्यानुराधाज्येष्ठासु मघास्विति" श्रुतिः । "अखिलगुणसमेतेन्द्रियाणामलनगनिषिषयगुणर्तुपक्षद्वयस्य पक्षाः । विषयैकचन्द्रभूतार्णवाग्निरुद्राश्वियमदृष्टरूपाः । भूतशतपक्षवसवो द्वात्रिंशत्ताराकाणामम् । प्रमयोऽश्विन्यादीनां कालतारप्रमाणेन । नक्षत्रनामतुल्या फलमङ्कैर्नाटकामितैः वदत्म् । दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्य" इति ष० घृताशाः अनुराधासप्तकत्वम् । अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च । शक्रो निर्ऋतिस्तोयं विश्वे देवा हरिर्वसुर्वरुणः । अजपादोऽहिर्बुध्न्य पूषा चेतीश्वरा भानाम्" इति वृहत्सं० उक्तेस्तस्या मित्रदैवताकत्वम् । तस्य च योगतारा "ज्येष्ठाश्रवणमैत्राणां वार्हस्पत्यस्य मध्यमा" इति सूर्य्यसि० उक्तेर्मध्यमा तारा । तत्र भव अणो लुक् "लुक्तद्धितलुकीति" पा० स्त्रीप्रत्ययस्य लुक् । अनुराधजाते त्रि० । नक्षत्रेण युक्तः कालः इत्यणस्तु लुप् "लुपि युक्तवद्व्यक्तिवचनमिति" पा० अनुराधा अनुराधानक्षत्रयुक्तकाले तत्र सप्तम्यर्थे तृतीयेति भेदः । पृ० दीर्घः । अनूराधाप्यत्र ।

**अनुरुद्ध**–त्रि अनु+रुध–कर्म्मणि क्त । अपेक्षिते ।

**अनुरुध्** त्रि० अनु+रुध–क्विप् । अनुरोधकारि अपेक्षके । कर्म्मणि क्विपि वेदे उपसर्गदीर्घ । अनुरुद्धे । "आशितृप्ताभ्यासपरा अनूरुध्" ऋ० १,५५,५, "अनूरुध् अनुरुद्धमिति" भा० ।

**अनुरूप** अव्य० रूपस्य सादृश्ये योग्यत्वे वा अव्ययी० । रूपस्य सादृश्ये, योग्यतायाञ्च । पर्ग व्याख्याचि । तद्वति त्रि० । "यथानुरूपाभिनिवेशतोषिणोति" कुमा० । "सत्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत" गीता । द्वादशाहमध्ये यागे बहिष्पवमानगतानां त्रयाणां तृचानां मध्ये मध्यमे तृचे । "स्तोत्रियानुरूपौ तृचौ भवत एवमेव नस्तृचा भवन्ति तत्र उत्तम पर्य्यास" इति ता० ब्रा० । प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचाणां स्तोत्रिय, अनुरूप, पर्य्यासश्चेति त्रीणि नामानीति भा० ।

**अनुरोध** पु० अनु+रुध–घञ् । अनुसरणे, आराध्यादेरिष्टसम्पादनेच्छायाञ्च । "मित्रस्यानुरोधेन द्विविधं स्मृतमाश्रमिति" "नानुरोधोऽस्त्यनध्याये" इति च मनु ।

**अनुरोधिन्** त्रि० अनु+रुध–णिनि । अपेक्षके । स्त्रियां ङीप् । "पतिव्रतानां समयानुरोधिनीति" रामा० । [भाषणे ।

**अनुलाप** पु० अनुशीलनाया वारंवारं लप्यते लप–घञ् । पुनः-

**अनुलिप्त** त्रि० अनु+लिप–क्त । गन्धादिना कृतानुलेपे

दध्ना जुहोतीति वाक्येन पुनरनुवादेन दधिकरणकत्वमात्रं तत्र विधेयम्। तत्र होमस्यानुवादः एवमन्यत्राप्यूह्यम् अनुवादः पूर्व्वस्येति का० ४, १, १८, "य इष्ट्येत्यनेन वाक्येन पौर्णमास्याममावस्यायां वा विकृतीनामनुष्ठानमुच्यते तच्च प्रकृतितः प्राप्तमेव अतः कारणात् य इष्ट्येत्यनुवाद इति तद्वृ०। अनुवादश्च त्रिविध भूतार्थानुवादः स्तुत्यर्थानुवाद गुणानुवादश्चेति। तत्र सदेव सौम्येदमग्र आसीदित्यादौ भूतार्थानुवादः। "वायुर्वै क्षेपिष्ठा देवतेत्यादौ, स्तुत्यर्थानुवाद। वायव्यं श्वेतमालभेतेत्यादौ प्राप्ताया वायुदेवताया स्तुत्यर्थत्वात् तस्य स्तुत्यर्थानुवादत्वम्। अग्निहोत्रं जुहोतीति प्राप्तस्याग्निहोत्रहोमस्य गुणविधानार्थं प्रवृत्तं दध्ना जुहोतीत्यादि गुणानुवाद। एवमन्यान्यप्युदाहार्य्याणि। अनुकथने। "क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नादिति" भाग० "शिष्योपदेशे च "अनुवादे चरणानामिति" पा०। "शिष्योपदेशे" इति सि०कौ०।

**अनुवादक** त्रि० अनुवदति अनु+वद—ण्वुल्। अनुवादकारके अनुवदनशीले च।

**अनुवादिन्** त्रि० अनुवदति अनु+वद—णिनि। अनुवादकारके, अनुवदनशीले, युक्तगीतानुवादिनि च स्त्रियां ङीप्।

**अनुवाद्य** त्रि० अनु+वद—ण्यत्। उद्देश्ये प्राप्तावपि किञ्चिद्विधानार्थमनुकीर्त्तनीये। "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति वृद्धाः तथा च। सर्वतो वह्निमानित्येव प्रयोक्तव्यं न वैपरीत्येन, तथा प्रयोगे तु आलङ्कारिकैः वाक्यगतविधेयाविमर्षदोषो भवतीति प्रतिपादितम् यथा "न्यक्कारो ह्ययमेव मे यदरयः" इति वाक्ये अयमेव न्यक्कार इति प्रयोक्तव्ये तद्वैपरीत्येन प्रयोगात्तथात्वम्। अतएव "वृद्धिरादैच्" इति पा० सूत्रे आदैच् वृद्धिसंज्ञः स्यादित्यर्थके वृद्धेर्विधेयत्वेन पूर्व्वनिर्देशावश्यम्भावेऽपि वृद्धिशब्दस्य मङ्गलार्थत्वेन प्राक्प्रयोगो भाष्यादौ समर्थितः यथा "पूर्व्वोच्चारित" सञ्ज्ञी परोच्चारित सञ्ज्ञाविधि "एतदेकमाचार्य्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्य्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि च अध्येतारश्च वृद्धियुक्ता यथा स्युरिति"। "माङ्गलिको मङ्गलप्रयोजनः। मङ्गलार्थः एकैकं सूत्रं शास्त्रमिति शास्त्रौघस्येत्युक्तम्। मङ्गलादीनीत्यादिना सप्रयोजनं श्लोकप्रयोजनमुक्तम्। प्रथन्ते विस्तृतानि भवन्ति तेन समाप्तिपर्य्यवसायिनीति" भा०उद्यो०।

**अनुवासन** न० अनु+वास—सौरभ्ये ल्युट्। धूपादिभिः सुरभीकरणे, वैद्योक्ते स्नेहाद्यैः वस्तिकर्म्मणि च। "द्विधा वस्तिः परिज्ञेयो निरूहश्चानुवासनम्। कषायाद्यैर्निरूहः स्यात् स्नेहाद्यैरनुवासनम्" इति वैद्यकम्। अनुवसति, अनुवासरं दीयते वा पृ०। सुश्रुतोक्ते अनुवासनद्रव्ये पु०। तत्र यथाप्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवासन पादावकृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति"। "निरूहः शोधनो लेखो स्नेहनो बृंहणो मतः। निरूहशोधितान् मार्गान् सम्यक् स्नेहोऽनुगच्छति। अपेतसर्वदोषासु नाडीष्विव वहञ्जलम्। सर्वदोषहरश्चासौ शरीरस्य च जीवनः। तस्माद्धि शुद्धदेहस्य स्नेहवस्तिर्विधीयते" इति। "तत्रोन्मादभयशोकापस्मारारोचकाजीर्णशोषपाण्डुरोगभ्रममदमूर्च्छाच्छर्दि-कुष्ठ-मेहोदर-स्थौल्यश्वासकासकण्ठशोषशोफोपसृष्ट-क्षतक्षीणचतुर्मासगर्भिणी दुर्बलाग्नितृष्णार्त्ता बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्या उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः। असाध्यता विकाराणां स्यादेषामनुवासनात्" इति च सुश्रुतम्। अजादिवस्तिचर्म्मघनवस्त्रादिनिर्म्मितेन (पिचकारीति) प्रसिद्धयन्त्रेण धातुवैषम्यरोगनाशाय लिङ्गद्वारेण योनिद्वारेण वा दीयमानं स्नेहादिद्रव्यमनुवासन इति वैद्यकप्रसिद्धिः। अधिकं वस्तिकर्म्मशब्दे वक्ष्यते। अनुवासनं प्रयोजनमस्य अनुप्रव० छ। अनुवासनीय अनुवासनहेतौ त्रि०।

**अनुवासित** त्रि० अनु—वास—क्त। सुरभीकृते, वस्तिकर्म्मणा चिकित्सिते च।

**अनुवास्य** त्रि० अनु+वस—कर्म्मणि यत्। सुरभीकार्य्ये वस्तिकर्म्मणा चिकित्स्ये च। "अशस्य स्थापनीयाश्च नानुवास्या कथञ्चनेति" सुश्रुतम्।

**अनुविधायिन्** त्रि० अनु+विधत्ते अनु+वि+धा—णिनि। पश्चाद्विधायिनि, अनुगते च। "गुणानां तदन्वयव्यतिरेकानुविधायित्वमिति" सा०द०।

**अनुविद्ध** त्रि० अनु+व्यध—क्त। खचिते। "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्ध इवार्थो हि सर्वं शब्देन भासते" इति वाक्यप०। "कीटानुविद्धरत्नादिसाधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः" इति सा०द०। [आवन्त्याविति" भा०भी०प०।

**अनुविन्ध्य** पु० अवन्तिदेशीये नृपतिभेदे "विन्ध्यानुविन्ध्या-

**अनुवृत्** त्रि० अनु पश्चात् वर्त्तते अनु+वृत–क्विप्। पश्चाद्वर्त्तिनि पश्चाद्भाविनि अनुगते च "अनुवृदनुवृत्" इति ता०ब्रा०।

**अनुवृत्त** त्रि० अनु+वृत–क्त। अनुगते, पूर्ब्बस्थलादपरस्थले आकाङ्क्षापूरणार्थम् अर्पिते पदादौ, अनुक्रमेण वर्त्तनमाप्ते क्रमशः वर्त्तुलाकारे। अनुगतो वृत्तं शीलम् अव्या०स०। शीलानुगते त्रि०।

**अनुवृत्ति** स्त्री अनु+वृत–क्तिन्। अनुसरणे, सेवने, पूर्ब्बस्थलादुत्तरस्थले आकाङ्क्षापूरणार्थमनुसरणे च। "कृपी दर्पविवाणिज्यशुल्कपाशानुवर्त्तिभिः कृतोपकारादाप्तस्य राजस्वं तदुदाहृतमिति" नारदः। "अनुवर्त्तिः सेवेति" रघु०। "अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्वमरसत्तमा इति" देवी०। तत्सदृशे तत्सदृशरूपे अन्वये, समन्वये च। एवं व्यावृत्त्यनुवृत्तिभ्यामनुमयत्वं मनसः सिद्धमिति छा० उप०भा०। "जन्माद्यस्य यतोऽन्वयादिति" भागव०। "अन्वयस्येनानुवृत्तिरिति" श्रीधर सद्वृद्ववपुःसमाया भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्था इति सुश्रुतम् "यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परेति" सा०द०। दोषे दोषा च तदनुवृत्तिः सेवा अनुसरणञ्चेति तदर्थे।

**अनुवेध** पु० अनु+विध–घञ्। संसर्गे। "नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशा" इति सा०द०।

**अनुवेल** न० वीप्सार्थे अव्ययी०। प्रतिसमये अनुक्षणे "इति च प्रच्छत्यनुवेलमादृत" इति रघुः। अर्शआद्यादि० मत्वर्थे अच्। तद्वृत्तौ त्रि०।

**अनुवेल्लित** न० अनु+वेल्ल–क्त। सुश्रुतोक्ते व्रणबन्धनबन्धभेदे। बन्धाश्च "कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिका यमकखट्वाचीनविबन्धवितानगोफणा पञ्चाङ्गी चेति चतुर्द्दश बन्धविशेषा तेषां नामभिरेवाकृतयः प्रायेण व्याख्याता" इति सुश्रुतोक्ता वेदितव्याः। तत्र अनुवेल्लितं तु शाखासु इति वैद्यकप्रसिद्धिः।

**अनुवेश** पु० अनु+विश–घञ्। ज्येष्ठातिक्रमेण कनिष्ठस्य विवाहे "यवीयसोऽनुवेशो हि ज्येष्ठस्य विधिलोपक" इति भार०।

**अनुवेश्य** त्रि० अनुक्रमेण वेशमर्हति यत्। प्रतिवेश्यानन्तरवासिनि। "प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे" इति मनु। "अनुवेश्यः प्रातिवेश्यानन्तरगृहवासीति कुल्लू०।

**अनुव्य** त्रि० अनुव्ययति अनुगच्छति अनु+व्ये–क। अनुगते "ततो देवा अनुव्यमिवासुः" श० १,२,५, अनुव्यम् अनुगमनं अनुभूतिं "प्राप्ता इव बभूवुरिति" तद्भा०।

**अनुव्याख्यान** न० अनुरूपं व्याख्यानम् प्रा०स०। मन्त्रादीनामनुरूपार्थप्रकाशके व्याख्याने। [कथने च।

**अनुव्याहार** पु० अनु+वि+आ+हृ–घञ्। अनुहारे, अनु-

**अनुव्रजन** न० अनु+व्रज+भावे ल्युट्। अनुगमने अनुव्रज्यं च गच्छतोऽतिथ्यादेः जलसमीपपर्य्यन्तानुधावनम् तच्चैकोपमाविधया वर्ज्जितं नैषधे "समानपर्य्यन्तसुदेव वत्सं क्रमेण तत्रिव्रज तीर्थकूपये। अथवाहृदिप्रकरैः पुरीकृशानतनयनुकुष्माअनम्बुभिरिति"।

**अनुव्रज्या** स्त्री अनु+व्रज–क्यप्। अनुवरणादिरूपे सेवने। "अभावायादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोरिति" मनु।

**अनुव्रत** त्रि० अनुकूलं व्रतं कर्म्म यस्य। अनुकूलकर्म्मयुक्ते। "अनुव्रताय रन्धयन्नपव्रतानिति" ऋ० १,५१,८, अनुव्रताय अनुकूलकर्म्मणे इति भा०। वेश्याः कृतमनुव्रताः रामा०

**अनुशतिकादि** न० ई० पाणिनीयगणपाठोक्ते ञिति णिति किति च तद्धिते परे द्विपदयोराद्यचोर्वृद्धिनिमित्तीभूते शब्दसमूहे, स च गणः। अनुशतिक, अनुहोड़, अनुसंवरण, अनुसंवत्सर, अङ्गारवेणु, असिहत्य, अस्यहत्य, अस्यहेति, वध्योग, पुष्करसद्, अनुहरत्, कुरुकत, कुरुपञ्चाल, उदकशुद्ध, इहलोक, परलोक, सर्व्वलोक, सर्व्वपुरुष, सर्व्वभूमि, प्रयोग, परस्त्री, (राजपुरुषात् ष्यञि) सूत्रनड़, आकृतिगणोऽयम्। तेनाभिगम, अधिभूत, अधिदेव, चतुर्विद्या, इत्यादयोऽन्येऽपि।

**अनुशय** पु० अनु+शीङ्–अच्। अत्यन्तद्वेषे, पश्चात्तापे, पूर्व्ववैरे च। अनुगतः शयं हस्तं गतिस०। हस्तानुगते त्रि०। तत्र क्रीतादिपदार्थविशेषानुशयस्वरूपादि नारदेनोक्तम्। "क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते"। तत्र च यावत्कालेन पण्यं क्रीतन्तावत्कालाभ्यन्तर एव प्रत्यर्पणीयमिति तेनैवोक्तम्। "क्रीत्वा मूल्येन यत् पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयन्तत्तस्मिन्नेवाह्न्यविक्षतमिति"। द्वितीयादिदिने तु प्रत्यर्पणे विशेषस्तेनैवोक्तः। "द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमाहरेत्। द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति"। परतोऽनुशयो न कर्त्तव्य इत्यर्थः। एतच्च बीजादिव्यतिरिक्तोपभोगादिविनश्वरवस्तुविषयम्। बीजादिक्रये पुनरन्य एव प्रत्यर्पणेऽवधिरित्याह। "दशैक-

पञ्चसप्ताहमासत्र्यहार्द्धमासिकम् । बीजायोवाह्यरत्नस्त्री दोह्यपुंसां परीक्षणम्" । बीजं ब्रीह्यादिबीजम् । अयो लौहम् । वाह्यो बलीवर्द्दादि । रत्नं मुक्ताप्रवालादि । स्त्री दासी । दोह्यं महिष्यादि । पुमान् दासः । एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेय । परीक्ष्यमाणे च बीजादौ यद्यस्यगुणत्वाऽनुशयो भवति तदा दशाहाभ्यन्तर एव क्रयनिवृत्तिः । न पुनरूर्द्धमित्युपदेशप्रयोजनम् । यत्तु मनुवचनम् । "क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत वेति" । तदुक्तलोहादिव्यतिरिक्तोपभोगादिविनश्वरस्फटिकलयानशयनासनादिविषयम् । सर्वञ्चैतदपरीक्षितक्रीतविषयम् । यत् पुनः परीक्षितञ्च पुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतं तद्विक्रेते न प्रत्यर्पणीयम् तदुक्तम् । "क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति" मिता० । ततश्च क्रीतस्य, विक्रीतस्य, अन्यथा वा कृतस्य वस्तुनः, असमीचीनत्वबुद्ध्या यः पश्चात्ताप सोऽनुशय इति बोध्यम् । "भुक्तकर्म्मणोऽवशेषे च "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवमिति" शा० सू० स्वर्गार्थकर्म्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत् यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना विरिच्यते भाण्डानुसार्य्येव कश्चित् स्नेहशेषोऽवतिष्ठते तथानुशयोऽपीति" भा० । "तत्र दृष्टं प्रत्यक्षं श्रुति सा हि सानुशयानामेवावरोहं दर्शयति यथा "तद्य इह रमणीयचरणा अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं चाण्डालयोनिं वेति" । चरणशब्देनानुशयः (शेषः) सूच्यते । दृष्टश्च जन्मनैव प्राणिनामुच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासम्भवात् अनुशयसद्भाव सूचयति अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुकत्वस्य सामान्यतः शास्त्रेणावगमितत्वादिति च शा०भा० ।

**अनुशयाना** स्त्री अनु+शीङ्—शानच् । परकीयनायिकाभेदे । तद्विवरणं नायिकाशब्दे दृश्यम् । अनुतापकर्त्तरि त्रि० ।

**अनुशयिन्** पु० अनु+शीङ्—इनि । यावत्कर्मक्षयं चन्द्रलोके स्थित्वा तावच्छेषे एव कर्म्मणि पश्चात्तापान्विततया भूमिलोके जन्मग्रहणायागन्तु प्रवृत्ते जीवे । "यो यो ह्यन्नमत्ति अनुशयिभिः तद्दंशेन भावितत्वात् संश्लिष्टतयान्न संश्लिष्टरेतःसिञ्चति" छा०भा० । तस्य रेतःसिगाकृत्या पूर्वसम्बन्धात् तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीति आनन्द० । पश्चात्तापयुते त्रि० । पुरुषस्य अनुशयत एव भुक्तभोगायाः प्रकृतेस्त्यागः श्रुतावप्युक्तः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति "स सपद्य जहात्यनामनुशयी सुप्त कुलायं यथेति" भाग० ।

**अनुशयी** स्त्री अनुशय्यते पश्चात्तप्यतेऽस्याम् । अनु+शीङ्—अधिकरणे अच् गौरा० ङीष् । पादरोगभेदे, "हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेरिति" भावप्रकाश ।

**अनुशर** पु० अनुशृणाति अनु+शॄ—कर्त्तरि—अच् । राक्षसे ।

**अनुशासन** न० अनुशिष्यते याथार्थ्येन निरूप्यते अनु+शास—भावे ल्युट् । याथार्थ्यज्ञापने, निरूपणे, कर्त्तव्योपदेशे च । "ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति । अपह्नुते तद्द्विगुणं तन्मनोरनुशासनमिति" मनु अनुशासनविरोधादिति उक्ता । करणे ल्युट् । तत्प्रतिपादके शास्त्रे यथा "अथ शब्दानुशासनम्" । "अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य बोध्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भाष्यप्रदीपोद्द्योत । "अथशब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यमिति भाष्यम्" । "अथ योगानुशासनमिति" पातञ्जलसूत्रम् योगोऽनुशिष्यतेऽनेन तादृशं शास्त्रमधिकृतमिति तदर्थे उभयत्र अथशब्दस्याधिकारार्थत्वात्तथात्वम् "नार्थविज्ञानुशासनमित्यमरः" अनुशासनपर्वनिरूपण प्रयोजनमस्य ठक् आनुशासनिकम् । महाभारतान्तर्गतानुशासनपर्व्वणि ।

**अनुशासितृ** त्रि० अनुशास्ति याथार्थ्येन कर्त्तव्यमुपदिशति अनु+शास—तृच । कर्त्तव्योपदेशके । स्त्रियां ङीप् । शीला०तृन् । अनुशास्तापि तत्रार्थे त्रि० स्त्रियां ङीप् ।

**अनुशासिन्** त्रि० अनु+शास—णिनि । कर्त्तव्योपदेशके दण्डयितरि च "यस्ते नानुशासी राजेति" विक्र० ।

**अनुशिष्ट** त्रि० अनु+शास—कर्म्मणि क्त । कृतानुशासने, यस्य हितोपदेश क्रियते तस्मिन्, दण्डिते च ।

**अनुशीत** अव्य० शीते विभ० अव्ययी० । शीते इत्यर्थे, परिमुखा० भवादौ ञ्य । आनुशीत्य तत्रभवादौ त्रि० ।

**अनुशीलन** न० अनुक्षणं शीलनं प्रा०स० । सतताभ्यासे अनुक्षणाचरणे "आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमेति" भक्तिरसा० कृष्णस्य तद्गुणकीर्त्तनस्यानुशीलनं तदर्थे ।

**अनुशोक** पु० अनु+शुच-घञ्। पश्चाच्छोके अनुशोचने।

**अनुशोचन** न० अनु+शुच-ल्युट्। अनुशोके। "दृष्ट्वा दत्तम-पीतं वा विमत्यानुकीर्त्तनात्। शापानुशोचनाभ्यां च भग्न-तेजो विभिद्यते" इति शु०त० देवल। अनुशोचन धन-व्ययेन पश्चात्ताप इति रघुनन्दन। स्वार्थे णिचि युच्। अनुशोचना तत्रैवार्थे स्त्री।

**अनुशोचनीय** त्रि० अनुशुच्यते अनु+शुच-कर्म्मणि अनी-यर्। अनुशोचनार्हे यमुद्दिश्य शोकः क्रियते तस्मिन्।

**अनुशो(शु)चित** न० अनु+शुच-भावे क्त उदुपधत्वात् वा न कित्त्वम्। अनुशोचने। अनुशोचितुमारब्धः आरम्भार्थे क्त वा गुणः। कृतशोचनारम्भे त्रि०।

**अनुश्लोक** न० अनुश्लोक्यते गीयते अनु+श्लोक-कर्म्मणि अच्। सङ्गायते गेये सामभेदे, "श्लोकेन स्तुवते पुरस्तात् सदसः, अनुश्लोकेन पश्चादिति" ता०ब्रा०। तच्च गेयगानग्रन्थे ११२ प्रपा० आद्यम् साम। [नुषक्ता" इति सि०कौ०।

**अनुषक्त** त्रि० अनु+षन्ज-क्त। संलग्ने। "येऽत्र मकारा-

**अनुषङ्ग** पु० अनु+षन्ज-घञ्। दयायां दयया हि अन्यदुःखे-नान्यदुःखसम्बन्धात्तथात्वम्। सम्बन्धे, प्रसङ्गस्य अन्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविधयान्यसिद्धि यथा "विप्रवध-प्रायश्चित्तेन तन्नान्तरीयकविधया अवगोरणदण्डनिपातन-प्रायश्चित्तसिद्धि। "अथ केचिदुपात्तस्य दुरितस्य प्रच-क्षते। अनुत्पत्तिं तथाचान्ये प्रत्यवायस्य मन्वते। नित्य-क्रियां तथाचान्ये ह्यनुषङ्गफलां श्रुतिमिति" प्रा०त० प्राय०तत्त्व०। अनुषङ्गेण फल यस्या इति तदर्थ। एकत्र वाक्ये उक्तस्य शब्दस्यान्यत्र वाक्येऽन्वयार्थमाकर्षणे। यथा "नित्यक्रियां तथा चान्ये" इति वाक्ये पूर्ववाक्योपात्तस्य मन्वते इति क्रियापदस्यान्वयार्थमाकर्षणम्। तथा पञ्चा-वयवन्यायवाक्येषु उपनयवाक्यस्थस्य अयमिति पदस्य नि-गमनवाक्येऽन्वयार्थमाकर्षणम्। यथा वह्निव्याप्यो धूमो धूमवांश्चायमिति उपनयवाक्यस्थस्य अयमिति शब्दस्य तस्माद्वह्निमानिति वाक्येऽन्वयेन अयं वह्निमानिति बोध। अतएव शास्त्रकारैः पूर्वत्र श्रुतशब्दस्योत्तरत्राकर्षणबोध-नाय एतत्पदमनुषञ्जनीयमित्युक्तम्।

**अनुषङ्गिन्** त्रि० अनुषज्य सजते अनु+सञ्ज घिनुण्। अनुषज्य सक्ते। "सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिण। पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मन" इति मनु। अनुषज्य मार्देवावस्थितस्येति" कुल्लू०। व्यापके च। "निभृताद्युपङ्गि भवमेति जन इति "किरा० विभुताया प्रभुत्वस्यानुषङ्गि व्यापकमिति" तट्टीकायां मल्लिनाथः।

**अनुषक्** अव्य० अनु+सन्ज-क्विप्। आनुपूर्व्ये। "स्वरादेरा-कृतिगणत्वादयं तद्गणीयः" इति मनो०। पु० दीर्घ। आनुषगव्ययत्वार्थे अव्य०।

**अनुषिक्त** त्रि० अनु+सिच-क्त। सततसिक्ते पश्चात्सिक्ते च।

**अनुषेचन** न० अनु+सिच-भावे ल्युट्। अनुक्षणसेचने, पश्चात्सेचने च।

**अनुष्टुति** स्त्री अनु+स्तु-क्तिन्। अनुक्रमेण स्तुतौ "य पूर्व्य-मनुष्टुतिमीये" इति ऋ० ८,१८, अनुष्टुतिम् अनुक्रमेण क्रियमाणां स्तुतिमिति भाष्यम्।

**अनुष्टुब्गर्भा** स्त्री वैद०। "आद्यः पञ्चाक्षरः" पादः उत्तरे-ऽष्टाक्षरास्त्रय अनुष्टुब्गर्भेव शौष्णिक्षूष्णिगनुष्टुब्भ छन्दो-भेदे। "अद्य पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा" इति का०सर्वा०

**अनुषण्ड** अव्य० षण्ड पञ्चसमूह विभ० अव्ययी०। षण्डे इत्यर्थे। तत्र जातादि शुण्डिकादि० अण्। आनु-षण्डः तत्र जाते त्रि०।

**अनुष्टुभ्** स्त्री अनु+स्तुभ-क्विप् षत्वम्। अष्टाक्षरपादके, छन्दोभेदे वाचि च। अनुष्टुप्छन्द इति ब० १५,५, "अनु निरन्तरं स्तुभ्यतेऽनया अनुष्टुप् वाक्" भाष्येण अनुष्टुप् छन्द "वागनुष्टुप् छन्द" इति श्रुतेरिति" वेददी०। "अनुष्टोभनादनुष्टुबिति" ब्राह्मणे निरुक्तिः। "गायत्र्युष्णि-गनुष्टुप् चेति छन्द०। अनुष्टुप् च द्विविधा यथा कश्चिद-ष्टाक्षरपादिका जाति, विशेषलक्षणयुक्तावरक छन्दश्च। तत्र जाते २५६ भेदा। "पञ्चमं लघु सर्वत्र सप्तमं द्विचतु-र्थयो। गुरु षष्ठञ्च पादानां शेषेष्वनियमो मत" इति छन्दोमञ्जर्युक्तलक्षणं द्वितीयम्। तस्य च पञ्चमलघुत्वं व्यभिचरति च "वियवमावेनाहृत" इति भाव। तत्र च भात्यात्मलक्षणं यथा "प्रयोगे प्रायिकं प्राहु केऽप्येत-द्वक्त्रलक्षणम्। लोकेऽनुष्टुबिति ख्यातम् तस्याष्टाक्षरता मतेति छन्दोम०। अतएव वृत्तरत्नाकरे "वक्त्रं नाद्यान्नसौ स्या-दब्धेर्योऽनुष्टुभि ख्यातमिति" वक्त्रनामतोक्ता। सर्वछ-न्दसां तु वितानमिति नाम यथोक्तं वृत्तरत्नाकरे "वितान-माख्या यदन्यदिति।" आभ्यां समानिकाप्रमाणिका-भासमन्यत् सर्वमित्यर्थः। "अत्र छन्दांसि गायत्र्युष्णिगनु-ष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्याद्युपक्रम्य पर्यन्तमिर्मज्जकराठीनि उत्तरत्राणि, अमाविकेनैकेन निचृद्भुरिजौ, द्वाभ्यां वि-राट्स्वराजौ, पादपूरणार्थं तु क्षिप्रसंयोगैकाक्षरीभावान् व्यूहेदिति "अनादेशेऽष्टाक्षराः पादाः पादानुष्टुभ इति

तृतीयमनुष्टुबिति" च कात्या० सर्वानुक्र० "शुचिमनुष्टुप्का माघमनुष्टुभेति" यजु० ।

**अनुष्ठ** त्रि० अनुक्रमेण तिष्ठति अनु+स्था—क षत्वम् । अनुक्रमेण स्थातरि "हिता विश्वा अनुष्ठा प्रवणेषु जिह्मते इति ऋ० १,५४,१०, अनुष्ठा अनुक्रमेण तिष्ठन्तीरिति भाष्यम् । भावे अङ् टाप् । अनुष्ठाने स्त्री ।

**अनुष्ठातृ** त्रि० अनु+स्था—तृच् स्त्रियां ङीप् । विधानकर्त्तरि "शास्त्रदेशित फलमनुष्ठातरीति" न्यायवाक्यम् ।

**अनुष्ठान** न० अनु+स्था—भावे ल्युट् षत्वम् । विहितकर्म्मादिकरणे । अलब्धलाभादिकमभिधाय "एतच्चतुर्विधं विद्यात् पुरुषार्थप्रयोजनम् । अस्य नित्यमनुष्ठानं सम्यक् कुर्य्यादतन्द्रित" इति मनुराह च "उपरुध्यते तपोऽनुष्ठानम्" शकु० ।

**अनुष्ठित** त्रि० अनु+स्था—कर्म्मणि क्त । विधानेन कृते धर्म्मकार्य्यादौ "अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितमिति" भा० व०प० ।

**अनुष्ठु** अव्य० अनु+स्था—कु । सम्यगित्यर्थे "पार्थिवानामृतून् प्रावावृद्धिदधावनुष्ठु इति ऋ० १,९५,२, अनुष्ठु इत्येतदव्ययं सम्यक्समानार्थं सुष्ठु यथेति भा० ।

**अनुष्ठेय** त्रि० अनु+स्था—कर्म्मणि यत् । विधेये । "अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितमिति" भा०व०प० ।

**अनुष्ण** त्रि० न उष्ण न०त० । उष्णभिन्ने शीतपदार्थे "अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मविदिति" मनु । न उष्ण विरोधे न०त० । अलसे । अलसो हि शीतबाधाभावेऽपि शीतबाधामभिनयन् कर्त्तव्यकर्म्मणि जड़ इव भवति दक्षस्तु शीतेऽपि तदगणयित्वा कर्त्तव्यकरणाय अजड़ इव सन् व्याप्रियते इति तयोरुष्णानुष्णता । अत्र कारितार्थे कनि अनुष्णकोऽपि । उत्पले न० । उष्णभिन्ने शीतले स्पर्शे पु० "अनुष्णाशीतपाकज" इति भाषा० । अनुष्णा सर्वत्र पृथिवीसमीरणयो , तयोरौष्ण्यापलब्धिस्तु तेजःसंयोगविशेषादिति बोध्यम् ।

**अनुष्णगु** पु० अनुष्णा शीतला गावः किरणा यस्य । चन्द्रे अनुष्णकिरणादयोऽप्यत्र पु० ।

**अनुष्णवल्लिका** स्त्री अनुष्णा शीतला वल्लीव इवार्थे कनि टापि अत इत्वम् । नीलदूर्वायाम् ।

**अनुसंवत्सर** अव्य० संवत्सरे विभक्त्य० वीप्सायां वा अव्ययी० । वत्सरे इत्यर्थे, प्रतिवर्षे च । तत्र भवादौ ठञ्, अनुशतिका० उभयपदवृद्धि' । आनुसांवत्सरिकः प्रतिवर्षभवे त्रि० ।

**अनुसंवरण** न० अनु+सम्+वृ—ल्युट् । अनुक्रमेण गोपने । अनुसंवरणाय हितम् ठञ् अनुशतिका० द्विपदवृद्धि । आनुसांवरणिक तद्वादौ त्रि० ।

**अनुसंहित** त्रि० अनु+सम्+धा—कर्म्मणि क्त । कृतानुसन्धाने यस्य ध्यानार्थमन्वेषणादिकम् क्रियते तस्मिन् । संहितायाः विभ० अव्ययी० । संहितायामित्यर्थे । 'अथैके प्राकृरनुसंहितमिति ऋग्वेदप्रातिशाख्यम् ।

**अनुसन्तति** स्त्री अनुक्रमेण सन्तति । अविच्छेदधारायाम् "अनुसन्ततिपातिन पटुत्वमिति" माघ ।

**अनुसन्धान** न० अनु+सम्+धाञ्—ल्युट् । अन्वेषणे, चिन्तने च

**अनुसन्धेय** त्रि० अनु+सम्+धा कर्म्मणि अर्हाद्यर्थे वा यत् । अनुसन्धातुं योग्ये, अनुसन्धातव्ये च ।

**अनुसर** त्रि० अनुसरति पश्चाद् गच्छति । अनु+सृ—ट स्त्रियां ङीप् । अनुचरे, सहगन्तरि च ।

**अनुसरण** न० अनु+सृ—ल्युट् । अनुगमने, सदृशीकरणे च ।

**अनुसवन** अव्य० सवनस्य पश्चात् अव्ययी० । सवनस्य (स्नानस्य) पश्चात् सवने, "अनुसवनमेनमालभेरन्निति का० २५,१२, २६, एनं ज्वराद्यभिभूत दीक्षितं सर्वे ऋत्विजः सवनान्तेषु स्पृशेयुरिति तद्व्याख्या ।

**अनुसाय** अव्य० साये विभ० अव्ययी० । सायाह्ने इत्यर्थे तत्रभव पारिसख्या० ञ्य । आनुसाय्य' तत्रभवे त्रि० ।

**अनुसार** पु० अनु+सृ—घञ् । अनुसरणे, "धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित " इति या० स्मृति' । "कृतानुसारादधिका व्यतिरिक्ता न सिध्यतीति" मनु ।

**अनुसारणा** स्त्री अनु+सृ+णिच्-युच् सारणा अनुगत्य सारणा चालना । अनुधावने, अपसारणायाम्, भीतिहेतोरनुधावने हि भीतस्य चालना भवतीति तस्य सरणाहेतुत्वम् "तस्मात् पलायमानानां कुर्य्यान्नात्यनुसारणाम्" भा०शा०प० ।

**अनुसारिन्** त्रि० अनुसरति पश्चाद् गच्छति अनु+सृ—णिनि । अनुगन्तरि । "कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके । मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनमिति शकु० । "यदा यदा सतां हानिर्वेदमार्गानुसारिणामिति" पुरा० ।

**अनुसूया** स्त्री अनुसूयते अनु+सू—क्यप् । शकुन्तलासहचरीभेदे शकु० । अनुसूयेत्येके ।

**अनुसृति** स्त्री अनु+सृ—क्तिन् । अनुसरणे । अनुसरति कुलान्तर कर्त्तरि संज्ञायां क्तिच् । कुलटायां स्त्रियां, स्त्री । तस्याः अपत्यं मतान्तरे कल्याण्यादि० ठक् इनङ् च । आनुसृतिनेयः तदपत्ये पु०स्त्री० ।

**अनुसृष्टि** स्त्री अनु+सृज—क्तिन् । अनुसर्जने । कर्त्तरि संज्ञायां

क्विप्। मधुरतृष्णमती स्त्रियां स्त्री। तस्याः अपत्यम् कल्याण्यादि० ढक् इनङ् च। आनुसृष्टिनेय तदपत्ये पु०स्त्री०।

**अनुसेविन्** त्रि० अनुक्षण सेवते अनु+सेव–णिनि स्त्रियां ङीप्। सततसेविनि "क्रूरकर्मानुसेविनीमिति" रामा०।

**अनुस्तरण** त्रि०अनुस्तीर्य्यते अनु+स्तृ–करणे ल्युट्। आच्छादने पर्णादौ स्त्रियां ङीप्। "अनुस्तरण्या वपयास्य शिरोमुख मच्छादयेदिति" ता०भा०। तत्साधने स्त्रीगव्यां स्त्री। "अनुस्तरणीं गामजां वैकवर्णां कृष्णामेके सव्ये बाहौ बद्ध्वेति" श्रुति। "सेयं गौः मृत देहमनुस्तृतत्यादिमित-त्वाच्चानुस्तरणीत्युच्यते" इति तन्निरुक्तमाञ्जणम्। अनु-तीर्य्यते वैतरणी नदी अनया अनु+तॄ–करणे ल्युट् इ० ङट्। वैतरणीनद्युत्तारिकायां गवि स्त्री। "तस्मात् पुरुषाय पुरुषानुत्तरणी क्रियते इति" श्रुति।

**अनुस्मृति** स्त्री अनु+स्मृ–क्तिन्। अनुक्षणचिन्तने आत्मस्वरूपतया चिन्तने "अनुस्मृतेर्बादरिरिति" शा०सू०। प्रादेशमात्रत्वेन अवस् (परमेश्वर) अप्रादेशमात्रोऽप्यनुस्मरणीय प्रादेशमात्रमत्ययवत्त्वाय। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते इति भा०। "प्रादेशमात्रोऽह्यपरोऽपि इष्ट इत्यादौ श्रुतौ प्रादेशमात्रश्रवणमनुस्मृत्यर्थमित्यत्र तत्तात्पर्य्यम्।

**अनुस्यूत** त्रि० अनु+सिव–क्त ऊट्। ग्रथिते, सततसंबद्धे च। "सूत्रेमणिवत् सर्व्वानुस्यूतेति" ति०त०रघुनन्दन।

**अनुसमाहार** पु० अनु+सम्+आ+हृ–घञ्। अनुसन्धाने "अनुसमाहरतीत्यस्यानुसन्धत्ते" इति भाष्ये व्याख्यानात् स्यात्तम्।

**अनुस्वार** पु०स्वृ–घञ् उदात्तादिस्वरवत्त्वात् स्वराः स्वरवर्णा एव स्वारा अनुगत स्वारान् अत्या० स०। स्वराश्रयेण उच्चार्य्यमाणे विन्दुरेखया व्यज्यमानेऽनुनासिके वर्णभेदे। "अनुस्वारो विसर्गश्चे"त्युपक्रम्य "आश्रयस्थानभागिन" इत्युक्तेस्तस्य तथात्वम्। यानुस्वारो विसर्गो च दीर्घवैव गुरुर्भवेत् छन्दोम०। "अनुस्वारो विसर्गश्च +क+पौ चापि पराश्रितौ। अयोगवाहा विज्ञेया आश्रयस्थानभागिन" इति शिक्षा।

**अनुहरण** न० अनु+हृ–ल्युट्। देशभाषावेशादिना सदृशीकरणे सादृश्यधर्माविष्करणे च।

**अनुहार** पु० अनु+हृ–घञ्। अनुकरणे यथाकरणे च।

**अनुहार्य्य** त्रि० अनु+हृ–ण्यत्। सदृशीकार्य्ये।

**अनुहृत** त्रि० अनु+हृ–क्त। अनुकृते सदृशीकृते।

**अनुहोड** त्रि० होडे विभक्त्य० अव्ययी०। होडे इत्यर्थे। तत्र भवादौ ठक् अनुशतिका० द्विपदवृद्धिः। आनुहौडिकः। होडभवे त्रि०।

**अनूक** पु० अनु+उच–समवाये क नि० कुलम्। ततस्वभावे। शरीरे न०। यज्ञाधारे पृष्ठास्थिभेदे पु०। यत्र "योन्यौऽन्वधाति मांसयोरनूकस्य मापरसक्थ्योरिति" श०ब्रा० ३,८,३,२७, भाष्यकृता तथैव व्याख्यातम्। अवज-साधने यज्ञिवे इष्टकोपधायकमात्रभेदे न०। "अनुख्यामव-मध्यमानूके" इति कात्या० १६,७,२२। अनुख्यो न इष्टका गच्छ तावो मध्यमाऽनूके उपधेया इति। "एवं च" कात्या० १६,७,२१। यावेष्टका आसनूक एव। "अभितो युग्मः २४, अनूकमभितो युग्मा यावात्मिकया इति तद्व्या०। "साध्यमनूक सक्रादिति" इत्यत्र द्वितीय इष्टकाचयनभेदे न०।

**अनूकाश** पु० अनु+काश–घञ् उप० दीर्घः। अवलम्बरेखादिप्रकाशे "प्रकाशेनान्तरमनूकाशेन वाजयामिति" य० २४,२ "अनूकाशेनावसानदेशकान्तेति" वेददीपः।

**अनूचान** पु० अनु+वच–कान नि०। शिक्षादिषडङ्गसहित-वेदाध्ययनकारिणि, वेदार्थानुवचनसमर्थे च। "इदमूचुरनूचानाः प्रीतिकण्टकितत्वच" इति कुमा०। "स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय" छा० उप०। "शास्त्राधिकारीनूचानमना आसेति" छा० उ०।

**अनूच्य** त्रि० अनूच्यते अनु+वच–क्यप्। अनुवाच्ये यथा "पश्चादरण्येऽनूच्यमिति" "विद्यवेनारण्येऽनूच्यमिति", श० ब्रा० १८,४२०,२४।

**अनूढ** त्रि० अनु+वह–क्त। अविवाहिते। "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहा"दित्यमरः। स्त्रियां ङीप्।

**अनूति** स्त्री वे–क्तिन् अभावे न०त०। गमनाभावे। "अनूती अनूती विर्विप्रः" इति ऋ० ६,२८,६। "अनूना अनागमनेनेति" भा०।

**अनूदित** त्रि० अनु+वद–क्त। यत् उक्तार्थकमात्रान्तरेणानुवादः कृत, तस्मिन् पदार्थे अनुवादविषये च।

**अनूद्य** अव्य० अनु+वद–ल्यप्। अनुवाद कृत्वेत्यर्थे। अनु+वद–क्यप्। अनूद्ये अनुवादार्थे।

**अनून** त्रि०न ऊन न०त०। परिपूर्णे, समग्रे, अहीने च। "अनूनसारस्य गुरोरनूनामिति" रघुः। ऊनं निन्दितं न० त०। अनिन्दिते। स्वार्थे कन् तत्रैवार्थे।

**अनूप** त्रि० अनुगता आपो यत्र ७त० अच्समा०अतउत्वम् । जलप्राये स्थाने । "शकट' शाकिनी गावो जालमस्यन्दनं वनम् । अनूपं पर्वतो राजा दुर्भिक्षे नव दृत्तय" इति आह्नि० त० आगमेयः । तत्स्थाने सर्वदावासिनि महिषे पु० । "मज्जत्सु वेकडमस्य यातस्त्रिधामयाम्वित' । देशोऽनूप इति ख्यात" इत्युक्ते "अनूपक" इति प्रसिद्धे देशभेदे पु०। "अनूपराजस्य गुणैरनूनामिति" रघुः।

**अनूपज** न० अनूपे जलप्राये देशे जायते जन–ड ७त० । (आदा) इति ख्याते आर्द्रके, तस्य जलप्रायोद्भवत्वात्तथात्वम् । तत्स्थानजातमात्रे त्रि० ।

**अनूप्य** त्रि० अनूपदेशे भवः यत् । अनुगतजलदेशभवे "यास आपो धन्वन्याः समनः सन्त्वनूप्या" इति स्नानमन्त्र' ।

**अनूबन्ध्य** त्रि० अनु+बन्ध–ण्यत् उपस० दीर्घः । वधार्थं बन्धनीये अन्तिमे पशौ, "वशामनूबन्ध्यामालभेत" इति शत० २,४,४,१४, "अनुबन्ध्यवेदीति" आश्व० । [याजार्थे ।

**अनूयाज** पु० अनु+यज घञ् उपसर्गस्य वा दीर्घ' । अनु-

**अनूरु** पु० न स्त ऊरू यस्य न० । सूर्यसारथौ विनताज्येष्ठपुत्रे अरुणे । तस्य अपूर्णे एव गर्भे मात्रा अण्डस्य स्फोटनादूरुप्रभृत्यङ्गविकलत्वम् तत्कथा भा०आदिप० । यथा "तत' पुत्रार्थिनी देवी व्रीडिता च तपस्विनी । अण्डं बिभेद विनता तत्र पुत्रमपश्यत । पूर्वार्द्धकायसम्पन्नमितरेणाप्रकाशता । स पुत्रः क्रोधसंरब्ध' शशापैनामिति श्रुति' । योऽहमेवं कृतो मातस्त्वया लोभपरीतया । शरीरेणासमग्रेण तस्माद्दासी भविष्यसि । पञ्चवर्षशतान्यस्या यया विस्पर्द्धसे सह । एष च त्वां सुतो मातर्दासीत्वान्मोचयिष्यति । यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् । न करिष्यस्यनङ्गं वा व्यङ्गं वापि यशस्विनम् । प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया । विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः' । एवं शप्त्वा ततः पुत्रो विनतामन्तरीक्षग' । अरुणो दृश्यते ब्रह्मन् प्रभातसमये सदा । आदित्यरथमध्यास्ते सारथ्यं समकल्पयदिति"। "गतिरयोग्रमनूरुसारथेरिति" माघः । [ततृकथाऽनुपदमुक्ता ।

**अनूरुसारथि** पु० अनूरुः सारथिः रथनियन्ता यस्य । सूर्ये

**अनूराध** त्रि० अनु+राध–घञ् उपस०दी० । अनुराधनीये "इन्द्र' नक्षत्रमनूराधा नाम" इति श्रुति० १९,१५,२ ।

**अनूच** पु० नास्ति ऋच्यस्ततया ऋक् यस्य अच् समासान्त' । अनृग्वेदे अनुपनीते बालके । "अनृचबटुरधीयन्नध्येतव्येति" सि०कौ० । "यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला । यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचो ऽफलः" मनुः । "अनृचः अनधीयान इति" कुल्लू० । "अनृचो माणवक इति" मुग्धबोधम् । समासान्तविधेरनित्यत्वात् क्वचित् न अच् । "तेन यज्ञस्य हि यज्ञस्याश्नन्त्यनृचो यत्र भुञ्जते इति" "तथाऽनृचे हविर्दत्त्वा न दाता लभते फलमिति" च मनुः । समासान्तपक्षे अनृचे इति विवक्षया सप्तमी, तदभावपक्षे चतुर्थीति भेदः । अध्येतरीत्युक्ते "अनृक् सामेति" सि०कौ० । असमासान्तपक्षे विभाषया कप् । अनृचकः अनृक्कः त्रि० ।

**अनृजु** त्रि० न ऋजु । शठे वक्रे कुटिले च । "न पाणिपादचपलो न नेत्रचपलोऽनृजुः" इति मनुः । "या भ्रातृत्ये अनृजोर्ऋणमिति" ऋ०४,२,११ । "हन्तात् पामाऽसनृजू व्यर्थार्थस्यो यदा तदा । कर्कटी नाम सा भूरिया अक्षुदारिद्र्यशोकदेति" ग्रहकीर्ति० । ऋजुमार्गगामी पूर्वगति', अनृजुः वक्री पश्चाद्गतिरिति तदर्थ ।

**अनृण** त्रि० न ऋणं यस्य । ऋणशून्ये । ऋणञ्च अवश्यदेयम् तच्च उत्तमर्णाय दातव्यत्वेन स्वीकृतं धनम् । तच्चावश्यं शोध्यं तदशोधने "ऋणानामनपक्रियेत्युक्तेरुपपातकं भवति। अवश्यशोध्यत्वेन तत्सदृशम् वेदाध्ययनादिकमपि ऋणत्वेन व्यवह्रियते "जायमानो वै पुरुषस्त्रिभिर्ऋणैर्ऋणवान् भवति स्वाध्यायेन ऋषिभ्यः, यज्ञेन देवेभ्य प्रजया पितृभ्य" इति श्रुति' एवञ्च वेदाध्ययनादिना ऋष्यादीनामृणशोधने अनृणो भवतीति कृत्यादौ प्रसिद्धम् । एवञ्च "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदिति" ऋणशून्यस्यैव मोक्षाधिकार । अतएव मनुना "इत्येतदेनसं धर्ममनुतिष्ठन् समाहित । वेदान्तविधिवच्छ्रुत्वा संन्यसेदनृणो द्विज" इति अनृणस्यैव सन्यासोऽभिहित । "ज्येष्ठेन जातमात्रेण पुत्री भवति मानव । पितॄणामनृणश्चैव स तस्मात् सर्वमर्हतीति" मनु । "ऋणवा अस्य वा पुत्रीति" श्रुति' । कृतोपकारस्य प्रत्युपकारोऽपि ऋणत्वेन स्वीक्रियते । तदभिप्रायेणैव "प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्तिभिरिति" रघौ वर्णितम् ।

**अनृणिन्** त्रि० न ऋणी स्त्रियां ङीप् । ऋणिभिन्ने "दिवसस्याष्टमे भागे शाकं पचति यो नरः । अनृणी चाप्रवासी च स वारिचर ! मोदते, इति भा०व०प० । "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेदिति" पु० ।

**अनृत** न० न ऋतम् । सत्यभिन्ने मिथ्याभूते । "यद्वाहमभिदुद्रोह यद्वा शेप उतानृतमिति" ऋ० १,२३,२२ । "प्रियञ्च

च्छेदगमे तु ताभ्यस्तदन्यवर्णोन्मितय प्रसाध्या । अन्योन्मितौ कुट्टविधेर्गुणाप्ती ते भाज्यतद्भाजकवर्णमाने ॥ अन्येऽपि भाज्ये यदि सन्ति वर्णास्तन्मानमिष्टं परिकल्प्य साध्यम् । विलोमकोत्थापनतोऽन्यवर्णमानानि भिन्नं यदि मानमेवम् ॥ भूय कार्य्य कुट्टकोऽत्रान्त्यवर्णं तेनोत्थाप्योत्थापयेद्व्यस्तमाद्यात्" । "इदमनेकवर्णसमीकरण बीजं यत्रोदाहरणे द्वित्र्यादयोऽव्यक्तराशयो भवन्ति तेषा यावत्तावदादयो वर्णा मानेषु कल्प्यास्तत्र पूर्व्वाचार्य्यै कल्पिता यावत्तावत्, कालक, नीलक, पीतक, लोहितक, श्वेतक, चित्रक, कपिलक, पिङ्गलक, धूम्रक, पाटलक, शवलक, श्यामलक, मेचका, इत्यादि । अथ वा कादीन्यक्षराणि अव्यक्ताना सञ्ज्ञा असङ्कराथं कल्प्या । अत प्राग्वदुद्देशकालापवद्विधि कुर्वता गणकेन पक्षौ समौ कार्य्यौ पक्षा वा समा कार्य्या । तत एतावतारोऽय तयो समयोरनेकत्वात् पक्षादितरपक्षस्याद्य वर्णं शोधयेत्तदन्यवर्णान् रूपाणि च इतरपक्षाच्छोधयेत्तत आद्यवर्णशेषेणेतरपक्षे भक्ते भाजकवर्णोन्मिति । बहुषु पक्षेषु ययोर्ययो साम्यमस्ति तयोरेवं कृते सति अन्या उन्मितय स्यु । ततस्तासून्मितिषु एकवर्णोन्मितयो यद्यनेकधा भवन्ति ततस्तासां मध्ये द्वयोर्द्वयो समीकृतच्छेदगमेनाद्यं वर्णं शोधयेदित्यादिनान्यवर्णोन्मितय स्यु । एवं यावत्सम्भवस्ततोऽन्त्योन्मितौ भाज्यवर्णे योऽङ्क स भाज्यराशि, यो भाजके स भाजक, रूपाणि क्षेप, अत कुट्टकविधिना यो गुण उत्पद्यते तद्भाज्यवर्णमान, या लब्धिस्तद्भाजकवर्णमान, तयोर्मानयोर्दृभाजकमाद्याविष्टेन वर्णेन गुणितौ क्षेपकौ कल्प्यौ । तत स्वस्वमानेन सक्षेपेण पूर्ववर्णोन्मितौ वर्णावुत्थाप्य स्वच्छेदेन हरणे यल्लभ्यते तत् पूर्व्ववर्णस्य मानम् । एव विलोमकोत्थापनतोऽन्यवर्णमानानि भवन्ति । यदि तु अन्योन्मितौ द्व्यादयो वर्णा भवन्ति तदा तेषामिष्टानि मानानि कृत्वा स्वस्वमानैस्तानुत्थाप्य रूपेषु प्रक्षिप्य कुट्टक कार्य्य ।अथ यदि विलोमकोत्थापने क्रियमाणे पूर्व्ववर्णोन्मितौ तन्मितिर्भिन्ना लभ्यते तदा कुट्टकविधिना यो गुण उत्पद्यते स क्षेप स भाज्यवर्णमान तेनान्यवर्णमानेषु त वर्णमुत्थाप्य पूर्व्वोन्मितिषु विलोमकोत्थापनप्रकारेणान्यवर्णमानानि साध्यानि । इह यस्य वर्णस्य यन्मानमागतं व्यक्तमव्यक्तं, व्यक्ताव्यक्तं वा तस्य मानस्य व्यक्ताङ्केन गुणने कृते तद्वर्णाचरण निरसनमुत्थापनमुच्यते" वद्याख्या । उदाहरण तत्रैव दृश्यम् ।

**अनेकविध** त्रि० अनेका विधा प्रकारा यत्र । बहुप्रकारे "यत्रानेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीय" इति परि० ।

**अनेकशस्** अव्य० अनेक+वीप्सार्थे कारके शस् । अनेकवारार्थे "अनेकशो निर्ज्जितराजकस्त्वमिति" भट्टिः ।

**अनेकाग्र** त्रि० न एकाग्र । शून्यहृदये एकाग्रताशून्ये

**अनेकान्त** त्रि० न एकान्तो नियमो अव्यभिचारो यत्र । अनियमे, अनिश्चितफलके च । व्यभिचारवति दुष्टहेतौ पु० । "अनेकान्तो विरुद्धश्चाप्यसिद्ध प्रतिपक्षित । कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधेति" भाषा० । स च त्रिविध "आद्य साधारणस्तु स्यादन्योऽसाधारणो मत । तथैवानुपसंहारी त्रिधाऽनैकान्तिको मत" इति भाषा०। एकान्तोऽस्त्यस्य मत्वा०ण । ऐकान्त न०त० अनैकान्तोऽप्यत्र क्वचित् "भाषायाम् अनैकान्तो विरुद्ध श्चेत्येव" पाठ । तथा च साधारणादित्रितयान्यान्यत्वमनेकान्तत्वम् ।

**अनेकान्तवादिन्** पु० अस्ति नास्ति वेत्येकान्तं न वदति वद–णिनि ६त० । बौद्धभेदे । तस्य अस्तिनास्तिकायवादित्वेन तथात्वं विवरणमर्हच्छब्दे दृश्यम् ।

**अनेकार्थ** त्रि० अनेके अर्था अभिधेया यस्य । नानार्थे शब्दे । यथा गवादय अक्षादयश्च । 'अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते । एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रयेति" सा०द०। अयमाशय "संयोगश्च विभागश्च साहचर्य्यं विरोधिता । अर्थ प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधि । सामर्थ्यमौचिती देश कालाद्युक्ति स्वरादय । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव" इति हर्य्युक्तेरनेकार्थशब्दाना सर्वत्र शक्तौ समानायां सत्यां, संयोगाद्यैरितरार्थबोधप्रतिरोधनेन विशेषार्थ एव स्मार्य्यते । तद्भिन्नार्थस्य तु व्यञ्जनया बोध इत्यलङ्कारिकाणा मतम् । यथाच संयोगादय शक्त्या अन्यार्थोपस्थितौ प्रतिबन्धका । व्यञ्जना वृत्त्या तदुपस्थापने तु न । "अनेकार्थशब्देभ्य सर्वेषामर्थानामविशेषेणोपस्थितौ सत्यामपि संयोगादय अन्यशक्यविषयशाब्दबोधमात्र प्रतिबध्नन्ति नतु व्यङ्ग्यविषयमिति" रस०गङ्गाधर । नैयायिकादयस्तु अनेकार्थशब्दाना शक्यतावच्छेदकलाघवलाभे तत्रैव शक्तिरन्यत्र लक्षणा तत्र संयोगादय अन्यार्थबोधनं नैव प्रतिबध्नन्ति । तथा च संयोगादय सति तात्पर्य्ये, तद्विषयीभूतार्थविषयस्मृति तज्जन्यान्वयबुद्धि वा न प्रतिबध्नन्ति किन्तु तात्पर्य्यमात्रोन्नायका इत्यत्र व्यञ्जनाद्युत्पत्ति स्वीचक्रुरिति भेद । अनेके अर्था प्रयोजनानि

नम् । "अन्यार्थधीहेतुर्व्यापृतिरञ्जनम्" का०प्र० । कर्त्तरि ल्यु । व्यञ्जना एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना सामिधा-श्रयेति" सा०द० ।

**अन्त** न० अम–तन् । स्वरूपे, स्वभावे च । शेषे पु०न० । नाशे, सीमायां, निश्चये, शेषावयवे च पु० । निकटे, मनोहरे च त्रि० । तत्र स्वरूपे "मदुत्ततान्तस्तान्तमनो-रयटिति" माघः । नाशे "पतत्यविरत वारि नृत्यन्ति शिखिनो मुदा । "अद्य कान्त कृतान्तो वा दु खस्यान्तं करिष्यतीति" उद्भट । "वैरस्यान्तं करिष्यति" रामा० । सीमाया "वनान्तपर्य्यन्तमुपेत्य सस्पृहमिति" नैष०। "ओद-कान्तात् स्निग्धोऽनुगन्तव्य" इति श्रुति । सीमाऽवधिः स च दैशिक कालिकश्च । तत्र दैशिक उक्तोदाहरणे कालिकस्तु । "पक्षान्ते निष्फला यात्रा मासान्ते मरणं ध्रुवमिति" ज्योति० । "दशाहान्ते पुन· क्रियेति" स्मृति· शेषसीमायाम् "अस्तु वनान्ताद्वनितवहारिणमिति" माघः । "दिगन्ते श्रूयन्ते मदमलिनगण्डा· करटिन" इति भामिनी० । "गङ्गाप्रपातान्तविरूढशष्पमिति" रघु । शेषावयवे "वेदान्तसंज्ञोऽयते" इति वेदान्त इत्यादि । निश्चये । "उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरिति" गीता । उभयो सदसतोरित्यर्थ । निकटे अन्तवास· । स्वभावे शुद्धान्त' । शेषे निशान्त· ।

**अन्त:करण** न० कृ-करणे ल्युट् अन्तरभ्यन्तरस्थं करणं, कर्म०, तद्वृत्तिपदार्थानां सुखादीनां करणं ज्ञानसाधनं ६त० वा । ज्ञानसुखादिसाधने आभ्यन्तरे मनोबुद्धिचित्तादि-पदाभिलप्यमाने इन्द्रिये । तच्चान्त करणम् वेदान्तिमते चतुर्विधम् । "मनो बुद्धिरहङ्कारश्चित्तं करणमान्त-रम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे" इत्युक्तकार्य्यभेदात् । अन्यत्र व्यक्तमुक्तम् "यदा तु सकल-विकल्पकाय तदा भवेत्तन्मन इत्यभिख्यम् । स्याद्बुद्धि संज्ञ च यदा तु वेत्ति सुनिश्चितं संशयरूपहीनम् । अनु-सन्धानरूपं तच्चित्तञ्च परिकीर्त्तितम् । अहङ्कृत्यात्मवृत्त्या तु तदहङ्कारतां गतमिति"। एतदनुसारेणैव सारादायामुक्तम् "अन्त करणमात्मन । मनोबुद्धिरहङ्कारश्चित्तञ्चेति प्रकी-र्त्तितमिति" । तस्य च ज्ञानादिमुख्यकरणत्वादन्त करण-त्वम् । तत्साधकमनुमानञ्चेत्थम् ज्ञानसुखादिप्रत्यक्षं सव्यापारेन्द्रियसाध्यं प्रत्यक्षत्वात् रूपादिप्रत्यक्षवत्। न च चक्षुरादीनां तत्करणत्वं सम्भवति रूपादिसाम्याभावा-दित्यन्त करणसिद्धिरिति नैयायिकादय. । साङ्ख्यादयस्तु महत्तत्त्वापरपर्य्यायमेवान्तःकरणमङ्गीचक्रु' । पञ्चतन्मा-त्रेभ्यो भूतेभ्यश्चाहङ्काररूपद्रव्यसिद्धिमुक्त्वा "तेना-ऽन्त·करणस्येति" सा०सू० तत्सिद्धिरुक्ता तदनुमाने च भाष्ये एव प्रयोगादिक दर्शितम् । "अहङ्कारद्रव्यं निश्चय-वृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात् यन्नैवं तन्नैव यथा पुरुषादिरिति । अत्राप्ययं तर्क , सर्वोऽपि लोक· पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते अयमहं, मयेदं कर्त्तव्यमित्यादिरूपेणेति, तावत् सिद्धमेव । तत्राहङ्कारद्रव्यकारणाकाङ्क्षाया वृत्त्यो· कार्यकारणभावेन तदाश्रययोरेव कार्यकारणभावो लाघवात् कल्प्यते कार-णस्य वृत्तिलाभेन कार्यवृत्तिलाभस्यौत्सर्गिकत्वादिति । यद्यपि अन्त करणमेक तथापि वृत्तिभेदेनावान्तरभेद-माश्रित्यान्त करणत्रये क्रम·, कार्यकारणभावश्चोक्तः योगो-पयोगिस्मृतिश्रुतिपरिभाषानुसारादिति मन्तव्यम् । तदुक्तं वाशिष्ठे । "अहमर्थोदयो योऽयं चित्तात्मा वेदनात्मक । एतच्चित्तद्रुमस्यास्य बीजं विद्धि महामते ! ॥ एतस्मात् प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृति· । निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते ॥ अस्य बुद्ध्यभिधानस्य याङ्कुरस्य प्रपो-नता । सङ्कल्परूपिणी तस्याश्चित्तचेतोमनोभिधा" इति । अहमर्थोऽन्त करणसामान्यम् । अत्र वाक्ये बीजाङ्कुर-न्यायेनैकस्यैवान्त·करणद्रव्यस्य वृत्तिमात्ररूपेण चित्ताद्यव-स्याभेदा· क्रमिकास्त्रिविधा' परिणामा उक्ता इति । साङ्ख्यशास्त्रे च चिन्तनावृत्तिकस्य चित्तस्य बुद्धावेवान्तर्भाव· । अहङ्कारस्य चात्र वाक्ये बुद्धावन्तर्भाव·" इति । कारिकाया-मपि "अन्त करण त्रिविध दशधा बाह्य त्रयस्य विष-याख्यमिति" त्रैविध्यमुक्त्वा "सान्त करणा बुद्धिः सर्वं विषय-मवगाहते यस्मात्, तस्मात्त्रिविधं करण द्वारि, द्वाराणि शेषा-णीति" तत्त्रयस्यैव प्राधान्यमुक्तम् । एवञ्च पुरुषस्य सन्निधिमात्रादधिष्ठातृत्वं गौणं मुख्यमधिष्ठातृत्वन्तु अन्त·करणस्यैव यथोक्तम् "अन्त·करणस्य तदुज्ज्वलितत्वा-ल्लोहवदधिष्ठातृत्वम्" सा०सू० । "अन्त करणस्यानुपच-रितमधिष्ठातृत्वं चक्षुरादिद्वारकं मन्तव्यम् । नचाधि-ष्ठातृत्वं घटादिवदचेतनस्य न युक्तं तत्राह । लोह-वत् तदुज्ज्वलितत्वादिति । अन्त.करणं हि तप्तलोहव-च्चेतनोज्ज्वलितं भवति । अतस्तस्य चेतनायमानतयाधि-ष्ठातृत्व घटादिव्यावृत्तमुपपद्यत इत्यर्थ । नन्वेवं चैतन्येना-न्त करणस्योज्ज्वलने चितेः सङ्गित्वमग्निवदेव स्यादिति चेन्न नित्योज्ज्वलचैतन्यसंयोगविशेषमात्रस्य संयोगविशेष

न्यचैतन्यप्रतिबिम्बस्य चान्तःकरणेऽप्यवगमरूपत्वात् । न तु चैतन्यमन्तःकरणे संक्रामति येन सङ्गिता स्यात् ॥ अग्नेरपि हि प्रकाशादिकं न लौहे संक्रामति, किन्त्वग्निसंयोगविशेष एव लौहस्योष्णत्वमिति । नन्वेवमपि संयोगेन परिणामित्वमिति चेन्न सामान्यगुणातिरिक्तधर्मानुत्पत्त्यैव परिणामव्यवहारादिति । अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामादुत्पद्यत इति फलबलात् कल्प्यते पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवादिति । अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योऽन्यप्रतिबिम्बने हेतुरिति" सा॰प्र॰भा॰ । अन्तःकरणस्य च वृत्तयस्त्रिधा "शान्ताघोराश्च मूढाश्च मनसो वृत्तयस्त्रिधा । वैराग्यं शान्तिरौदार्य्यमित्याद्याः शान्तवृत्तयः । तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः । सम्मोहो भयमित्याद्याः कथिता मूढवृत्तयः" इति तास्वेव वृत्तिषु ज्ञानत्वोपचारात् तत्साधनत्वमिन्द्रियाणाम् "अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति" पञ्चपादिकाविवरणम् । शान्तादीनामेव सात्त्विकादिरूपेण व्यवहारः । ताश्च वृत्तयः "क्रमशोऽक्रमशश्च वृत्तय इति सां॰सू॰ उक्तेः युगपदपि भवन्तीति सांख्यादयः । नैयायिकादयस्तु "अयौगपद्याज्ज्ञानाना"मित्युक्तेः क्रमिकत्वमेवाङ्गीचक्रुः । तस्मान्नान्तःकरणमणुपरिमाणमिति नैयायिकादयः । यावद्देहकार्य्यकारित्वात् जलावगाहे एकदैव सर्वदेहगतशैत्याद्युपलब्धेर्मध्यपरिमाणमिति सांख्यादयः । तेषां च चतुर्णां चन्द्रचतुर्मुखशङ्कराच्युता अधिष्ठातारो देवा इति ।

**अन्तःकुटिल** पु॰ अन्तर्मध्ये कुटिलः । वक्राकारमध्यावयववति शङ्खे । वक्रान्तःकरणे त्रि॰ ।

**अन्तःकृमि** पु॰ अन्तरभ्यन्तरे कृमिर्यस्य । (गुटि) इति ख्याते कृमिकोशफले । मध्यस्थकृमियुक्ते फलादौ त्रि॰ ।

**अन्तःकोटरपुष्पी** स्त्री अन्तःकोटरे अभ्यन्तरे पुष्पं यस्याः जातित्वात् ङीप् । अन्तःकोटरपुष्पवत्यां नीलबुह्नायाम् ।

**अन्तःपदवी** स्त्री ७त॰ । सुषुम्नामध्यगते पथि ।

**अन्तःपशु** पु॰ अन्तर्ग्राममध्ये पशवो यत्र । ग्राममध्ये पशुस्थितिकाले प्राह्णे, सायाह्ने च "अन्तःपशौ पशुकामस्य साय प्रातः" कात्या॰ ४,१५,२४ । "अन्तःपशौ काले ग्राममध्ये पशवो यस्मिन् काले, सायं पशुषु ग्राममध्येषु आगतेषु, प्रातश्च ग्रामादनिर्गतेष्विति" तद्भा॰ ।

**अन्तःपात** पु॰ अन्तर्मध्ये पततीति पत-कर्त्तरि ण । सन्धिस्थाने । भावे घञ् । मध्यपतने ।

**अन्तःपातिन्** त्रि॰ अन्तःपतति पत-णिनि ६त॰ । मध्यप्रविष्टे । स्त्रियां ङीप् ।

**अन्तःपात्य** पु॰ अन्तर्मध्ये पात्यते पत-णिच्-आधारे यत् । मध्ये पातनाधारे देशे "अन्तः पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयतीति" कात्या॰ १५,६,२२, "स्थापितगवाणां पतये सम्भाले द्रव्यं शतमाषकं वा दत्त्वा यूपात् पूर्व्वोदपि परीत्यान्तःपात्यदेशे स्थापयेदिति" वेददीपः ।

**अन्तःपुर** न॰ अन्तरभ्यन्तरं पुरं गृहं कर्म॰ । (अन्दर) इति प्रसिद्धे राज्ञां स्त्रीणां स्थानयोग्ये गृहे । "वितथ्यमिदमपूर्वं दृष्टमन्तःपुरे ते" इत्युद्भटः "व्यायम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं विशेत् इति" भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सहेति । "अन्तःपुरप्रचारश्च प्रणिधीनाञ्च चेष्टितमिति" च मनुः । तत्र स्थितत्वात् राजमहिलायामपि । "दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदेति" शकु॰ । पुरशब्दसमासे अपि स्त्रीत्वात् ङीप् । अन्तःपुरीत्यपि स्त्री ।

**अन्तःपुरचर** पु॰ अन्तःपुरे चरति चर-ट उप॰ । राजान्तःपुरचारिणि कञ्चुक्यादौ । अन्तःपुरस्थस्त्रियाम् स्त्री ङीप् ।

**अन्तःपुरसहाय** पु॰ अन्तःपुरे सहायः । राज्ञामन्तःपुरसहचरे विदूषकादौ ।

**अन्तःपुराध्यक्ष** पु॰ ६त॰ । "वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः । राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते" इति मत्स्यपुराणोक्तलक्षणेऽन्तःपुराधिकृते । अन्येऽपि तत्र तथा, "पञ्चापरे वामनको जघन्यः कुब्जोऽपरो मण्डलकोऽथ सामी । पूर्वोक्तभूपानुचरा भवन्ति सङ्कीर्णसंज्ञाः शृणु लक्षणैस्तान् ॥ सम्पूर्णाङ्गो वामनो (१) भग्नपृष्ठः किञ्चिच्चोरुमध्यकक्षान्तरेषु । ख्यातो राज्ञो हंसनाम्नोऽनुजीवी स्फीतो दाता वासुदेवस्य भक्तः ॥ मालव्यसेवी तु जघन्यनामा खण्डेन्दुतुल्यश्रवणः सुसन्धिः । शुक्रेण चारः पिशुनः कविश्च रूक्षच्छविः स्थूलकराङ्गुलीकः ॥ क्रूरो धनी स्थूलमतिः प्रतीतस्ताम्रच्छविः स्यात् परिहासशीलः । उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाशपरश्वधाङ्कश्च जघन्यनामा (२) ॥ कुब्जो (३) नाम्ना यः स शुद्धो ह्यधस्तात् क्षीणः किञ्चित्पूर्वकाये नतश्च । हंसासेवी नास्तिकोऽर्थैरुपेतो विद्वान् शूरः सूचकः स्यात् कृतज्ञः ॥ कलास्वभिज्ञः कलहप्रियश्च प्रभूतभृत्यः प्रमदाजितश्च । सम्पूज्य लोकं प्रजहात्यकस्मात् कुब्जोऽयमुक्तः सततोद्यतश्च ॥ मण्डलकनामधेयो ४ रुचकानुचरोऽभिचारवित् कुशलः । कृत्यावैतालादिषु कर्मसु विद्यासु चानुरतः ॥

छन्दाकारः घरकम्भूर्भज' यत् नाशने कुशल । द्विजदेव-
यज्ञयोगप्रसक्तधीः स्त्रीजितो मतिमान् ॥ याभोति (५) य-
शोऽगतिविरूपदेह' यथानुगामी खलु दुर्भगश्च । दाता महा-
रम्भसमाप्तकार्यो गुणे यशस्येव भवेत् समान" इत्युत्-
संहितोक्तलक्षणादिभेदपञ्चकाम् ।

अन्तःपुरिक त्रि० अन्तःपुरे नियुक्तः ठक् सञ्ज्ञापूर्व्वकविधे-
रनित्यत्वान्नवृद्धिः । अन्तःपुराध्यक्षे कञ्चुक्यादौ "अथास्
प्रार्थनामन्तःपुरिकाभ्यो निवेदयेति" शकुन्तला० ।

अन्तःपुष्प न० अन्तर्गतं पुष्पं स्त्रीरज । द्वादशवर्षादूर्द्ध्वमभ्य-
न्तरजाते स्त्रीणां रजसि । "वर्षद्वादशकादूर्द्ध्वं यदि पुष्पं
बहिर्नहि । अन्तःपुष्पं भवत्येव पनसोडुम्बरादिवत्" ।
इति काश्यपसंहिता ।

अन्तःप्रकृति स्त्री अन्तर्वर्त्तिनी प्रकृतिः राज्याङ्गम् । राज्ञां
सन्निकृष्टप्रकृतौ अमात्यादौ । "अन्तःप्रकृतिकोपन हि
राज्ञां महद्व्यसनमिति" नीति० । [आत्मानुसन्धानपरे ।

अन्तःप्रज्ञ त्रि० अन्तःस्था प्रत्यक्तत्त्वविषयिणी प्रज्ञा यस्य ।

अन्तःप्रविष्ट त्रि० अन्तःकरणे, मध्ये वा प्रविष्टः । हृदय-
गते, अभ्यन्तरगते च । "अन्तःप्रविष्टकर्णपल्लवप्रतिबिम्बे-
नेति" काद० ॥

अन्तःशरीर न० अन्तः स्थूलदेहमध्यस्थं शरीरम् । स्थूल-
देहमध्यवर्त्तिनि वेदान्तमतसिद्धे सूक्ष्मशरीरे । तच्च "पञ्च-
प्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं
सूक्ष्माङ्गं भोगसाधनमित्युक्तं सप्तदशावयवं भोगसाधनं
सूक्ष्माङ्गम् । शरीरस्य मध्ये अव्ययी० । देहमध्ये
इत्यर्थे अव्य० । अन्तर्देहादयोऽप्युक्तार्थयोः । अन्तरेव
देहः । मनोरूपदेहे न० । [दुःखदायके ।

अन्तःशल्य न० अन्तःकरणस्य शल्यमिव पीडकत्वात् । मनसो

अन्तःसंज्ञ त्रि० अन्तः अभ्यन्तरवर्त्तिनी कथनायोग्यत्वात् अप्र-
काश्या संज्ञा चेतना यस्य । वृक्षादौ । ते च मनुना
दर्शिता यथा "उद्भिज्जाः स्थावराः सर्व्वे बीजकाण्डप्ररो-
हिणः । ओषध्यः फलपाकान्ताः बहुपुष्पफलोपगाः ।
अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । पुष्पिणः
फलिनश्चैव वृक्षास्तूभयतः स्मृताः । गुच्छगुल्मं तु विविधं
तथैव तृणजातयः । बीजकाण्डरुहाण्येव प्रतानाः वल्ल्य
एव च । तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना । अन्तः-
संज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति ।

अन्तःसत्त्वा स्त्री अन्तरभ्यन्तरे गर्भे सत्त्वं प्राणी प्राणो वा
यस्याः बहु वा ब्री० । गर्भिण्यां स्त्रियाम् । अन्तःसारे त्रि० ।

अन्तःसुख त्रि० अन्तरात्मनि तदनुसन्धाने एव सुखं यस्य ।
आत्मानुसन्धानमात्रसुखे बाह्यसुखशून्ये । "योऽन्तः-
सुखोऽन्तरारामः इति" गीता । [मदस्राविणि हस्तिनि ।

अन्तःस्वेद पु० अन्तः स्वेदो मदस्यन्दः मदजलं यस्य ब्री० ।

अन्तक पु० अन्तयति अन्तं करोति अन्त+णिच्—ण्वुल् ।
मृत्यौ "व्याजेनापि कृता राजन् नो दर्शयति सान्तक-
मिति" भार०सु० । देहिनां स्वस्वकर्मानुसारेण विनाशनाय
ईश्वरनियुक्ते यमाख्ये देवभेदे "त्वमिमप्रभावात्मयि नान्तको-
ऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः" इति रघुः । विनाश-
कमात्रे त्रि० "क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तक-
स्यान्तकोऽहमिति" वेणी० । परमेश्वरे पु० तस्य सर्वभूतानां
प्रलये संहर्तृत्वात्तथात्वम्, "महोदधिशयोऽन्तक" इति
विष्णुसह० ।

अन्तकर त्रि० अन्तं नाशं करोति कृ—ट उप०स० । नाश-
कारके । "अहमन्तकरो नूनं ध्वान्तस्येव दिवाकर" इति
भट्टिः । स्त्रियां ङीप् ।

अन्तकरण त्रि० अन्तं करोति नन्द्या० ल्यु । नाशकारके ।
"दूतं समाह्वयस्त्वैव राजा राष्ट्राद्विवासयेत् । राज्यान्त-
करणावेतौ द्वौ दोषौ पृथिवीक्षितामिति" मनुः । भावे
ल्युट् । नाशने न० ।

अन्तकर्म्मन् न० अन्तस्य नाशस्य परिच्छेदस्य वा कर्म्म उत्पाद-
नम् । नाशने । "षो अन्तकर्म्मणि इति" पा०धातु० । स्यते-
र्नाशनार्थत्वात् सकर्म्मकत्वम् तेन "राघव ! स शरैर्घोरैर्वीरं
रावणमाहवे" इत्यादौ मारणस्य कर्म्मता स्येति स्यतेर्लोटो
मध्यमैकवचनान्तरूपम् । परिच्छेदकरणे "अवासासीश्च
वैयासकीमित्यादि ।

अन्तकारिन् त्रि० अन्तं करोति कृ—णिनि ईत० । अन्त-
कारके विनाशके । स्त्रियां ङीप् । ण्वुल् । अन्तकारको-
ऽप्युक्तार्थे त्रि० । [मत्र निर्वाणमृच्छतीति" गीता ।

अन्तकाल पु० ईत० । मृत्युकाले, "स्थित्वाऽस्यामन्तकालेऽपि

अन्तकृत् त्रि० अन्तं करोति कृ—क्विप् ईत० । विनाशके ।

अन्तग त्रि० अन्तं गच्छति गम—ड उप०स० । कार्यान्त-
गामिनि, निरवशेषकार्यकारके, पारगामिनि, च "यत्नेन
भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् । शाखान्तगमथाध्वर्युं
छन्दोगं च समाप्तिकमिति" मनुः । [गामिनि ।

अन्तचर त्रि० अन्ते शेषावधौ चरति चर—ट । कार्यादिशेष-

अन्ततस् अव्य० अन्त+सार्वविभक्तिकतसि । अन्तेन अन्ते
अन्तादित्याद्यर्थे । तत्र तृतीयार्थे । "वैश्योऽग्निः प्रापिता-

सोमानुपीतिषाः देवीविशोऽन्धवर्त्मा च स्वाश्व' सप्तम च्या नुषार्दिति" पुरा० ।

**अन्धतमस** न० कर्म० अन्धेभ्योऽपीति दीर्घ । निविडान्धकारे । रजन्यान्तु स्त्री ।

**अन्धिका** स्त्री अन्धयति अन्ध-प्रेरणे णिच् ण्वुल् । द्यूतक्रीडायाम् तया हि जनः अन्धइव विवेकशून्य क्रियते । सर्षप्याञ्च तस्याश्चात्यन्तसेवनात् दृष्टिक्षय वैद्यकप्रसिद्धः ।

**अन्धु** पु० अन्ध-कु । कूपे । कूपतुल्यच्छिद्रवत्त्वात् पुंचिह्ने च । "वाक्पाणिपादपायूपस्थं साध्याङ्कुर्मनीषिणः" इति या० ति० । अन्धुलिङ्गमिति शब्दा०चि० ।

**अन्धुल** पु० अन्ध-उलच् । शिरीषवृक्षे । तत्पुष्पदर्शनात् वियोगिनामन्धत्वात्तथात्वम् ।

**अन्ध्र** पु० अन्ध-रन् । देशभेदे स च देशः । "जगन्नाथादूर्द्ध्वभागादर्वाक् श्रीभ्रमरात्मकात् तावदन्ध्राभिधो देश इत्युक्तः" ॥ वैदेहेन कारावरस्य स्त्रियामुत्पादिते अन्त्यजभेदे च । व्याधभेदे इति काश्यपः ।

**अन्न** न० अनित्यनेन अन-नन्, अद्यते इति अद-क्त वा "अन्नाण इति" पा० निर्देशात् अन्नार्थतया न जग्धिः । ओदने, सिद्धान्ने, 'शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते । आमं वितुषं ज्ञेयं स्विन्नमन्नमुदाहृतम्" इति वसि० स्मृ० । अन्नमूलं हि जीवनमित्युक्तेः तेषां प्राणहेतुत्वात्तथात्वम् । तत्रामान्नेऽपि अन्नशब्दप्रयोग "आमान्नं हरये दत्त्वा पक्वं लब्धाय खादयेत् । षष्टिवर्षसहस्राणि विष्ठाया जायते कृमिरिति" पुराणे "चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक" इति विष्णुसूत्रे, "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति मानवे च तत्र प्रयोगात् "स्विन्नमन्नमुदाहृतमिति वशिष्ठोक्तिस्तु परिभाषार्था न तु तन्मात्रस्यैवान्नताबोधनार्था । अतएव "अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासरे" इत्यादिनिषेधे आमान्नभक्षणस्यापि ग्रहणम् अन्नानि च विविधानि "अन्नानि विविधानीह भवन्ति गिरिसम्भवे" । इत्युपक्रम्य अष्टादशविधानि धान्यान्यभिधाय "अन्नपर्व्वणि मते देवि । एतान्येव विवर्ज्जयेदित्यनेन पद्मपुराणे अन्नपर्व्वमते तेषां वर्ज्जनीयत्वाभिधानात् अष्टादश धान्यानि च धान्यशब्दे वक्ष्यन्ते "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठोधातुस्तत्पुरीषं यन्मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" इति श्रुत्या "अन्नमयं हि सोम्य मन इति" श्रुत्यन्तरोक्त मनसोऽन्नमयत्वं यत् समर्थितं तत् सर्व्वप्रकारान्नविकारत्वेनैव । तत्र "राजान्नं तेज आदत्ते" इत्यादौ निषिद्धतापि सर्वेषामेव । "शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्नाः नापितश्चैव यश्चात्मानं निवेदयेदित्यादावपि दासादेर्भोज्यान्नताप्रतिप्रसव अष्टादशान्नविषयएव दासादयश्च सङ्कीर्णजातिभेदा पराशरोक्ता वेदितव्यास्ते च तत्तच्छब्दे दर्शयिष्यन्ते । "गोरसं तिलसक्तूंश्च तिलपिण्याकमेव च । अपूपान् भक्षयेत् शूद्राद्यच्चान्यत् पयसाकृतमिति" संवर्त्तवचनन्तु आर्य्यादि शूद्रान्ननिषिद्धानामपि भक्ष्यतार्थम् । "कन्दुपक्वं तैलपक्वं पायसं दधि सक्तवः । एतान्यशूद्रान्नभुजा भोज्यानि मनुरब्रवीदिति" हारीतवचने अशूद्रान्नभुजामिति विशेषणात्तथावगते एवमेव प्रा०वि० । 'अन्नं हि भूतानां ज्येष्ठं तस्मात् सर्व्वौषधमुच्यते" इति श्रुतौ अन्नस्य सर्व्वौषधिरूपत्वोक्तेः सर्वेषां व्रीह्याद्योषधीनामन्नत्वं व्यक्तमुक्तं "पृथिव्या ओषधय ओषधिभ्योऽन्नमिति" श्रुतौ च ओषधिजमात्रस्य अन्नत्वमुक्तम् "अद्यतेऽत्ति च भूतानि तस्मादन्नमित्युच्यते" इति तन्निरुक्तिरपि श्रुतौ दर्शिता । पृथिव्या, तस्याश्च अन्नहेतुत्वादन्नशब्दवाच्यता । "अन्नोऽन्नमिति श्रुते" "यत् कृष्णं रूपं तदन्नस्येति" छा०उप० श्रुतेश्च । अत एव भाष्यकृता "हन्ताहमिमास्तिस्रो देवता" इति श्रुतौ इदमा तेजोबन्नात्मिकाया देवतायाः परामर्शः इत्युक्तम् । उदके च निरु० तस्य च "वृष्टेरन्नं ततः प्रजा इति" मनुना अन्नहेतुत्वोक्तेस्तथात्वम् । तथाऽनिति प्राणित्यनेनेति व्युत्पत्ते उदकस्य प्राणहेतुत्वादन्नत्वम् "आपोमयः प्राण" इत्युक्त्वा तत्समर्थनाय "आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठोधातुस्तन्मूत्रं योमध्यमः तल्लोहितं योऽणिष्ठः स प्राण इति छान्दोग्येऽपां प्राणहेतुत्वमुक्तम् । तथा "षोडशकलो वा असौ पुरुष" इत्युपक्रम्य "पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यते" इति तत्रैव जलपानाभावे प्राणविच्छेद उक्तः । प्राणानन्दहेतुत्वाद्वा अन्नस्य तथात्वम् यथा "आपो वा अन्नस्य भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति अथ यदा सुवृष्टिर्भवति आनन्दिनः प्राणाः भवन्ति अन्नं बहु भविष्यतीति छा०उप० । सूर्ये पु०सि०कौ० तस्य अन्नहेतुवृष्टिहेतुत्वात्तथात्वम् "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति मनुना तद्धेतुत्वोक्तेस्तथात्वम् भोगसाधने उपकरणे, न० "स्त्रियोऽन्नं पशवोऽन्नञ्च विप्रोऽन्नञ्च महोक्षितामिति" मनुः । भक्षद्रव्ये च "प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् । स्थावरं

हि सौम्य ! मन" इति श्रुति विवरणं कोषशब्दे । अन्न-प्रकृतमुच्यतेऽस्मिन् "तत् प्रकृतवचने" पा० मयट् । अन्न-प्रचुरे यज्ञादौ "अन्नमयो यज्ञ" इति सि०कौ० ।

**अन्नमल** न०पु० अन्नस्य मल किट्ट । विष्ठादितरसभागभेदे (किटि) इति ख्यातेऽन्नकिट्टे "वर्चस्क" मल" इति सि० कौ०। सुरायाञ्च "सुरा वै मलमन्नाना पुरीष मलमुच्यते । तस्मात् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति" मा०पि० स्मृति" ।

**अन्नरस** पु० अन्नस्य रसः सारांश" खादो या । भुक्तस्य अन्नस्य सारांशे "सवा अयं पुरुषोऽन्नरस" इति श्रुति अपथ्यं भक्ष्य सभुङ्क्ते व्याधिरन्नरसे यथेति" वै० । रसस्तु जठरा-ग्नेवेनान्नस्य परिपाकात् कश्चित् सारांश" । अन्नपाकशब्दे तद्विवरणम् । अन्नस्यास्वादे च ।

**अन्नविकार** पु० अन्नस्य विकारः । शोणितादिषु सप्तसु धातुषु "प्रधानेन व्यपदेशा भवन्तीति" न्यायात् चरमधाता-वेवास्य प्रयोगोपाधित्वात् चरमे धातौ शुक्रे रा०नि० । शुक्रोत्पत्त्यर्थमेव हि क्रमशः शोणितादिपाकात्तस्य प्राधा-न्यम् । अत एव "अन्नाद्रेत" इति श्रुतौ अन्नतो रेतस उत्पत्तिर्दर्शिता सा च परम्परयैव ।

**अन्नाद** त्रि० अन्नमत्तुं शक्नोति अद-अण् उप० । अन्न-भोजनसामर्थ्यवति दीप्ताग्नौ । "अन्नवानन्नादो भवति य एवं विद्वानिति छा०उप० । "अन्नाद" दीप्ताग्निरिति" शा०भा०। "त्विषिमानपचितिमान् यशस्वी ब्रह्मवर्चस्य-न्नाद" इति काव्या० १,२,५ । अन्नभक्षके त्रि० "टिड्-ढाणञित्यादि" पा० सूत्रे आद्यान्तयोस्तद्धितसाहचर्यात् तद्धितापन्नादेव ङीप् अन्यतोन, तेनात" स्त्रियां टाप् ।

**अन्नादिन्** त्रि०अन्नमत्ति अद-णिनि ६त०।अन्नभक्षके ।"भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रतीति" मनु स्त्रियां ङीप् ।

**अन्नाद्य** न० अन्नरूपमाद्यं भक्ष्यम् । अन्नरूपभक्ष्ये । "अग्नि-मन्नादमन्नाद्यायादधे"य०२,५, । अन्नमाद्यं यस्य । अन्न-भक्षती त्रि०"अन्नाद्याय व्यूहध्वं सोमो राजा यमागमदिति" दन्तधावनमन्त्र" । "अन्नाद्येनोदकेन वा" इति मनु" ।

**अन्नायुस्** त्रि० अन्नमायुर्जीवनसाधनमस्य । अन्नजीवने "स एषोऽजरा अन्नोऽवहायुरन्नायुर्वा एष यद्वायुरिति" ऐ० उप० । अन्नायुरन्नमित्यन्नायुरन्नजीवन इत्यर्थ ।

**अन्नावृध** त्रि० अन्न वर्द्धतेऽनेन वृध-करणे क्विप् ६त० पूर्व-पददीर्घ" । अन्नवर्द्धके । "अत ऊता पितुभृतोजनित्री-रन्नावृधं प्रतिचरन्त्यन्नैरिति" ऋ० १०,१,४, ।

**अन्नामन** न० अन्नस्य विधानेन आमननम् । अन्नप्राप्तणार्थे ।

**अन्य** त्रि० अन-अन्नप्रादि० य । भिन्ने, सदृशे च । "उत्थित दृष्टवेऽन्यच्च फलमेभ्यो न किञ्चनेति" रघु । "शरीरेण सम नाशं सर्वमन्यद्धि गच्छति" हितो० । "अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितमिति" माघ" धन्यास्तात गुणरत्नरोहणभुवो धन्यास्त्वदन्यैव सेति" सा०द० सदृशे चान्योक्ति सुद्रष्टव्येऽस्य सर्वनामता । "मात्मये सति सर्वस्व यज्ञान्यस्मै प्रतिष्ठितमिति" या० । "व्याप्ति" साध्यवदन्यवृत्तित्वमिति" भाषा० । "इतरेतरान्येषा वा यत-क्रतोरिति ऋ० ८,११,१४, अन्यस्मिन् यूपे, निदधाति रेत इति ऋ० १,५५,१७ । द्वन्द्वेऽन्यस्य न तत्कार्यम्, "साध्वन्यानां सन्निहिते" इति मु०बो० जसि तु वा साध्वन्ये-साध्वन्या" ।तस्येदमित्यर्थे छ दुक्। अन्यदीय ।

**अन्यकारक** प्र० अन्यत् करोति कृ-ण्वुल् स्वार्थे कन् कारक । पुरीषकिट्टे हारा० । अन्यस्य कारके त्रि० ।

**अन्यचित्त** न० अन्यदिव स्वव्यापराक्षम चित्त कर्म० । विषयालोचनासमर्थे चित्ते । ६त० । अन्यमनस्के त्रि० ।

**अन्यत्** अव्य० । अन-वा० यति । अन्यार्थे । "देव-दत्तोगच्छति अन्यच्च यज्ञदत्त" इति गण० महो० स्वरादिपाठादव्ययत्वम् ।

**अन्यतम** त्रि० अन्य+डतमच्‌इति, मुग्धबोधम् । बहूनां मध्ये निर्द्धारिते एकस्मिन् । न्यायमते अनेकभेदावच्छिन्नप्रतियो-गिताकभेदवति तत्र तद्भिन्नत्वे सति तद्भिन्नत्वे सति तद्भिन्न-भिन्नत्वम्। यथा घटपटत्वहान्यतम इत्यादौ घटादिभेद-त्रयभेदो घटपटगृहेष्वेव, तद्भिन्नेषु सर्वेत्र तत्त्रयभेदस-त्त्वात् । अनेकत्वञ्च अपेक्षाबोधविषयत्वं तथा च यावन्त पदार्थाः अन्यतमघटकप्रथमभेदप्रतियोगितया विवक्षिता-स्तावन्तएव भेदा षाष्ठ्यास्त्वा च तावत्पदार्थभिन्नभेद-वत्त्वमेवान्यतमशब्दार्थ । "अन्यतरान्यतमशब्दौ अव्युत्पन्नौ प्रातिपदिके इति" कैयट" । तेनान्यतमस्य न सर्वनामका-र्यम् "किंयत्तदोर्निर्द्धारणे इति" पा० किंयत्तद्भ्योऽन्यत डतरादिविधानाभावाञ्च डतमान्तत्वम् अतोऽव्युत्पन्नत्वम् । इति भा०प्र०उ० । अतएव सर्वनामसंज्ञाप्रकरणे डतरडत-मान्तयोरुक्त्वेऽपि अन्यतरशब्दस्य पृथगुपादानम् । "कर्मादिषट्कान्यतमत्व" कारकत्वमिति" कारकमञ्जरी "अथ प्रवृत्तितोऽन्यतमो हि दोष" इति प्रघुतम् ।

**अन्यतर** त्रि० अन्य+डतर मु०बो०। द्वयोर्मध्ये निर्द्धारिते एकस्मिन् । न्यायमते भेदद्वयादिघटकप्रतियोगिताकभेदवति

भाव कारणमादाय वा यस्य। अन्यं प्रति पूर्व्वभावे सति यत्पूर्व्वभावविज्ञानम्॥ जनकं प्रति पूर्व्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते। अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्व्वभाविन॥ एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्। घटादौ, दण्डरूपादि द्वितीयमपि दर्शितम्॥ तृतीयन्तु भवेद् व्योम कुलालजनकोऽपरः। पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ" इति॥

**अन्यथासिद्धि** स्त्री अन्यथा अन्यप्रकारेण सिद्धिः। अन्यप्रकारेण सिद्धौ न्यायाद्युक्तकारणताप्रतिबन्धकरूपे पञ्चविधे दोषे च।

**अन्यदर्थ** पु० अन्योऽर्थः कर्म्म० दुक्। भिन्नार्थे। ६त०२त० वा अन्यार्थः अन्यस्मान्येन वाऽर्थे पु०। अन्य अर्थोयस्य अन्यार्थ भिन्नार्थके त्रि०। "अन्यार्थ उपन्यास इति"

**अन्यदा** अव्य० अन्यस्मिन् काले दा। अन्यस्मिन् काले इत्यर्थे "अन्यदा भूषणं पुंसः क्षमा लज्जेव योषिताम्" माघः

**अन्यदाशा** स्त्री अन्या आशा दुक्। भिन्नप्रार्थने। अन्यस्याशा ६त०। अन्यस्य वाञ्छायाम् अन्याशामाश्रये।

**अन्यदाशिस्** स्त्री अन्या आशीः दुक्। अन्याशीर्वादे अन्यस्य अन्येन वाशीरिति ६त०३त० वा। अन्याशीरित्येव। अन्यस्य अन्येन वाऽऽशासप्रार्थने।

**अन्यदास्था** स्त्री अन्यस्मिन् आस्था दुक्। अन्यस्मिन्नास्थायाम् अन्यस्यास्था ६त०। अन्यास्थेत्येव अन्यस्यास्थायाम्।

**अन्यदास्थित** त्रि० अन्यमास्थित दुक्। अन्यरूपास्थिते २त०। अन्यास्थित इत्येव अन्यमास्थिते।

**अन्यदीय** त्रि० अन्यस्यायम् गहा०छ दुक् च। अन्यसम्बन्धिनि

**अन्यदुत्सुक** त्रि० अन्यस्मिन् उत्सुक दुक्। अन्यविषयोत्कण्ठिते। अन्येन उत्सुक ३त०। अन्योत्सुक इत्येव तत्रैवार्थे त्रि०।

**अन्यदूति** स्त्री अन्या ऊति दुक्। अन्यरक्षणे। अन्यस्य ऊति ६त०। अन्योतिरित्येव अन्यस्य रक्षणे।

**अन्यद्राग** पु० अन्यस्मिन् रागः दुक्। अन्यविषयरागे। अन्येन अन्यस्य वा रागः ३त०६त० वा। अन्यराग इत्येव अन्यकरणके अन्यसम्बन्धिनि च रागे।

**अन्यपुष्ट** पुंस्त्री० अन्यया मातृभिन्नया पुष्टः सर्वनाम्नो इत्सौ पुंवद्भाव। कोकिले "अथान्यपुष्टा प्रतिकूलशब्दा श्रोतर्व्वितन्त्रीरिव ताड्यमानेति" कुमा०। "अलिपुष्टपुष्टादिवान्यपुष्टैरिति" माघ।

**अन्यपूर्व्वा** स्त्री अन्यः पूर्व्वो यस्याः। पूर्व्वपतिमरणादौ पश्चात् कृतवद्भिन्नपतिकाया पुनर्भूस्त्रियाम्। अन्यपूर्व्वा च सप्तविधा यथोक्तं नारदेन "परपूर्व्वा स्त्रियस्त्वन्या सप्त प्रोक्ता यथाक्रमम्। पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्व्विधा। कन्यैवाक्षतयोनिर्या पाणिग्रहण-दूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्म्मणा। देशधर्म्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते। उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्त्तिता"।(उत्पन्नसाहसा उत्पन्नव्यभिचारा)। "असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते। सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता"। स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति। कामात् समाश्रयेदन्यम्प्रथमा स्वैरिणी तु सा। कौमारम्पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता। मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या। उपगच्छेत्परं कामात्सा तृतीया प्रकीर्त्तिता। प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या। तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता इति"। अन्या अपि सप्तविधा कात्यायनेन दर्शिता यथा "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" इति। अन्यपूर्व्वावेदनञ्च युगान्तरविषयमिति माधवाचार्य्यादय "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" पराशरवाक्यस्य तेन युगान्तरविषयकत्वस्य व्यवस्थापनात्। कलियुगेऽपि तत्कर्त्तव्यतेति आधुनिकाः मन्यन्ते तत्र तत्तत्ग्रन्थे तत्तद्ग्रन्थे एवावगन्तव्यं। अन्यस्वामिककालेऽपि "मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः। तथाप्यनन्यपूर्व्वेव तस्मिन्नासीत् वसुन्धरेति रघुः। तत अर्शआदित्वादच्। अन्या पूर्व्वा यस्य वा। तत्परिणेतरि पुनर्भूपतौ पु०।

**अन्यभाव** पु० अन्यरूपो भावः। अन्यरूपभवने अन्यरूपस्वभावे च। मा० ष्यञ्। आन्यभाव्य तद्भावे न०।

**अन्यभृत्** पुंस्त्री० अन्यया भ्रियते भृ-कर्म्मणि क्विप्। कोकिले।

**अन्यभृत** पुंस्त्री० अन्यया भृतः पुष्टः। कोकिले। "कलमन्यभृतासु भाषितमिति" रघु। अन्यपुष्टमात्रे त्रि०।

**अन्यमनस्** त्रि० अन्यस्मिन् मनोयस्य। स्वप्राकृतविषयपरिहारेण उत्कण्ठया व्याकुलीभावेन अन्यत्रासक्तचित्ते। वा कप्। अन्यमनस्कोऽप्यत्र त्रि०।

**अन्यमातृज** पु० अन्यस्या मातुर्जायते जन ड ५त० पुंवद्।

भ्रातरि “असंसृष्ट्यपि चादद्यात् संसृष्टोनान्यमातृज” इति याज्ञ०। नास्य गर्भो गिनन्यां स्त्री।

**अन्यलिङ्ग** पु० अन्यस्य विशेष्यस्य लिङ्गमिव लिङ्गमस्य। विशेष्यलिङ्गानुसारिलिङ्गके शब्दे। ततः कप्। अन्यलिङ्गकोऽप्युक्तार्थे “प्रेया मुख्यान्यलिङ्गका” इत्यमरः।

**अन्यवर्ण** पुंस्त्री अन्यो वर्णो यस्य। भिन्नजातीयवर्णे यथा ब्राह्मणस्य क्षत्रिय क्षत्रियस्य वैश्यजातिरित्यादि।

**अन्यवादिन्** पु० अन्यथा प्रतिज्ञातार्थादन्यथा वदति वद–णिनि। हीनप्रतिज्ञे वादिनि–प्रतिवादिनि च। “अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूत प्रपलायी च हीन पञ्चविधः स्मृत” इति नारदसंहिता।

**अन्यविवर्द्धित** पुंस्त्री० अन्यया स्वमातृभिन्नया विवर्द्धितः पुष्टः। कोकिले। परवर्द्धितमात्रे त्रि०।

**अन्यव्रत** त्रि० अन्यत् वैदिकाद्भिन्नं व्रतं कर्म यस्य। श्रुतिस्मृति-विहितव्यतिरिक्तकर्मकारके असुरादौ यथेष्टाचारिमानुषे च। “अपक्षेपो व्यपह्नरोऽन्यव्रतस्य ऋ० ५,२०२, अकर्मा दस्युरभि नो अमन्तुरन्यव्रतोऽमानुषः ऋ० १०,२२,८,।

**अन्यशाख** पु० अन्या स्वाध्यायभिन्ना शाखा वेदभागभेदो यस्य। स्वाध्यायवेदशाखाभिन्नशाखाध्यायिनि “अन्यशाखोद्भवो दत्तो गृहीतश्चोपनायित” इति दत्तक० च० स्मृतिः। ततः स्वार्थे कप्। अन्यशाखकोऽप्युक्तार्थे। स्वशाखात्यागेन अन्यशाखामध्येतरि च। स्वार्थे कन्। शाखारण्डे।

**अन्यसाधारण** त्रि० अन्येन साधारणः। अन्येन सदृशे, ‘अध्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म्मेति” कु०। अन्यस्य साधारणवति स्वपरस्वत्वास्पदीभूते साधारणे वित्तादौ।

**अन्यादृश** त्रि० अन्य इव पश्यति अन्य+दृश–“कर्त्तरि कञ्” पा० उक्तौ कर्म्मकर्त्तरि क्षप, कर्म्मणि सक् इति मु०बो०। अन्यादृशे। क्विन्। अन्यादृश्यत स्त्रियां ङीप्। कञ्। अन्यादृशशब्दार्थे “इमे गुणमीदृशा अन्यादृशा” इति अा०उप०। स्त्रियां ङीप्।

**अन्याय** पु० न्यायो विचारः, सङ्गति औचित्यं, प्रतिवाद्यादिपक्षकप्रतिपादकवाक्यञ्च अभावार्थे न०त०। विचाराभावे सङ्गत्यभावे, अनौचित्ये, प्रश्नाद्यन्यायाभावे च न्यायशब्दार्थे त्वधिक प्रपश्यते। न०ब०। विचारशून्ये, औचित्यशून्ये, असङ्गते, प्रतिवाद्यादिपक्षकवाक्यशून्ये च त्रि०। “अन्यायेनापि तं यान्ति येऽनुयान्ति सभासद” इति स्मृतिः। “अन्यायेनापि यद्भुक्तं बहून्यब्दशतानि चेति” नारदस०।

**अन्याय्य** त्रि० न न्याय्य। न्यायादनपेतभिन्ने अनुचिते।

**अन्यार्थ** पु० अन्योऽर्थः वा दुगमाव। भिन्नार्थे। अन्योऽर्थः अभिधेयं प्रयोजनं वास्य। भिन्नाभिधेयवाचके, शब्दे भिन्नप्रयोजनके पदार्थे च त्रि०।

**अन्यून** त्रि० न न्यूनम्। हीनभिन्ने व्याप्यभिन्ने च। “अन्यूनानतिरिक्तवृत्तित्वमवच्छेदकत्वमिति” न्यायप्रकरणम्।

**अन्यूनाधिक** त्रि० न न्यून नाप्यधिकम्। समानभावप्राप्ते न्यूनाधिकतारहिते।

**अन्यूनानतिरिक्त** त्रि० अन्यून अहीन अनतिरिक्त नाधिक विशेषणयोरप्येकस्य विशेष्यताविवक्षया क०। समाने। “अन्यूनातिरिक्ताङ्गीं योषितं सौम्यदर्शनामिति” स्मृतिः। अन्यूनानतिरिक्तवृत्तित्वमिति न्या०प्र०।

**अन्येद्युष्क** त्रि० अन्येद्यु अन्यस्मिन्नहनि भव कन् उदुपधत्वात् षत्वम्। अन्यदिवसभवे। “अन्येद्युष्कमहोरात्रादेककालं प्रवर्त्तते इति” सुश्रुतम्।

**अन्येद्युस** अव्य० अन्यस्मिन्नहनि अन्य+एद्युस्। अन्यदिवसे इत्यर्थे ‘परेद्यव्यद्य पूर्व्वेद्युरन्येद्युश्चापि चिन्तयन्निति” भट्टिः “अन्येद्युरात्मानुचरस्य भावमिति” रघुः।

**अन्योढा** स्त्री अन्येन ऊढा। परकीयनायिकायाम् “यात्रादिनिरताऽन्योढा कुलटा गलितत्रपेति” सा० द०।

**अन्योदर्य्य** पु० अन्यस्मिन् स्वमातृभिन्ने उदरे गर्भे भव उदर+यत्। एकपितृके भिन्नमातृके वैमात्रेये भ्रातरि। “अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्योधनं हरेदिति याज्ञ० स्मृति। तथाभगिन्यां स्त्री। अन्योदरजातमात्रे त्रि०। अतएव दायभागे तद्वचनव्याख्याने भ्रातृपुत्रादीनामपि अन्योदर्य्यपदार्थतया दायाधिकार उक्त।

**अन्योन्य** त्रि० अन्य+कर्म्मव्यतिहारे (एकजातीयक्रियाकरणे) द्वित्वम् पूर्व्वपदे सुश्च। परस्परार्थे। “अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धमिति” “अन्योन्य सपत्नसङ्क्रियासम्” “अन्योन्यसंसर्गनिमीलिताक्षौ” इति “अन्योन्यशोभाजनि विलोचनानिमीलिति” च कुमा० लतद्वित्वस्यापि सर्व्वनामता तेनान्योऽन्यस्मै इत्यादि। “अन्योन्यमिममन्योन्यात्मकतामभ्यस्येति” शारी० भा०। “तावेतावन्योन्यस्मिन् प्रतिष्ठितौ” इति छ० उ० अन्योन्यस्या एवैतच्छ्रिया प्रतिष्ठामाय इति कौ० ब्रा० ‘अन्योन्यमुभयोरेकक्रियायाः करणं मिथः”तु ज्ञातव्ये अर्थालङ्कारभेदे न०। “त्वया सा शोभते तन्वी तया

त्वमपि शोभसे । रजन्या शोभते चन्द्रश्चन्द्रेणापि च यामिनी" सा०द० ।

**अन्योन्याध्यास** पु० अन्योन्यस्मिन् अन्योन्यतादात्म्यस्याध्यास आरोप । वेदान्तिमतसिद्धे परस्परतादात्म्यारोपे यथा अन्तःकरणे चेतनाध्यास, चेतने वा अन्तःकरणतादात्म्याध्यास "जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहित । तथा जीवेन कूटस्थ सोऽन्योन्याध्यास उच्यते" इति पञ्च० ।

**अन्योऽन्याभाव** पु० अन्योन्यस्मिन् अन्योऽन्यस्य अभाव । भेदे । भेदो हि यथा घटे पटस्य, तथा पटे घटस्य सदाऽस्ति, संसर्गाभावस्तु नैव, घटे भूतलस्याभावेऽपि भूतले घटस्य कदाचित् सत्त्वसंभवेन सदाभावाभावात् । "अभावस्तु द्विधा संसर्गान्योऽन्याभावभेदतः" इति भाषा० तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अन्योन्याभावत्वमिति मुक्ता०। तच्च अखण्डोपाधिरिति नान्योन्याश्रय, इति तु नव्या ।

**अन्योन्याश्रय** त्रि० अन्योन्यमाश्रयतीति आ+श्रि-अच् । परस्परसापेक्षे । न्यायमते तर्कविशेषे पु० । स च एकस्य ज्ञानादिजननाय यथाऽन्यज्ञानाद्यपेक्षा तथातस्य ज्ञानादिजननायेतरस्य ज्ञानापेक्षयेति स्वापेक्षापेक्षित्वनिमित्तकोऽनिष्ट प्रसङ्ग । अपेक्षा च ज्ञप्तौ, उत्पत्तौ, स्थितौ च बोध्या तत्र ज्ञप्तौ 'घटोऽयम् यद्येतद्घटज्ञानजन्यज्ञानविषय स्यात् तदैतद्घटभिन्न स्यात् तत्र स्वज्ञानस्य स्वज्ञानजन्यत्वेनानिष्ट' प्रसज्येत स्वापेक्षापेक्षिज्ञानत्वात् स्वापेक्षितघटज्ञानरूपविषयस्य तज्जनकज्ञानविषयाद्भेदरूपमनिष्टञ्च सज्येत अतोघटस्य घटभेदप्रसङ्गोऽनिष्ट । उत्पत्तौ यथा घटोऽय यद्येतद्घटजन्यजन्य स्यात् तदैतद्घटभिन्न स्यादित्यादि । एतद्घटस्य उत्पत्तौ एतद्घटजन्यसापेक्षत्वे कारणस्य कार्य्याद्भेदनियतया एतद्घटस्य एतद्घटभेदरूपोऽनिष्ट प्रसङ्ग । स्थितौ यथा घटोऽय यद्येतद्घटवृत्तिवृत्ति स्यात् तदा तथात्वेनोपलभ्येत न च तथा उपलभ्यते तथात्वे च घटस्य घटवृत्तित्वापत्तिरनिष्टा प्रसज्येत । एतेषु ज्ञप्तिविषयतयैव प्रायशोऽनिष्टप्रसङ्ग । सर्वत्र तन्मूलकमेव स्वापेक्षापेक्षकापेक्षापेक्षकत्वमन्योन्याश्रयत्व तत्र तत्र व्यवह्रियते । अतएव परस्परज्ञानसापेक्षज्ञानाश्रयोऽन्योन्याश्रय इति कार्तैरुक्तम् । एवञ्च अन्योन्यपदस्य तज्ज्ञाने, तदुत्पत्तौ, तत्स्थितौ च लक्षणा तदाश्रय अन्योन्याश्रय इति त्रितयसाधारणः विग्रह. ।

**अन्वक्ष** त्रि० अनुगतमक्षमिन्द्रियं गतिस० । प्रत्यक्षे, अनुपदे, अनुगते च । अक्ष्ण समीपम् अव्ययी० टच्समा० । चक्षुर्निकटे अव्य० ।

**अन्वग्भाव** पु० अन्वक्भाव. । पश्चाद्गन्तृत्वे, आनुगत्ये ।

**अन्वच्** त्रि० अनु+अन्च-क्विन् । अनुगामिनि, स्त्रियां ङीप् । "सकामवत्सू अन्नते अनूची" ऋ० १,११९,२, अनूची अनुक्रन्त्यामिति भा० । "तस्मादिमे अन्यञ्च तीर्थ्यस्तथ" श०ब्रा० । पश्चादन्वक् कात्या० ६,५,६ । अनु पश्चादञ्चतीति तद्भा० । अनुपदे न० अव्य० अमरः ।"अन्वग्ययौ मध्यमलोकपालइति" रघु अनुपदं पश्चादित्यर्थं स्वरादेराकृतिगणत्वेन तद्गणीय अनुमाने अव्य० प्रो०मनो० ।

**अन्वन्** त्रि० अन-क्विप् । अनुगन्तरि । "अन्वाञ्चि दातृ-स्येति" ता०ब्रा० स्त्रियां ङीप् । भाष्यकृता तु अनुपूर्व्वा-द्वातेरेतद्रूपमित्युक्तम् । तेन अनु+वा-क पु० रूपसिद्धिः । स्त्रियां टाप् ।

**अन्वय** पु० अनु+इण्-भावे अच् । सन्ततौ, अनुगतौ, "जन्माद्यस्य यतोऽन्वयादिति" भाग० । वंशे, आनुकूल्ये, कार्य्ये-कारणस्यानुसरणे, कार्य्यसत्तापादकस्वसत्ताकस्य कारणस्य कार्य्ये स्थितौ, स्वसत्तानियतसत्ताकत्वकार्य्यसम्बन्धे च । कर्त्तरि अच् । वंशे तस्य पूर्व्वपुरुषदेशावयवानुगमनात्तथात्वम् । "तदन्वये शुद्धिमति प्रसूत शुद्धिमत्तर" इति "रघूणामन्वयं वक्ष्ये" इति "तस्यान्वये भूपतिरेष जात" इति "अथ स्तुते वन्दिभिरन्वयज्ञैरिति" च रघु' पदानां, स्वोपस्थाप्यपदार्थानां वा परस्परसंबन्धे । "तात्पर्य्याख्या वृत्तिमाहु पदार्थान्वयबोधने" इति सा०द० "परस्परनिरपेक्षाणामेकस्मिन्नन्वय समुच्चय" इति सि० कौ० । "मुख्यार्थस्येतराक्षेपो वाक्यार्थान्वयसिद्धये" इति सा०द०। तत्सत्त्वे तत्सत्त्वरूपे, "गुणाना तदन्वयव्यतिरेकानुविधायित्वादिति" सा०द० । अन्वेति इन्द्रियम् कर्त्तरि अच् । प्रत्यक्षे, "स्यात् साहस त्वन्वयवत् प्रसभं कर्म्म यत् कृतम् । निरन्वयं भवेत् स्तेयमिति" मनु । अनुगतमात्रे त्रि० । "का त्वमेकाकिनी भीरु ! निरन्वयजने वने" इति भट्टि अनुगतजनशून्ये इत्यर्थ ।

**अन्वयबोध** पु० एकपदार्थे धर्म्मिणि अपरपदार्थस्य अन्वयं सम्बन्ध बोधयति आकाङ्क्षादिना, बुध-णिच्-अण् उप० स०। शब्दज्ञानजन्ये शाब्दबोधरूपानुभवभेदे। स च बोधः न प्रत्यक्ष नाप्यनुमितिरिति नैयायिका. । किन्तु ततोभिन्नप्रमा-

कारणत्वाद्बह्निम् इति यथोक्तं प्रकाशिकायाम् । "शब्दो यदि स्वार्थस्यानुभवे भवेद्धेतुस्तर्हि शाब्दप्रत्यक्षनीय-मादिकं तत्र साकाङ्क्षाद्युपयोगं, सङ्क्षेपे चेदानुमानिक एव न च तत्र सद्यः साकाङ्क्षत्वादिभिर्मात्रेण, व्याप्तिबोध-स्याप्यधिकस्यापेक्षणादित्याशङ्क्य शब्दस्यान्वयबोधनामकमनु-भवान्तरं दर्शयति । साकाङ्क्षशब्दैर्यो बोधोऽस्तदर्थान्वय-गोचरः । सोऽयं नियन्त्रितार्थत्वात् प्रत्यक्षं न चानुमा" । शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामान्यं प्रति शाब्द-सामग्र्याः प्रतिबन्धकत्वासम्भवात्, शाब्दान्यप्रत्यक्षत्वाव-च्छिन्नं प्रति तस्याः कारणत्वमपेक्ष्य शाब्दधियः प्रत्यक्षाद्भि-न्नत्वकल्पनायामेव लाघवाच्च । लिङ्गजन्यत्वेनान्वय-बुद्धेरनुमितित्वसिद्धावनायत्त्या शाब्दान्यानुमित्याः तत्सा-मग्र्याः प्रतिबन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्द-धियः खण्डयति ।"योग्यतार्थगताऽऽकाङ्क्षा शब्दनिष्ठाऽनु-भाविका । प्रत्येकं वा मिलिता वा नैते लिङ्गमसिद्धितः" । गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वबाधविरहरूपं लिङ्गं बाधनिश्चयाभावेनान्वयासिद्धस्य योग्यतानिश्चयस्या-नावश्यकत्वात् योग्यतामात्रलिङ्गकसर्गानुमानस्याभ्य-नुज्ञितत्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वा-पाताच्च । योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभविक-त्वात् । गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्व्वीपर्य्यवसिता-त्याकाङ्क्षा स्वयमसिद्धा कथमस्तित्वाद्यन्वयबोधं साधयेत् तत्र गवास्तित्वादेर्योग्यताविशिष्टमप्याकाङ्क्षावत्त्वं न तद-न्वयस्यानुमापकमसिद्धेरित्यादि" ।

**अन्वयिन्** त्रि० अन्वेति अनु–इण–णिनि । शाब्दबोधोपयोगि सम्बन्धवति अनुगते च अन्वयः वंशादिः अस्त्यस्य इनि । प्रागुक्तान्वयवति स्त्रियां ङीप् । न्यायनये अन्वयव्याप्ति-युक्ते हेतौ पु० "केवलान्वयी" ।

**अन्वर्थ** त्रि० अनुगतोऽर्थम् अत्या०स० । अर्थानुगते व्युत्पत्ति-युक्ते शब्दे "तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनादिति" रघुः ।

**अन्ववसर्ग** पु० अनु+अव+सृज–घञ् अनुगतोऽवसर्गम्-इच्छानुरूपप्रचारम्, अत्या०स०, अनुरूप स्वेच्छानुरूपतया अवसृज्यते न प्रतिरुध्यते अनेन इति वा अनु+अव+सृज–घञ् । यथेष्टं क्रियतामित्येव रूपायामनुज्ञायाम् कामाचारानुज्ञाने, "अपि पदार्थसम्भावनान्ववसर्गगर्हा-समुच्चयेषु" पा० अपि सिञ्च अपि स्तुहि इत्यादौ यथेष्टं कुर्य्या इत्याद्यर्थोऽपिना द्योत्यते न तु कुत्रापि अनु-ज्ञया प्रतिरोधः क्रियते इति तस्य तथात्वम् ।

**अन्ववाय** पु० अन्ववाय्यते उत्पत्त्यानुसन्धीयते अनु+अव+अय–घञ्, इण्–अच् वा अनुव्यवैति अनुगच्छति देशा-न्वयत्वम् अनु+अव+इण्–कर्त्तरि अच् वा । वंशे, सन्ताने च ।

**अन्वयव्यतिरेकिन्** त्रि० अन्वयव्यतिरेकौ स्तोऽस्य इनि । साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूमः । स हि वह्निमति महानसादौ, वह्न्यभाववति जलादौ च भावा-भावाभ्यां वह्नेरन्वयव्याप्तेर्व्यतिरेकव्याप्तेश्च तथेति न्यायमते प्रसिद्धम् । अन्वयोऽन्वयव्याप्तिर्व्यतिरेको व्यति-रेकव्याप्तिस्तौ विद्येते अस्य इनि । अन्वयव्याप्तिमति व्यतिरेकव्याप्तिमति च हेतौ । यथा वह्नौ साध्ये धूमस्य अन्वयव्यतिरेकव्याप्तिकत्वम् । तत्र च धूमसत्त्वे वह्नि-सत्त्वरूपान्वयव्याप्तिः वह्निव्यतिरेके च धूमाभावः व्यतिरेक-व्याप्तिरित्युभयव्याप्तिसत्त्वात्तथात्वम् ।

**अन्वयव्याप्ति** स्त्री अन्वयेन व्याप्तिर्व्यापनं नियततया स्थितिः ३त० । यत्र धूमस्तत्र वह्निरित्येव रूपायां व्याप्तौ । अन्वयेन तस्य सत्त्वेन व्याप्तिः इतरान्वयस्य साध्यस्यान्वयं व्यापकता । यथा धूमसत्त्वेन वह्निसत्ता इत्यतो धूमसत्त्वेन वह्नेर्व्यापकता । सा च साध्यसामानाधिकरण्यरूपा ।

**अन्वयागत** त्रि० अन्वयात् वंशपरम्परया आगत । दायप्राप्ते धनादौ "सुत शौर्य्यं तव क्रमागतमन्वया-न्वयागतम् धनं सप्तविधं शुक्लमिति" नारद० ।

**अन्ववेक्षा** स्त्री अनु+अव+ईक्ष–अङ् । अपेक्षायामनुरोधे ।

**अन्वष्टका** स्त्री अनुगतोऽष्टकाम् । श्राद्धकालभेदे स च अप-रपक्षयाः कार्य्यं तिस्रः कृष्णाष्टम्यः अष्टका, तदुत्तरवर्त्ति-न्यस्तिस्रः कृष्णनवम्यः तद्रूपः । तास्व सांनिकस्य मासादि-श्राद्धकालः । तथाहि "अष्टका यो हि मासपक्षापरपक्ष-स्याष्टमीति" गोभि० । "पितृदानाय मूले स्युरष्टकास्तिस्र एव च कृष्णपक्षे वरिष्ठाश्चेति" भङ्कपु० । आश्वलायन-गृह्ये तु तावतस्य इत्युक्तम् यथा । हेमन्तशिशिरयोश्चतु-र्णामपरपक्षाणामष्टमीष्वष्टका" इति । "एकस्यां वाष्टकासु चेति" विकल्पश्रवणात् सामर्थ्यभेदेन एकस्यां तिसृषु चतसृषु वा अष्टकाश्राद्धम् अन्वष्टकाश्राद्धं च कार्य्यमिति गम्यते । तत्र पशुकल्पस्याष्टकापाकादङ्गमात्रस्य "अपरेद्युरन्वष्टक्यमिति" सूत्रेण तदुत्तरवर्त्तिकृष्णनवमीषु तद्विहितम् तत्र मासादि-भ्योऽपि देयम् "पितृभ्यश्च कृत्वा मन्त्रवर्ज्जम् स्त्रीभ्यश्च सुरा-चाममिति" तत्रैवोक्तं मनुनाऽपि "पितृदैवाष्टकासर्वासु-मन्वष्टकासु" चेत्युक्तम् अत्र पितृपदमष्टकापदे सपरम्, अन्वष्टका-

पक्षे "स्त्रिया पुंवत्" इत्येकशेषेण मातृपितामहीप्रपितामहीसहितपित्रादिपरम्। एवञ्च आश्वलायनगृह्ये मनुवचने च पित्रादेरपि दैवतात्वश्रवणात् मात्रादिमात्रदैवत्यं रघुनन्दनोक्तं चिन्त्यं वस्तुतः शाखिभेदेन सपत्नीकपितृश्राद्धं मात्रादिदैवताकं वा तच्छ्राद्धमिति व्यवस्था। "पित्रादिविकपक्षेषु भोज्या मातॄः प्रति द्विजा। स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते" षट्त्रिंशन्मतवचनन्तु तासां पृथक्श्राद्धविधानार्थम्। एतच्च अन्वष्टकाश्राद्धं साग्निकमात्रेण कर्त्तव्यम्। तथा च विष्णुः। "अन्वष्टकास्वष्टकावदग्नौ हुत्वा मात्रे पितामह्यै प्रपितामह्यै पूर्ववद्ब्राह्मणान् भोजयित्वा" इति। अत्र होमत्वदेवाग्निप्राप्तेरग्निपदञ्च तन्नियमार्थम्। न चाग्नौकरणहोमे विकल्पश्रवणादत्रापि तथेति वाच्यम् प्रकृतिभूतश्राद्धविध्युक्ताधारान्तरस्य विकृतीभूतश्राद्धे विशेषविहिताधारेण बाधात्। न वा लौकिकाग्नौ होमः "न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते" इति मनुवचनेन निषेधात्। श्राद्धचिन्तामणावप्येवम्। श्रा॰त॰ रघुनन्दनः।

**अन्वष्टमदिश** अव्य॰ अष्टमीं दिशमनुलक्ष्योक्त्य अव्ययी॰ अच् समा॰। पश्चिमोत्तरयोर्दिशोरष्टमाभिमुखीकृतदिग्भागे। स च वायुकोण तस्य च पश्चिमोत्तरयोर्मध्यवर्त्तिदक्षिणावर्त्ताभ्यामष्टमभागत्वात्तथात्वम् "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तराभिमुखोऽन्वष्टमदिग्भागमव्यवलर्दर्शनादिति" आ॰त॰ सायणा॰टं॰। अन्वष्टमदिशमिति उभयदिगष्टमभागमिति रघु॰। [प्रत्यहमित्यर्थे।

**अन्वह** अव्य॰ अहि अहि वीप्सायेऽव्ययी॰ अच् समा॰।

**अन्वाख्यान** न॰ अनु+आ+ख्या—ल्युट्। तात्पर्य्यावधारणार्थं व्याख्याने तत्प्रतिपादने च "वस्त्वन्वाख्यानं क्रियान्वाख्यानं चेति" "आत्मस्वरूपान्वाख्यानपरेष्विति च ए॰उ॰भा॰

**अन्वाचय** पु॰ प्रधानस्य पश्चादन्य आचीयते बोध्यते यत्र अनु+आ+चि+अच्। उद्देश्यसिद्ध्यानुद्देश्यसिद्ध्यर्थोपदेशे। यथा भिक्षां गच्छ यदि गां पश्येस्तामानय, अत्र भिक्षाया एव उद्देश्यः न गवानयने, तत्सिद्धौतु गवानयनमनुद्दिष्टमपि साध्यतया निर्दिष्टम्। "चान्वाचये समाहारे" इत्यमरः। "चार्थे द्वन्द्व इति" पा॰ सूत्रे "समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः" इति सि॰कौ॰।

**अन्वाजे** अव्य॰ अनु-आजवलनेन अनु+आ+जि—डे। दुर्ब्बलस्य बलाधाने। बलस्य हि जयहेतुत्वं प्रसिद्धम्। डे प्रत्ययान्तप्रतिरूपकोऽयम्। "उपाजे अन्वाजे इति" पा॰ वा उपपदसमासे अन्वाजेकृत्येत्यादौ ल्यप्। पक्षे अन्वाजेकृत्वा।

**अन्वादेश** पु॰ अनु+आ+दिश—घञ्। पूर्व्वोपात्तस्य किञ्चित्कार्य्यान्तरं विधातुं पुनरुपदेशे। यथा अनेन व्याकरणमधीतं न्यायमेनं प्रपाठयेति न्यायपाठनार्थं पुनरुपदेशः। कथितकथने, अनुवादार्थे च। "इदमोऽन्वादेशेऽशनुदात्त" इति पा॰।

**अन्वाधान** न॰ अग्निस्थापनस्य पश्चात् आधानम्। आहिताग्नौ—द्वयो तिसृणां वा समिधामाधाने। स्रुवाद्युत्तरादिकरणानन्तरम् "तदभ्युक्ष्याग्निं प्रतिपाद्यान्वाधाय परिसमुह्येति" आ॰ग॰ इत्युक्ते हि अन्वाधानोत्तरं तदाधानमुक्तम्। "अग्नयन्वाधानमध्वर्युर्यजमानो" वेति कात्या॰ २,१,२'।

**अन्वाधि** पु॰ पश्चात् आधीयते अनु+आ+धा—कि। स्वसमीपे आहितस्य वस्तुनः स्वामिने दानाय परत्राधाने तद्विषये धने च "अधमर्णकार्य्येषु अनन्वितं वचनान्मम। दद्यास्त्वमिति योदत्त स इहान्वाधिरुच्यते इति" कात्या॰ स्मृ॰। सन्तत आधि। सन्ततमानसव्यथायाम्।

**अन्वाधेय** न॰ विवाहस्य पश्चात् आधेयम् दत्तम्। अनु+आ+धा—यत्। विवाहात् परम् पित्रादिभिः स्त्रीभ्यो दत्तधने स्त्रीधनभेदे "विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया अन्वाधेयं तदुक्तं तु लब्धं बन्धुकुलात्तथेति" ना॰स॰। "बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायां बान्धवास्तदवाप्नुयुरिति" या॰।

**अन्वायतन** अव्य॰ आयतनस्य मध्यम् अव्य॰। गृहमध्ये इत्यर्थे अनुगतमायतनम् अत्या॰स॰। गृहानुगते त्रि॰।

**अन्वायत्त** त्रि॰ अनु+यत—क्त। अनुगते "प्रद्योत ! या देवता प्रभावमन्वायत्ता तास्त्वेदविद्वानिति" "वयवोऽन्वायत्ता" इति च छा॰उप॰।

**अन्वारब्ध** त्रि॰ अनु+आ+लभ—कर्त्तरि क्त लस्य र। लब्धस्पर्शे "विष्णोः कर्म्माणीति वाचयति यूपमन्वारब्धमिति" का॰ ६,२,१२, "अन्वारब्धं स्पृष्टवन्तमिति" वेददीपः। कर्म्मणि क्त। पश्चाद्भागे—स्पृष्टे, पश्चाल्लग्ने च। "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु इति" आ॰त॰ या॰। "अन्वारब्धेन पश्चाल्लग्नेनेति" रघु॰। "द्वाभ्यां पत्नीभ्यामन्वारब्ध" इति श्रौ॰ सू॰।

**अन्वारभ्य** त्रि॰ अनु आलभ्यः लस्य रः। स्प्रष्टव्ये।

**अन्वारम्भ** न॰ पश्चात् आलम्भः लस्य रः। स्पर्शे अनुपूर्व्वकरभेर्हि स्पर्शार्थत्वम्। "अनड्वाहमन्वारभामहे"

इति यजु० २५,१२ वर्षार्थे प्रयोगात् । "अनवाड्गन्ता रभामहे आत्मनानहे मृधाम" इति वेददीप० । [रूढे च ।

**अन्वारूढ** त्रि० अनु+आ+रुह–क्त । अधिरूढे । पश्चादा-

**अन्वारोहण** न० पश्चात् आरोहणम् । पश्चाद्भर्त्तरि मृते पश्चात् सह वा क्रियाचितारोहणे तत्र "सहमर्णं तदन्वारोहणं चेति" वि०सूत्रे निहितम् विहतमनुमरणशब्दे ।

**अन्वासन** न० अनु+आस–ल्युट् । अनूपवेशनेन सेवने ।

**अन्वासित** त्रि० अनु+आस–कर्म्मणि क्त । पश्चादुपवेशनादिना सेविते "अन्वासितमरुन्धत्येति" रघुः ।

**अन्वाहार्य्य** न० मासि मासि आह्रियते अनु+आ+हृ–कर्म्मणि ण्यत् । "यज्ञस्य कर्म्मणामादौ वा चान्ते दक्षिणा भवेत् । अमावास्यं द्वितीयं स्यादन्वाहार्य्यं विदुर्बुधा इति" कात्यायनपरिभाषिते नान्दीमुखश्राद्धे, अमावास्यायां मासि मासि कर्त्तव्ये श्राद्धे, दक्षिणायाञ्च "पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा इति मनुः । "वर्षोत्सेषा-न्वाहार्य्यवन्ति" गोभि० । अन्वाहार्य्यं नान्दीमुखश्राद्धम् दक्षिणा च तदुभयवन्ति । स्वार्थे कन् तत्रैव । "पितृणा-न्वाहार्य्यकं श्राद्ध कुर्य्यान्मासानुमासिकमिति" मनु मासि-मासिकर्त्तव्यश्राद्धस्यानुमासमाह्रियमाणत्वात् नान्दीमुखस्य संस्कारादौ आह्रियमाणत्वात्, दक्षिणाया कर्म्मणां पश्चात् आह्रियमाणत्वाच्च तथात्वम् ।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्य तद्द्रव्यं पच्यतेऽनेन पच+ल्युट् । दक्षिणाग्नौ अग्न्याधेयविधिना स्थापितेऽग्नौ । "अथ हैनमन्वाहार्य्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति छा०उप० । अन्वाहार्य्यपचनो दक्षि-णाग्निरापो दिशो नक्षत्राणि चन्द्रमा इत्येता मम तनवश्चतस्रस्तनवः अहमन्वाहार्य्यपचन विभज्य आत्मानं स्थित इति" भा० । "प्रसिद्ध हि दर्शपौर्णमासयोरन्वाहार्य्यपचने हवि श्रपयन्तीति" आप०नि० । "यद्यस्यग्नाहुवा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुयादन्ते दक्षिणां वा हरेयुरन्तु वा गमयेयुर्दक्षिणा-दाहेऽन्वाहार्य्यपचनोऽभविष्यतीति अनु वा गम-यन्ति" इति शत० ब्रा० तस्य निरुक्तिर्दर्शिता ।

**अन्वाहित** त्रि० अनु+आ+धा–क्त । कृताग्न्याधाने, यज्ञो-पवीतप्रभृतिविधेये अन्वारोपिते" आर्षेःकामितोद्दा-रार्थमपरस्य हस्ते निहिते च । "अन्वाहितं याचितकं निक्षेपादि या० ।

**अन्विच्छा** स्त्री अनु+इष–अ स्त्रि० । अन्वेषणे ।

**अन्वित** त्रि० अनु+इण+क्त । अनुगते, युक्ते, सम्बद्धे, शाब्दबोधे विशेषणताप्राप्ते च "प्रकृत्यर्थान्वितस्वार्थबोधकत्व प्रत्ययानामिति" न्याय ।

**अन्विष्ट** त्रि० अनु+इष्–क्त । अन्वेषिते कृतान्वेषणे । "महानु-रन्विष्टश्च विरात"रिति कुमा० । कृतानुसन्धाने च "अन्विष्ट स्यात् प्रमातेव पापदोषादिवर्जित" इति या०भा० ।

**अन्विति** स्त्री० इण–क्तिन् गमनस्योरेव अनुकूला इतिः यत्र । गत्या अनुकूलताप्राप्ते "अन्वितिरपि दिवे स्वेति" ता० ब्रा० । "अन्विति अनुकूलगतियुक्तोऽस्वीति" भा० ।

**अन्वीक्षा** स्त्री पश्चात् ईक्षा पर्य्यालोचना प्रा०स० । वेदवाक्य-श्रवणस्य पश्चात् तदर्थनिश्चयार्थ तदर्थपर्य्यालोचने, अन्वीक्षायै हिता ठक् । आन्वीक्षिकी तर्कविद्या । "आन्वीक्षिकी मीम-सानामिति" गीता । ल्युट् । अन्वीक्षणमप्यत्र न० ।

**अन्वीत** त्रि० अनु+ई–गतौ कर्त्तरि क्त । अनुगते अन्वितशब्दार्थे

**अन्वीप** त्रि० अनुगता आपो यत्र स्थानादौ बहुव्री० अच् आत ईत् । अनुगतजले स्थाने, देशे वाच्ये तु "ऊदनोर्देशे" इति पा० ऊत्, अनूपोदेश ।

**अन्वृच** अव्य० ऋचि विभ० अव्ययी० अच् समा० । ऋचीत्यर्थे । "त्रिष्टुभयान्वाह तामायुक्तो वसुवरु वेता-मन्वृचमिति" शत०ब्रा० ।

**अन्वेष** पु० अनु+इष–भावे घञ् । अन्वेषणे अनुसन्धाने गवेषणे "अथ तस्यान्वेषान्मधुकर । हतास्त्वं खलु कृतीति" शकु० ।

**अन्वेषण** न० अनु+इष–भावे ल्युट् । अनुसन्धाने गवेषणे नष्टद्रव्यस्य दर्शनाय लाभाय वा व्यापारभेदे । "रत्नान्वेष-णक्षाणां हिमालामिषतां ययौ" रघु० ।

**अन्वेषणा** स्त्री अनुगता एषणा "इषेरनिच्छार्थस्येति" पा० युच् टाप् । तत्त्वानुसन्धाने तर्कादिना ज्ञातपदार्थस्य शुद्ध्यर्थ युक्त्यादिना समर्थने गवेषणे च ।

**अन्वेषित** त्रि० अनु+एष–गतौ–इष–स्वार्थे णिच्–कर्म्मणि वा क्त । गवेषिते, कृतानुसन्धाने च ।

**अन्वेषिन्** अनु+इष–णिनि । गवेषणकर्त्तरि "तौ सीतान्वे-षिणौ तत्र धूमधूम्रमपश्यतामिति" रघु । स्त्रियां ङीप् ।

**अन्वेष्टव्य** त्रि० अनु+इष–कर्म्मणि तव्य । अनुसन्धेये "सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति श्रुति "अन्वेष्टव्यात्मविज्ञा-नात् प्राक्प्रमातृत्वमात्मन" इति भा०भा० ।

**अन्वेष्टृ** त्रि० अनु+इष–शीलार्थे तृच् वा तृन्भावः । गवेषक

ग्रीवे तत्कर्त्तरि च "अनुपदमन्वेष्टा" पा०। रूट्पक्षे अन्वे-षिताप्यत । उभययत स्त्रियां ङीप् ।

**अप्** स्त्री ब०व० । आप–क्विप् ह्रस्वश्च । जले । "मत्त जलं द्युम्नतमन्तिकेऽपाम्" भट्टि । "अद्भिरेव पारयित्वा भैक्ष-काले भुजिक्रियेति" स्मृति अप्नेराप, अद्भ्योऽग्निरिति श्रुति "अपएव ससर्ज्जादौ तासु बीजमवासृजदिति" मनु । समासान्ते अच् समासान्त । "बह्वपानि तडागानि सरांसि समुपासते" इत्युद्भट । कृतसमासान्तस्य उपसर्गद्व्यन्त·परस्य आतईत्वम् । समीप मेपम् द्वीप· अन्तरीपम् । अनुपूर्व्वात्तु देशे वाच्ये ऊत् । अनूपोदेश· अन्यत्र अन्वीपो-ग्राम इत्यादि । पूजार्थकसुपूर्व्वात् न अच् । स्वाम्पि नगराणि । अपां विकार· मयट् । अम्मय , वा यञ् । आप्यम् । स्वार्थे चातु० ष्यञ् । आप्य जले न० ।

**अप** अव्य० न पाति पा–ड । वियोगे, विकृतौ, विपरीते, निर्देशने, आनन्दे, वर्ज्जने, चौर्य्ये च । "अप–वियोग विकृति-विपरीत-निर्देशनानन्द-वर्ज्जन-चौर्य्य-वारणेषु" इति ग०म०। वियोगे "अपयाति'स्यै निर्विगतेऽपैतीति" पा० भा०।"भीत्या रामादपासरत् ? । विकृतौ, अपकृत अप-चय·' विपरीते, अपशब्द· "तएव शक्तिवैकल्यप्रमादालसता-दिभि· । अन्यथोच्चारिता· शब्दा अपशब्दा इतीरिता" इति हर्य्युक्ते· साधुशब्दाना वैपरीत्येनोच्चारणपत्रापशब्द-स्तस्य परिभाषितत्वादस्य विपरीतशब्दत्वम् । निर्देशने निर्देशे अपदिशति। आनन्दे अपहसति वर्जने "अपपरी वर्ज्जने" इति पा०उक्ते कर्म्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी । अप त्रिगर्त्तात् वृष्टोदेव· ।चौर्य्ये अपहरति । वारणे अपवर्त्तयति "शमेन वेनापवर्त्तयति" लीला० । अपकर्षे अपकर्म्म । अध प्रदेशे च अपाङ्ग अपान । अध गतिमानित्यर्थ· ।

**अपकर्म्मन्** न० अपकृष्टं कर्म्म मा०स० । दुष्टाचरणे । अपा-करणे च 'ऋणस्यापकर्म्म चेति" दत्तस्यानपकर्म्म चेति स्मृति प्रा०स०। दुष्टाचरणवति त्रि०। स्त्रियां वा डाप् ।

**अपकर्त्तृ** त्रि० अप+कृ–तृच् स्त्रियां ङीप्। अपकारकारके ।

**अपकर्ष** पु० अप+कृष–भावे घञ्। उचितधर्म्मापेक्षातो न्यून-तायां, "तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृत उत्कर्ष-प्रकर्षोऽन्योन्यमुत्कर्षापकर्षेण चेति" यथा हि वर्णानां पञ्चा-नामुत्कर्षापकर्षकृतेन संयोगविशेषेणेति" च सुश्रुत "उत्-कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मत इति" मनु । "उत्-कर्षापकर्षविहीनोमध्य , सि०कौ० । अकर्त्तव्यकालात् पूर्व्वकालकरणे, परस्तपदार्थानामन्वयार्थं पूर्व्वकाले आकर्षणे आकर्षणमात्रे च । अपकृष्यते कर्म्मणि घञ् । अकालत· पूर्व्वे कर्त्तव्ये यथा अपकर्षसपिण्डनम् । 'तथा च "ततः श्राद्धं मासिमासि अपर्याप्तावृतुं प्रति । द्वादशाहेन वा कुर्य्यादेकाहे द्वादशापवेति" स्मृतौ मरणोत्तर अतीते मासि मासि कर्त्तव्यानां कृष्णाहनिमित्तकमासिकादीनां द्वादशाहेषु एकाहेषु च कर्त्तव्यत्वोक्ते सर्व्वापकर्ष· । तथाऽपकर्षे च हेतव एकपुत्रत्वादय । "आनन्त्यात् कुलधर्म्माणां पुंसां चायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहे प्रशस्यते इति" स्मृत्युक्ता । तत्र पाश्चात्त्यानां कुलधर्म्मात् द्वाद-शाह एव कर्त्तव्यतया कुलपरम्पराचार· । वङ्गीयानान्तु एकपुत्रस्यैव आयुष क्षयसम्भावनायामिति भेद· । अयमेव सर्व्वापकर्ष , आवश्यकदशाहारम्भकाले तु न सर्व्वापकर्ष· । किन्तु यथाज्ञाविनाशेषापकर्ष इति भेद । एवं नवम-मासादिष्वप्यपकर्षणे न सर्व्वापकर्ष इति बोध्यम् ।

**अपकर्षक** त्रि० अपकर्षति अप+कृष–कर्त्तरि ण्वुल् । अप-कर्षकारके "रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गी-क्रियते" इति 'दोषाणामपकर्षका" इति च सा०द० ।

**अपकर्षण** त्रि० अपकर्षति अपहरति कर्त्तरि ल्यु । अप-हारके "नचास्ति सदृश तेन किञ्चित्स्थौल्यापकर्षणमिति" "वर्षाया पङ्कविन्दूनामुत्कर्षं येनापकर्षणा" इति सुश्रु० भावे ल्युट् । आकर्षणे न० । "यशस्य· क्रियते प्राप्ते-र्विपक्षोविनिमित्तति । इति मामार्षिषर्चिमा तस्य यशसो-पकर्षणे" रामा० ।

**अपकाम** त्रि० अपगत कामो यस्य वत यस्मात् प्रा०ब० । अपगतकामे वा उत्तरपदलोपाभावे अपगतकामोऽप्युक्तार्थे "अपकामं स्यन्दमाना अवीवरत वो हिरामिति" अथ० २।२।२, । कामस्यात्यय· अत्यये अव्ययी० । कामाभावे अव्य० "गवोरकाम ऋणोति धन्वनेति" ऋ० ६,७५,२, 'अपकामं कामस्यापायमिति" भा० ।

**अपकार** पु० अप+कृ–भावे घञ्। अनिष्टसम्पादने तद्धेतौ द्रोहे च "द्रोहोऽपकार इति"सि०कौ० ।"उपकर्त्त्रारिणा सन्धिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोरिति" माघः । "अपकारोऽभिचारश्चैते"मुग्ध०ए-मिष्ट' भूयादि. चिन्तने च "ततो आर्त्तास्तथा घोरा नानारूपा महाविषाः अपकाराय वर्त्तन्ते इति सुश्रुत· ।

**अपकारगिर्** स्त्री अपकारेण द्वेषेण गीर्य्यते गृ–क्विप् । भर्त्सनवाक्ये । "भर्त्सनं त्वपकारगी," इत्यमर ।

**अपकारिन्** त्रि० अप+कृ–कर्त्तरि णिनि । अपकारकारके,

दादिना साधुशब्दस्यान्यथोच्चारणरूपे अपभ्रंशशब्दे "त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" इति हरि० "म्लेच्छो ह वा नाम यदपशब्दः" इति श्रुतिः ।

**अपशव्य** त्रि० पशवे हितः यत्, विरोधे न०त० । पशुहितविघातके "अपशव्येव तु वा ईश्वरा" इति ता०ब्रा० "अपशव्येव पशूना हिंसिषयातिमो" भा० ।

**अपशु** पु० न पशुः अप्राशस्त्ये न०त० । गोऽश्वभिन्ने पशौ । "अपशवो वा अन्ये गोऽश्वेभ्य इति" "अपशुर्वा एष यदारण्योऽनैतस्य होतव्यमिति" च शत०ब्रा० । नास्ति पशुर्यस्य । पशुशून्ये "अप्रजा अपशुर्भविष्यति" । शत०ब्रा० ।

**अपशुच्** त्रि० अपगता शुक् शोको यस्य प्रा०ब० । अपगतशोके । सर्वदाऽपेतशोके आत्मनि पु० । "क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विनाऽपशुग्मादिति," भागवते पाठं प्रकल्प्य श्रीधरेण अपशुगात्मेति व्याख्यातम् तस्य हननञ्च यथार्थेनाज्ञान "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते किं तेन न कृतं पापं ? चौरेणात्मापहारिणेति" मनुना आत्मनोऽन्यथारूपज्ञानेनैव खात्महन्तृत्वोक्तेः । "अन्धं तमस्ते प्रविशन्ति ये केचात्महनो जनाः" इति श्रुतिभाष्येऽपि तथैवात्माज्ञाने आत्महननमुक्तम् । अपशोकादयोऽप्यत्र त्रि० ।

**अपश्चिम** त्रि० न पश्चिम विरोधे न०त० । अचरमे "कस्यपस्य महाभागस्तेषामासीदपश्चिमः" इति रामा० नास्ति पश्चिमं शेषभूतोयस्य । शेषशून्ये, इयत्ताशून्ये च "अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहमिति" रामा० ।

**अपश्य** त्रि० दृश–वेदे बा०श न०त० । अद्रष्टरि अदर्शके "अन्धा अपश्या न दभन्नभिख्या" इति ऋ० १,१४८,५, "अपश्या अद्रष्टारः" इति भा० लोके तु अदर्शीत्येव ।

**अपश्रय** पु० अप+श्रि–अच् । उपाश्रये "सामासाद उद्गीथोऽपश्रयः" अथ० १५,३,८, ।

**अपश्री** त्रि० अपगता श्रीर्यस्मात् श्रीः शोभादि । शोभादिहीने ।

**अपश्लिष्ट** त्रि० अप+श्लिष–क्त । श्लेषशून्ये, संसर्गहीने, वियुक्ते च । [अपक्रम्य स्थातरि त्रि० ।

**अपष्ठ** न० अप+स्था–क अम्बा० षत्वम् । अङ्कुशाग्रे हेम० ।

**अपष्ठु** अव्य० अप+स्था–कुप्रामादि० षत्वम् । निर्दोषे, शोभने, विपरीते, च । "अपष्ठु पठतः पाठमधिगोष्ठि शठस्य ते" इति नैष० । प्रतिकूले, विरुद्धार्थे च त्रि० । काले पु० ।

**अपष्ठुर(ल)** त्रि० अप+स्था–कुरच् षा लत्वम् । प्रतिकूले हेम० । विपरीते त्रिका० ।

**अपस्** न० आप–असुन् ह्रस्वः । कर्म्मणि निघ० । तद्वति च । "अपसा सन्तु नेमे" ऋ० १,५४,८, अपः कर्म्म तद्वन्तो नेति भा० "ग्लास्नाऽऽस्नानमपसोऽतन्वत" ता०ब्रा० । "अष्टयन्तीरपसोयन्त्यच्छा" ऋ० ७,७१,२ "अपसा कर्म्मयुक्ता" इति भा० । प्राप्ते त्रि० । "साध्याम कर्म्मापसा नवेन" ऋ० १,३१,८, "अपसा प्राप्तेनेति" भा० ।

**अपसद** त्रि० अपकृष्ट इव सीदति सद–अच् । अधमे, नीचे च । "रेरे क्षत्त्रियापसदाः !" इति वेणी० । "विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः । वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः इति" मनूक्ते अनुलोमवर्णसङ्कीर्णजाते वर्णसङ्करभेदे मूर्द्धाभिषिक्तादौ पुंस्त्री० । "ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः" इति मनुः ।

**अपसम** अव्य० समाया अत्यय अव्ययी० । शरत्प्रभृतिषु तिष्ठद्गुगणपाठात्तस्य समासान्तघटकता ।

**अपसर** पु० अप+सृ–भावे अच् । अपयाने, अपसरणस्थानात् ल्यप् अपादाने अच् । प्रतिपक्षक्रियादौ । "निरन्वयोऽपसरं प्राप्य साक्षीरकिञ्चिदमिति" मनुः । "अपसरः प्रतिपक्षक्रियादि" कुल्लूकभट्टः ।

**अपसरण** न० अप+सृ–भावे ल्युट् । अपयाने "इतोऽपसरणमेव श्रेय इति" नाटकम् "अपसरणतोऽह वा अग्ने देवा जयन्तोऽजयन्" इति "दिवमेवास्मै अयेदमन्तरिक्षमयेतोऽपसरणात् सपत्नानतुदन्त इति च शत०ब्रा० १,८,१११ ।

**अपसर्ज्जन** न० अप+सृज–भावे ल्युट् । त्यागे, वर्ज्जने च । घञ् । अपसर्गोऽप्युक्तार्थे पु० ।

**अपसर्प** पु० अप+सृप–कर्त्तरि अच् । गुप्तचरे । "सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः" रघु । "तथैवापसर्पभूतया तव कृत्स्नाण्डशेषमचोरयावः" इति दशकु० । भावे घञ् । अपसरणे । [गमने ।

**अपसर्पण** न० अप+सृप–भावे ल्युट् । अपयाने पृष्ठतो

**अपसव्य** त्रि० अप+सल–कर्त्तरि यत् । अपसव्यताभावे । "यथाकालं पुरस्कृत्य यज्ञोपवीतानि अपसव्यानि कृत्वा तीर्थमवतीर्य्येति" गृ०स० बौधा० । "अपसव्यानि अपसव्यानीति शुद्धितत्त्वे रघुनन्दनः ।

**अपसलवि** अव्य० अप+सल–बा० अवि । तर्ज्जन्यङ्गुष्ठमध्यस्थानरूपे पितृतीर्थे, "तर्जन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा तेन पितृभ्योनिदधाति" गृ०त० स्मृतम् । "सव्येनैव पाणिना कुशतन्तुं गृहीत्वा अपसलवि पूर्व्वस्यां कर्ष्वां पिण्डं निदध्यादिति" गोभिलः ।

**अपसव्य** न० अपक्रान्तं सव्यात् निरा० त० । १ देहदक्षिणभागे "तर्ज्जन्यङ्गुष्ठयोरन्तरा अपसव्यपि अपसव्य वेति" २ स्मृत्यपरिभाषिते पितृतीर्थे च । अपगतं सव्यतया भूमौपातितत्वात् सव्यं यत्र । भूमौ पातनेन भग्नत्वायशमाङ्गे अप वैपरीत्ये सृ-भावे यत् सव्यं गति । विपरीते त्रि० । "अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणमिति" याज्ञ० । "देवकर्म्मान्तरं पितृकर्मकरणे प्राप्तशस्त्रोपचारनिराशाया-प्रदक्षिणव्यापार" इति आ० त० रघु० । आभ्युदयिके हि "निपातो न हि सव्यस्य जानुनोर्विद्यते क्वचिदिति" आ० त० वचनोक्तेः भूमौ पातितत्वासम्भवात् करणाभावः । अतएव "नात्रापसव्यकरणं न पैत्र्यं तीर्थमिष्यते" इत्यादिना अपसव्यकरणनिषेधः उपपन्नः । पितृतीर्थञ्च "यत्नाङ्गुष्ठो-त्रिपेयस्तु दक्षिणस्तत्र शस्यते इति" स्मृते । दक्षिणहस्त एव । "प्राचीनावीतिना भाव्यमपसव्यमतन्द्रिणा । पित्र्य-मानिधनात् कार्य्यं विधिवद्दर्भपाणिना" इति मनु ।

**अपसार** पु० अप+सृ-णिच्-अच् । १ दूरीकरणे २ बहिष्करणे, २ अपनयने ३ च । ल्युट् । अपसारणमप्यत्र न० ।

**अपसारित** त्रि० अप+सृ-णिच्-क्त । १ उत्सारिते २ दूरीकृते च

**अपसिद्धान्त** पु० अपक्रान्तः सिद्धान्तात् निरा० त० । १ स्वीकृत-सिद्धान्तात् स्खलनरूपे दोषभेदे, "सिद्धान्तमभ्युपेत्यानिय-मात् कथाप्रसङ्गोऽपसिद्धान्त इति" गौ० सू० । सिद्धान्त किञ्चिच्छास्त्रकाराभ्युपगतमर्थमभ्युपेत्य स्वीकृत्यानियमात् तन्नियमोल्लङ्घनात् कथायां प्रसङ्गः स्वीकृतसिद्धान्तप्रच्युतो-ऽपसिद्धान्त इति तदर्थः । यथा सांख्यमतेनाह वदिष्यामीत्यभ्यु-पेत्य कथायामारब्धायाम् आविर्भावस्याविर्भावाङ्गीकारेऽनव-स्थेति दूषणे वादिनोद्भाविते प्रतिवादी यदा तद्दोषो-द्धारणाय आविर्भावस्यासतोऽपि समुत्पत्तिमभ्युपैति तदा सत्-कार्य्यवादिसांख्यमतविरुद्धाभिधायित्वेन स्वाभ्युपगतनिय-मातिक्रमात् स्वीकृतसिद्धान्तप्रच्युतिरूपो दोषो भवति स एवापसिद्धान्त एवमन्योऽप्युदाहार्य्यः । वितण्डावादिन बौद्धभेदाश्च नापसिद्धान्त दोषमङ्गीचक्रु तेषां कस्यचित् सिद्धान्तस्यानङ्गीकारात् ।

**अपसोपान** पु० अपक्रान्तः अतिक्रान्तः सोपानमाकारेण अत्या० स० । १ कृत्रिमगर्त्ते ।

**अपस्कर** पु० अप+कृ-अप् रथाङ्गे नि० सुट् । १ चक्रभिन्ने रथारम्भके अवयवभेदे । "अपस्करो रथाङ्गमिति" पा० । "कूबरञ्च रथस्यासीद्धातुकिर्भुजगोत्तमः । अपस्करमधिष्ठाने हिमवान् विन्ध्यपर्वत" इति भा० क० प० उक्तेः । क्लीवमपि ।

**अपस्नात** त्रि० अपकृष्टं अमङ्गलार्थत्वात् स्नातः । १ मृतस्योद्देश्य स्नाते जने । २ स्नानसंस्काराय स्नापिते मृते पु स्त्री० क्षीर०

**अपस्नान** त्रि० अपकृष्टं स्नानात् निरा० स० । १ स्नानावशिष्टे जले "उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च । श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" इति मनु ।

**अपस्पश** त्रि० अपगतः स्पशो गूढचरो यस्य । १ गूढचरशून्ये । "मन्त्रविद्यैव सोभाति राजनीतिरपस्पशेति" माघ० । शब्द-विद्यापक्षे पस्पशा पातञ्जलभाष्यस्य प्रथमाह्निक तच्छून्येत्यर्थः ।

**अपस्मार** पु० अपस्मारयति स्मरणं विलोपयति अप+स्मृ-णिच्-कर्त्तरि अच्, अपगतः स्मारः स्मरणं यतो वा । १ रोग-भेदे । स च सुश्रुते दर्शितो यथा "स्मृतिर्भूतार्थविज्ञानमपस्तत् परिवर्जने अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ मिथ्यादियोगेन्द्रियार्थकर्म्मणामतिसेवनात् । विरुद्धमलिना-हारविहारकुपितैर्मलैः । वेगनिग्रहशीलानामहिताशुचि-भोजिनाम् । रजस्तमोऽभिभूतानां गच्छतां च रजस्वलाम् ॥ तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् । चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥ सञ्ज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः । रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ विक्षिपन् हस्तपादौ च विजिह्मभ्रूर्विलोचनः । दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ॥ अल्पकालान्तरश्चापि पुनः सञ्ज्ञां लभेत सः । सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥ वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः । हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥ निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ । वेपमानो दशेद्दन्तान् श्वसन् फेनं वमन्नपि ॥ यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति । ततो मे चित्त-नाशः स्यात्सोऽपस्मारोऽनिलात्मकः ॥ तृट्तापस्वेदमूर्च्छा-र्त्तोऽध्वनन्नङ्गानि विक्षिपन् । यो ब्रूयाद्विकृतं सत्त्वं पीतं मामनुधावति ॥ ततो मे चित्तनाशः स्यात् पित्तभव उच्यते । शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम् ॥ यो ब्रूयाद्विकृतं सत्त्वं शुक्लं मामनुधावति । ततो मे चित्त-नाशः स्यात्सोऽपस्मारः कफात्मकः ॥ हृदि तोदस्तृडुत्क्लेद-स्त्रिष्वप्येतेषु संस्थया । प्रलापः कूजनं क्लेशः प्रत्येकन्तु भवेदिह ॥ सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे । अनिमित्तागमाद्व्याधेर्गमनादकृतेऽपि च ॥ आगमाच्चाप्यप-स्मारं वदन्त्यन्ये न दोषजम् । क्रमोपयोगाद्दोषाणां क्षपि-कत्वात्तथैव च ॥ आगमाद्वेगस्याशु स तु निर्वर्त्तते बुधैः । वर्षत्यपि यथा देवे भूमौ बीजानि कानिचित् ॥ शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः । स्थायिनः केचिदल्पेन

फालेनाभिमर्शिताः ॥ दर्शयन्ति विकारांस्तु विश्वरूपाभिसर्गतः । अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु" इति ॥ "धूर्त्तोऽपस्माररोगी व्याधितैति" याज्ञ०कर्म्म० । "अपस्मारादिरोगाणां ज्वरादीनां विशेषत इति" वटुकस्तोत्रम् ।

**अपस्मारिन्** त्रि० अपस्मार+अस्त्यर्थे इनि । १ अपस्माररोगयुक्ते । स्त्रियां ङीप् ।

**अपस्य** त्रि० अपसि कर्म्मणि साधुः अपस्+यत् । १साधुकर्म्मकारिणि "अग्नाऽपसा अपस्योऽवसाना" इति यजु० १०,७, "अपस्याः अपसि कर्म्मणि साध्व्यः" वे०दी०। "अपस्येव सवनात्सुनमेत्याऽपस्या । मध्व मध्वानूकान्यपामिति" का० १७, ६,२, अपस्यास्तन्नुसंज्ञका इष्टकाभेदा इति वेददी० ।

**अपस्यु** त्रि० अपः कर्मेच्छति अपस्+क्यच्–उ । १ कर्म्मेच्छौ "नि रं यद्वी शमन्यव यक्षायाता अपस्यवः" इति ऋ०८,१४,२

**अपह** त्रि० अप+हन–"अपे क्लेशतमसोः" पा० ड । १अपघातकर्त्तरि । क्लेशापहः पुत्रः तमोऽपहः सूर्य्यः । योगविभागादन्यत्रापि "सुपरीक्षितमव्ययमध्यात्मशरीरपापहैरिति" मनुः

**अपहत** त्रि० अप+हन–क्त । १विनाशिते "सोऽहमानाऽपहतपाप्मेति" श्रुतिः ।

**अपहति** स्त्री अप+हन–क्तिन् । १नाशने । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" छा०उ० ।

**अपहर** त्रि० अप+हृ–कर्त्तरि अच् । १अपहरणकर्त्तरि "भद्र भवेद्भवभयापहर स्तोत्रे" इति हेमा०भवि०पु० ।

**अपहरण** न० अप+हृ–ल्युट् । १स्तेये साधारणस्य परकीयस्य वा धनादिचौर्य्ये। "होतादृश्यापहरणे यस्याप्याभोगभस्य चेति" "निक्षेपस्यापहरणे नराश्वरजतस्य चेति" "भक्ष्यभोज्यापहरणे यानशय्यासनस्य च" इति च मनुः स्तेयस्वरूपं स्मृतौ दर्शितं यथा "उपायैर्विविधैरेषां छलयित्वापकर्षणम् । सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः" इति नार०। "स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम् । निरन्वयं भवेत् स्तेयं कृत्वापह्नूयते च यदिति" मनुः । "अन्वयवद् द्रव्यरक्षिराजाध्यक्षादिसमक्षं प्रसभं बलावष्टम्भेन यत् परधनहरणादिकं क्रियते तत् साहसं, स्तेयन्तु तद्विलक्षणं निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत् परधनहरणं तदुच्यते अन्वयवदपि कृत्वा न भवेद् कृतमिति भयात् निह्नुते तदपि स्तेयमिति" मिताक्षरा । तत्र साधारणस्य परकीयस्य वा हरणम् "सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतमिति" याज्ञ० उक्तेः । तथाच परकीये साधारणे वा द्रव्ये स्वत्व हेतुभूतदानविक्रयप्रतिग्रहादिकमन्तरेण / स्वत्वापादनं हरणम् तदेव स्वत्वपूर्व्वकं वा हरणमिति भेद इति मिताक्षरादिमतम् दायभागमते तु साधारणद्रव्यस्य नापहरणं परमात्मनस्त्वद्रव्यस्येवापहरणमिति तत्रोक्तेरिति विशेषः । २बलादपकर्षणे च । "निर्विंशोऽसिभुजालेन दाव्याऽपहरणेन चेति" देवी भा० ।

**अपहरणीय** त्रि० अपहर्त्तुमर्हति अप+हृ–अनीयर् । १ अपहरणयोग्ये तानि वस्तूनि च स्मृतौ दर्शितानि । "द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रात् न दण्डं दातुमर्हतीति" मनुः । "चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्गृहीतव्या मुष्टिरेका पथि स्थितैरिति" "तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः इति" च मनुः। "द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेदिति" याज्ञ०। "गोऽग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि चेति" गौ० । २ अपनेतव्ये च ।

**अपहर्त्तृ** त्रि० अप+हृ–तृच् स्त्रियां ङीप् । १ अपहारके । "निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दममिति" मनुः । अत्र तु तृजकादिना पा० षष्ठीनिषेधात् कर्म्मणि द्वितीया ।

**अपहस्त** पु० अपसारणार्थं हस्तः । १ गलहस्ते अपसारणोद्यतः हस्तोऽस्य । २ गलहस्तेन अपसारिते त्रि० ।

**अपहस्तित** त्रि० हस्तेन अपसार्य्यते अप+हस्त+णिच्–कर्म्मणि क्त । १ गलहस्तादिना निरस्ते अपसारिते ।

**अपहार** पु० अप+हृ–घञ् । १चौर्य्येण अपहरणे, २अपनयने । "सर्व्वमायासापहारेण भगिनी मे विरूपितेति" रामा० स्वाम्यनुपकारिधनव्यये "नापहारं स्त्रियः कुर्य्युः पतिरिक्थात् बहुगमेति" स्मृति । "अपहारश्च धनस्यास्य तदुपयोगे भवतीति" दायभाग । ४ अपचये, ५ हानौ, ६ सङ्गोपने च ।

**अपहारक** त्रि० अप+हृ–ण्वुल् । १ चौर्य्यकर्त्तरि २अपसारणकर्त्तरि ३सङ्गोपके ४स्वामान्तरापकर्षके च । "जायापहारकान् पश्चिम" इति हितो०। अपहारकभेदाश्च मनुना दर्शिताः "द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारकान् । प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः । प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः । प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः । उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा । मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह । असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः । शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः । एवमादीन् विजानीयात् प्रकाशांल्लोककण्टकान् । निगूढचारिणश्चान्याननार्य्यानार्य्यलिङ्गिन" इति ।

**अपहारिन्** त्रि० अप+हृ–णिनि स्त्रियां ङीप् । १अपहर्त्तरि २अपनायके च "इन्द्रियाणां विचरतां विषयेष्वपहारिषु" इति मनु "क्षेत्रदारापहारी च षड़ेते ह्याततायिन" इति मनु

**अपहास** पु० अप+हस–घञ् । १ अकारणहासे हेमचन्द्र ।

**अपह्नव** पु० अप+ह्नु–अप् । १सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपेऽपलापे, । अपह्नवश्च द्विविधः शब्दतः अर्थतोवा "मिथ्यैतदिति शब्दत , नाभिजानाम्यहं, तत्र तदा न मम स्थितिरित्येवमर्थतोऽपह्नव इति । २ प्रेमणि च ।

**अपह्नुत** त्रि० अप+ह्नु–क्त । १ कृतापहारे वस्तुनि यस्य चौर्य्यं कृतं तस्मिन्, २ स्थानान्तर नीते, ३ अपसारिते च ।

**अपह्नुति** स्त्री अप+ह्नु–क्तिन् । १ अपह्नवे "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति" सा०द० उक्ते २ अर्थालङ्कारभेदे च । सा च द्विधा अपह्नवपूर्ब्बक अध्यारोप, अध्यारोपपूर्ब्बक अपह्नवश्च यथा "नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः" ॥ "एतद्विभाति चरमाचलचूड़चुम्बि हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन" ॥ "विराजते व्योमवपु पयोधिस्तारामयास्तत्र च फेनभङ्गा "। इत्याद्याकारेण प्रकृतनिषेधो बोध्यः । "गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुति" सा०द० तत्र श्लेषेण यथा ॥ "काले वारिधराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि तरले । न हि न हि सखि ! पिच्छिलः पन्था "॥ अत्रापतितयेत्यत्र पति विनेत्युक्ता पतनाभावेनेत्यन्यथाकृतम् । अश्लेषेण यथा । "इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं न हि घनागमरीतिरुदाहृता" इति ॥

**अपह्नुवान** त्रि० अप+ह्नु–शानच् । १चोरयति २अपनयति ३संगोपयति च "अपह्नुवानस्य जनाय यन्निजामिति" नैष०

**अपह्नूयमान** त्रि० अप+ह्नु–कर्म्मणि शानच् । १ अपनीयमाने २ स्थानान्तरमपसार्य्यमाणे ३ चौर्य्यमाणे च ।

**अपह्रियमाण** त्रि० अप+हृ–कर्म्मणि शानच् । १चौर्य्यमाणे । २ अपाकृष्यमाणे च ।

**अपांक्षय** पु० ६त० अलुक् स० । १ मेघे । अम्बुजलधरत्वात्तथात्वम् "अपांक्षये चक्षुषि, त्वां सादयामि "चक्षु र्वा अपांक्षय इति" श्रुति यजुर्वेददीप । पदद्वयमित्येके ।

**अपांज्योतिस्** न० ६त० अलुक्स० । १ विद्युत्स्वता हि अप्सु स्थियन्ति "अपांज्योतिषि विद्युति त्वां सादयामि" "विद्युद्वा अपांज्योतिरिति" श्रुति वे०दी० पदद्वयमित्येके

**अपांनपात्** पु० न पातयति पत–णिच्–क्विप् न०त० "न भ्राण्नपान्नवेदा०" पा० प्रकृतिभाव अलुक्स० । १ अग्नि देवताभेदे । "अपोनपात् अपांनपाच्च देवतेति" सि०कौ०। "अपोनपाते अपांनपातेऽनुब्रूहीति" प्रैष्यः ।

**अपांनप्त्रि(प्त्री)य** त्रि० अपांनपात् देवताऽस्य घ, छ वा । १ अपांनपाद्देवताके हविरादौ ।

**अपांनाथ** पु० ६त० अलुक् स० । १ समुद्रे ।

**अपांनिधि** पु० निधीयतेऽस्मिन् नि+धा–आधारे कि ६त० अलुक्स० । १ समुद्रे, २ विष्णौ च "अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठित इति" विष्णुसह०। "सरसामस्मि सागर" इति गीतोक्तेस्तस्य तथात्वम् । [ २ वरुणे च ।

**अपांपति** पु० पा–डति ६त० अलुक् स० । १ समुद्रे,

**अपांपाथस्** न० पाथः स्थानं ६त० अलुक्स० । १ अन्ने तस्य वृष्टिप्रभवत्वात्तथात्वम् "वृष्टेरन्नं ततः प्रजेति" गीतायां तथोक्ते । "अपांपाथसि अन्ने त्वां सादयामि" "अन्नं वा अपांपाथ" इति श्रुतिः वे०दी०। पदद्वयमित्येके ।

**अपांपित्त** न० ६त० वा अलुक् स०। १ अग्नौ, तस्य जलहेतुत्वात् तत्पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेराप" इति" श्रुतौ तस्य तथात्वावगतेः । वा लुकि अप्पित्तमप्यत्र ।

**अपांपुरीष** न० पुरीषं मल ६त० अलुक्स० । १ सिकतासु, तासां जलमलरूपत्वात्तथात्वम् "अपांपुरीषे सिकतासु त्वां सादयामि "सिकता वा अपां पुरीषमिति श्रुति " वेददी०

**अपांयोनि** स्त्री६त० अलुक्समा० । १समुद्रे "अपांयोनौ समुद्रे" इति वेददी० "समुद्रो वै अपांयोनिरिति" शत० ब्रा० पदद्वयमित्येके ।

**अपांशु(सु)ला** स्त्री पांशु(सु)लो व्यभिचारदोषो न सन्ति अस्याः सिध्मा० लच् पांशु(सु)ला स्वैरिणी न०त० । १ पतिव्रतायां स्त्रियाम् "अपां(सु)शुलानां धुरि कीर्त्तनीयेति" रघु ।

**अपांसदन** न० अलुक्स० । १ दिवि "दिवि ह्याप सन्ना इति" शत०ब्रा० । भिन्न पदमित्येके ।

**अपांसधस्थ** पु० ६त० अलुक्स० । १ अन्तरिक्षे "अपांसधस्थे अन्तरिक्षे" वेददी० "अन्तरिक्षं वा अपांसधस्थमिति" शत०ब्रा० । भिन्नं पदमित्येके ।

**अपांसधिस्** न० ६त० अलुक्स० । १ श्रोत्रे "अपांसधिषि श्रोत्रे" वेददी०। "श्रोत्रं वा अपांसधिरिति" शत०ब्रा०।

**अपाक्तात्** अव्य० अपाची अधाची प्रतीची वा वा० तातिल्। १अधाच्या २प्रतीच्या वा इत्यर्थे "प्राक्तादपाक्तादधरादुदक्ता दभि ऋ०७,१०४।१९। अपाक्तात् प्रतीच्या इति भा०।

**अपाक्ष** न० अपगतमनुगतमक्षमिन्द्रियम् अत्या० स०। १ इन्द्रियसन्निकर्षजे प्रत्यक्षे २ तद्विषये त्रि० त्रिका०।

**अपाङ्क्तेय** त्रि० पङ्क्त्या सह भोजने पङ्क्तिमर्हति अर्हार्थे ढक् न०त०। १ पङ्क्त्या सह एकपङ्क्तौ भोजनानर्हे स्तेनपतितादौ। अत्र यति अपाङ्क्त्य इत्यपि। ते च मनौ दर्शिता यथा "ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः। तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत्॥ जटिलं चानधीयानं दुर्बलं कितवं तथा। याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥ चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा। विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः। प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः। प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा॥ यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः। ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च॥ कुशीलवोऽवकीर्णी च वृषलीपतिरेव च। पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे॥ भृतकाध्यापको यश्च भृतकाध्यापितस्तथा। शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ॥ अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा। ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः॥ अगारदाही गरदः कुण्डाशी सोमविक्रयी। समुद्रयायी बन्दी च तैलिकः कूटकारकः॥ पित्रा विवदमानश्च कितवो मद्यपस्तथा। पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी॥ धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः। मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च॥ भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा। उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च॥ हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति। पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च॥ स्रोतसां भेदको यश्च तेषां चावरणे रतः। गृहसंवेशको दूतो वृक्षारोपक एव च॥ श्वक्रीडी श्येनजीवी च कन्यादूषक एव च। हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः॥ आचारहीनः क्लीबश्च नित्यं याचनकस्तथा। कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च॥ औरभ्रिको माहिषिकः परपूर्वापतिस्तथा। प्रेतनिर्यापकश्चैव वर्जनीयाः प्रयत्नतः॥ एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्। द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्। ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥ अपाङ्क्त्यदाने यो दातुर्भवत्यूर्द्ध्वं फलोदयः। दैवे हविषि पित्र्ये वा तत्प्रवक्ष्याम्यशेषतः॥ अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्रादिभिस्तथा। अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते" इति॥

**अपाङ्क्त्य** त्रि० न पङ्क्तिमर्हति यत् न०त०। १ अपाङ्क्तेये। "अपाङ्क्त्यदाने यो दातुरिति" मनु।

**अपाङ्ग** पु० अपाङ्गति तिर्य्यक् चलति नेत्रं यत्र अप+अङ्ग घञ्। १नेत्रप्रान्ते, "अजनि चतुरपाङ्गनिजाङ्गणञ्चितचक्षुषोऽपि तदीक्षणखञ्जनम्" इति नैष०। २ तिलके च। अपगतमङ्गं यस्य प्रा० ब०। ३ अङ्गहीने त्रि० स्त्रियां ङीप्।

**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य वा कप्। (आपाङ्) इति ख्याते अपामार्गे। स्वार्थे कन् १ नेत्रान्ते पु०। २ अपगताङ्गे त्रि०।

**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्तेन दर्शनं ३त०। १ कटाक्षे

**अपाङ्गनेत्र** न० अपाङ्गं देव व्याप्य नेत्रम्। १ दीर्घनेत्रे।

**अपाच्** त्रि० अपाञ्चति अप+अन्च-क्विप्। १ अपगमनकर्त्तरि २ अप्रकाशार्थे च। स्त्रियां ङीप्। सा च ३ दक्षिणस्यां दिशि, ४ प्रतीच्यामिति वेदभाष्ये माधव। "प्राक्तादपाक्तादधरादिति ऋ०७,१०४,१९ "अपाक्तात् प्रतीच्या" इति तेन व्याख्यानात्। तत्र मदान्तरेण दक्षिणप्रतीतेरपाक्शब्दस्य प्रतीच्या लक्षणैव न तत्रशक्तिरिति तु युक्तम्।

**अपाचीन** त्रि० अपाच्यां दक्षिणस्यां भवः ख। १ दक्षिणदिग्भवे २ अप्रकाशमाने च। "योऽस्मपाचीने तमसि मदन्तीरिति" ऋ० ७,६,४, "अपाचीने अप्रकाशमाने" भा०।

**अपाच्य** त्रि० अपाच्यां भवः "द्युप्रागित्या०" पा० यत्। १ दक्षिणदिग्भवे पदार्थे "ये के च नीच्यानां राजानो ये अपाच्यानामिति" ऐत०ब्रा०।

**अपाटव** न० पाटवं पटुता पटु+भावेऽण् नास्ति तद्यत्र। १ रोगे। न०त०।२ पटुताभावे "अपाटवाद्यथौचार्द्धं यदि विप्र प्रजायते" इति स्मृतिः। ६ब०। ३ पटुताशून्ये त्रि०

**अपात्त** त्रि० अप+आ+दा-क्त। १ प्राप्ते। "तस्मोवाच विष्णायते नास्ति हिरण्यस्यापात्तमिति" छ०उ०। "अपात्तं प्राप्तमिति" भा०।

**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त०। १ विद्यादिहीनेऽनाचारे, २ दानादियोग्यताहीने कुपात्रे, नटादौ च। दानादिपात्रञ्च पात्रशब्दे दर्शयिष्यते। "अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतमिति" गीता "अपात्रेषु च यद्दत्तं तत् सर्वं विफलं भवेदिति" स्मृति "अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्मसंहिते" इति मिताक्षरायां नारद।

क्षमिं जयेदिति" चक्रदत्तोक्ते १ क्षमितैलभेदे ।

**अपाय** पु० अप+इण्-अच् । १ विश्लेषजनकक्रियायाम् "ध्रुव-मपायेऽपादानमिति" पा० । "अपाये विश्लेषजनकक्रिया-यामिति" सि०कौ० । "अपाये यदुदासीनमिति" हरि० । २ नाशे ३ अपगमने च ।

**अपायिन्** त्रि० अप+इण्-णिनि । १ अपाययुक्ते २ वियो-गिनि ३ नश्वरे च "मात्रास्पर्शास्तु कौन्तेय ! शीतोष्ण-सुखदुःखदाः आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भार-तेति" गीता । "अनपायिनि संश्रयद्रुमे गजभग्ने पत-नाय वल्लरीति" कु० ।

**अपार** त्रि० नास्ति पारं यस्य । १ पारशून्ये २ दुःखेनोत्तार्य्ये ३ दीर्घमर्यादे । "महीमपारां सदने सदस्येति" ऋ० २,२०,८ ४ अगाधे "अन्तरपार ऊर्वे अन्तः दस्मोः ऋ० २,१,१४ । "अपारे अगाध" इति भा० । ५ दूरपारे "रजसो अ-पारे ऋ० १,४२,४६ । "इमे चिदिन्द्र रोदसी अपारे इति ऋ० २,२०५ । "अपारे दूरपारे" इति भा० । ६ सीमारहिते "महो अपारे रजसो" ऋ० ६,६८,१ । "अपारे सीमा-रहिते" इति भा० । ७ अधिके "अपारो वो महिमा इत्यरण" इति ऋ० ५,८७,६ । "अपारः अधिक" इति भा० । "अपारे पारमिच्छन्तः संसारार्णवरोधसीति" महाभा० । "तदपार-मसंख्येयं वानराणां महद्बलम्" रामा० । ८ अनुत्तार्य्ये "रावणस्य महायातुरपार प्रतिभाति मे इति" रामा० । तस्मा पारमपारस्य व्रजन्ति विजयैषिण इति" भा० क० प० १८ अ० । ९ नद्यादेरर्वाक्पारे न० । १० पृथिव्यां स्त्री निरु० ।

**अपार्ष** न० अप+ऋष्-क्त नि० न । १ अभ्यर्णे समीपे निरु० । २ समीपवर्त्तिनि त्रि० ।

**अपार्थ** त्रि० अपगतोऽर्थो यस्य । १ निरर्थके २ व्यर्थे ३ नि-ष्प्रयोजने "सर्वमेतदपार्थं ते यन्मां त्वं संप्रभाषसेति" वनप० २१४ अ० । ४ अभिधेयशून्ये, "अपार्थं बहु सङ्कीर्णं भाषते" इति सुश्रुतम् । वा कप् । अपार्थकोऽप्यत्र । अतो यदन्य-दिष्टमूर्द्धन्यार्थं तदपार्थकमिति" सुश्रु० । तत्र योग्यतासत्त्वा-काङ्क्षाशून्यं वाक्यं यथोक्तं गौतमेन "पौर्वापर्य्यायोगादप्रति-सम्बद्धार्थमपार्थकमिति" "पौर्वापर्य्यं कार्य्यकारणभावस्तस्याऽ-योगादसम्भवात् शाब्दबोधजनकाकाङ्क्षाभावात्सम्भवात् अप्रतिसम्बद्धः असम्बद्धोऽर्थः प्रयोजनं शाब्दबोधरूपं यत्र । तथाचाभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकत्वं तत्त्वमिति तदर्थः ।

**अपाल** त्रि० नास्ति पालः पालको यस्य । १ पालकशून्ये म-नादौ । २ अश्ववादिभ्यामरक्षितायां स्त्री । "अपाला-मिन्द्र ! त्रिष्पूत्व्यकृणोरिति" ऋ० ८,९,१७ । "अ-पालामेतन्नामिकामरक्षितां अश्ववादिनीमिति" भा० ।

**अपालम्ब** पु० अपकृष्यालम्ब्यते अप+आ-लम्ब घञ् । १ शकट-पश्चाद्भागे "तत पश्चात् परिक्रम्य अपालम्बमभिपद्यात्रेति" शत० ब्रा० २,२,४,१२, "अपालम्बं शकटस्य पश्चाद्भाग-मिति" भा० । [पतित्वा लुण्ठने, ३ अपाकरणे च ।

**अपावर्त्तन** न० अप+आ+वृत-ल्युट् । १ उद्भूयपतने भूम्यादौ

**अपावृत** त्रि० अप+आ+वृ-क्त । १ अनावृते २ उद्घाटिते ३ अपसारितावरणे च "यदृच्छया चोपपन्नं स्वर्गद्वारमपा-वृतम् । सुखिनः क्षत्रियाः पार्थ ! लभन्ते युद्धमीदृशमिति" गीता । "अहो अपावृतं द्वारमापदामयमेव मे" रामा० ४ आवृते, ५ पिहिते स्वतन्त्रे च इति मेदिनिः ।

**अपावृति** स्त्री अप+आ+वृ-क्तिन् । १ आवरणनिवारणे उद्-घाटने २ आवरणापसारणे च । "स त्व से देजयत्व-पावृतिमिति" ऋ० ।

**अपावृत्त** त्रि० अप+आ+वृत-क्त । १ अन्तरिते २ पराङ्मुखे, ३ निवृत्ते च "प्रतिपक्षादपावृत्तः सन्तुष्टो येन केनचि-दिति" महा०भा० "कथं कस्यास्त्यपावृत्तां परैरिव कृतां धमूमिति" रामा० । [लुठने च ।

**अपावृत्ति** स्त्री अप+आ+वृत-क्तिन् । १ उद्वर्त्तने २ नि-

**अपाश्रय** पु० अप+आ+श्रि-अच् । १ मञ्चे "पर्य्यङ्कस्यापाश्रये" इति काद० । २ अङ्गावरणे चन्द्रातपादौ हेम० अपगत आश्रयो यस्य । ३ आश्रयविहीने त्रि० ।

**अपाष्ठ** त्रि० अप+आ+स्था-क अव्य० षत्वम् । १ अपास्थिते "यस्याहिमं निरवपं प्राग्नादुत पर्षधेः । अपाष्ठाच्छृङ्गा-दिति" अथ० ४,६,५ ।

**अपासङ्ग** पु० अप+आ+सन्ज-घञ् कुत्वम् । १ तूणे इषुधौ ।

**अपासन** न० अप+अस-ल्युट् । १ मारणे वधे २ अपक्षेपणे, ३ दूरीकरणे च ।

**अपासित** त्रि० । अप+अस+णिच्-क्त । १ अपसारिते ।

**अपासृत** त्रि० अप+आ+सृ-क्त । १ दूरीभूते २ पलायिते ।

**अपास्त** त्रि० अप+अस+क्त । १ क्षिप्ते २ निरस्ते ३ दूरीकृते ४ अपसारिते च "समुच्छ्रितविभ्रमा गतिरपास्तसंस्था मतिरिति" माघ० "निरस्तगाम्भीर्य्यमपास्तपुष्पकमिति" माघ । [पास्तानकल्पानि यौवने" इति कुमा० ।

**अपास्य** अव्य० अप+अस-ल्यप् । १ निरस्येत्यर्थे । "किमित्य-

**अपि** अव्य० न पियति गच्छति । पि-गतौ क्विप् न तुक् ।

१ दायाद्येनाविभक्ते २ संसृष्टधने ३ गोत्रजे ४ संसृष्टभोजने च । "अपिव्रताचान्वारभन्ते यजमानमिति" का० ८,६,२६ । "अपिव्रताश्च उच्यन्ते येषां यजमानमते अपित्वमस्ति दायाद्येनाविभक्ता इति" पितृभूतिः "अपिव्रता गोत्रजा इति कर्कभा०" "अपिः संसर्गे संसृष्टं व्रतं कर्म्म येषामिति अपिव्रता अविभक्ता दायादाः तेष्वग्रेणापि कृष्यादि कर्म्म व्रतं सर्वे उपजीवन्तीति हरिस्वामी, "व्रतं भोजनं यजमानेन सह प्राप्तभोजनाः सनुधर्माः" इति माधवः ।

**अपिशर्वर** त्रि० अपिः प्रादुर्भावे अव्ययी० वा० अच् समा० । १ शर्वरीमुखसमये प्रदोषकाले, "समिद्धमपिशर्वरे" इति ऋ० १,६,७, । "अपिशर्वरे शर्वरीमुखे" इति भा० ।

**अपिशल** पु० अपिशलते अपि+शल—अच् । १ ऋषिभेदे तस्यापत्यम् इञ् । आपिशलिः । शाब्दिकभेदे । "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" क०क० "सुप्यापिशलेः" इति पा० ।

**अपिहित** त्रि० अपि+धा—क्त । १ आवृते "तच्चेनाभुरपिहित" इति श्रुतिः । अतोलोपे पिहितोऽप्यत्र "भुजङ्गपिहितद्वारमिति" रघुः ।

**अपीच्य** त्रि० अपिचनते चोच्च्यांचीयते अपि+च्यु—ड अतोलोप उपसर्गदीर्घः न०त० । १ अतिसुन्दरे "अपीच्यदर्शनं सौम्यं सर्वलोकमनोहरमिति" भाग० "अपीच्यवेशं द्विभुजं सौम्याकारं सुदर्शनमिति" ध्यानमूर्त्तिलक्षणम्, अपि+अञ्च—क्विप् अपाक् तत्र साधु यत् अञ्चतेरतोलोपे पूर्व्व दीर्घः । २ अन्तर्हिते । "यदाविर्यदपीच्य देवासो अस्ति दुष्कृतमिति" ऋ० ८,४७,१३, अपीच्यमन्तर्हितम् भा० ३ गुह्ये "सत्तानां नतुनामामपीच्यम्" ऋ० ८,२६,६, "अपीच्य गुह्यमिति" भा० ।

**अपिजू** त्रि० अपि+जव—क्विप्—ऊठ् । १ प्रेरके । "उभसामक्ता जगतामपीजुवा" ऋ० २,३१,५ । "अपिजुवा प्रेरयितारौ" इति वेदे उवङ् भा० ।

**अपीत** त्रि० अपि+इण—क्त । १ विलयप्राप्ते विलीने, "सौम्य ! तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवतीति" छा०भा०धृता श्रुतिः । भावे क्त । १ विलये २ अपगमने न० । पीतवर्णभिन्ने पु० महति त्रि० । पीतं पानकर्म्म १ तद्भिन्ने त्रि० ।

**अपीति** स्त्री अपि+इण—क्तिन् । १ विलये २ अपगमे ३ प्रलये च । "अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" शा०सू० । आधारे क्तिन् । ४ संग्रामे । "युदा मह संरणानो अपीतेरमत्रिणः" इति ऋ० १,१२१,१० । "अपीतेः संग्रामादिति" भा० ।

**अपीनस** पु० अपीनाय अपीनत्वाय पीयते कलते यो कर्म्मकर्त्तरि क । १ पीनसरोगे तद्विवरणं पीनसशब्दे ।

**अपुंस्** पु० न पुमान् न०त० । १ नपुंसके क्लीवे । "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः इति" मनुः ।

**अपुंस्का** स्त्री नास्ति पुमान् यस्याः उरःप्रभृतित्वात् कप् । १ पतिशून्यस्त्रियाम् । 'नापुंस्कास्मीति मे मतिरिति' भट्टिः ।

**अपुच्छा** स्त्री नास्ति पुच्छमस्याः यस्याः । १ पिच्छलीने शिंशपावृक्षे । २ पुच्छहीने त्रि० । [२ पुण्यशून्ये त्रि० ।

**अपुण्य** न० न पुण्यं विरोधे न०त० । १ पापे । न०ब० ।

**अपुण्यकृत्** त्रि० पुण्यं न करोति अपुण्यं पापं वा करोति । ताच्छील्ये क्विप् १ पुण्याकर्त्तरि २ पापकारिणि च । "अभिषयैव दृष्टस्योर्वशः स्पृष्टस्यैव च । यः पिबेत् कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्" आप० स्मृतिः ।

**अपुत्र** पुंस्त्री नास्ति पुत्रो यस्य । १ अजातपुत्रे २ मृतपुत्रे च । "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेति" स्मृतिः "नापुत्रस्य लोकोऽस्ति" श्रुतिः । "अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थितेति" वृहन्मनु० । "अपुत्रस्यैव या कन्या सैव पिण्डप्रदा भवेदिति" स्मृतिः पुत्रपदञ्च पुत्रपौत्रप्रपौत्रपरमिति दायभागादयः वा कप् । अपुत्रकोऽप्युक्तार्थे ।

**अपुनर्** अव्य० न पुनः न०त० । पुनर्वारभिन्ने सकृदर्थे "अगात्पुनस्तमपुनश्चकार" ऋ० १०,६८,१० ।

**अपुनरावृत्ति** स्त्री न पुन० आवृत्तिः संसारगतिर्यतः ५ब० । निर्वाणमुक्तौ "न स पुनरावर्त्तते" इति श्रुतेस्तथात्वम् । ६ब० । पुनर्गमनशून्ये त्रि० । अर्थाभावे अव्ययी० । पुनरावृत्त्यभावे अव्य० ।

**अपुनर्भव** पु० न पुनर्भवति संसारं भजतेऽस्मिन् भू—आधारे अप् । १ मोक्षे । करणे अप् न०त० । २ पुनर्भवाभाव हेतौ तत्त्वज्ञाने अभावार्थे न०त० । पुनरुत्पत्त्यभावे पु० ३ प्रशमने निवारणे, "रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्येति" वैद्यकम् । नास्ति पुनर्भवः पुनरुत्पत्तिरस्य ४ पुनर्जन्मशून्ये तत्त्वज्ञानवति जने ।

**अपुराण** त्रि० विरोधे न०त० । १ पुराणभिन्ने नवीने ।

**अपुष्ट** त्रि० पुष—कर्म्मणि क्त न०त० । १ अकृतपोषणे यस्य पुष्टिर्न कृता तस्मिन् ।

**अपुष्टता** स्त्री अपुष्टस्य भावः तल् । अपुष्टदुष्क्रमग्राम्यव्याहता-

साधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् इति" । विचित्रकार्य्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते" इति । एतेन "नमस्तत् कर्म्मभ्यो विधिरपि न येभ्यः प्रभवतीत्युक्तिस्तु प्रामादिकीत्यवसेयम् एवञ्च ईश्वराधिष्ठितकर्म्मभ्य एव तत्तत्फलोत्पत्तिरिति सुस्थम् । कर्म्मणामाशुविनाशिनामपि सूक्ष्मरूपेणैव स्वकारणेऽन्तःकरणे सत्त्वात् "क्षीयन्ते चास्य कर्म्माणि" इत्यादिश्रुतिः सङ्गच्छते तज्जन्यापूर्व्वस्वीकारे तु तत्र तज्जन्यक्षयेति भेदः । अतएव "ज्ञानाग्निः सर्व्वकर्म्माणीत्यादौ सूक्ष्मावस्थानां ज्ञानादेव क्षयः, स्थूलावस्थानामज्ञानानां तु भोगात्" इति वेदान्तिमते युक्तिरूहनीया । "आत्मान्तरगुणानामात्मान्तरेऽकारणत्वादिति" वै० सू० "आत्मान्तरस्य गुणानां पुण्यपापानामात्मान्तरेऽकारणत्वात् स्वर्गफलस्येति शेषः । "शास्त्रदेशितं फलमनुष्ठातरीति" जै० सू० । "आत्मान्तरे यौ सुखदुःखगुणौ तयोरकारणत्वात् प्रत्यात्मनियताभ्यामेव धर्म्माधर्म्माभ्यां सुखदुःखे, न व्यधिकरणाभ्याम् । अन्यथा येन यागहिंसादिकं न कृतं तस्य तत्फलं स्यादिति कृतहानिरकृताभ्यागमश्च प्रसज्येतेति" एतच्च सामान्यशास्त्रं विशेषशास्त्रेणापोद्यते तेन पितृयज्ञादेः पुत्रपूतत्वादिहेतुत्वमिति" वै० सू० उपस्कारः । तच्चापूर्व्वं त्रिविधं प्रधानापूर्व्वमङ्गापूर्व्वं कलिकापूर्व्वञ्चेति मीमांसकाः । तत्र दर्शपौर्णमासाद्यपूर्व्वं प्रधानापूर्व्वं तदेव परमापूर्व्वं, प्रयाजाद्यङ्गजन्यापूर्व्वमङ्गापूर्व्वं, तदवान्तरक्रियाकूटजन्यमपूर्व्वं कलिकापूर्व्वं तच्च व्रीहिप्रोक्षणाम्बुत्पवनादिजन्यं द्रव्यनिष्ठमिति मीमांसका तज्जन्यसंस्कारविशेष एव कलिकापूर्व्वतया व्यवह्रियते स चात्मनिष्ठ इति नैयायिकाः विस्तरस्तु कुसुमाञ्जली १ स्तवके दृश्यः । कलिकापूर्व्वञ्च परमापूर्व्वं जनयित्वा नश्यति । अङ्गापूर्व्वंस्तु परमापूर्व्वे विशेषमाधीयते इति भेदः तथा च अङ्गापूर्व्वसहितं परमापूर्व्वं विशिष्टफलं जनयति तद्विहीनन्तु स्वल्पं फलम् । अत एव प्रधानकरणे दैवात् यथाङ्गाकरणे न प्रधानस्य वैफल्यं किन्तु अल्पफलत्वमेवेति सिद्धान्तः । शेषाङ्गापूर्व्वाणां तु न फलजनकत्वम् प्रधानाविद्धे फलाभावात् । अतएव "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः । अप्रधानाक्रियायान्तु नावृत्तिर्न च तत्क्रियेति" छन्दोगपरिशिष्टे तथा व्यवस्थापितम् । इदञ्च परमापूर्व्वं फलनाश्यं तत्त्वज्ञाननाश्यं कर्म्मनाशाजलस्पर्शादिनाश्यञ्च । "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभमिति" "कर्म्मणास्त्वेव सर्व्वेषां भोगादेव क्षयो भवेदिति" च शास्त्रात् "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुनेति" गीतावाक्याच्च । सर्व्वकर्म्मपदेन च प्रारब्धकर्म्मातिरिक्तकर्म्माण्येवोच्यन्ते तेन प्रारब्धकर्म्मणां भोगादेव क्षय इत्यनुपदं लभ्यते । परमापूर्व्वञ्च नित्यकर्म्मणि प्रत्यवायापूर्व्वत्वेन मीमांसकैः व्यवह्रियते सन्ध्यावन्दनस्य किञ्चित्फलाजनकत्वात् । अर्थवादोपस्थापितब्रह्मलोकादिप्राप्तिरूपफलजनकत्वात् न तत्रापूर्व्वस्य फलाजनकत्वेन प्रत्यवायत्वमिति नैयायिकाः । अत एव चिन्तामणौ यत्रार्थवादिकं फलं न श्रूयते तत्र तत्त्वज्ञानसाधनत्वं गीतादिवाक्येन व्यवस्थापितं तच्च पूर्व्वं दर्शितम् । "न कलञ्जं भक्षयेदित्यादि निषेधस्यापि प्रत्यवायापूर्व्वजनकत्वमिति मीमांसकाः । तत्रापि प्रत्यवायाभावरूपफलाङ्गीकारात् प्रत्यवायमिति तत्त्वज्ञानप्रतिबन्धकाभावत्वेन तस्यापीष्टत्वादिति नैयायिकाः । अपूर्व्वस्यापूर्व्वशब्दवाच्यत्वे हेतुर्निरुक्तिः दर्शितः । "प्राग्भावनानिमित्तं विद्यमानोपलम्भनत्वात्" इत्येव व्याख्यातश्चैतत् अथशब्दे ११६ पृष्ठे तत्र पूर्व्वमविद्यमानत्वात् अपूर्व्वशब्दवाच्यतेति । वेदान्तिनस्तु कर्म्मणः सूक्ष्मावस्था, फलस्य पूर्व्वावस्था वाऽपूर्व्वमिति स्वीकुर्व्वन्ति तच्चानुपदं दर्शितम् । तत्त्वज्ञानेन कर्म्मक्षये कश्चिद्विशेषोऽभिधीयते । "तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" शा० सू० भाष्ये "अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते न वा क्षीयत इति संशयः किन्तावत् प्राप्तं फलार्थत्वात् कर्म्मणः फलमदत्त्वा न सम्भाव्यते क्षयः । फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता यदि तदन्तरेणैव फलोपभोगमपवृज्येत, श्रुतिः कदर्थिता स्यात् । स्मरन्ति च "नहि कर्म्म क्षीयत" इति । नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति । नैष दोषः प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहादिवत् । अपि च प्रायश्चित्तानां दोषसंयोगेन विधानात् भवेदपि दोषक्षपणार्थता नत्वेवं ब्रह्मविद्याया विधानमस्ति । नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्म्मक्षये, तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात् । नेत्युच्यते । देशकालनिमित्तापेक्षो मोक्षः कर्म्मफलवद्भविष्यति । तस्मान्न ब्रह्मविद्याधिगमे दुरितनिवृत्तिरित्येवं प्राप्ते ब्रूमः । तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्व्वाघयोरश्लेषविनाशौ भवतः उत्तरस्याश्लेषः पूर्व्वस्य विनाशः । कस्मात् ? तद्व्यपदेशात् । तथा हि ब्रह्मविद्याप्रक्रियायां

कश्चित् कालमनुवर्त्तेत एव । अपि च नैवात्र विवदितव्यं ब्रह्मविदः कश्चित् कालं शरीरं ध्रियते न ध्रियते वा इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देह-धारणञ्चापरेण प्रतिक्षेप्तुं शक्येत ? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्द्देशेनैतदेव निरुच्यते । तस्मादनारब्ध-कार्य्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय” इति भा० ।

**अपूर्व्वता** स्त्री अपूर्व्वस्य अन्यतोऽप्राप्तस्य भावः तल् । १ प्रमा-णान्तरागम्यत्वे “उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम् अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये २ इत्युक्ते तात्पर्य्याव-धारणहेतुभेदे च यथा छान्दोग्ये “तन्त्वौपनिषदं पृच्छामि” ब्रह्मणो मानान्तरागम्यत्वमुक्तम् ।

**अपूर्व्वपति** स्त्री न पूर्व्वः पतिर्यस्याः । कुमार्य्याम् । “अपूर्व्व-पतिं कुमारीमिति” सि० कौ० ।

**अपूर्व्ववाद** पु० अपूर्व्वमधिकृत्य वादः तत्प्रभुत्वो कथा । गङ्गेशोपाध्यायकृते शब्दचिन्तामण्यन्तर्गते ग्रन्थभेदे ।

**अपूर्व्वविधि** पु० अपूर्व्वे प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा—कि । अप्राप्तप्रापके लिङादिपदघटिते शब्द-विशेषे । यथा स्वर्गकामो यजेतेति लिङादियुक्तं वाक्यं प्रमाणान्तरेणाप्राप्तस्य स्वर्गसाधनत्वस्य यागे बोधयत् तथा । अपूर्व्वविधिरपि चतुर्विधः कर्म्मविधिः गुणविधिः विनि-योगविधिः प्रयोगविधिश्चेति । तत्र अग्निहोत्रं जुहोति इत्यादौ यागरूपे कर्म्मणि इष्टसाधनतायाः, कृतिसाध्य-ताया भावनाया वा मतभेदेन बोधनात् कर्म्मविधित्वम् । द्रव्यदेवतादिविधायकविधिर्गुणविधिः । यथा दध्ना जुहोत्यादिवाक्यं प्राप्तस्याग्निहोत्रस्यानुवादेनाप्राप्तगुणरूप-द्रव्यादेर्विधानात् । “ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि ऐन्द्र्या ऋचः गार्हपत्योपस्थाने विनियोजनात् विनियोग-विधिः । एवं तथा एवं कुर्य्यादित्यादि प्रयोगप्रापकोविधिः प्रयोगविधिः । यथा अधीत्य स्नायादित्यादि “उपसङ्क्रम्य-रित्वा मासमेकमग्निहोत्रं जुहोत्यादि च अयञ्च विधिष्ट-विधिरिति भेदः ।

**अपूर्व्य** त्रि० न पूर्व्वमर्हति यत् न०त० । पूर्व्वानर्हे “त्वं नो वायवेषामपूर्व्यः सोमानामिति” ऋ० १,१३४,६ ।

**अपृक्त** त्रि० पृच—क्त न०त० । १ असंबद्धे “अपृक्त एकाल् इति पाणिन्युक्ते वर्णान्तरादुक्ते २ एकवर्णे “वेरपृक्तस्य पा० ।

**अपृथक्** अव्य० न पृथक् । सहयोगे पूर्व्वापरयोरेकादेश रूपे अपृथग्भवने पृथक्साहित्यमपृथक्साहित्यञ्चेति सा-हित्यं द्विविधमिति वृद्धाः ।

**अपेक्षणीय** त्रि० अप+ईक्ष—कर्म्मणि अनीयर् । १ अनुरो-द्धव्ये अपेक्षाकर्म्मणि २ प्रतिपाल्ये च “आत्मा यत्नेन रक्षेोरणशिरसि पुनः सोऽपि नापेक्षणीय” इति नीति० ।

**अपेक्षा** स्त्री अप+ईक्ष—भावे अ । १आकाङ्क्षायाम्, सा च शाब्द-बोधजनिका “यत्पदेन विना यस्याननुभावकता भवेदित्युक्ता तत्पदे तदपेक्षारूपा । अपेक्षायाञ्च प्रायशोऽसमासो नेष्यते “सापेक्षे प्रायशो न स्यात् समासो वा कथञ्चन । सापेक्ष तद्विजानीयादसमस्तविशेषणम्” यथा प्रवीर पुत्रकाम्यति सुतस्य राजमातङ्ग इत्यादौ प्रत्ययसमासौ न स्तः । “सापेक्ष-त्वेऽपि गमकत्वात् समास” इति भाष्योक्तेः देवदत्तस्य गुरु-कुलमित्यादौ समास इति भेदः । ३ प्रयोजकत्वे तत्र ज्ञाने स्थितौ उत्पत्तौ वा इतरस्यानुरोधित्वम् ज्ञा-नादिकार्य्ये च यस्य यत्पदार्थज्ञानस्थानाद्यनुरोधः तस्य तदपेक्षा । अतएव तर्कग्रन्थे जगदीशेन “स्वापेक्षापादक प्रसङ्ग आत्माश्रय अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च प्राह्येत्यभिधाय एतद्घटज्ञानं यद्येतद्घटज्ञानजन्य स्यादे-तद्घटज्ञानभिन्न स्यादिति ज्ञप्तौ । घटोऽयं यद्येतद्घटजनक स्यात् एतद्घटभिन्न स्यादिति उत्पत्तौ, अयं घट यद्येतद्घट-वृत्ति स्यात् तथात्वेनोपलभ्येतेति स्थितौ च” स्वापेक्षा-पेक्षितत्वे उदाहृतम् । अनतिदूरे च “अपेक्षा चात्र साक्षात्-परम्परासाधारणी ग्राह्या” इत्युक्तम् । तेन साक्षात् परम्परया वा स्वज्ञानादिप्रयोजकत्वमपेक्षेति निष्कर्षः । स्वग्रहसापेक्ष ग्रहसापेक्षग्रहकत्वमन्योन्याश्रयलक्षणम् । २ अनुरोधे “सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः” रघु । ४ स्पृहायाञ्च “वसुमतीषु कामेषु निरपेक्षः परिव्रजेदिति” “आध्यात्मरतिरासीन निरपेक्षोनिरामिष इति” च मनुः । “निरपेक्षः विगतस्पृह इति” कुल्लूकभट्टः ।

**अपेक्षाबुद्धि** स्त्री अयमेकः अयमेकः इत्याकारिकायाम् अने-कैकत्वविषयिण्यां “अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते भाषा० परिभाषितायाम् बुद्धौ ।

**अपेक्षाबुद्धिज** त्रि० अपेक्षाबुद्धितो जायते जन—ड ५त० । न्यायोक्ते द्वित्वादिपरार्द्धान्ते संख्याभेदे । “द्वित्वादयः परा-र्द्धान्ता अपेक्षाबुद्धिजा मताः अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः अपेक्षाबुद्धिनाशाच्च नाशस्तेषां प्रकीर्त्तित” इति भाषा० । अस्यायमभिसन्धिः । यद्यपि द्वित्वादि समवायः प्रत्येकं घटादावस्ति तथापि एकोद्वाविति ज्ञाना-भावात् एको न द्वाविति ज्ञानाच्च द्वित्वादीनां पर्य्याप्तिसम्बन्धः कश्चित् सम्बन्धोऽनेकाश्रयो स्वीक्रियते पर्य्याप्तिसम्बन्धेन च

प्रत्येकं घटादौ न द्वित्वादि । तादृशबुद्धेश्च अपेक्षाबुद्धिसापेक्षत्वेन तत्सत्त्वे तथा ज्ञानं, तदसत्त्वे न तथाज्ञानम् । तत्र प्रथमम् अयमेकः अयमेक इत्याकारिका अपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः ततो द्वित्वद्वित्वत्वनिर्विकल्पकं ततो द्वित्वप्रत्यक्षम् । अपेक्षाबुद्धिनाशाच्च ततो द्वित्वनाशः इति । यद्यपि योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वेन ज्ञानमात्रस्य द्विक्षणस्थायित्वं तथापि अगत्या अपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं स्वीक्रियते अन्यथा निर्विकल्पककाले अपेक्षाबुद्धिनाशे द्वित्वस्य नाशः प्रसज्येत न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् विषयस्य प्रत्यक्षं प्रति कार्य्यकालवृत्तितयैव कारणत्वोपगमात् तथा च द्वित्वप्रत्यक्षमेवापेक्षाबुद्धिनाशकं नाश्यदिति कल्प्यते । कालान्तरे द्वित्वप्रत्यक्षाभावाच्च अपेक्षाबुद्धिनाशात् द्वित्वादिनाशइति कल्प्यतइति सि०मु० ।

**अपेक्षित** त्रि० अप+ईक्ष–कर्म्मणि क्त । १ अपेक्षाविषयभूते २ आकाङ्क्षिते च । "अपेक्षितक्रियस्येति निधाऽप्यादानमिष्यते" इति हरिः ।

**अपेक्षिन्** त्रि० अप+ईक्ष–णिनि स्त्रियां ङीप् । अपेक्षावति स्वकार्य्यजननादौ इतरप्रयोजकतापेक्षिणि च ।

**अपेक्ष्य** त्रि० अप+ईक्ष–कर्म्मणि ण्यत् । १ अपेक्षणीये । भावे ल्यप् । अनुरुध्येत्यर्थे अव्य० "किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिप" इति किरा० ।

**अपेत** त्रि० अप+इण–कर्त्तरि क्त । १ अपगते अपसृते । "य प्रव्रजन्तमनुमेतमपेतकृत्यमिति" भाग० २ पलायिते च ।

**अपेतराक्षसी** स्त्री अपेत राक्षस इव पातकं यस्याः गौ० ङीप् । तुलस्याम् राजनि० । तस्याः राक्षसतुल्यपापादिहरणात्तथात्वम् । "दृष्ट्वा दहति पापानि ध्याता हरति पातकम् । हरितकी हरेद्रोग तुलसी हरते भयम्" आ०त० स्कान्दोक्तेस्तस्याः पापादिहारित्वम् ।

**अपेय** त्रि० पा अर्हाद्यर्थे यत् न०त० । १ स्मृतौ निषिद्धपाने मद्यादौ "मद्यमदेयमपेयमनिग्राह्यमिति" ति०त०छन्दो० एवमन्यानि अपेयानि स्मृतौ प्रसिद्धानि यथा "पञ्चपञ्चनखं क्षीरं यत्र विन्नयितं पयः । अनिर्दशाहगोः क्षीरं पीत्वा चान्द्रायणं चरेदिति" प्रा० त० स्मृतिः । "अपः सुराभाजनस्था मद्यभाण्डे स्थितास्तथा पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पय" इति मनुः । "शुनोच्छिष्टाः स्थिता ह्यापो यदि कश्चित् द्विजः पिबेत् शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण वर्त्तयेदिति" यमः । "स्त्रियोच्छिष्टाः स्थिता आपो यदि कश्चित् पिबेद्द्विजः । शङ्खपुष्पीत्यादि० यमः । "शूद्रोच्छिष्टाः स्थिता ह्यापो यदि कश्चित् पिबेत् द्विजः । कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेदिति" हारीतः "श्वमार्जारस्पृष्टभाण्डे तु रेतोमूत्रविदूषिते । जलक्षीरादिकं पीत्वा तप्तकृच्छ्रं समाचरेत्" बहुमो० । "चण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत् प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते । चरेत् सान्तपनं विप्र प्राजापत्यन्तु भूमिपः । तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्य निर्द्दिशेत्" आप० । "चण्डालपरिग्रहीत योऽज्ञानाज्जलं पिबेत् । तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यश" इति आप० । 'यस्तु चण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः स तु सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः" अङ्गिरा । "किञ्चिदिति जलक्षीरादिकमिति" प्रा०वि० । आपत्कालादौ न दोषः । "आमं मांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः । म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः" यमः "अन्त्यजैः खानिताः कूपास्तडागानि तथैव च । एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति" आप० । जलान्तरालाभे तु तदप्यापदि पाठं पठ्यते 'अन्त्यजैः खानिते कूपे सेतौ वाप्यादिके तथा तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते इति हरयाता० । "इदमत्यन्तापद्विषयमिति" प्रा० वि० । "भाण्डस्थिता अभोज्यानामपः पीत्वा पयो दधि । ब्राह्मणो क्षत्रियो वैश्य शूद्रश्चैवोपसर्पति ब्रह्मकूर्चोपवासेन याज्यवर्णस्य निष्कृति" परा० । उपसर्पति उपसर्पेत् प्रायश्चित्तमिति शेष तदेवाह ब्रह्मकूर्चोपेति । "यदि विप्र प्रमादेन शूद्रतोय पिबेत् स्वयम् । उपोष्य त्रिसप्ताहा पञ्चगव्यस्य कुशस्य च । एतेषामुदकं पीत्वा तेन शुद्धिमवाप्नुयात्" शाता० । अत्रापवादः । "नवभाण्डेषु पानीयं विट्शूद्रपतितजन्मनाम् । पेयं तदाशु विप्राणां पयो दधि तथैव च" शाता० । "घृतं तैलं पयः क्षीरं तथैवेक्षुरसो गुडः । शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति" शाता० । "घृतादीनामाकरभाण्डस्थितानां न दोष" शङ्ख । "पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्य्याद्वामहस्तेन वा पुनः" मनु । "वामेन दोषबिन्दिति" प्रा०वि० । "प्रपास्वरण्ये घटके च कूपे द्रोण्यां जलं कोषगतास्तथापः । अतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्ताः" इति यम । प्रपाजलं, कूपजलादुत्थघटस्थजलं द्रोणी दारुपात्रविशेषः तज्जलं, चर्म्मादिकोषगतं जलञ्च शूद्रादानीतमपेयम् "आपदि तु तदेव जलं भूमिगतं कृत्वा ततः पात्रान्तरेणोद्धृत्य पेयमिति"

प्रा॰वि॰। एतद्विषये यम। द्रोण्यामायसशुक्तायां चर्म्मे भाण्डे तथा। स्थामणपाजलञ्चैव पीत्वापन्नस्तु न दुष्यतीति लघुहारीत। तदपि भूमिगतं सत्यैव पेयं पूर्व्ववचनैकवाक्यत्वात्। "प्रावर्त्तके सेचके च कूपे अखाते" प्रा॰वि॰। "कूपे विण्मूत्रसंसृष्टे पीत्वा तोयं द्विजोत्तम। त्रिरात्रेण विशुध्येत" अङ्गिरा। "जलाशये तथान्येषु स्थावरेषु महीतले। कूपवत् कथिता शुद्धि महत्सु च न दूषणमिति" विष्णुः। "महत्स्वप्यशुचिशङ्कया तीर्थसमीपतोयग्रहणवर्ज्जनमिति" प्रा॰वि॰। यथोक्तं देवलेन। "तत्राक्षोभ्यतडागानि नदीवापीः सरांसि च चण्डालाद्यशुचियुक्तानि तीर्थतः परिवर्ज्जयेदिति"। "हतपञ्चनखात् कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेदित्यादि" विष्णु "अत्यन्तोपहतात् अमेध्यादिनेति" प्रा॰वि॰। "यस्तु कूपात् पिबेत् तोयं ब्राह्मणः शवदूषितात् उपवासत्रयं कुर्य्यादित्यादि" लघुहा॰। "क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदि दृश्यते। पयः पीत्वा त्रिरात्रेण इत्यादि" देवल। "पीतशेषं पिबेत् विप्रैर्विप्रः स्यादन्यथा पशुरिति भवि॰पु॰। "श्लेष्मोपानहविण्मूत्रं स्त्रीरजो मद्यमेव च। एभिः संदूषिते कूपे तोयं पीत्वा कथं विधिः। एकं द्व्यहं त्र्यहञ्चैव द्विजातीनां विशोधनमिति" अत्रि। अत्रापवादमाह स एव "गोदोहने चर्म्मपुटे च तोयं यन्त्राकरे कारुकशिल्पिहस्ते। स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि। प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे। आरब्धयज्ञेषु महोत्सवेषु तथैव दोषा न विकल्पनीयाः। शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्। चर्म्मभाण्डैस्तु धाराभिस्तथा यन्त्रोद्धृतं जलमिति"। प्रागुक्तवचनजातैः चर्म्मभाण्डस्थितयन्त्रोद्धृतयोरपेयत्वेन निषेधे प्राप्ते चर्म्मभाण्डैरुद्धृतयन्त्रोद्धृतस्य सन्ततधारयोद्धृतस्य एतत्त्रयं यदि महीगतं गोतृप्तिकरं प्रकृतिस्थमविकृतं च तदा शुचीत्यनेन प्रतिप्रसूतम् महत्सु च न दुष्यतीत्यनेन महत्त्वस्यापेक्षाकृतत्वेन अव्यवस्थिततया गोतृप्तिकरत्वेन विशेषणात् तथाभूतं महत्त्वमेव प्रकृते विवक्षितम्। तदपि जलान्तराभावे शुद्धमित्यवधेयं प्रागुक्तवचने आपद्गतस्यैव भूमिगतं कृत्वा तत उद्धृत्य पानविधानेन तदेकवाक्यत्वात् तथैवेह ज्ञेयम्। एतच्च स्वभावतः पेयजलस्यैव—चर्म्मभाण्डादिस्थितिरूपदोषप्राप्तिप्रशमार्थम् न तु अपेयम्लेच्छादिखानिततोयस्यापि पेयताविधानार्थं तथात्वे वाक्यभेदापत्तेः न च हिरण्योदकस्पर्शस्य अस्यैव सामान्यशास्त्रनिषिद्धापेयजलस्य शुद्ध्यर्थतापरं स्वभावत पेयस्यैव चर्म्मभाण्डादिगतत्वेन दोषपरिहारार्थतापरतयैव सर्व्वेषामप्यस्ते विधिद्वयकल्पनाया अन्याय्यत्वात् एतेन इदानीन्तनम्लेच्छराजखानितस्य जलस्य यन्त्रोद्धृतत्वेन शुद्धताकीर्त्तनं प्रत्युक्तमेव तस्य म्लेच्छखानितजलत्वेन स्वभावतोऽपेयत्वात् जलान्तरस्य गङ्गाजलस्य च सन्निकृष्टत्वादापद्विषयत्वाभावात् प्रत्युत तस्य विशेषणाच्च तस्य रुग्णार्त्तविशेषेण निकारविशेषश्रवणादेतद्वचनस्यापि तत्राप्रवृत्तेश्च। किञ्च "विषितृषा तु हृदये यस्मिन्वै प्रजायते सहस्रं स्वन्तु विशेय शरीरमन्नन्तु स्वभावत" इति ब्रह्मपुराणेन अमेध्यस्पर्शवत्त्वेन पङ्क्तिबाह्यादेर्भोजननिषेधात् म्लेच्छामेध्यादिसंसर्गवत्त्वेन पङ्क्तितत्रास्य जलादेरप्यपेयतेति गम्यते। शशिसूर्य्यकिरणासृष्टतया च तस्य व्यापन्नजलतया वैद्यकोक्तदोषाधायकत्वेनापि अपेयता। "अपि चण्डालभाण्डस्थं तज्जलं पावनं महत्" इत्युक्तेस्तत्खाते गङ्गाजलानामवाहितत्वात्तस्य स्वभावत शुद्धतेति तु न यद्यत्र "सर्व्वत्र पावनी गङ्गा त्रिषु स्थानेषु दुष्यति म्लेच्छसंसर्गे सुराभाण्डे मेघादिजलमिश्रणे" इति वचनात् तस्य मेघादिजलसम्पर्कं गङ्गायाम्लेच्छादिसंसर्गस्य प्रत्यक्षदर्शनाच्च स्वभावतः शुद्धत्वाभावात्। धाराया प्रतिप्रसवमाह बौधायन "अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः। आकरा शुचयः सर्व्वे वर्ज्जयित्वा सुराकरमिति" "काले नवोदकं शुद्धं न पातव्यन्तु तत्त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशमिति" आ॰त॰स्मृति। "स्नानमाचमनं दानं देवतापितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः"। आचमननिषेधात् पानादेः सुतरां निषेध। "यद्वद्वय श्रावणादि सर्व्वा नद्यो रजस्वलाः। तासु स्नानादिकं वर्ज्यं वर्ज्जयित्वा सुरापगाम् इति" छन्दो॰प॰। "यैः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च महोदधिरिति" मनुः ये विप्रै "अन्यथा हि कृतश्चैव। देवयोनिरपांपतिः। कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिरिति भा॰व॰प॰ स्पर्शनिषेधात् पाननिषेध। "अनिर्द्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा। आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः। आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना। स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व्वशुक्तानि चैव हि" मनु। "गोः क्षीरमनिर्द्दशायाः सूतके अजामहिष्योश्च नित्यमपेयमौष्ट्रमैकशफञ्च स्यन्दिनीनाञ्च याश्च सत्कव्यपेताः" वशि॰। "वर्ज्जयेद्गोरवत्सायाः पयश्चैवान्यवत्सया। आरण्यानाञ्च सर्व्वेषां वर्ज्जयित्वा तु माहिषमिति" यम। "सर्व्वासां द्विस्तनीनां क्षीरं वर्ज्यमजावर्ज्जमिति" षड्॰ "गोजामहिषीवर्ज्जं

विवर्द्धे चास्य भुङ्क्ते भस्म तद्द्वारेण भोक्ता तद्रूप्य-मर्हति" कात्या०। [भ्रान्तं प्रत्यक्षं निर्विकल्पकम्' स०द०।

**अपोढ** त्रि० अप–वह–क्त। १ निरस्ते त्यक्ते २"कलनापोढम-

**अपोदक** त्रि० अपगततदुदक सुल्लितत्वात् यस्य। १ अप्र-विटोदके "तमूकृपुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोद-काभिः" ऋ०१,११६,२। अपगतं फलेषूदकं यस्याः उक्त-पुंस्कत्वात् स्त्रियामत इत्वं वा। इत्यपकोऽपोदिकापि (प्र) पूतिकायाम् तत्फलेषु उदकाभावात्तथात्वम्। अप-गतमुदकं यस्मात् ५ब०। जलापकर्षहेतौ विषादौ "यत्र अपोदकं विष तस्य एतास्मप्रभवम्" अथ० ५,१३,१।

**अपोनप्त्रि(प्त्री)य** त्रि० अपोनपात् देवताऽस्य घ–छ वा त्रि०। अपोनपाद्देवताके हविरादौ। [मयट्। जलमये।

**अपोमय** त्रि० अपः जल तदात्मक तद्विकारत्वात् अपस्+

**अपोह** पु० अप+ऊह गत्यादौ बा० भावे क। १ त्यागे २ अतद्व्यावृत्तौ तन्निमित्तस्य व्यावृत्तेरपि त्यागविशेषरूपत्वा-त्तथात्वम्। "तन्नामपोहो वा शब्दार्थ" इति काव्यप्र० "अपोहः अतद्व्यावृत्तिरिति" महेश्वर। ऊहस्तर्कः अपः विपरीत्ये प्रा०स०। अपरतर्कनिरासाय कृते विपरीततर्के स च "शुश्रूषा श्रवणं चैव ग्रहणं धारणा तथा। ऊहो-ऽपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः इति हेमचन्द्रोक्तः बुद्धिगुणभेदः। "स्वयमूहापोहासमर्थे" इति पा०भा०। भावे ल्युट्। अपोहनमप्यत्र न०। "मत्तः स्मृतिर्ज्ञान-मपोहनञ्चेति" गीता।

**अपोहनीय** त्रि० अप–ऊह–अनीयर्। अपरकृततर्कनिर-सनेन तर्कणीये, "कृतिमपोहनीयाश्च" कात्या० २२,६,२१।

**अपोह्य** त्रि० अप–ऊह गत्यादौ कर्मणि यत्। अपगमनीये "त्याज्ये एतैर्द्वैरपोह्यः स्यादेनोद्विसासङ्कुलम्" मनु अप+वह–ल्यप्। दूरीकार्येऽर्थे अव्य०।

**अपौरुष** त्रि० नास्ति पौरुषमस्य। विक्रमशून्ये। अभावे न०त०। पौरुषाभावे न०।

**अप्चर** त्रि० अप्सु चरति चर–ट। १ जलचरे जन्तौ स्त्रियां ङीप् "ङीप्याद्याद्याश्रितास्तेषां भागशोऽथाप्-चराः" इति मनुः ङीपि दुर्लभि।

**अप्नु** न० आप्यते भोगाय जीवेन–आप–ह्नुन् ह्रस्वश्च। १शरीरे २ सुतसदृशसोमे च। "अवाप्नवे द्वितीये वामाकृतिं जु-होति शत०ब्रा०१,६,१८, अप्नुः सुतसदृशः सोमः भा०।

**अप्नुर्** पु० अप्नुरः अवदानाय सतोर्ति तुर–वेगे क्विप्। अव-दायके इन्द्रे तस्य सोमपायकत्वेन तत्प्रेरकतया अवदा-तत्वात्तथात्वम्" "यज्ञेन गातुमप्तुरो विविद्रिरे ऋ०२,२१,५, "अप्नुर आपा प्रेरकादिन्द्रात्" भा०। २तद्दायकेऽग्न्यादौ च तत्वाग्न्यादे "आप्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिरिति" मनूक्तेः अप्नुप्रेरकात्वम्।

**अप्नुर्य्य** न० अप्नुरो भावः बा० वेदे यत्। "अवप्रेर-कत्वे लोके तु ष्यञ् आप्नुर्य्यमिव। "इन्द्राग्नी। तवि-षाणि वां सधस्थानि प्रयांसि च युवोरप्तुर्यं हितम्" १२,८, अप्नुर्य्यं वृष्टिप्रेरकत्वम् भा०युवोर्युवयोरिन्द्राग्न्योः

**अप्तोर्याम** पु० अप्तोर्यहस्य यामकत्वाद्याम इव अलुक्स०। अग्निष्टोमाङ्गयागभेदे "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्या अग्निष्टोमस्य देवयाजकाङ्गकत्वात्तथात्वम्। "सो-ऽप्तोर्यामेण यजेत" कात्या० ८,११,१०, "बहुसवे अत्यग्नि-ष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः कात्या० १०,६,२६,।

**अप्त्य** त्रि० अप्सु देवे भव यत् वेदे टिलोप। १अपत्ये निरु० २देवकर्मणि स्थिते च "पूर्व्ये कर्मे रजसो अप्नस्य" ऋ०१,१२४,५"अप्नस्य कर्मणि स्थितस्येति" भा०

**अप्नःस्थ** त्रि० अप्नसि कर्मणि तिष्ठति अधिकृतत्वात् स्था क उत०। १ कर्मण्यधिकृते "संयाश्चप्नःस्थो अपसेव" ऋ० ६, ६७,३। "अप्न स्थ कर्मण्यधिकृत" भा०।

**अप्नराज** पु० अप्नसां कर्मणां राजा प्रेरकत्वात् टच् समा० वेदे पु० सलोपः। कर्मप्रेरके। "युवं ह्यप्नराजावसी-दतम्" ऋ० १०१३२७।

**अप्नवान** पु०अप्नसा कर्मणा वान गति सङ्गतिरस्य। भृगुवंश्ये, ऋषिभेदे, "यमप्नवानो भगवो विरुरुचु ऋ०४,७,१, अप्न-वान भृगुवंश्यो कश्चिदृषिः, भा०। "और्वभृगुवदप्न-वानवदाहुवे अग्निं समुद्रस्म्" ऋ०८,१०२,४, अस्यैव पञ्चादिगोत्रप्रवरत्वम् "वत्सानां भार्गवच्यवनाप्नवानौर्व्व-जामदग्न्याः" इति "भार्गवौर्वजामदग्न्याः" इति वा "भार्गवच्यवनाप्नुवानाः" इति वा "वेदानां पञ्च, भार्गवच्य-वनाप्नवानौर्ववैदा." इति गोत्रप्रवरा०। पञ्चानामाप्नुवतः प्रवरत्वकल्पनं प्रवराध्यायविरुद्धत्वाद्धेयम्। अप्नसो वा-नवत्त्वेन मानमस्य पु० सलोपः। बाहौ निरु०।

**अप्नस्** त्रि० आप–असुन् नुट् ह्रस्वश्च। १ कर्मणि निरु०। "क्रियातो विभागः विभागात् पूर्व्वदेशसंयोगनाशकात उत्तरदेशसंयोग" इत्युक्तेः संयोगहेतुत्वात्तथात्वम् "तद्देवेषु चकृषे भद्रमप्न ऋ० १,११३,६। "अप्न, कर्म' भा०।

**अप्रतिम** त्रि० नास्ति प्रतिमा उपमा यस्य । अतुल्ये "अनुपमे- "त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे" इति रामायणम् ।

**अप्रतियोगिन्** त्रि० नास्ति प्रतियोगी तुल्यरूप यस्य । स्त्रियां ङीप् । १ अनुपमे । प्रतियोगी अभावसम्बन्धी न०त० । २ अभावसम्बन्धिभिन्ने । "अथ वा हेतुमन्निष्ठ- विरहाप्रतियोगिना साध्येन हेतोरैकाधिकरण्यं व्याप्ति रुच्यते" भाषा० । यस्याभाव स यत्र प्रतियोगीति वृद्धा ।

**अप्रतिरथ** पु० नास्ति प्रतिरथः प्रतियोद्धा यस्य । १ प्रति- योधशून्ये। नास्ति प्रतिरथ तुल्य मङ्गलार्थत्वेनास्य।२यात्रा मङ्गलार्थे सामभेदे।"एष सोऽप्रतिरथोऽथ य स इन्द्रस्तति- रिति""मध्या दक्षिणतोऽप्रतिरथ जपति"इति च शत०ब्रा०

**अप्रतिरव** त्रि० न प्रतिकूलो रव प्रतिरव स नास्ति यत्र । समेदं द्रव्यं त्वया न भोक्तव्यमित्यादि प्रतिषेधकवचनशून्ये भोगे । "अप्रतिरवं विप्रतिपत्तिवर्जितं भोगनिमित्ता स्वामि- र्भवति" मिता० ।

**अप्रतिरूप** त्रि० नास्ति प्रतिरूपस्तुल्यरूपो यस्य । असदृशे ।

**अप्रतिरूपकथा** स्त्री नास्ति प्रतिरूपा प्रत्युत्तरीभूता कथा यस्या । उत्तरवाक्यरहितायां वाचि । [पराक्रमे ।

**अप्रतिवीर्य्य** त्रि० न प्रतिरुद्धं वीर्य्यं यस्य । अन्यैरनिरोध्य

**अप्रतिषिद्ध** त्रि० न प्रतिषिद्धम् । अनिषिद्धे "अप्रतिषिद्धमनु- मत भवतीति" न्याय "सौवर्णराजतौम्बरखड्गमणिमय- पात्राणामन्यतमेषु अप्रतिषिद्धेषु वेति" आ०त० गोभिल "अप्रतिषिद्धानि कदलीपत्रशणादीनि" रघु० ।

**अप्रतिष्कुत** त्रि० प्रति+स्कु-क्त न०त० वेदे षत्वम् । १अप्रतियत्निते "स वीरो अप्रतिष्कुत" ऋ० ७,३२,६, "अप्रतिमतोऽप्रतियत्नितो वा" भा० २अप्रतिगते च ।

**अप्रतिष्ठ** न० नास्ति प्रतिष्ठा यस्य । १अन्याधारशून्ये स्वाधारप्रतिष्ठिते ब्रह्मणि । "स भगव कस्मिन् प्रति- ष्ठितः स्वे महिम्नीति"श्रुतेस्तस्यान्याधारशून्यत्वात्तथात्वम् । २अनात्रवे ३निष्फले। 'सोमविक्रयिणे विष्ठा भिषजे पूय- शोणितम् । नष्टं देवलके दत्तमप्रतिष्ठ तु वार्द्धुषौ" मनु ४प्रतिष्ठाशून्ये च त्रि०। अभावे न०त० । ५प्रतिष्ठाभावे स्त्री । -अप्रतिष्ठितमप्यत्र । स च विष्णौ पु० । "अपा- निधिरधिष्ठानमप्रमत्तोऽप्रतिष्ठित" इति विष्णु सह० ।

**अप्रतिसंख्य** त्रि० न प्रतीता संख्या यस्य उत्तरपदलोप । अयमेक अयमेव इत्याकारापेक्षाबुद्ध्यभावेन १प्रत्येक- संख्यायकत्वाभावादननुपलब्धसंख्याके वस्तुनि । प्रतिसंख्या बुद्धिविशेषः। अभावे न०त० । २विशेषबुद्ध्यभावे स्त्री ।

**अप्रतिसंख्यानिरोध** पु० न प्रतिसंख्यया बुद्ध्या निरोध' । १ बौद्धविशेषकल्पिते अबुद्धिपूर्व्वके भावविनाशे । तद्विशेष बौद्धग्रन्थे दृश्यते । सोऽयम् प्रतिसंख्यानिरोध "प्रति- संख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" शा०सू० भाष्या- ख्यात । "अपि च वैनाशिका कल्पयन्ति बुद्धिबोध्यं त्रयादन्यत् संस्कृत क्षणिकञ्चेति" तदपि त्रयं प्रति- संख्याऽप्रतिसंख्यानिरोधावाकाशञ्चेत्याचक्षते । त्रयमपि- चैतदवस्तु अभावमात्र निरुपाख्यमिति मन्यन्ते बुद्धिपूर्व्वक किल विनाशो भावानां प्रतिसंख्यानिरोधोनाम भाष्यते तद्विपरीतोऽप्रतिसंख्यानिरोध आवरणाभावमात्रमा- काशमिति प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसम्भव इत्यर्थ । कस्मात् ? अविच्छेदात् तौ हि प्रतिसंख्याऽप्रति- संख्यानिरोधौ सन्तानगोचरौ वा स्याताम् भावगोचरौ वा। न तावत् सन्तानगोचरौ सम्भवत , सर्व्वेष्वपि सन्तानेषु (ज्ञानप्रवाहेषु) सन्तानिनामविच्छिन्नफलहेतुभावेन सन्तान विच्छेदस्यासम्भवात् नापि भावगोचरौ, नहि निरन्वयो निरुपाख्योविनाश सम्भवति सर्व्वास्ववस्थासु प्रत्यभिज्ञाबलेन- अन्वयाविच्छेददर्शनात् अस्पष्टप्रत्यभिज्ञास्ववस्थासु क्वचिद्दृष्टे नान्वयाविच्छेदेन अन्यत्रापि तदनुमानात् । तस्मात् पर- कल्पितस्य निरोधद्वयस्यानुपपत्तिरिति" शङ्करभाष्यम् ।

**अप्रतिश्रुत** त्रि० न०त० । अनङ्गीकृते दातव्यत्वेनास्वीकृते ।

**अप्रतिहत** त्रि० न प्रतिहतोऽभिभूत प्रतिरुद्धो वा न०त०। अन्यैरनभिभूते २अप्रतिरुद्धे च । [२निरवयवे ब्रह्मणि न०।

**अप्रतीक** त्रि० नास्ति प्रतीकमेकदेशो यस्य । १ सम्पूर्णे

**अप्रतीक्षा** स्त्री न प्रतीक्षा अपेक्षया कालयापनम् अभावे न०त० । १ प्रतीक्षाभावे कार्य्यजननाय इतरापेक्षया कालयापनाभावे २इतरानपेक्षया त्वरितकरणे । न०ब० । ३प्रतीक्षाशून्ये "अथाप्रतीक्षं पुनरायन्ति" शत०ब्रा० ।

**अप्रतीत** त्रि० प्रति+इण-क्त प्रतीत. परिज्ञातः प्रतिगतश्च न० त० । १ प्रतिगतभिन्ने "सहस्रसां वाजिनमप्रतीतम् ऋ० १,११७,६,। "अप्रतीत यत्नुभिरप्रतिगतम्" भा० "मरुत्वतो अप्रतीतस्य" ऋ०। ५,४२,६, "अप्रतीतस्य" प्रतिगतस्य भा० २अपरिज्ञाते 'देवेभिर्विश्वतो अप्रतीत" ऋ० १,४६,२, "अप्रतीतः एतावदस्य सामर्थ्यमित्य- परिच्छिद्यमानः" भा० ३ अपकायिते च ।

**अप्रतीति** स्त्री० अभावे न०त० । ज्ञानाभावे "न स्फोटः प्रतीत्य- प्रतीतिभ्याम्" सां० सू० ।

**अप्रतीत्त** त्रि० प्रति+दा-क्त प्रतीत्तं प्रतिदत्तं न०त० ।

**अप्रमित** त्रि० न प्रमितः न०त०। १अपरिमिते २अनुपलब्धे च।

**अप्रमीय** त्रि० प्र+मा–बा० कर्मणि य०न०त० । अप्रमेये । "गजवाजिसहस्राणि वाऽप्रमीयाः प्रमीयन्ते" श्रुतिः ।

**अप्रमूर** त्रि० प्र+मूर्च्छा–क्विप् प्रमूः मूर्च्छा अस्त्यर्थे कृशादि० र न त० ।१मूर्च्छायुक्तभिन्ने अमूर्च्छिते । "ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः ऋ० १,९०,२, "अप्रमूराः अमूर्च्छिताः" भा०।

**अप्रमृष्ट** त्रि० प्र+मृष–क्त न०त० । १ असोढे अक्षान्ते । प्र+मृज–क्त न०त० । २ अदृष्टे ३अप्रोञ्छिते प्र+मृष –क्त न०त० । ४अज्ञाते च ।

**अप्रमृष्य** त्रि० न प्रमृष्य प्र+मृष–क्यप् न०त० । १ बाधितुमशक्ये । "सुदासं तदेकृणो अप्रमृष्यम्"ऋ० ६,२०,७ । "अप्रमृष्यं केनाप्यबाध्यम्" भा० ।

**अप्रमेय** त्रि० प्रमातुं ज्ञातुं परिच्छेत्तुं वा योग्यं न०त० १अपरिच्छेद्ये २वस्तुसत्त्वकयोर्व्यवस्थाति ३इदमित्थमिति निर्देष्टुमशक्ये "त्वमेकोह्यस्य सर्वस्य विधानस्य स्वयम्भुव । अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित्प्रभु" मनु० "स्वयम्भुवोऽपौरुषस्य विधानस्य वेदस्य" कुल्लू० । 'अप्रकल्प्याप्रमेयञ्च वेदशास्त्रमिति स्थितिः"मनु । ४ ब्रह्मणि न० केनापि प्रमाणेन तस्य प्रमातुमशक्यत्वात् । वेदान्तिमते हि प्रमाणानि षट् प्रत्यक्षानुमानशब्दोपमानार्थापत्तियोग्यानुपलब्धिभेदात् तत्र परब्रह्मण न प्रत्यक्षप्रमाणचक्षुरादिगम्यता रूपाद्यभावात् "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदिति" श्रुतौ तस्य रूपाद्यभावस्योक्तेः । नापि अनुमानगम्यता व्याप्तिलिङ्गाद्यभावात् "असङ्गोऽयं पुरुष" इति श्रुत्या तस्य सर्वसङ्गशून्यत्वोक्तेः नाप्युपमानगम्यता निर्धर्म्मकत्वेन, तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वलक्षणस्य सादृश्यस्य तत्राभावात् । न चार्थापत्तिगम्यत्वम् किञ्चिद्वस्तु विना अनुपपद्यमानस्यैवार्थस्यार्थापत्तिप्रमाणवेद्यतया तल्लिङ्गवस्त्वभावेन तत्र तदसम्भवात् । न्यायमते च अर्थापत्तेर्व्यतिरेकव्याप्तिहेतुकानुमानेष्वन्तर्भावेण तल्लिङ्गस्य तत्राभावात् । योग्यानुपलब्धेरभावमात्रप्रमाणत्वात् परब्रह्मणश्च सदात्मकत्वेनाभावरूपत्वाभावात् । नापि शब्दप्रमाणवेद्यत्वम् तत्र शब्दबोधोपायशक्त्यादेरभावात् अतएव "यद्वाचा न मनुते येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुत्याऽस्य वाग्विषयत्वं निराकृतम् । न च लक्षणया तद्बोधः, लक्ष्यसम्बन्धरूपलक्षणया निर्धर्मके तदिव-



प्रवृत्तेः । अतएव "ब्रह्मन् ! ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः । कथं चरन्ति ? श्रुतयः साक्षात् सदसतः परे" इति भागवते गुणवृत्तिश्रुतिगोचरताशून्यत्वमस्योक्तम् । न च प्रमाणागोचरत्वे तस्य कथं सिद्धिः ? कथं वा "तन्त्वौपनिषदं पुरुषं वेदेति" श्रुतौ "शास्त्रयोनित्वादिति" शा० सूत्रे च तस्य उपनिषद्वेद्यत्वमुक्तं संगच्छताम् ? शास्त्रजनितबुद्ध्यैव तस्य विषयीकरणात् तथात्वसङ्गतेः । तथा च शास्त्रजन्यान्तःकरणविषयत्वमेव तस्य न तु तदवच्छिन्नचैतन्यविषयतापि यथोक्तं "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति" फलस्य प्रतिविम्बस्य बुद्धिवृत्तौ फलचिदाभासस्तद्व्याप्यत्वं तद्विषयत्वं तेन यथा घटपटादीनां तदाकारबुद्धिवृत्तिप्रतिफलितेन चिदाभासेनैव प्रकाश्यता, न तथा ब्रह्मणः स्वप्रकाशतया तस्य इतराप्रकाश्यत्वात् किन्तु स्वयं प्रकाश्यता न तु तत्रान्यापेक्षास्ति । परन्तु स्वाज्ञाननाशायैव बुद्धिवृत्तेरपेक्षामात्रं सा च शब्दजनितेति उपनिषद्वेद्यता इत्युभयश्रुतिसामञ्जस्यम् । वाचस्पतिमते तु शब्दादपि अखण्डाकारा काचित् दशमस्त्वमसीत्यादिवत् मनोवृत्तिरुदेति तद्विषयत्वादस्य शास्त्रवेद्यता । "मनसैवानुद्रष्टव्यमिति" श्रुतेस्तस्य मनोमात्रवेद्यत्वेऽपि "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति" शास्त्रात् मनःसंस्कारे च शास्त्रापेक्षणात् शास्त्रवृत्तिवेद्यता । न च मनोवृत्तिवेद्यत्वेऽप्रमेयत्वहानिः । असंस्कृतमनोविषयत्वाभावेनैव तथात्वात् "अवाङ्मनसगोचरमिति" वाक्यस्यापि तत्रैव तात्पर्य्यात् । मनोविषयत्वोक्तिरपि अज्ञाननाशार्थमनोवृत्तिमात्रवेद्यताभिप्रायेण, तदवच्छिन्नचिदाभासविषयत्वाभावाच्चाप्रमेयता "यन्मनसा न मनुते येन मनोऽहमन्यते"इति श्रुतेस्तथार्थत्वात् । जगत्कर्तृत्वेन ईश्वरस्यानुमानेऽपि कूटस्थस्य तदनुमानगम्यत्वाभावात् ईश्वरस्यैव श्रुतिप्रमाणकत्वेन उपनिषद्वेद्यतोक्तिः । तदुत्तरं मननादिना श्रुतिवाक्यतात्पर्य्यावधारणेनाखण्डब्रह्माकारा चित्तवृत्तिरुदेति इति न काचिदनुपपत्तिः । नैयायिकादिमते तु तद्गुणगणस्य परिमातुमशक्यत्वात् दुरवगमवेद्यत्वाच्च अप्रमेयत्वमिति । प्र+मि+क्षेपे यत् न०त०। अपरिक्षेप्ये "यदाश्रौषं पाण्डवेयार्जुनौ तौ तथा धनुर्गाण्डिवमप्रमेयम्" भा०आ०प० ।

**अप्रयत्न** पु० प्रकृष्टो यत्नः प्रयत्नः प्रयासः अभावे न०त० । १प्रयत्नाभावे प्रयासाभावे । न०ब० । २प्रयासशून्ये त्रि० । "अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशय" मनु. ।

मत ॥" अत्र संभाव्यमानेभ्य रत्नादिगताक्रमलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते । "गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रे-किणं त्यक्त्वा तिर्य्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा । अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्यं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥" अत्र कस्यचिद्गमनरूपे कार्य्ये कारणमभिहितम् । तुल्येऽप्रस्तुते तस्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च । श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे, श्लेषवद्विशे-ष्यस्यापि श्लेषे भवतीति द्विधा । क्रमेण यथा ॥ "सहकार सदामोदो वसन्तश्रीसमन्वित । समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः" ॥ अत्र विशेषणमात्रश्लेषवशादप्रस्तु-तात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः "पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद्यदि प्रणयने न महानपि स्यात् । अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन" ॥ अत्र पुरुषोत्तम-पदेन विशेष्येणापि श्लिष्टेन प्रकृतप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते । तेन वर्णनीयः कश्चित् पुरुष प्रतीयते । सादृश्य-मात्रमूला यथा । "एकः कपोतपोत शतशः श्येना क्षुधाभिधावन्ति । अम्बरमावृतिशून्यं हरि हरि शरणं विधेः करुणा" ॥ अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते । इयं क्वचित् वैधर्म्येणापि भवति । यथा "धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः । राममि-न्दीवरश्यामम् ये स्पृशन्त्यनिवारिताः" ॥ अत्र वाता "धन्या अहमधन्या इति वैधर्म्येण प्रस्तुता प्रतीयते । वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम् । तत्र सम्भवे उक्तोदाहरणान्येव । असम्भवे यथा । "कोकिलोऽहं भवान् काकः समानः कालिमावयोः । अन्तरं कथयि-ष्यन्ति काकलीकोविदाः पुनः" ॥ अत्र काककोकिलयो-र्वाकोवाक्यम् प्रस्तुताध्यारोपणं विनाऽसम्भवि । उभय-रूपत्वे यथा । "अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः । कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः" ॥ अत्र प्रस्तुतस्य कस्यचिदध्यारोपणम् विना कमलनालान्त-श्छिद्राणाम् गुणभङ्गुरीकरणे हेतुत्वमसम्भवि सम्भवि तु सम्भवोभयरूपत्वम् ।

**अप्रहत** त्रि० न प्रहन्यते स्म प्र+हन–क्त न०त० । अप्रहते (खिल) इति ख्याते अकृष्टभूम्यादौ । "ईषत्पीतं भव येत वटर्ष व अनावरितम् निर्दिष्टकालाद्धितश्चाप्रहतं वास्तउच्यते" इति विधा०पा०उक्ते वासोभेदे अहतमिति पाठान्तरम् ।

**अप्रहन्** त्रि० न प्रहन्ति प्र+हन्–क्विप् न०त० स्त्रियां ङीप् । "कार्य्यानापके प्रहन्तुरनाहके "त्वमेको अप्रहणं रयीणे यव-साम्यतिम्" ऋ० ६,४४,४ । "अप्रहणमनुपाहक्रमिति" भा० ।

**अप्राकृत** त्रि० प्रकृतेरागतम् अण् प्राकृतम् न०त० । १प्रकृतिकार्य्यभिन्ने ईश्वरलीलादौ । प्रकृतेः स्वभावस्य अयम् अण् न०त० । २स्वभावसम्बन्धिभिन्ने असामान्ये मनुष्यादौ च । [अधमे ।

**अप्राग्र** त्रि० न प्राग्रः प्रधान विरोधे न०त० । श्रेष्ठभिन्ने

**अप्राण** त्रि० नास्ति देहादुत्क्रान्तत्वात् प्राणो यस्य । १मृते शवे । सर्वथा प्राणशून्ये २ईश्वरे पु० "अप्राणोह्यमनो शुभ्रिरिति" श्रुतिः ।

**अप्राप्त** त्रि० न प्राप्त प्रमाणान्तरावगतः । १ प्रमाणान्तरानवगते "अप्राप्तप्रापको विधिरिति" "अप्राप्ते तु विधीयन्ते बह-वोऽप्येकयत्नतः" इति च मीमांसा । २अनागते च ।

**अप्राप्तकाल** त्रि० न प्राप्तः कालोऽस्य । अप्राप्तसमये । "अवयवविपर्य्यासवचनमप्राप्तकालमिति" गौ०सू० उक्ते २सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानरूपे वादिदोषभेदे च । प्रतिज्ञाहेतूदाहरणादीनां यथाक्रमं विन्यासे हि वादसमय । तेषां व्युत्क्रमकथने वादिनो निग्रहः ।

**अप्राप्तप्रापक** पु० अप्राप्तं प्रापयति बोधयति प्र+आप–णिच्–ण्वुल् ६त० । प्रमाणान्तरेणानवगतस्य यागादीना-मिष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा बोधके लिङादौ शब्दे । तथा च प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वं तत्त्वस् भवति च स्वर्गकामोयजेतेत्यादौ लिङन्तं वाक्यं यागे इष्टसाधनतां कृतिसाध्यतां वा बोधयत् प्रेरकत्वात्तथा । अप्राप्ता दस्यावस्था यस्य तत स्वार्थे कन् देवकवत् उत्तरपदलोपः । २अप्राप्तदस्यावस्थे पतृके "पादशामाप्तके देय" स्मृतिः "अप्राप्तके अप्राप्तदस्यावस्थे" इति रघु० ।

**अप्राप्तव्यवहार** त्रि० न प्राप्त व्यवहारयोग्य कालोऽस्य । "अप्राप्तव्यवहारोऽसौ यावत् षोडशवत्सरः" इति दक्षोक्ते अपूर्णषोडशवर्षवयस्के बाले "गर्भस्थैः सदृशो ज्ञेय आष्ट-मात् वत्सराच्छिशुः । बाल आ षोडशाद्वर्षात् पौगण्डश्च निगद्यते । परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते इति" नारदः । "अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम् । न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च" कात्या० स्मृतिः ।

**अप्राप्ता** स्त्री न प्राप्तः विवाहप्रशस्तकालोऽस्याः ६० उत्तरपद लोपः । अप्राप्तविवाहप्रशस्तकालायां कुमार्य्याम् ।

"उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि" मनुः "अप्राप्ताम् अप्राप्त विवाहयोग्यवयस्काम्" कु०त० रघुनन्दनः ।

**अप्राप्ति** स्त्री अभावे न०त० । १ लाभाभावे "तदप्राप्तिमहादुःखविलीनाशेषपातका" का०प्र० २प्रमाणान्तरतोलाभाभावे "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सतीति" मीमां० ३असम्भवे "प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरिति" शा०सू० । "अप्राप्तिरसम्भव" इति भा० । ४अनुपपत्तौ च "समुदायहेतुकेऽपि तदप्राप्ति" शा०सू० । समुदायाप्राप्तिः समुदयभावानुपपत्तिः भा० । न०ब० । ५लाभशून्ये त्रि० ।

**अप्रामाणिक** त्रि० प्रमाणेन सिद्ध, प्रमाणं वेद वा ठञ् न०त० । १प्रमाणासिद्धे २प्रमाणानभिज्ञे च स्त्रियां ङीप् । "अप्रामाणिकीयमनवस्थेति" सां०भा० ।

**अप्रामाण्य** न० अभावे न०त० । १यथार्थबोधकत्वाभावे "अप्रामाण्यं कथयति सदा मन्दसूनोर्वियोगः" पदा० अप्रामाण्यहेतुकानुष्ठानाभावे च "अनत्यागहनमप्रामाण्यम्" सां०सू० ।

**अप्रामि** त्रि० प्रकर्षेण अम्यते हिंस्यतेऽसौ प्र+अम–णिच् कर्म्मणि इन् न०त० । अहिंसिते, "अप्रामिसत्योमघवन्" । ऋ० ८,६१,४, "अप्रामिसत्यः अहिंसितसत्यः" भा० ।

**अप्रायु** त्रि० प्र+इण–उण् न०त० । अगन्तरि, "अस्मप्रायुवोरक्षितारो दिवेदिवे" ऋ० १,८९,१, "अप्रायुव अप्रायव अगच्छन्त' वेदे तन्वादित्वादुवङ्" भा० ।

**अप्रायुस** त्रि० न प्रकृष्टं प्रगत मा ऽऽयुर्यस्य । १प्रकृष्टायुर्भिन्ने २गतायुर्भिन्ने च । "मह्नाय जुदयंतरोदिवातरादप्रायुष" ऋ० १,१२७,५ ।

**अप्रिय** न० विरोधे न०त० । प्रियभिन्ने इष्टभिन्ने स्वभावतोद्विष्टे दुःखे "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" श्रुतिः "तपस्वीव इव स्वामी सर्वं हित्वा प्रियाप्रिये' इति मनुः । २ तत्साधने वचनादौ त्रि० 'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्" "पाणिग्राहस्य साध्वी स्त्री नाचरेत् किञ्चिदप्रियम्" इति च मनुः । (सिङ्गि) मत्स्यीमत्स्ये स्त्री शब्द र० । प्रियहेतुत्वाभावात्तस्यास्तथात्वम् । [अकवाक्यमयोक्तरि

**अप्रियवद** त्रि० विरोधे न०त० । कटुवाक्यवादिनि उक्ते-

**अप्रियवादिन्** त्रि० अप्रियं वदति वद–णिनि ६त० स्त्रियां ङीप् । । कटुवाक्यवादिनि उक्तेऽकवाक्यकथके 'भार्या

यस्य गृहे नास्ति भार्या चाप्रियवादिनीति" चाणक्यः ।

**अप्रीति** स्त्री अभावे न०त० । १सन्तोषाभावे, २दुःखे, "प्रीत्यप्रीतिविषादाः प्रकाशप्रवृत्तिनियमार्थाः" इति सां०का० ।"प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः', अप्रीतिर्दुःखमप्रीत्यात्मकोरजोगुणः" इति सां०त०कौ० ।

**अप्रेतराक्षसी** स्त्री न प्रेता प्राप्ता राक्षसीम् अत्या०स० न०त० । तुलस्याम्, अप्रेतराक्षसीशब्दे २५४पृष्ठे विवार ।

**अप्रेमन्** पु० न प्रेम विरोधे न०त० । स्नेहविरोधिनि द्वेषे ।

**अप्रौढ़** त्रि० न प्रौढ न०त० । १अप्रगल्भे २अपटौ च ।

**अप्नु** त्रि० आप–वा०न पु० ह्रस्वः । प्राप्ये "अभीवा चित्त' प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि" ऋ० १०, १०३, १२, "हरिमाच तेऽङ्गेभ्योऽप्वामनन्तरोदरात्" अथ०९,८,९

**अप्सु** त्रि० अपः सनोति सन–ड । १अपां विशेषगुणीभूते रसे "पृथिव्याः पुरीषमस्योनाम" य०१४,४ ।"अप्सोनामापां सारभूतो रस" इति वेददी० । आप इव निर्मलतया सन्यते संबध्यते सन–वा०ड । २रूपे निघ० ।

**अप्सुर पति** पु० ६त० । १ इन्द्रे अप्सरसांपतिरप्यत्र ।

**अप्सरस्** स्त्री व०व० अद्भ्यः सरन्ति उद्गच्छन्ति सृ–असुन् । समुद्रमन्थनोद्भूतायां स्वर्वेश्यायाम् "अप्सु निर्मथनादेव रसात्तस्माद्वरस्त्रियः । उत्पेतुर्मनुजश्रेष्ठ । तस्मादप्सरसो ऽभवन्" इत्युक्तेस्तासां तथात्वम् । "एकाप्सर प्रार्थितयोर्विवाद" रघु "आराधितोऽद्धा मनुरप्सरोभिर्वक्रे प्रजा स्वाः सनिमेषचिह्ना " इति माघ । तासां च नानाकर्म्म उक्तिः । तासु प्रधानतया द्वादश वह्निपुराणे दर्शिता "उर्वशी मेनका रम्भा मिश्रकेशी घृताची अलम्बुषा विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा भानुवत्यबला रम्भा द्वादशाप्सरस शुभा " इति गणभेदनामाध्याये । अत्र शुभा इति विशेषणात् अन्या अपि । तासु "उर्वशी मेनका रम्भा घृताची पुञ्जिकास्थला सुकेशी मञ्जुघोषा च महारङ्गवतीति च" इति का० पु० "अदितिर्दितिर्दनु काला दनायुः सिंहिका तथा । क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः । कद्रुश्च मनुजव्याघ्र । दक्षकन्यास्तथोदय" इति काश्यपपत्नीरभिधाय । "इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्त्तिताः" इति गन्धर्वगणमभिधाय च 'इत्स अप्सरसां वंशं विदितं पुण्यलक्षणम् प्रधाऽसूत महाभागादेव देवर्षिं पुरा । अलम्बुषा मिश्रकेशी विद्युत्पर्णा-तिलोत्तमा । अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा । केशिनी च सुबाहुश्च सुरता सुरजा तथा । सुप्रिया चातिबाहुश्च"

त्युक्तम् भा०श्वा०प०। एतासाञ्च चतुर्दशोत्पत्ति स्थानानि च दस्मयां वर्णितानि "यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति तासां चतुर्दश कुलानि एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्, अन्यद्वेदेभ्यः सम्भूतम्, अन्यदग्नेरुद्भूतम् अन्यत् पवनात् प्रसूतम्, अन्यदमृतान्मथ्यमानादुत्थितम्, अन्यज्जलाज्जातम्, अन्यदर्ककिरणेभ्यो निर्गतम्, अन्यत् सोमरश्मिभ्यो निष्पतितम्, अन्यद्भूमेरुद्भूतम्, अन्यत् सौदामनीभ्यः प्रवृत्तम्, अन्यन्मृत्युना निर्मितम्, अपरं मकरकेतुना समुत्पादितम्, अन्यत्तु दक्षस्य प्रजापतेररिष्टप्रभृतीनां सुतानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतु, ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् एवमेतान्येकत्र चतुर्दश कुलानि" एतन्मूलं तु विस्तरभयान्नोक्तम्। २दिशि ३ उपदिशि च तयोर्जलवत्त्वात्तथात्वम् "पुञ्जिकास्थला च क्रतुस्थला चाप्सरसाविति" य० १५,१५, "पुञ्जिकास्थला क्रतुस्थला चाप्सरसौ दिगुपदिग्रूपे परिचारिके" इति वेददी०। "अप्सरसाविति दिक् च उपदिक् चाह" श्रुतेस्तथात्वम्। "मेनका वै अप्सराः पञ्चोति" भाष्यप्रयोगात् अप्सरसाविति श्रुति निर्देशाच्च नित्यबहुवचनान्ततेत्युत्सर्गः क्वचिदेकवचनान्ततापि

**अप्सरस्तीर्थ** न० ६त०। १ तीर्थभेदे।

**अप्सरा** स्त्री अप्सु रूपमस्त्यस्याः मायत्वे कुक्का०र। दिव्यरूपवत्यां स्वर्वेश्यायाम् "उद्भिन्दतीं संजयन्तीमप्सराम्" अ० ४,३८,१।

**अप्सरायमाणा** स्त्री अप्सरस इवाचरति देहसौन्दर्यादिना अप्सरस+क्यङ्-सलोपः कर्त्तरि शानच्। अप्सरस्तुल्य सौन्दर्यवत्यां स्त्रियाम्।

**अप्सव** त्रि० अप्सु जलरसं वाति हिनस्ति वा-वा-क ३त०। जलरसशून्ये समुद्रे तस्य लवणजलत्वात्तथात्वम्। "ये अप्सवमर्णवं चित्रराधससेनो रावन्नाम्" ऋ० १०,६५,३।

**अप्सव्य** पु० अप्सु भवः "अपोयोनियवाम्ब्वपः" वार्त्ति० सप्तम्या अलुक्, यत्। जलभवे।

**अप्सस्** त्रि० अप्सु अप्सावने तेजसि सति सपति सपक्विप् ७त०। १ रूपे तस्य तेजोऽवयवत्वात् तथात्वम् २ रूपवति च। "क्षोणो शिरोऽप्ससश्चो अर्दयन् अनु भाति हरितेभिरक्षभिः" ऋ० ६,४९,२, "जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः" ऋ० १,१२४,७।

**अप्सा** त्रि० अपोजलानि सनति ददाति सन-विट्। जलदातरि "आजागं अप्सु पृतनासु सनिं स्वर्षामिति" ऋ० १,९१,२१, "अप्सां जलानां दातारम्" भा०। "पवस्व देवमादनो विचर्षणिरप्साः" ऋ० ९,८४।

**अप्सु** त्रि० नास्ति सु रूपम् (निरुक्तोक्तम्) यस्य। रूपरहिते "मा त्वा वयं सहसावन्नवीरा माप्सवः परि" ऋ०७,४,६, अप्सव रूपरहिताः" भा०। अमाप्सत्वे न०त०। आयस्वरूपे अप्सरे, "अप्सुजितः" अप्सुजिच्छब्दे दृश्यम्।

**अप्सुक्षित्** त्रि० अप्सु जलाधारे अन्तरिक्षे क्षियति निवसति-क्षि-क्विप् अलुक्स०। अन्तरिक्षवासिनि देवादौ "ये देवासो दिव्येकादश स्थ पृथिव्यामेकादश स्थ अप्सुक्षितो महिनैकादश" ऋ० १,१३९,११, य० १८,९, च "तदेतत्वात् तासुस्थम् अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीति" भा०। [ङीप्। जलचरे।

**अप्सुचर** त्रि० अप्सु चरतीति चर-ट अलुक्स०। स्त्रियां

**अप्सुज** त्रि० अप्सु जले तद्वति अन्तरिक्षे वा जायते जन-ड अलुक्स०। १जलजाते २अन्तरिक्षजाते "यदग्ने। दिविजा अप्स्वप्सुजाः" इति ऋ० ८,४३,२८, "अप्सुजा अन्तरिक्षजाता" इति भा०।

**अप्सुजा** पु० अप्सु-जायते जन+विट् अलुक्स०। अग्नौ "अमृतावाप्यतो यज्ञे वेदेभ्योऽपवाश्च गर्भतः। वाम्नोऽद्यानासलिन्त सप्तधा परिकीर्त्तिता" इत्युक्तेस्तस्य वाक्यजातत्वात्तथात्वम् "संमितो अप्सुजा ब्रह्मा सोम पुरोगवः" य० २२,१४, "अप्सुजा अग्न" इति वेददी०। २ वेतसे तस्य जलसमीपजातत्वात् तथात्वम् "अप्सुयोनिर्वा अश्वोऽप्सुजा वेतस" इति शत०ब्रा०। ३ जलजातमात्रे त्रि०।

**अप्सुजित्** त्रि० अप्सून् असुरान् जयति जि-क्विप् अलुक्स०। अन्तरिक्षस्यासुरजेतरि "सुपारः सुश्रवस्तम समप्सुजितः" ऋ० ८,१३,२, "अप्सुजितः अन्तरिक्षवर्त्तमानानामसुराणां जेतारः" भा०।

**अप्सुमत्** त्रि० अप्सु आपः जलानि सन्त्यस्य "अपोयोनियन्मतुपः" वार्त्ति० सप्तम्या मतुप् अलुक्स० च। १जलसंपृक्ते आधारद्वयभागे। "अप्सुमन्तावाधाराविमानामिति" सि०कौ०। २यथेष्टं जलसम्पादके च "न हाप्सु मैत्यप्सुमान् भवति, छा०उप०। मरुस्थलेऽपि यथेष्टोदकवान् भवतीति" आनन्दगिरिः।

**अप्सुयोग** पु० ७त० अलुक्स०। जलेषु योगे। "भिन्नश्च योगाप्सुयोगैर्वशमश्मि" अथ० ४,७,६।

**अप्सुयोनि** त्रि० अप्सु योनिरुत्पत्तिरस्य अलुक्स०।

आम्बिष्ट अम्बा अम्बाला अम्बिका अम्बरम् अम्बष्ठ' ।

**अबद्ध** त्रि० बन्ध–क्त न०त०। १असंबद्धे २अन्वयबोधयोग्यता-शून्ये परस्परविरुद्धे वाक्ये च यथा "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता माता तु मम वन्ध्यासीदपुत्रश्च पितामह" इत्यादि वाक्यम् । २ बद्धभिन्ने मुक्ते च ।

**अबद्धमुख** त्रि० न बद्धं यथेच्छवादितया अप्रतिरुद्धं मुख-मास्यक्रिया यस्य स्त्रियां वा ङीप् । अप्रियवादिनि "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियमिति" मनुनाऽप्रियवचनकथनस्य निषेधेऽपि तदुल्लङ्घनेन अप्रिय-वाक्यप्रयोक्तृत्वेन तस्य तथात्वम् ।

**अबध** पु० न वधस्ताडनं देहे आघातः प्राणवियोजनं वा अभावे न०त०। ताडनाभावे । "शिष्यशिष्टिरवधेनाशक्तौ वेणुदलेनेति" मिता० स्मृति । १प्राणवियोजनाभावे च ।

**अबधा** स्त्री न बध्यतेऽस्यते अन्येन । लीलावत्युक्ते त्रिकोणादि क्षेत्रे लम्बोभयपार्श्वस्थे भूमिखण्डे। न, बाध्यते आबाध्यते वा, अबाधा आबाधाऽप्यत्र । तदानयनञ्च "त्रिभुजे भुजयो-र्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या। द्विःस्था भूरूनयुता दलिताऽबाधे तयोः स्यातामिति" लीला०।"दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रमा मही। अबधे वद लम्बकं तथा गणितं गणितिकाशु तत्र मे" इति लीला० अवधोद्देशक ।

**अबध्य** त्रि० वधमर्हति यत् न०त० । १वधानर्हे प्राणवियोग फलकव्यापारो हिंसात्र वध । "अबध्याश्च स्त्रियः प्राहु-स्तिर्यग्योनिगतामपि" स्मृतिः । २वधदण्डानर्हे ब्राह्मणे च "वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः । अविशेषेण सर्वेषामेष-दण्डविधिः स्मृत । वधादृते ब्राह्मणस्य न वध ब्राह्मणो-ऽर्हति" मिता० स्मृतिः । "उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमी। चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेदिति" मनु० बन्ध–बा० क्यप् । २अयोग्यशब्दे हे०से० च ।

**अबन्धक** न० बध्यते स्वधनमितरत्र आधीयते बन्ध आधीय-मानद्रव्यं स नास्ति यत्र कप् । १आधिशून्ये ऋणादाने । "अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके । वर्ण-क्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा" या० "अन्यथा बन्धक-रहिते" मिता० "दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु" या० व्याख्यायाम् "ब्राह्मणादयोवर्णा अबन्धके सबन्धके वा स्वकृतां वृद्धिं सर्वासु जातिषु दद्यु" मिता०। अस्य पा० उपकादिगणपाठात् "उपकादिभ्योऽन्यतरस्यामद्वन्द्वे च" पा० इत्यनेन गोत्रप्रत्ययस्य बहुत्वे लुग्विधानात् क्वचि-चित् २ गोत्रप्रवर्त्तके ऋषावपि अस्य वृत्तिः ।

**अबन्धुर** त्रि० न०त० । १ उन्नतानतभिन्ने २ मोक्षभिन्ने ३ "विधुरबन्धुरबन्धुरमैक्षतेति" माघ. ।

**अबन्ध्य** त्रि० बन्ध्यः अफलः । १सफले, "अबन्ध्यं दिवसं कुर्यात् दानाध्ययनकर्मभिः" स्मृति. २अफलभिन्ने फलकाले फल-युक्ते वृक्षे पु० ।

**अबल** न० न बलं सामर्थ्यमुत्कर्षो वाऽभावे न०त०। १ बलाभावे "प्रायश्चित्तं प्रदातव्यं दृष्ट्वा तस्य बलाबलम्" स्मृति । "गन्धानाञ्च रसानाञ्च ज्ञात्वा चार्घबलाबलम्" मनु । बलमुत्कर्षमबलमनुत्कर्षम्" इति कुल्लू० । नास्ति बलं यस्य। २बलहीने दुर्बले त्रि० "पञ्चवर्गीबलेनोनो न हर्ब-स्थानमाश्रितः, अबलोऽपि लग्नदर्शीति" नी०ता०। "अबल-स्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान्" नैष० । ३नार्य्यां स्त्री "भुजलता जडतामबलाजनः" रघु । "हृदये वहसि गिरीन्द्रो त्रिभुवनजयिनी कटाक्षेण । अबला त्वं यदि मन्ये के बलवन्तो न जानीम" इत्युद्भटः । ५व० । ४वरुणवृक्षे पु० । [रोगादिनिमित्ते देहस्य क्षयीभावे ।

**अबलिमन्** पु० बलस्य भावः इमनिच् विरोधे न०त० ।

**अबाध** पु० अभावे न०त० । १बाधाभावे २ प्रतिबन्धाभावे । नास्ति बाधो यस्य । ३ बाधशून्ये त्रि० । बाधश्च असत्त्वं स चानुमापकहेतौ दोषभेदः वह्न्यभाववद्ध्रदत्वं हि बाधः दोषः यत्सत्त्वेऽनुमितेः प्रतिबन्धः तस्य हेतुदूषकत्वमिति नैया०। नास्ति बाधा पीडा यस्य । ४पीडाशून्ये त्रि० ।

**अबाधक** त्रि० न०त०। १बाधकभिन्ने अनुगुणे। नास्ति । बाधो यस्य वा कप्। २बाधशून्ये त्रि० ।

**अबाधित** त्रि० न बाधितः । बाधितभिन्ने यथार्थे "अबा-धितार्थगृहीतविषयत्वं प्रमात्वमिति" हरा० । तद्वति तत्प्रकारकं ज्ञानं हि प्रमा तच्च तदभाववति तत्प्रकारक-ज्ञानेन प्रतिबध्यते तथा च तदभाववति तत्प्रकारकता-शून्यत्वेन ज्ञानस्य याथार्थ्यं, तादृशज्ञानविषयत्वात् विष-यस्याबाधितत्वम् । [अप्रतिरोध्ये ।

**अबाध्य** त्रि० न बाध्यते अपोद्यते बाध–ण्यत् न०त० ।

**अबाल** त्रि० न०त० । १ बालभिन्ने पूर्णे चन्द्रादौ २तरुणे च ।

**अबिन्धन** पु० आप एव इन्धनमुद्दीपनसाधनमस्य । वाड-वाग्नौ "अबिन्धनं वह्निमसौ बिभर्त्ति" रघुः ।

**अबुद्ध** त्रि० बुध–कर्त्तरि कर्मणि वा क्त न०त०। १बोधानाश्रये २बोधाविषये च। [बुचितं २तथाज्ञानाभावे।

**अबुद्धि** स्त्री अभावे न०त०। १ज्ञानाभावे यस्य यद्रूपेण ज्ञान-

**अबुद्धिपूर्व्वक** त्रि० अबुद्धिः पूर्व्वा यस्य। यथार्थबुद्धिपूर्व्वकभिन्ने। "अबुद्धिपूर्व्वं हनने प्रायश्चित्तं प्रकल्पयेत्" स्मृतिः यदि गां गवयबुद्ध्या हन्ति, गवयं वा गोभ्रान्त्या हन्ति, सर्व्वथाऽबुद्धिपूर्व्वकत्वम् एवमन्यार्थक्षिप्तनाराचादिना हननेऽपि तथात्वम्। इयं गौरिमां हन्मीत्युद्देशेनैव हनने बुद्धिपूर्व्वकत्वम्। [२अल्पज्ञाने च।

**अबुध** पु० विरोधे अप्राशस्त्ये वा न०त०। १बुधभिन्ने मूर्खे

**अबु(बो)ध्य** त्रि० बुध भा० वेदे क्यप् लोके तु ण्यत्। ज्ञातुमशक्येऽर्थे "अबुध्यमबुध्यमानं सुषुपाणमिन्द्रम्" ऋ० ४, १८, १, 'अबुध्यं दुर्विज्ञेयमिति' भा०।

**अबुध्न** न० नास्ति बुध्नं मूलमस्य। १मूलशून्ये अन्तरिक्षे "अबुध्ने राजा वरुणो वनस्योर्द्ध्वम्" ऋ० १,२४,७, "अबुध्ने मूलशून्ये अन्तरिक्षे" भा०। २मूलशून्यमात्रे करकादौ त्रि०।

**अबोध** पु० अभावे न०त०। १बोधाभावे अज्ञाने "निसर्गदुर्बोधमबोधविक्लवाः" किरा०। न०ब०। २बोधरहिते त्रि०।

**अबोधगम्य** त्रि० बोधेन गम्यः विषयीकार्य्यः न०त०। ज्ञानेनाविषयीकार्य्ये ज्ञातुमशक्ये।

**अब्ज** न० अप्सु जायते जन–ड ७त०। १पद्मे २शङ्खे पु न०। ३निचुलवृक्षे तस्य जलप्रायभवत्वात् तथात्वम् ४चन्द्रे ५धन्वन्तरौ च पु० तयोः समुद्रजातत्वात् तथात्वम् "प्रसन्नात्मा चतुष्पक्षः सोमः शीतांशुरब्जजः" इति "धन्वन्तरिस्ततोदेव! वपुष्मानुदतिष्ठत" इति च भा०आ०प०। चन्द्रनामकत्वात् ६कर्पूरे पु०। "अर्बुदमब्जं खर्व्वनिखर्व्वमहापद्मशङ्कवस्तस्मादिति" लीलावत्युक्तदशार्बुदसंख्यायां ७शतकोटिसंख्यायां तत्संख्येये च न०। ८जलजातमात्रे त्रि० "स्वब्जजः मणिवोऽजायत" इति "अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च" इति रामा०।

**अब्जकर्णिका** स्त्री अब्जस्य कर्णिका कर्णाभरणभेदइव तत्स्थाकारत्वात्। पद्ममध्यस्थवर्त्तिकाख्ये पद्मावयवभेदे पद्मकर्णिकादयोऽप्यत्र।

**अब्जज** पु० अब्जात् विष्णोर्नाभिकमलात् जायते जन–ड। चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजातत्वात्तथात्वम् "तस्य भूतानि सकलानि लोककर्त्तार्थसम्भवः। ब्रह्मणो यस्य ... विनिन्दति" । इत्युपक्रम्य "ततश्चित्रप्रभाक... योगे हरिणी हरिरच्युतः। स्वपन् ... पिबन् मोदते वैष पादशिः पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्ततः। सहस्रपर्णं विरजो भास्कराभं हिरण्मयम्। तत्र योगविदां श्रेष्ठ सर्व्वभूतमनोमयम्। स्रष्टारं सर्व्वभूतानां ब्रह्माणं सर्व्वतोमुखम्। तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते। इति समुत्पादितवानित्याद्यर्थः अनतिदूरे च "अस्य पुष्करमध्यस्थ विततोऽपि चतुर्मुखः। नाभौ च गवेगौर्हादाद्ये स्वं विगतज्वरः। एकत्रामयोगीकृतं प्रथम कमलोद्भवः। इति तेन तस्य विष्णुनाभिकमलजत्वं तद्व्युत्पत्त्या हरि०पौ०प०। "शरापौ शाम्बरे चौम्ये (बुधे) लग्नस्थे वा भगोः सुते। जीवे वाऽब्जजयोगोऽयं वादः मत्तु विनायकादिति" ज्योतिषोक्ते २ कालयोगभेदे च।

**अब्जबान्धव** पु० अब्जानां बान्धवइव प्रकाशकत्वात्। कमलप्रकाशके सूर्य्ये तस्योदये हि कमलं विकसते इति कविसम्प्रदायप्रसिद्धिः। एवं कमलबान्धवादयोऽप्यत्र।

**अब्जभोग** पु० अब्जस्य पद्मस्य भोगः अवयवइव भोगोऽस्य। पद्मावयवतुल्यावयवे वराटके। भुज्यते भुज–कर्म्मणि घञ् भोगः भोग्यम्। अब्जस्य भोग्यांशे पद्मकन्दे शालूके तस्य लोकैर्भुज्यमानत्वात् तथात्वम् कमलभोगादयोऽप्यत्र।

**अब्जयोनि** पु० अब्जं विष्णुनाभिकमलं योनिरुत्पत्तिस्थानं यस्य। चतुर्मुखे ब्रह्मणि। विस्तरोऽब्जजशब्दे दृश्यः।

**अब्जवाहन** पु० अब्जस्य चन्द्रस्य वाहनं धारणं येन "अब्जं शङ्ख इव शुभ्रं वाहनं वृषरूपं यस्य वा। १चन्द्रमौलौ शिवे। अब्जं कमलं वाहनमिवाधारो यस्याः। २पद्मासनस्थायां लक्ष्म्याम् "पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरमिति" तद्ध्याने उक्तेः तस्या अब्जवाहनत्वम् कमलादिवाहनाप्यत्र। [उ०द०। तस्य जन्मावधिप्राप्तत्वेन तथात्वम्।

**अब्जस्** न० आप्यते जन्मतः आप–असुन् जुट्–ह्रस्व। रूपे

**अब्जस्थित** पु०। अब्जे विष्णुनाभिकमले स्थितः स्था–क्त। चतुर्मुखे ब्रह्मणि "स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः" देवी अभिकमलजशब्दे दृश्यम्।

**अब्जहस्त** पु० अब्जं पद्म हस्ते यस्य। सूर्य्ये "पद्मासनं पद्महस्तम्" इति तद्ध्यानोक्तेस्तथात्वम्।

**अब्जा** त्रि० अप्सु जायते जन–विट् ७त०। जलजातमात्रे "अब्जामुक्थैरहिं गृणीषे" ऋ० ७,३४,१६, "अब्जां जलजातमहिम्" भा०।

**अब्जिनी** स्त्री अब्जानां समूहः अब्ज+इनि–ङीप्। पद्मसमूहे। अब्जानां देशः पुष्करा० इनि। २पद्मयुक्तायाम् च।

**अब्जिनीपति** पु० अब्जिन्याः पद्मसमूहस्य पतिः विकाशकत्वात्।

अत्र "कुर्य्यात् सान्तपनं कृच्छ्रं कुर्य्यात् पिष्टपशुं तथा" इत्यनेन पशुबधे कृच्छ्रे (धर्म्मादिफलकामनायाम्) पिष्टपशुनैव तं समाचरेदिति तेनैवोक्तम् अधिकपिष्टपशुयज्ञे पच्यते । रोगिणा भक्षणेऽपि विशेषः "आपद्यापत्सु भक्षयित्वा मांसम् रोगिभिः । मातापितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणः पुनः प्रायश्चित्तरोगेण कर्त्तव्यमधिकं मतम्" ब्रह्मपु० । "अगम्यागमने चैव मद्यगोमांसभक्षणे शुद्ध्यै चान्द्रायणं कुर्य्यात् पराक०" "मांसं कुञ्जरोष्ट्रौ च सर्वान् पञ्चनखांस्तथा । क्रव्याद कुक्कुट ग्राम्यम् भुक्त्वा संवत्सरं व्रतम्" यमः । पञ्चनखाश्च शशादिभिन्नाः । "शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चम" । भक्ष्यान् पञ्चनखेष्वाहुरिति मनूक्तेः । "विड्वराहग्रामकुक्कुटनरगोमांसभक्षणेषु सर्वेष्वेव द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्" विष्णुः "हंसं मद्गुं च काकोलं काकं वा खञ्जरीटकम् । मत्स्यादांश्च तथा मत्स्यान् बलाकां शुकसारिके । चक्रवाकं प्लवं कोकं मण्डूकं भुजगं तथा । मासमेकं व्रतं कुर्य्यात् भूयश्च तन्न भक्षयेदिति यमः । मत्स्याद० पाठीनव्यतिरिक्तः "पाठीनरोहितावाद्यौ नियुक्तौ दैवपैत्रयोः" मनुना तस्य विधानात् । "कलविङ्कहंसमद्गुचक्रवाकरज्जुवालसारसदात्यूहशुकसारिकाबकबलाकाकोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्" विष्णुः । "बलाकां रक्तपादांश्च शौनं वल्लूरमेव च मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" मनु । सूना वध्यस्थानं तत्र भवत् शौनम् वल्लूर शुष्कमांसम् । "क्रव्यादान् शकुनीन् सर्वान् टिट्टिभञ्च विवर्ज्जयेत् कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम् सारसं रज्जुवालञ्च दात्यूहं शुकसारिके । प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् । निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेव च बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम् मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः" इति मनु । मत्स्यभेदे देशाद्याचारादमाह मनुः "पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः । राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः" "भक्ष्यं भक्ष्येष्वजामहिषीगोक्षीरं विवर्ज्जयेत् पञ्चनखमत्स्यवराहमांसानि" चेति विष्णुः । "मत्स्यकर्कटशम्बूकमद्गुरशुक्तिकपर्द्दकान् पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति" हारी० "कृमिकीटपिपीलिकाजलौकापतङ्गाद्याशने गोमूत्रगोमयाहारस्त्रिरात्रेण प्रयतो भवेत्" हारी० केशमक्षिकारुधिराशने आममांसभक्षणादौ इत्युपक्रम्य "त्रिरात्रोपवासं चान्द्रायणञ्च कुर्य्यात्"

शङ्खलि० । "अन्त्यजानामभक्ष्यमांसरुधिराशने तु पञ्चगव्यम्" हारी० । "मलमूत्ररुधिराशने सद्यः स्नानं घृतकुशहिरण्योदकप्राशनञ्च" बुधः "अजाविकमहिषमृगाणाम् मांसभक्षणे केशरुधिराशने च बुद्धिपूर्व्वं त्रिरात्रम्" बौधा० भक्ष्यमांसस्यापि कार्त्तिके निषिद्धता "मत्स्यमांसं शशश्यां शुष्कमांसमथापि वा । भूमेरस्पर्शितं तथा वह्निनासाधितं च यत् । यच्च मांसं सजीवन्तु मत्स्यांश्च न भक्षयेत् । प्रमादभक्षितैरेभिर्व्रजेन्मासं वसेद्व० ब्र०पु० । अजीर्णे पिष्टपशुमप्यत्र त्यक्तम् । अग्निविशेषे सर्वमांसानामभक्ष्यता "न भक्ष्यं वह्निना मांसं कदाचिन्तु बुभुक्षुणा" ब्र०पु० । श्रीभागवते सर्वथा मांसनिषेधमाह भागवतम् "ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते पशव इह वै निहता यमसदने यातयन्तो रक्षोगणाः सौनिका इव स्वधितिनावदायासृक् पिबन्ति" इति । कार्त्तिकादौ तु सर्व्वथा मांसादिनिषेधः । "न मत्स्यं भक्षयेन्मांसं न कौर्म्मं नान्यदेव हि । चण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्" का०म०मा०पु० । "शोभदग्ध विशेषेण प्रकृपयं नराधिप । वर्ज्जयेत् सर्वमांसानि धर्म्मस्तत्र विधीयते । एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु" इत्युपक्रम्य वर्ज्जितव्या तथा हिंसा मांसभक्षणमेव च ब्रह्मपु० । "निष्पावान् राजमाषांश्च सुप्ते देवे जनार्द्दने यो भक्षयति राजेन्द्र । चण्डालादधिकोऽपि सः । कार्त्तिके तु विशेषेण राजमाषांश्च वर्ज्जयेत् । निष्पावान् धान्ययाहुँश्च । आषाढ़ादिपरित्यक्तो । कदम्बानि पटोलानि वृन्ताकपूरितानि च । न त्यजन् कार्त्तिके मासि यावत्कल्पतनादकौ । एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्द्दने । यत्जन्मार्ज्जितं पुण्यं दह्यते नात्र संशयः" भ०उ०ब्रह्मपु० । निष्पावः श्वेतशिम्बी । कदम्बानि कदम्बफलानीति वक्ष्यतीति वा क०त० रघु० । तिथिविशेषेषु मांसादीनामभक्ष्यता "तैलमांससम्भोगी पर्व्वस्वेतेषु मानव । विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते" इति वि०पु० । "अष्टमी चतुर्दशी उभे पक्षे चतुर्द्दशी । अत्र संनिहितं पाप तैले मांसभगे क्षुरे" स्मृतिः "असंस्कृतान्तराणाञ्च न भुञ्जीत कदाचन । केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः । भ्रूणघ्नावेक्षितं चैव संस्पृष्टञ्चाप्युदक्यया । पतत्रिणावलीढञ्च शुना संस्पृष्टमेव च । गवा चान्नमुपाघ्रातं घुष्टान्नञ्च विशेषतः । गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् । स्तेनगाय-

यमः "चण्डालपतितामेध्यैः शुनकैः कुक्कुटैः तथा । मक्षिकाकृमिकीटैश्चाकौलेयककुटुम्बिभिः । दृष्टं वा केशकीटाक्तं भक्ष्यमन्नमकामतः । शुद्धमप्यात् सकृदेव प्रभूतं व्युष्टमेव च" मत्स्यपु० । कौलेयकः कुक्कुरः कटुम्बी कुक्कुटादि प्राणिभेदः तस्य मङ्गलकुटुम्बवत्त्वात् । व्युष्टं पर्य्युषितम् । एतच्च घृतरसमभ्युक्ष्य भक्ष्यम् अन्यन्नोपहतस्य तु त्यक्तव्यमेव" प्रा०वि० "विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः । केशलोमनखैर्वापि दूषितं परिवर्ज्जयेत्" देव० । तस्मात्तदुद्धृतं शुध्येत् कठिनन्तु पयोदधि । "अविलीनं तथा चैव विलीनं श्रपणेन तु" शाता० "नाश्नीयात् यत्र ग्रामयाजिकृते तथा । स्त्रिया क्लीबेन च कृते भुञ्जीत ब्राह्मणः क्वचित् । अश्लीलमेतत् साधूनां यत्र जुह्वत्यमी हवि प्रतीपमेतद्देवानां तस्मात्तत् परिवर्ज्जयेदिति" मनुः । "अश्रोत्रियोऽनधीतवेदः तेन कृतयज्ञे अन्नमभक्ष्यम् । ग्रामयाजी ग्रामजनानां आज्यपूजाकारयिता ऋत्विग्भावेन होमस्य यज्ञकर्त्ता च स च होता यत्र यज्ञे तदन्नमभक्ष्यम् । श्राद्धविशेषान्नस्याभक्ष्यता "चान्द्रायणं नवश्राद्धे पराको मासिके मतः । पक्षश्राद्धेऽतिकृच्छ्रः स्यात् षाण्मासे कृच्छ्रएव च । आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके" अङ्गि० । पक्षश्राद्धं पाक्षिकश्राद्धम् । नवश्राद्धमेकादशाहादिश्राद्धम् । हस्तादिदत्तद्रव्यविशेषस्याभक्ष्यता । "हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्विषम् । तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा । प्रदद्यान्न तु हस्तेन नायसेन कदाचन । आयसेन तु पात्रेण यदन्नमुपदीयते । भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्" भवि०पु० । "माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् । हस्तदत्तानि भुक्त्वा च भोक्ता चान्द्रायणञ्चरेत्" यमः । "एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत् । घृतं तैलञ्च लवणं पानीयं पायसं तथा" स्मृतिः । "वागदुष्टं भावदुष्टञ्च भाजने भावदूषिते भुक्त्वान्नं ब्राह्मणः पश्चात् त्रिरात्रं तु व्रती भवेत्" यमः । "शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" सम्व० । भिन्नभाजनं कांस्यपरं "भिन्नकांस्ये तु योऽश्नीयादहं स्नात्वा जपन् द्विजः । गायत्र्यष्टसहस्रं तु एकभक्तस्ततः शुचिः" बौधा० कांस्यत्वेन विशेषणात् । आपोशानाकरणे भोजनस्य निषेधात् तदकरणे द्रव्यमात्रस्याभक्ष्यता । "आपोशानमकृत्वा तु भुङ्क्ते योऽनापदि द्विजः । भुञ्जानश्च यदा ब्रूयात् गायत्र्यष्टशतं जपेत्" । अनाचान्तस्य द्रव्यमात्रस्याभक्ष्यता । "अनाचान्तः पिबेद्यस्तु भक्षयेद्वापि किञ्चन । गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति । आचामेच्छ्लेष्मणो नित्यं भुक्त्वा ताम्बूलचर्वणम् दन्तलग्ने फलमूले भुक्तस्नेहे तथैव च । ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः" आश्व० । "कषायकटुताम्बूले भुक्तस्नेहानुलेपने । मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्" लघुहा० अनाचान्तः कषायकटुताम्बूलेक्षुव्यतिरिक्तद्रव्यं सकृद्भक्षयित्वा दुग्धमधुनारिकेलजलादिकञ्च सकृत् पीत्वा अष्टोत्तरसहस्रसंख्यां गायत्रीं जपेत् प्रा०वि० । यज्ञोपवीतरहितानामन्नमात्रस्याभक्ष्यता । "विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि । स्नानं कृत्वा जपं कृत्वा उपवासेन शुध्यति" लघुहा० । अमेध्यदूषितफलानामभक्ष्यता । स्वद्वारितमार्गीय फलकन्देक्षुमूलकान् । विण्मूत्रदूषितान् प्राश्य कृच्छ्रं तु पादमाचरेत् सञ्जाते अर्द्धमेव स्यात्" संव० । दन्तादेरभक्ष्यता । "अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणं तथा । मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणैः" भवि०पु० । अत्रापवादः । "सैन्धवं लवणञ्चैव यच्च सामुद्रिकं भवेत् पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः" वायुपु० । "भुक्त्वा तु वारलवणं त्रिरात्रं तु व्रते वसेत्" यमः । "मद्ज्ञोद्घाटने अहोरात्रमभोजनाच्छुद्धिः" आ०त०रघु० । "नैकोमिष्टान्नमश्नीयात् वञ्चयित्वा स्त्री सुतान् । दारान् भृत्यातिथी चैव तयासम्बन्धिबान्धवान् इत्युपक्रम्य "तालापे नरके घोरे दुर्गन्धे मासते नरः" यमः । "पयोऽनुद्धृतसारञ्च भक्षयेद्दधि नो निशि दिवसे नवनीतञ्चेति" "सर्व्वं तिलमयं नाद्यात् सायं यमाभितानिशि" इति । "नाश्नीयात् सन्ध्ययोर्द्वयोः" इति च का०ख० । "नातिसौहित्यमाचरेत् नातिप्रगे नातिसायम् न निशीथे नचोषसि" मनुः न दध्युद्धृतसारञ्च भक्षयेद्दधि नो निशि । माद्यादादर्ष्व रात्रिषु" काशी०ख० "श्राद्धं कृत्वा परश्राद्धे योऽश्नीयात् ज्ञानवर्ज्जितः । दातुः श्राद्धफलं नास्ति भोक्ता किल्विषभुग् भवेत्" यत् वेष्टितशिरा भुङ्क्ते यत् भुङ्क्ते दक्षिणामुखः सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते, इति का०ख० । "यो दृष्ट्वा विघहाग्निस्वकस्य इव मन्यते । अन्नं तस्य न भोक्तव्यं तथापाको हि स स्मृतः" का०ख० । "पक्षे वा यदि मासे यस्य गेहेऽस्ति न द्विजः । भुक्त्वा दुरात्मनस्तस्य चरेच्चान्द्रायणं व्रतम्" का०ख० "अपात्रं विषनिर्माल्यं पत्रं पुष्पं फलं जलम्" ति०त०पु० । "शालग्रामा-

भागस्य एकदेशः दायादस्याऽप्रधानांशश्च उभ० । तच्छून्ये पूर्व्वनिदाघे च त्रि०। "यो ज्येष्ठो विनिकुर्व्वीत लोभाद्भ्रातॄन् यवीयस । सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः" मनुः "यं भागिन निर्भजन्त्यथ यमभागं निर्भजन्ति" शत० ब्रा० ।

**अभागिन्** त्रि० न भागी स्त्रियां ङीप् । १ अधिकारानर्हे क्लीवपतितादौ । २ भागोभाग्यम् । तच्छून्ये च । "यमात्मानं नविदुरभागिन" इति कठ उ० ।

**अभाग्य** न० अभावार्थे न०त०। १ दुर्भाग्ये । न०ब० । २ दुर्भाग्यवति त्रि० । [गुणरत्नोरभाजनम्" का०प्र० ।

**अभाजन** न० न०त० । अनाधारे "दोषीभवेपोषमः क्वचित्

**अभार्य्य** पु० नास्ति भार्य्या तत्सम्बन्धो वा यस्य । १भार्य्याहीने २ शास्त्रनिषिद्धभार्य्यासम्बन्धे नैष्ठिकब्रह्मचारिप्रभृतौ च । "सतिष्ठतामभार्य्याश्च तपिषतान्" स्पष्ट च छ०स० ग०प० । 'अभार्य्यान् शास्त्रनिषिद्धभार्य्यासम्बन्धान्' रघु० ।

**अभाव** पु० न भावः । भावभिन्ने अस्तेन प्रतीयमाने वैशेषिकोक्ते सप्तमपदार्थे भावभिन्नत्वमभावत्वमिति वदन्ति । भावभेदान्वयरूपत्वस्य तल्लक्षणस्य अभावविशेषघटितत्वेन अन्योन्याश्रयदोषग्रस्ततया अभावत्वमखण्डोपाधिरिति नव्याः । अभावस्य भावाभावसाधारणाश्रय घटाभावस्य पटे घटाभावादौ च सत्त्वात् न च भावातिरिक्तः कश्चित् पदार्थ इत्याधुनिका वैशेषिका नैयायिकाश्च स्वीचक्रुः । सूत्रकृता तु "द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इति षडेव पदार्था कण्ठत उक्ताः । अत एव "न वयं षट्पदार्थवादिनः" इति सांख्यसूत्रे षट्पदार्थीस्वीकारस्तेषां सूचितः । आधुनिकास्तु घटोनास्तीत्यादिप्रतीत्यन्यथानुपपत्त्या पदार्थान्तरमभावं कल्पयन्ति । प्राभाकरास्तु अभावस्याधिकरणस्वरूपत्वमङ्गीचक्रुः । तेषामयमाशयः "मानाधीना मेयसिद्धिः" इत्युक्तेः अभावस्यातिरिक्तस्य सिद्धौ प्रमाणं वक्तव्यम् न तावत् प्रत्यक्षम्, अभावस्य रूपाद्यभावेन इन्द्रियसन्निकर्षाभावात् तद्योग्यत्वात् न च इन्द्रियसंयुक्तविशेषणता तत्सन्निकर्षः भूतलादौ चक्षुरादिसन्निकर्षसत्त्वेऽपि तत्स्वरूपविशेषणताया अव्यापकत्वात् अन्यथा घटाभावप्रत्यक्षकाले पटाद्यभावप्रत्यक्षस्य दुर्वारत्वात् भूतलादिस्वरूपस्याननुगमात् तस्ये सन्निकर्षरूपे विशेषणता सम्बन्धे विनिगमनाभावेन नियामकत्वाभावात् । अथ ज्ञानलक्षणया यस्य ज्ञानं, तस्यैवाभावस्य प्रत्यक्षमिति कल्पनादस्ति नियम इति चेत् ज्ञानलक्षणया घटादेरुपनये सति विशिष्टबुद्धेरेवोदयप्रसङ्गात् विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन तज्ज्ञानलक्षणया समभावात् अथ अभावज्ञानलक्षणायाः प्रतिबन्धकत्वेन न तद्दोष इति चेत् अभावबोधकालयया अनियतत्वेन तस्या अप्रतिबन्धकत्वात् इन्द्रियसन्निकर्षविशेषणताकस्य स्वरूपसम्बन्धस्य भूतलादिस्वरूपत्वानतिरेकेः भूतलादिस्वरूपस्य कदाचिदप्यपायेन प्रतिबन्धकतायोगात् अन्यथा भूतलादौ कदापि घटादेर्ज्ञानलक्षणया विशिष्टज्ञानस्यानुत्पत्त्यापत्तेः "अभावबुद्धिश्च विशिष्टवैशिष्ट्यावगाहिबोधमर्य्यादां नातिशेते" इति दीधितिकृदुक्तरीत्या प्रतियोगिज्ञानस्यापेक्षितत्वेन अभावाधि प्रतियोगिज्ञानवत् धर्म्मद्वये तज्ज्ञानस्य दुष्परिहारत्वात् । एतेन योग्यानुपलब्धेस्तत्र हेतुत्वकल्पनेऽपि न निस्तारः । घटादीनामिव पटादेरपि योग्यतया तदुपलब्धेरभावस्य सत्त्वेन सर्वेषां योग्यानामभावप्रत्यक्षप्रसङ्गात् । नाप्यनुमानं तत्र प्रमाणं, तत्र व्याप्तिलिङ्गादेरभावात् । तस्यैवाज्ञाने तद्ज्ञाप्यतापत्त्या स्वभावात् सिद्धातिरिक्ताभाववादिभिः भूतले "घटोनास्तीति प्रतीतिः सविषया प्रतीतित्वात्" इत्यनुमानं तत्तत् सविषयकं यथा घटादिज्ञानमित्यनुमानप्रयोगः स्वीकार्य्यः । तत्र तदनुमानेन सविषयकत्वसिद्धावपि अधिकरणस्वरूपेणैव तद्विषयकत्वसम्भवेन उद्देश्यासिद्धे नापि शब्दात्तत्सिद्धिः अभावस्य निरुक्तप्रमाणकतया तच्छक्तिग्रहस्यैवाभावात् । तथा हि अभावशब्दस्य व्युत्पाद्यमानस्य भावभिन्नत्वबोधकतया भावभिन्नत्वमभावस्य लक्षणं वाच्यं तत्र भेदरूपाभावज्ञानसापेक्षत्वेनान्योन्याश्रयदोषग्रसितत्वेन दुर्ज्ञेयम् । किन्तु भावभिन्नत्वस्य अभावलक्षणत्वे भावरूपविशेष्यज्ञानशून्यकाले घटोनास्तीति प्रत्ययानुपपत्तिः विशिष्टबुद्धेर्विशेष्यज्ञानाधीनत्वात्, अभावो न भाव इति वाक्यात् शाब्दबोधानुपपत्तिश्च उद्देश्यतावच्छेदकविधेययोरैक्ये घटोघट इत्यादाविव शाब्दबोधाभावस्य सर्वसम्मतत्वात् । एतेन अभावत्वम् समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्त्वाभाववत्त्वमित्युक्तावपि न निस्तारः तथात्वे अभावो न भाव इति शाब्दबोधोपपत्तावपि तद्ज्ञानकाले घटोनास्तीति प्रत्ययस्यानुपपत्तेरन्योन्याश्रयदोषस्य दुष्परिहरत्वात् । घटाभावाभावादेर्घटरूपतयाऽङ्गीकारेण तत्र समवायेन सत्तावत्त्वेन निरुक्ताभाववत्त्वाभावात् घटाभावाभावोऽभाव इति बुद्धेरनुपपत्त्यापत्तेश्च । अथ अभाववत् अभावत्वमप्यतिरिक्तः पदार्थः तथाचाभावत्वं न भावभिन्नत्वादि किन्तु स्वरूप-

"सन्त. सदाभिगन्तव्या यदि योपदिशन्ति ते" वशि० ।

**अभिगन्तृ** त्रि० अभि+गम–तृच् स्त्रियां ङीप् । युद्धार्थम् आभिमुख्येन १ गन्तरि २ आनुकूल्येन गन्तरि च । "तत्र वरुणोऽभिगन्तेव ब्रह्म" शत०ब्रा० ।

**अभिगम** पु० अभि+आभिमुख्ये आनुकूल्ये वा गम–घञ् । आभिमुख्येन गमने "तथार्हतो नाभिगमेन तृप्तम्" रघु आनुकूल्येन २ गमने "स्वरुच्या क्रियमाणे तु यत्रानन्यक्रिया क्वचित् । गोद्यते नियमः सोऽत्र स्नातायभिगमो यथेति" मीमांसा । भावे ल्युट् । अभिगमनं तत्रैव न० । "अथेतरभिगमनात् पूर्वं तेनाप्यनभिनन्दिता" रघु । "पापकृन्मुच्यते पापात्तीर्थाभिगमनेन च" स्मृति ।

**अभिगम्य** त्रि० अभिगन्तुं शक्यते सौम्याकारत्वात् । आभिमुख्येन गन्तुं शक्ये "अद्यप्रभृति भूतानामभिगम्योऽस्मि शुद्धये" कुमा० । "सोऽभिगम्यश्च पूज्यश्च कर्त्तव्यश्च प्रदक्षिणम्" रामा० । "अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः" रघु । अभि+गम–ल्यप् । आभिमुख्येन गत्वेत्यर्थे अव्य० "मनुमेकाग्रमासीनमभिगम्य महर्षयः" इति मनु ।

**अभिगर** पु० अभि+गॄ–स्तुतौ अप् । १ अभितः स्तवे । "अनुष्टुप् तेऽभिगरम्" इति यजु०८,४७ ।

**अभिगामिन्** त्रि० अभिगच्छति अभि+गम–णिनि अभिगन्तरि । "ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" मनु । "राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना" या०

**अभिगीत** त्रि० आनुकूल्येन गीत । १ आनुकूल्यार्थं स्तुते २ अभितोगीते च ।

**अभिगुप्ति** स्त्री अभि+गुप्–क्तिन् । १ अभिरक्षणे "तदुभयमेवैताभिगुप्त्या आसादयति" श०ब्रा० ।

**अभिगूर्त्त(र्ण)** त्रि० अभि+गुर–क्त वेदे नत्वाभावः । १उद्यते "इष्टं वीतमभिगूर्त्तम्" यजु० २५,२७, "अभिगूर्त्ते ये यजामहे इत्यभिगूर्त्योक्तम्" वे०दी० लोके तु अभिगूर्णमित्येव अभ्युद्यते त्रि० ।

**अभिगूर्त्ति** स्त्री अभि+सातत्ये गुर–क्तिन् । सततमङ्गले "तेषामभिगूर्त्तिर्न इन्वतु" ऋ०१,१६२,६ । "अभिगूर्त्तिं मङ्गलं सर्वथा करणीयमिति बुद्धि" भा० २ अभित उद्यमे च "उतो तेषामभिगूर्त्तिर्न इन्वतु" ऋ०१,१६२,१२, "अभिगूर्त्ति" उद्यम भा० । [आनुकूल्यार्थं कृताङ्कुलौ ।

**अभिगृहीतपाणि** त्रि० आनुकूल्यार्थं गृहीतः पाणिर्येन ।

**अभिगेष्ण** त्रि० अभि+गै–इष्णु । अभितो गायके "यदेवता अभिगेष्णाचरन्ति" श्रुतिः ।

**अभिगोप्तृ** त्रि० अभितो गोपायति अभि+गुप–तृच् स्त्रियां ङीप् । अभिरक्षके ।

**अभिग्रस्त** त्रि० अभि+ग्रस–क्त । १ आक्रान्ते २ कवलीकृते च

**अभिग्रह** पु० अभि+ग्रह–अप् । (लुट) इति ख्याते प्रकाश्य हरणे, २ अभियोगे, ३ आभिमुख्येन ग्रहणे, ४ गौरवे ५ युद्धे च । ल्युटि अभिग्रहणमप्यत्र न० । [१ धर्षणे, २ मर्द्दने च ।

**अभिघर्षण** न० अभि+घृष–भावे ल्युट् । परस्परसंयोगेन

**अभिघात** पु० अभि+हन–भावे घञ् । १ निःशेषहनने समूलनाशने "दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ" सां०का० । २ ताडने । "तत्ताभिघातादिव कम्पपङ्के" कुमा० । अभिहन्यतेऽर्थं फलाय उद्दिश्यार्थे का० घञ् । द्रव्यान्तरक्रियया उत्पादितद्रव्यान्तरसंयोगे, वैशेषिकोक्ते शब्दहेतौ, संयोगिनोर्मिथो विभागजनकक्रियाहेतौ च २ संयोगभेदे । यथोक्तं "नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्मेति" वै०सू० । "स संयोगः शब्दनिमित्तकारणं, तज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः नोदनं तु तद्विलक्षणः संयोगः । ताभ्यामपि प्रत्येकं कर्म जन्यते पङ्कास्थायां पृथिव्यां चरणेन नोदनात् चरणाभिघाताच्च कर्म जायते तत्र पङ्कः समवायिकारणम् नोदनाभिघातौ यथायथमसमवायिकारणम् गुरुत्ववेगप्रयत्ना निमित्तकारणानि संयुक्तसंयोगात् नोदनाभिघाताद्वा पङ्के कर्म पङ्कस्थिते घटादावपि, तत्पतनकाल एव कर्मदर्शनादिति" प०उपस्कार । "आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म, तथा हस्तसंयोगाच्च मुषले, अभिघातजे मुषले कर्मणि व्यतिरेकादकारणं हस्तसंयोगः" वै०सू०तथात्मसंयोगात् हस्तकर्मणि, अभिघातात् मुषलसंयोगाच्च हस्ते कर्म "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत् क्रिया" इत्युक्तिप्रसङ्गात् आत्मसंयोगप्रयत्नाभ्यां हस्ते समवायिकारणे कर्म, तस्य च कर्मणः प्रयत्नवदात्मसंयोगोऽसमवायिकारणं प्रयत्नस्तु निमित्तकारणम् प्रयत्नवदात्मसंयोगासमवायिकारणिका च क्रियैव चेष्टा । तथा उत्क्षेपणहस्तसंयोगात् मुषले उत्क्षेपणं कर्म जायते । तथाच प्रयत्नवदात्मसंयुक्तेन हस्तेन यो मुषलस्य संयोगः स तत्रासमवायिकारणम् मुषलं समवायिकारणमिति । उद्गच्छलितस्य मुषलस्य कर्म-यदुत्पतनं जायते तत्र कारणमाह । मुषलादौ उत्पतनकर्मणि अभिघात एव हेतुः, न तु हस्तसंयोगः तस्य तु प्रति कारणत्वं नान्वयासिद्धत्वात् तद्व्यतिरेकेऽपि अभिघात-

मात्रेण अभिहतप्रधानगुरुद्रव्यसंयोगेनैव उत्पतनदर्शनात् यथा भूम्यादौ हस्तेन वेगवित्पलोष्टादेर्हस्तयोगं विनाऽपि उत्पत्तिर्दृश्यते।अत उत्पतने अभिघात एव असमवायिकारणम् "अभिघातात् मुषले संयोगाद्धस्ते कर्म" वै०सू० अभिघातात् अभिघातजनितसंस्कारजनितात् हस्तमुषलसंयोगात् हस्ते उत्पतनं कर्म तत्र मुषलसंयोगोऽसमवायिकारणम्। तीव्रवेगप्रयुक्तक्रियाजनित संयोग शब्दहेतुः । "तृतीय स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तित अभिघातोनोदनञ्च शब्दहेतुरिहादिम । शब्दाहेतुर्द्वितीय स्यादिति" "शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनि । "कण्ठसंयोगादिजन्यावर्णास्ते कादयोमता" इति च भाषा० अतएवोक्तम् "कण्ठताल्वाद्यभिघातजन्य शब्द" इति शब्दे । शिक्षायामप्युक्तम् "आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया । मन कायाग्निमाहन्ति स प्रेरयति मारुतम् । सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुत वर्णान् जनयते इति । स उदीर्णः सन्निः पादपूरणार्थ । मृदङ्गादौ तीव्रवेगेन काष्ठादिताडनसंयोगे शब्दोजन्यते इति लोके प्रसिद्धिः । इत्यादौ प्रयत्नतरवायुसंयोगाच्च शब्दो ध्वन्यात्मक एव। मृदुवेगेन क्रियया संयोगे नोदनरूपे न शब्द इति तस्य शब्दाहेतुत्वमुक्तम् अधिक नोदनशब्दे वक्ष्यते । "अभिघातोऽक्रयस्य धर्मे०भाष् ।" अभिघातयुक्ते त्रि० "अभिघातं स्यात् पूर्वं वेदहितादिवर्णाधेतु । नवगर्णाणा नवतो भरणीचन्द्रहिरामाद्या" इति केरलोक्ते वर्णभेदे न० शब्दकल्पद्रुम ।

**अभिघातक** त्रि० अभि+हन–ण्वुल् । १शत्रौ रिपौ २अभिघातसंयोगक रके ३समूलनाशके च । "तदभिघातके हेतौ" सा०का० । [इन् । रिपौ।

**अभिघाति** पु० अभिघातयति अभि–हन–स्वार्थे णिच–

**अभिघातिन्** त्रि०अभि+हन–णिनि स्त्रियां ङीप् । १शत्रौ २नाशके ३अभिघातसंयोगकारके च ।

**अभिघार** पु० अभिघार्य्यते समन्तादग्नौ सिच्यते अभि+घृ–क्षरणे णिच–भावे घञ् । अग्नौ समन्तात् घृतादेः १सेचने २ घृतादिसंस्कारभेदे च । "तदभिघृतोभावो द्रव्यवत् प्रकाशते" इत्युक्ते अभिघार्य्यमाणे ३घृतादौ च निरु० ।

**अभिघारण** न० अभितोघारणम् घृतादिभि विधिना सेचनम् । अभि+घृ–णिच्–भावे ल्युट् । घृतादेः संस्कारभेदे "तत्र जुह्वामभिघारणम् ध्रुवाया हविष उपभृतश्च" कात्या० १,३,६, "यद्द्वयाज्ञोमानन्तर यजतिस्माग्नादेत वेदे पश्चादागत्य उपविश्य जुह्वयैव प्रयाजशेषेण ध्रुवाया ध्रौवस्याज्यस्य हविष आज्यस्याज्याख्यपुरोडाशमेध उपभृत उपभृत्संस्थस्याज्यस्य अध्वर्युरभिघारणं करोति उपयोगक्रमेण अयञ्च हवि सस्कार प्रयाजशेषप्रतिपत्ति कर्मेत्युभयापीति द्वितीयास्तुतं हविष सम्कार्यत्वावगमात् अत सन्निहितानि सर्वाणि हवींषि एवैवाभिघारणीयानि कर्क०

**अभिचक्षण** अभि–चक्ष–ल्यु । १ सर्वतोविलोकने सर्वतुल्ये "वेदाकं तत्र भेषज यो युद्धुरभिचक्षणम्" अथ० ६,१२७,२, विप्रूविर्याक्षतोराण्या अभिचक्षणादिव अथ० ६,२,११।

**अभिचर** त्रि० अभितः आभिमुख्येनानुकूल्याय चरति चर–ट । १ भृत्ये २ अभितो गते च स्त्रियां ङीप्।

**अभिचरण** न० अभि+चर–ल्युट । १ मारणाय विहित-श्येनयागादौ ।

**अभिचरणीय** त्रि० अभिचरणमर्हति छ । १ अभिचारार्हे वैरिणि "स त्वष्टा हतपुत्रोऽभ्यचरत् सोऽभिचरणीयमपेन्द्रम् सोममाहरत्" शत० ब्रा० ।

**अभिचार** पु० अभि–आभिमुख्येन मारणाय चार अभि+चर–भावे घञ् । १ शत्रुवधोत्पादकहत्याजनके मूलकर्म्मणि "श्येनेनाभिचरन् यजेतेति" विहिते श्येनयागादौ । "अभिचारेण सर्वेषु कर्त्तव्यो द्विशतोदम:" "अभिचारमहीनस्तु त्रिभि कृच्छ्रैर्व्यपोहति" इति च मनु० "अभिचारक्रियाक्रूरैकप्रकृतव पुरोधस" काद०। अभिचाराय हितं स प्रयोजनमस्य वा ठञ्। आभिचारिक । १तद्धितकर्मादौ २तत्प्रयमन्त्रादौ च त्रि०स्त्रियां ङीप्।

**अभिचारकल्प** पु० अभिचारसाधनकल्पोरकल्पज्ञापकग्रन्थ । १ अथर्ववेदान्तर्गते ग्रन्थभेदे अथर्ववेदशब्दे विवरणम् ।

**अभिचारिन्** त्रि० अभिचरति अभि+चर–णिनि स्त्रियां ङीप् । १अभिचारकर्त्तरि "ये त्वा कृत्या ये भिरे विद्वांस अभिचारिण" अथ० १०,१,६ ।

**अभिच्छाय** त्रि० अभिगतच्छायाम् अत्या०स०, अभिमुखीभूता छाया यस्य वा । १छायायाप्ते २छायाभिमुखप्राप्ते च । छायाया अभिमुखम् अव्ययी० । ३छायाभिमुख्ये अव्य० । "यो माभिच्छायमत्येषि मां चाग्निं चान्तरा" अथ० १३,१,५७ ।

**अभिजन** पु० अभिजायतेऽस्मिन् अभि+जन+आधारे–घञ् अवृद्धि । १ कुले, "न परिचय रक्षति नाभिजनमीक्षते" काद० । "वयस कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह" मनु । २ जन्मभूमौ

जिदन्तर तत्सम्बन्धि गवामयनिकमेतत् कर्म० । संवत्सरसाध्ये गवामयने १प्रथमषाण्मासीयपक्षविगततमदिने यथोक्तम् ता०भाष्ये 'तत्र षष्ठे मासादौ त्रयोऽभिप्लवाः षडहाः कार्याः तत्र एकः पृष्ठ्यः षडहः ततोऽभिजिदेकाहः" इति । अभिजिन्नक्षत्रस्य च किञ्चिन्न्यूनदिनार्द्धमात्रत्वात् तन्मान्यात् षट्त्रिंशत्तिदिनाधिकषण्णमासस्य किञ्चिन्न्यूनदिनपरिमितस्यास्याभिजिन्नक्षत्रवाच्यता ६ तद्दिनकर्त्तव्ये ७ अतिरात्रयागादौ च उपचारात् अतएव ताण्ड्यभाष्ये "षष्ठे मासि त्रीनभिप्लवान् एकं पृष्ठ्यञ्च कृत्वाऽभिजिदहर्भवेत्" इत्युक्तम् विवरणं गवामयनशब्दे द्रष्टव्यम् । "अभिजिदतिरात्र" इति शत०ब्रा० ।"अतिरात्रस्य अभिजिन्नामके दिने कार्य्यं" इति भा० ।

**अभिजित** पु० अभिजीयादन्यान् संज्ञायामाभोर्षाद्रे रेवरातादिवत् क्त । अर्द्धरात्रसन्निधिनि मुहूर्त्ते "अहं त्वभिजिते योगे निशाया यौवने स्थिते । अर्द्धरात्रे करिष्यामि गर्भमोक्षं यथासुखम्" । मुहूर्त्तेऽभिजिते प्राप्ते चार्द्धरात्रे विभूषिते देवकीजनयद्विष्णुं यशोदा तान्तु कन्यकाम् 'विष्णु पु० ।

**अभिजिति** स्त्री अभि+जि—भावे क्तिन् । अभिजये "एषां लोकानामभिजित्यै" शत०ब्रा० ।

**अभिज्ञ** त्रि० अभिजानाति अभि+ज्ञा—क । १ निपुणे, २पण्डिते ३ ज्ञातरि चेतने "अन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्" भाग० । अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः कुमा० "अभिज्ञस्तनाभिज्ञतया निबद्धाः" रघुः ।

**अभिज्ञा** स्त्री अभि—ज्ञा—अङ् । १ प्रथमज्ञानभिन्ने ज्ञाने । २ संस्कारसहकृते इन्द्रियसन्निकर्षजन्ये प्रत्यभिज्ञाख्ये ज्ञाने च ।

**अभिज्ञात** त्रि० अभिज्ञायतेऽस्य अभि+ज्ञा—कर्म्मणि क्त । कालान्तरे पुनर्दृष्ट्या जातेन सोऽयमित्याकारकज्ञानेन विषयीकृते पूर्वदृष्टे पदार्थे ।

**अभिज्ञान** न० अभिज्ञायतेऽनेन अभि+ज्ञा—करणे ल्युट् । सोऽयमिति ज्ञानसाधने १चिह्ने । "चिह्नभूतं त्वभिज्ञानं त्वमङ्के कर्त्तुमर्हसि" "उपपन्नैरभिज्ञानैर्दूत तमवगच्छत" इति च रामा० । भावे ल्युट् । तदिदमित्याकारके २ज्ञाने च । तच्च संस्कारसहकृत पुरोवर्त्तिनि इन्द्रियसन्निकर्षजन्यं प्रत्यक्षविलक्षणं स्मृतिविलक्षणञ्च ज्ञानम् । "तदभिज्ञानहेतोर्हि दत्तं तेन महात्मना" रामा० ।

**अभिज्ञानशकुन्तला** स्त्री अभिज्ञायते कर्मणि ल्युट् तथाभूता शकुन्तलाभिज्ञा कृताख्यायिका "तदधिकृत्य कृते ग्रन्थे" पा० अण् आख्यायिकायां तस्य वा लुपि व्यक्तिवचनतीति क्लीवम् । कालिदासकृतौ दुष्यन्तेन गान्धर्वविधिना कृतोपयमां शकुन्तलामभिज्ञाय कृते नाटकभेदे तस्याश्च दुर्वासःशापात् प्रथमं दुष्मन्तेनानभिज्ञानात् पश्चाच्च तद्दत्ताङ्गुरीयकरूपाभिज्ञानदर्शनेन प्रत्यभिज्ञाततत्वात् तामधिकृत्याख्यायिकाप्रतिपादकनाटकस्य तथात्वम् । "कालिदासस्य कर्ष्यमभिज्ञानशकुन्तला" कुमारे अभिज्ञानशकुन्तलम् न० । "अनेनाभिज्ञानशकुन्तलेनेति" शकु० ।

**अभिक्नु** त्रि अभिगते आभिमुख्येन स्थापिते जानुनी येन वेदे बा०त्रु १ आभिमुख्येनावस्थापितजानुयुक्ते । "संजानाना उपसीदन्नभिक्नु" ऋ० १,७२,५ ।

**अभितराम्** अव्य० अभि+प्रकर्षे—तरप् आम् । १ आभिमुख्यातिशये २ पर्वे पर्वेराभिमुख्ये च "अभितरां वै अयन् क्रामति तस्मादभितरामभितरामेव क्रामेत्" शत०ब्रा० । "अभितराम् उ वै मनोरत्नमभिमुखं वसु, अस्मादपि देवहीतत् पुरस्तादाक्रामेदिति" भा० ।

**अभितस्** अव्य० अभि+तसिल् । सामीप्ये, आभिमुख्ये, उभयतोऽर्थे, शीघ्रतायाञ्च । एतद्योगे द्वितीया "अभितःपरितः समया निकषा हा प्रति योगेऽपि" "अभिसर्वतसो कार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इत्युक्ते । "अङ्गान्ययासीदभितः प्रधानमिति" भट्टि "अभितस्तं पृथासूनुः स्नेहेन परितस्तरे" किरा० 'कामक्रोधवियुक्तानां यतीनां यतचेतसाम् । अभितो ब्रह्मनिर्वाणमिति" गीता २वाकल्ये च । "पर्य्यभिभ्याञ्च" पा० "सर्वोभयार्थाभ्यामेव वा० उक्तेः सर्व्वोभयार्थयोरेवास्य साधुता ।

**अभिताप** पु० अभि+तप—घञ् । भय सन्तापे ।

**अभिताम्र** पु० अत्य ताम्रं प्रा०स० । १ अत्यन्तताम्रवर्णे २ तद्वति त्रि० "रावणस्याभिताम्रास्यं ददर्शानघचक्षुषम्" रघु ।

**अभितोमुख** त्रि० अभितः मुखमस्य । १ सर्वदिङ्मुखे ।

**अभिदर्शन** न० आभिमुख्येन दर्शनम् अभि+दृश—भावे ल्युट् । आभिमुख्येन दर्शने, "ग्रामघाते हिताभङ्गे, परेषामभिदर्शने" मनुः । [स्मृतौ च ।

**अभिद्रा** स्त्री अभि+द्रा—अङ् । १ पलायने, २अभिध्यायाम्

**अभिदि(धि)प्सु** त्रि० अभि+दम्भ—सन् उ वेदे नदस्य ध । १अभिभवनेच्छावति "विश्वा इदर्यो अभिदिप्सुः" इति ऋ० २,२३,१२ । "अभिदिप्सु अभिभवनेच्छावती शत्रुकम्" भा०

**अभिद्रवण** न० अभि+द्रु–ल्युट्। १ वेगेन गमने। अप्। अभिद्रवोऽप्युक्तार्थे पु०।

**अभिद्रुह्** त्रि० अभिद्रुह्यति अभि+द्रुह् क्विप्। १ अपकारके

**अभिद्रोह** पु० अभि+द्रुह–घञ्। १आक्रोशे, २अनिष्टचिन्तने, ३अपकारे च। "नामजातिग्रहं तेषामभिद्रोहेण कुर्वतः"। मनु "भूतेन्द्रियाणामभिद्रोहो धर्मो हि परमो मतः" का०ख०

**अभिधर्षण** न०आभिमुख्येन धर्षणम्। १निष्पीडने २आस्फालने ३भूतादेरावेशे च। कर्त्तरि ल्यु। ४राक्षसे पु०।

**अभिधा** स्त्री अभि+धाञ्–भावे अङ्। १ कथने, २शब्दनिष्ठे अर्थबोधजनकताशक्तिभेदे च। अभिधीयतेऽनेनेति करणे अङ्। ३ वाचकशब्दे भट्टमते फलजनकव्यापाररूपायां शब्दनिष्ठायां ४ भावनायाञ्च। अभिधा च सङ्केतितार्थस्य बोधिका शब्दनिष्ठा शक्तिरिति आलङ्कारिकाः "वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः॥ व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" सा०द०। "तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा" सा०द०। भाट्टास्तु प्रवृत्तिजनने विधिव्यापारीभूता विधिसमवेता भावनापरनामाऽतिरिक्तपदार्थविशेषोऽभिधा तस्या एव ज्ञानं प्रवर्त्तकं तस्यैव च भावनात्वरूपेण विधिशक्तिः सा च जन्यत्वसम्बन्धेन एकपदोपात्तत्वप्रत्यासत्त्या वा आख्यातसामान्यशक्तिवललभ्या कृतिरूपव्यापारविधेरर्थान्तरे विशेषणतयाऽन्वेति प्रत्ययार्थोऽपि विषयितया व्यापारे विशेषणं तथा च यागविषयकभावनाजन्यव्यापारवान् पुरुष इत्यन्वयबोधः नचैतादृशबुद्धावपि प्रयोजनाभावे कुतः प्रवृत्तिः प्रयोजनस्याहेतुत्वे विश्वजिदादौ फलकल्पनानुपपत्तेरिति वाच्यम् यागविषयकव्यापारेऽभिधाजन्यत्वस्यान्वये व्यापारनिष्ठेष्टसाधनत्वस्याप्यप्रयोजकरूपतया अव्यभिचारेण बोध्यताबलादेव व्यापारे तद्भानात्। अतो विधित एव स्वर्गादिसाधनत्वग्रहणाद्य प्रवृत्तिरूपव्यापारे आख्यातार्थेऽन्वेति प्रवृत्ताविष्टसाधनताज्ञानमेव प्रवर्त्तकम्। न चैवं न्यायमताविशेषः इष्टसाधनत्वेन विध्यर्थत्वस्वीकारादिति वाच्यं क्रियागतसाधनत्वं न विध्यर्थः अपि तु प्रवृत्तिगतमिति विशेषात् अभिधाभ्युपगमानभ्युपगमाभ्यामपि विशेषसम्भवाच्च न चैवं तादृशाभिधायां मानाभाव इति वाच्यं विधि प्रवृत्तिजनकधर्मसमवायिकारणं तज्जनकत्वात् यदादावर्यादित्यनुमानादेव तत्सिद्धेः भट्टमते शब्दस्य द्रव्यत्वात् तत्सिद्धिः। न च प्रवृत्तिजनकशरीरे व्यभिचारः, तस्य शरीरप्राणसंयोगोत्पादकत्वात् न च विधिर्न प्रवृत्तौ कारणं प्रवृत्तिसामान्ये व्यभिचारात् इति वाच्यं वैधजन्यप्रवृत्तौ तद्धेतुत्वात् यागवत् प्रवृत्तावपि वैलक्षण्यसम्भवाच्च तच्च जातिरूपमखण्डोपाधिरूपं स्वरूपमेवान्यदेतत्। नन्वस्त्वभिधा तथापि तद्धर्मिप्रवृत्तिहेतुः प्रवृत्तिसामान्ये तस्य व्यभिचारात् प्रत्यक्षादिना इष्टसाधनत्वग्रहेऽपि प्रवृत्तेः, नापि यागादिविषयिकायाः, यागकृतिः स्वर्गसाधनमित्याप्तवाक्यादितोऽपि प्रवृत्तेः। नापि विधिजन्यायां, तज्जन्यतावच्छेदकस्यैव दुष्परिचयात्। नापि जातिविशेषविशिष्टायां, गुणगतजात्यनभ्युपगमात् इति चेन्न विधिजन्यतावच्छेदकाखण्डोपाध्यवच्छेदेनैव तद्धेतुत्वात् न च भावनादिपदादपि तादृशप्रवृत्त्यापत्तिरिति वाच्यं विधिजन्यभावनाज्ञानस्यैव विलक्षणशक्तिमत्त्वेन तादृशप्रवृत्तिविशेषे हेतुत्वादित्याहुः। तामेतामभिधारूपभावनां प्राभाकरा न मन्यन्ते। एष हि तेषामाशयः कृत "अभिधासंकल्प्याऽपूर्व्वभावनाज्ञानं न प्रवर्त्तकं तस्मिन् सत्यप्यप्रवृत्तेः असत्यपि प्रवृत्तेश्च किन्तु कार्य्यत्वज्ञानमेव प्रवर्त्तकमिति तथा हि बालस्य कृतौ जननीयतव्यायां चिकीर्षातिरिक्तं न कर्त्तव्यमस्ति यत्प्रमन्ये कृतिविलम्बो हेत्वन्तराभावात्। चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयकेच्छा पाकं कृत्वा साधयामीति तदनुभवात् सा च स्वकृतिसाध्यज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात्" इति। यथा वाक्यस्यैव प्रवर्त्तकत्वं तथा विधिशब्दे वक्ष्यते। सा चाभिधाशक्तिः कुत्रार्थे कस्येति व्याकरणादितो ज्ञायते तदुक्तमभियुक्तैः "शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति व्याख्यायेदमुदाहृतमाभिः शब्दार्थरत्ने। यथा "तत्र सर्वेषां शब्दानां प्रथमतो व्यवहारादेव प्रायशः शक्तिग्रहः। तथा हि कोऽपि वृद्धेन व्युत्पन्नं पुरुषं प्रति गामानयेत्युपदिष्टे तत् शृण्वन् व्युत्पन्नो गवानयने प्रवर्त्तते। तच्चेष्टादर्शनेन तत्प्रवृत्तिमनुमाय व्युत्पित्सुर्बालो व्युत्पन्नपुरुषीयप्रवृत्त्यन्यथानुपपत्त्या तद्धेतुभूतकर्त्तव्यतादिज्ञानादिकं तत्रानुमिनुतेऽनुमिनुते चापरकारणानुपस्थितेः श्रुतस्यैव समुदितवाक्यस्य तद्बोधजनकत्वम्। ततश्च वाक्यस्य तद्बोधजनकत्वेन तत्सम्बन्धित्वमवसीयते इत्यतो व्यवहारस्यैव शक्तिग्राहकत्वमित्येवमवसीयते शास्त्रकारैः। पश्चाच्च पदानामन्वयव्यतिरेकाभ्यां प्रत्येकपदशक्तिग्रहः तथा हि पुनश्च गां बधान घटमानयेत्यादिवाक्यश्रवणे नियोज्यस्य पूर्व्वापेक्षया विशेषकार्य्यप्रवृत्तिदर्शनेन गवादिपदश्रवणसत्त्वे तत्कार्य्यकरणं तदभावे च तत्कार्य्या-

सर्वं जानाति देव इति देवोभवान् । कुपितोमकरध्वज इति मकरध्वज काम ।, देव पुरारि इति, पुरारि शिव । मधुना मत्त पिक इति मधुर्वसन्त । पातु वोद-यितानुखमिति कामुख्यम् । विभाति गगने चन्द्र इति चन्द्र शशी । भिथि चित्रभानु इति चित्रभानुर्वह्नि । भाति रथाङ्गम् इति नपुंसकव्यक्त्या रथाङ्ग चक्रम् । स्वरस्तु वेदे एव विशेषप्रतीतिकृत् न काव्यादौ तस्य विषयोऽतोनोदाहृत इति, यथा । दुर्गालङ्घितविग्रहो मनसिज सम्मीलयंस्तेजसा प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभि । नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचं धारयन् गामाक्रम्य विभूतिभूषिततनू राजत्युमा वल्लभः । अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्योमानाम्नी महादेवी तद्वल्लभभानुदेवन्नृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते" सा०द० ।

**अभिधायक** त्रि० अभि+धा—ण्वुल् । वाचकशब्दे "शिक्षान्तरा नभिधायकत्व मित्यस्त्वोत्तमिति का० वृत्ति २ तत्तच्छब्दो-च्चारके च ।

**अभिधायिन्** त्रि० अभिधत्तेकथयति अभि+धा—णिनि स्त्रियां ङीप् । १ कथके २ शब्दप्रयोक्तरि । "त्व मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां संस्पृशीति "अमरुशतकम् वाचकशब्दे च "प्रत्यक्षादिप्रमाणसिद्धविरुद्धार्थाभिधायिन वेदान्ता यदि शास्त्राणि बौद्धै किमपराध्यते इति ।

**अभिधावक** त्रि० आभिमुख्येन धावति अभि+धाव—ण्वुल् । आभिमुख्येन वेगेन गन्तरि ।[शिशुभिष्मायां विवक्षायाम् ।

**अभिधित्सा** स्त्री अभिधातुमिच्छा अभि+धा—सन्-अ । कथ-

**अभिधृष्णु** त्रि० अभि+धृष—क्नु । अत्यन्तधर्षके । "तस्मादु-मध्याण चम्नमभिधृष्णु तम" शत० ब्रा० ।

**अभिधेय** त्रि० अभिधीयते अभिधावृत्त्या बोध्यते अभि+धा—कर्मणि यत् । वाच्यार्थे सङ्केतवति शब्दार्थे । आवि-ष्कारातिशयोऽभिधेयवत् प्रतीयते" सा०द० "अभिधेया विनाभूतप्रतीतिर्लक्षणोच्यते" का०प्र० ग्रन्थप्रतिपाद्ये च" "इतिप्रयोजनाभिधेयसम्बन्धा" इति मुग्धबोधम् "एते-नाभिधेयञ्च दर्शितम् सा० द० ।

**अभिध्या** स्त्री अभि+ध्यै—अङ् । १ परधनस्वाजिहीर्षाया, २ जिघृक्षाया, ३ विषयप्रार्थनायां ४ चिन्तने, च । अभि-ध्यायतेश्चिन्तनार्थत्वात् तथात्वम् "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधा प्रजा इति" मनुना आलोचने अभिध्यायते प्रयोगात् तस्यास्तथार्थत्वम् । "अभिध्योप देशाच्च" शा०सू० ।

**अभिध्यातव्य** त्रि० अभि+ध्या—तव्य । सततचिन्तनीये । "य पुनरेत त्रिमात्रेणोमित्यक्षरेण परं पुरुषमभिध्यायीतेति" श्रुत्या "परमेव ब्रह्माभिध्यातव्यमित्युपदिश्यते" शा०भा० ।

**अभिध्यान** न० अभि+ध्यै—भावे ल्युट् । १ अभिध्याशब्दार्थे २अभितोध्याने च तच्च भिन्नजातीयप्रत्ययानन्तरितोऽविच्छिन्न एकमात्रविषयप्रत्ययसन्तान । "तदभिध्यानादेव तल्लिङ्गात्" शा०सू० ।

**अभिनद्ध** त्रि० अभितो नद्ध बद्ध अभि+नह—क्त । सर्वतो बद्धे "यथा सौम्य । पुरुषमभिनद्धाक्षमिति" छा० उ० "अभिनद्धाक्षं बद्धाक्षम्" भा० "परिरम्भरुचि ततिर्जला-नामभिनद्धा रसमानसारसेन" माघ ।

**अभिनन्द** पु० अभि+नन्द—घञ् । १सन्तोषे, २प्रतिपाद्यगुण-कथनादिनाऽऽनन्दे ३ प्रशंसायाम् ४अल्पसुखे च "योनि-रर्चियदन्त. करोति तेऽङ्गारा अभिनन्दा. विस्फुलिङ्गा छा० उ० "अभिनन्दा सुखलवा" भा० । अभि-नन्दयति । अभि+नन्द—णिच्—अच् । ५ सन्तोषके ६ प्रोत्साहनेन प्रवर्त्तके च त्रि० । अभितो नन्दत्यत्र आधारे घञ् । अनन्त सकलतादि गुणप्रशसनप्रवर्त्तक-शान्तिभेदे । तत्र हि स सुखायते । अभितोनन्द । आ-नन्दमये परमात्मनि इति वेदान्तिमते । नैयायिकादिमते तु अभितोनन्द दुःखाभावो यत्र व्य० । परमात्मनि, सर्वदु खशून्यत्वात्तस्य तथात्वम् । भारादिदु खापगमेऽपि भारादिवाहकानाम् अह सुखी संवृत्त इति प्रतीते दुःखाभावेऽपि सुखत्वोपचारदर्शनात् ईश्वरस्य सदा दुःखाभावाच्च तथात्वम् ।

**अभिनन्दन** न० अभि+नन्द—भावे ल्युट् । १ सन्तोषे । णिच्—ल्युट् । सन्तोषार्थं २ प्रशंसने । कर्त्तरि ल्यु । ३ सन्तोषके प्रोत्साहनार्थं ४ प्रवर्त्तके ५ प्रशंसके च त्रि० । देवभेदे पु० ।

**अभिनन्दनीय** त्रि० अभिनन्द्यते प्रशस्यते अभि+नन्द—णिच् कर्मणि अनीयर् । १प्रशंसनीये २प्रोत्साहनेन प्रवर्त्तनीये च ।

**अभिनन्दित** त्रि०अभि+नन्द—णिच्—क्त । १प्रशंसिते २अनु-मोदनेन प्रोत्साहिते च ।

**अभिनन्दिन्** त्रि० अभिनन्दति णिनि । १ सन्तोषिणि । अभिनन्दयति णिनि । २ अनुमोदनेन प्रोत्साहके । स्त्रियासुभयत्र ङीप् ।

**अभिपुष्प** पु० अभितः पुष्पमस्य । १ सर्वतः पुष्पवति वृक्षे ।

**अभिपूरण** न० अभ्यासेन अभितो वा पूरणम् प्रा० स० । अभ्यासेन सर्वतः पूरणे "अभिप्रयाभ्यासेनाभिपूरणम्" कात्या० २४,२,११, ।

**अभिप्रज्ञा** स्त्री अभितः सतत प्रज्ञा चिन्तनम् । सततचिन्तने "तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहि" ऐ० ब्रा० अभिप्रजानीहि चिन्तयेति व्याख्यानात्तस्यास्तथार्थत्वम् ।

**अभिप्रणयन** न० अभितः सर्वतः प्रणयन संस्कार । वेदविधिना अग्न्यादेः संस्कारे ।

**अभिप्रणीत** पु० अभितः प्रणीतः । सर्वतः वेदविधिना संस्कृते वह्न्यादौ "तत्वात लोकस्थितये स राजा यथाध्वरे वह्निरभिप्रणीतः" भट्टिः ।

**अभिप्रमुर्** स्त्री अभिप्रमूर्च्छति आकुलितदानेन वक्रिमतया । १ अभि+प्र+मूर्च्छ करणे क्विप् । जुह्वाम् ।

**अभिप्रवर्त्तन** न० अभितः प्रवर्त्तनम् । १सर्वतः प्रवृत्तौ २सर्वतः प्रस्रवणादने च "त्वक्पादोरोमहर्षश्च स्वेदस्याभिप्रवर्त्तनम्" सुश्रुतः ।

**अभिप्रातर्** अव्य० अभ्यन्तं प्रातः । १ अतिप्रत्यूषे "अथाभिप्रातरेव स्थालीपाकाश्रुतान्नमिति" शत० ब्रा० ।

**अभिप्राप्ति** स्त्री आभिमुख्येन प्राप्तिः प्रा० स० । १ आभिमुख्येन प्राप्तौ अभिपित्वशब्दे उदाहृत निरुक्तवाक्यम् ।

**अभिप्राय** पु० अभि+प्र+इण-भावे अच् । १ आशये । "तेषां स्वस्वमभिप्रायमुपलभ्य पृथक् पृथक्" मनु । "सर्वामभिप्रायकृतान् भार्य्यालभत कौरव" भा० उ० प० अभिप्रैति कर्त्तरि पचा० अच् । २ अभिगामिनि "स्वरितञितः आत्मनेपद कर्त्रभिप्राये क्रियाफले" पा० कर्त्रभिगामिनीति व्याख्याकारः मणिकृता तु एतत्सूत्रं कर्त्तुरुद्देश्यकतापरतया व्याख्यातम् तच्चापूर्वशब्दे ९५० पृष्ठे दर्शितम् । अभिप्रेयते पुरुषार्थकज्ञभि आभिमुख्येन प्रलयेऽभिप्रैति जगदस्मिन् वा कर्मणि आधारे वा अच् । ३विष्णौ "अभिप्रायः प्रियार्होऽर्हः" इति वि० स० ।

**अभिप्री** त्रि० अभिप्रीणाति अभि+प्री-क्विप् । १ सर्वतस्तर्पके "तम्यं वाता अभिप्रियत्नुय मर्षन्ति सिन्धवः" ऋ० ८,३१,२

**अभिप्रेत** त्रि० अभि+प्र+इण-क्त । १अभिलषिते "अभिप्रेतार्थसिद्धिर्मङ्गलम्" "आचार्य तु भवेत् कार्य्यमभिप्रेतार्थसिद्धये" भवि० पु० ।

**अभिप्रेत्य** अव्य० अभि+प्र+इण-ल्यप् । १ उद्दिश्येत्यर्थे । "यदभिप्रेत्य धात्वर्थमात्रमुक्तदानमिति" व्याकरणान्तरम्

**अभिप्रेप्सु** त्रि० अभि+प्र+आप-सन्-उ । प्राप्तुमिच्छौ "महान्तमभिप्रेप्सुरुत्सृजेत्पापकृत्स्नः" "ऐन्द्रं स्थानमभिप्रेप्सु" इति च मनु ।

**अभिप्रोक्षण** न० अभितः प्रोक्षणं संस्कारभेद । १ जलादिना सर्वतः सेचनरूपे वैधे संस्कारे ।

**अभिप्लव** पु० अभिप्लवन्ते स्वर्गमभिगच्छन्ति अभि+प्लु-गतौ अप । १ प्राजापत्ये आदित्ये । "अथादित्याश्चाङ्गिरसश्च उभये प्राजापत्या अस्पर्द्धन्त वयं पूर्वे स्वर्गं लोकमेष्यामो वयं पूर्वे इति । आदित्याश्चतुर्भिः स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त तस्मादभिप्लवाः आदित्याः" शत० ब्रा० । २कर्मसाध्ये गवामयने प्रतिमासीयषडहविंशतिदिवसेषु षट्षट्कात्मकेषु षडहेषु विधेय गवामयनशब्दे वक्ष्यते । "अभिप्लव षडहः षडहानि भवन्त्यभिप्लवः" इति शत० ब्रा० । "अभिप्लवं पूर्वं पुरस्तादिषुवत उपयन्ति षडहेनैव महाव्रतमभिप्लवेन परमभिप्लवमिति" च शत० ब्रा० । ३षडहसाध्ये स्तोमादिपाठसाधने गवामयनाङ्गयागभेदे च । ४उपप्लवे-उपद्रवे ५जलात् प्लवने च । अभिप्लवे विहित ठक् । आभिप्लविक उक्तषडहेषु विहिते सामादौ । [त्रि० च ।

**अभिप्लुत** त्रि० अभि+प्लुत-क्त । १ सर्वतोव्याप्ते २अभित

**अभिभङ्ग** त्रि० अभितोभङ्गो यस्मात् । १ भङ्गहेतौ "अभिभुवेऽभिभङ्गाय वन्यते" ऋ० २,२१,२, अभितोभङ्ग । २सर्वतोभङ्गे पु० । अभिमतोभङ्गो यस्य । ३भङ्गयुक्ते त्रि० ।

**अभिभव** पु० अभि+भू-अप् । पराजये, तिरस्कारे अनादरे, च । "रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः" रघु "अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे" कु० "अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः" गीता । रोगादिना गात्रादिजडीभावे "एवमिच दयिकथैर्विहि स्थान गमागमोम स्व । न स्तृत न चापि मृष्ट न रोगयान्तिर्नपाभिभव" षट्पञ्चाशिका ।

**अभिभवन** न० अभि+भू-ल्युट् । १ अभिभवे रोगादिना ज्ञानरोधे "जरया चाभिभवनं व्याधिभिश्चोपपीडनम्" मनु

**अभिभा** स्त्री अभि+भा-अङ् । १ अभिभवे "मा त्वा काचिदभिभा विश्वाविदत्" ऋ० २,४२,१ । "अभिभा अभिभवः" भा० ।

**अभिभार** त्रि० अभिभ्राभार्थे अतिशयितो भारो यस्य । अतिभारान्विते "यत्तत् पश्यति तद्व्यमभिभार करोति तेन यस्येयाभिभारयेमाँ लोकान् प्रभिनत्ति" शत० ब्रा० ।

विनिहतो राजन् एको बहुभिराहवे" भा०द्रो०प० ।

**अभिमर** पु० आभिमुख्येन म्रियतेऽत्र अभि+मृ आधारे अप् । १युद्धे । करणे अप् । २भये, अभिम्रियते यस्मात् अपादाने अप् । ३ मारणव्यापारे वधे ४ बन्धने च अभिमुखी-भूय म्रियते कर्त्तरि अच् । ५ स्वसैन्ये ६ धनाद्यर्थं प्राणनिरपेक्षतया हस्तिनं व्याघ्रं वाऽभियोद्धुमुद्यते च ।

**अभिमर्द्द** पु० अभि+मृद–भावे घञ् । १चूर्णीकरणे २निष्पी-ड़ने च । आधारे घञ् । ३ युद्धे, ४ मद्ये च । कर्त्तरि अच् । ५ मर्द्दनकर्त्तरि त्रि० ।

**अभिमर्द्दन** न० अभि+मृद–भावे ल्युट् । १ आरब्धकर्म-योगमायनेन चूर्णीकरणे २निष्पीड़ने च ।

**अभिमर्श(र्ष)** पु० अभि+मृश(ष) भावे घञ् । १ स्पर्शे धर्षणे च "पराभिमर्शो न तवास्ति कः करमिति" कुमा० । "हताभिमर्शा(र्षा)मनुमन्यमान सुतां त्वया नाम मुनि-र्विमान्य" शकु० । "परदाराभिमर्शे(र्षे)षु प्रवृत्तान् नॄन् महीपतिः" मनु ।

**अभिमर्श(र्ष)क** त्रि० अभि+मृश(ष) ण्वुल् । १स्पर्शकर्त्तरि २धर्षणकर्त्तरि च "न दुष्टः कश्चिदप्यासीत् परदाराभि-मर्शकः" रामा० ।

**अभिमर्शन(र्षण)** न० अभि+मृश(ष)–भावे ल्युट् । १ स्पर्शे "नीवीस्तनप्रावरणसक्थिकेशाभिमर्शनम् (र्षणम्)" या० । "यः पुनः परनारीपरिधानमप्यभिमर्दयकुचप्रावरणजघन-मूर्द्धकचादिस्पर्शनं साभिलाष इवाचरति" मिता० । "सद्यो-ऽभिमर्शनम्(र्षणम्) कात्या० ६,८,१६, "तूष्णीं पिष्टमा-दीनां करणाभिमर्शन(र्षण)लक्षणधूमगप्रदहनोद्धरणाव-क्षेपणानि" कात्या० २६,१,२७ धर्षणे च "परदाराभि-म(र्ष)र्शनम्" स्मृतिः ।

**अभिमाति** त्रि० अभि–मेङ् कर्त्तरि क्तिन् न ह्रस्वम् । घातके । "विष्णोः क्रमोऽस्यभिमातिहा" यजु० १२,५, "अभिमाति घातकः" वेददी० । २शत्रौ पु० हेम० । "अग्ने! सहस्र पृतना अभिमातीरपास्य" य० ६,२७, अभिमातिः शत्रु-रुच्यते क्षीत्वमार्षम् अभिमातीन् शत्रून्" वेददी० ।

**अभिमातिन्** पु० अभिमातमनेन अभि+मेङ्–भावे क्त वेदे इट् न ह्रस्वम् इष्टा० इनि । शत्रौ । "बाधते विश्वमभिमातिनम्" ऋ० १,८५,२ "अभिमातिनम् शत्रुम्" भा० ।

**अभिमातिषाह्** त्रि० अभिमातिं रिपुं सहते सह–क्विप् वेदे षत्वम् । रिपुजयिनि "तहीरासो अभिमातिषाहः" ऋ० ६,७,२, "अभिमातिषाहः शत्रूणामभिभवितारः" भा० ।

**अभिमातिषाह** त्रि० अभिमातिं रिपुं सहते सह–अच् उप० स० वेदे षत्वम् । रिपुजयिनि । "अभिमाति-षाहोगवेषणः सहमान उद्भित्" अथ०५,२०,११ ।

**अभिमान** पु० अभि+मन–घञ् । १ आत्मन्युत्कर्षारोपे, २ मिथ्यागर्ब्बे–बलादिदर्पे, ३ प्रणये, ४ हिंसायाम् । ५गर्वमात्रे "सकलयोनेरभिमानमूलम्" कुमा० ६स्वरूप-ज्ञाने । "अनाप्तस्य चाभिमानसामर्थ्यात्" कात्या० ६,५,१२ "अनाप्तस्य अनाप्तरसस्य चरसस्यैव सोमस्य सोमाभि-मानसामर्थ्यात् सोमबुद्धिसामर्थ्यादिति सोमोऽयमिति बुद्धि-रनाप्तरसे अनभिषुते एव सोमे नाभिषुते" कर्क० । ७मिथ्याज्ञाने "अभिमानैर्न मानोभि जातिदोषैर्न वै महान्" भा० शा०प० । "उत्साहादिगुणद्दोष चाचारस्याभि-मानतः" सा०द० । मिथ्याज्ञानञ्च तदभाववति तत्-प्रकारकं ज्ञानं यथा देहे आत्मत्वबुद्धिः आत्मनि च स्वतो-ऽप्युत्कर्षस्य ज्ञानम् । शुक्तिकायां रजतज्ञानम् मूर्खस्य पा-ण्डित्याभिमान इत्यादि । अभिमानश्चात्मधर्म इति वैशेषिका-दय । अन्त करणधर्म इति सांख्यादयो वेदान्तिनश्च । तत्र विपर्यासज्ञानमविद्या सा च बुद्धिधर्म मर्यात्मकज्ञानम् अहङ्कारस्य वृत्तिभेद । "अहङ्काराभिमानवृत्तिकमन्तः-करणद्रव्यम्" सां०प्र०भा० । अभिमानोऽहङ्कार सां०सू० "अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्त्तते सर्गः" सां०का० अभिमानोऽहङ्कारः यत् खल्वालोचित, मतञ्च तत्राहमधि-कृत मत्तः खल्वहमत, मदर्था एवामी विषया', मत्तो-नान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमान सोऽसाधारणव्यापारत्वादहङ्कारः तमुपजीव्य हि बुद्धि-रध्यवस्यति कर्त्तव्यमेतन्मयेति" त०कौ० । अन्त-करणस्य वृत्तिभेदात् त्रिविधमिति सांख्यादयः" "मनो-बुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयो निश्चयोगर्ब्ब' स्मरणम् विषया इमे" इति चतुर्भिर्वृत्तिमत्त्वेन चतुर्विधं वेदान्तिन स्तोषकु । "न हि धनिनो ग्रहस्थस्य धनाभि-मानिनो धनापहारनिमित्त दुःख दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्त दुःख भवति । न हि कुण्डलिन कुण्डलित्वाभि-मानमिमित्त सुख दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानहीनस्य तदेव कुण्डलित्वनिमित्त सुखं भवति" शा०भा० । अभितोमानः । ८श्रृङ्गाररसान्तर्गत-भेदे । "विप्रलम्भोऽथ सम्भोग इत्येष द्विविधोमतः च

च पूर्वरागमानप्रवासात्मकचतुर्धा स्यात् । मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि” सा०द० अधिके मानमात्रे । ६वैर-निर्यातने, “अभिमानधनस्य गत्वरैः” किरा० । अभिमानेन निर्वृत्तः ठक् । आभिमानिक अभिमानसाध्ये त्रि० ।

**अभिमानित** त्रि० अभिमानो गर्वो जातोऽस्य इतच् । जातगर्वे १जाताभिमाने अभि+मन+णिच्–आधारे क्त । २अभिमानसाधने मैथुने सुरते न० ।

**अभिमानिन्** त्रि० अभि+मन–णिनि स्त्रियां ङीप् । १गर्वयुक्ते २प्रणयकोपादियुक्ते च चौत्तमस्य मनोः ३पुत्रभेदे पु० । “तत्तमोऽर्थप्रव तत्सात्तुप एव च अभिमानो प्रवीणश्च जिष्णुः संक्रन्दनस्तथा । तेजस्वी सबलश्चैव चौत्तमस्यैते मनोः सुताः, हरिवं० । ४मिथ्याज्ञानयुक्ते त्रि० । “अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्” शा०सू० । “यतोऽभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते” शा०भा० ।

**अभिमानुक** त्रि० अभि+मन–वा० उकञ् । अभिमानशीले अभिमानेन प्राप्तुः बाधितुं यत्ने च । “अयक्ता एवमुरभिमानुकोऽस्य पश्चात् तृणस्यात् यदग्नात्” शत०ब्रा० । ‘अभिमन्तुं बाधितुं यत्न स्यात्” भा० ।

**अभिमाय** त्रि० अभिगतो मायामविद्याम् अत्या०स० । इति कर्त्तव्यविमूढे अज्ञानेनैव लोकानां कर्त्तव्याकर्त्तव्येषु मोहः इति तद्वत्त्वाज्ज्ञत्वम् ।

**अभिमि(मे)ह्य** त्रि० अभि+मिह–वा० वेदे क्यप् लोके ण्यत् । यस्याभिमुख मेहनं मलमूत्रत्याग क्रियते तस्मिन् ‘यत मेह्यनु भवति तत् सम्यविनाशाया लोष्टं वा विशिष्योपहन्यीय ते वयिया तनूरिति इयं वै पृथिवी देवयजनी सा दीक्षितेन नाभिमिह्या” शत०ब्रा० ।

**अभिमुख** त्रि० अभिगतो मुखम् अत्या०स० । १सम्मुखतां गते “प्रसादाभिमुखो मन्त्रा प्रत्युवाच दिवौकसः” कुमा० । “वानराभिमुखोऽगच्छद्रथे रणविशारदः” रामा० । “निद्रा चिरेण नयनाभिमुखीबभूव” । सम्बन्धस्य साकल्यत्वे स्त्रियां वा ङीप् । अभिमुखीप्रतिमा अप्राङ्गपरत्वे टाबेव अभिमुखा प्रभा । अभिगतं मुखं यस्य । तत्सत्वार्थत्वात् २प्रेरितमुखे उच्यते । “मातः प्रयाणाभिमुखा च तस्य” “हरः प्रभवाभिमुखो बभूव” इति च रघुः । “मुमोज पाकाभिमुखैः भर्त्तुर्विप्राप्यनाप्यैः” कु० । तत्र अभिमुखीकृत्य अव्य० । ३आभिमुख्ये अव्य० । “सर्वं ददाम्यभिमुखं मयि मायमाये” अमरुशतकम् ।

**अभिमुखीकरण** न० न अभिमुखः अभिमुखः क्रियते अनेन अभिमुख+च्वि–कृ–करणे ल्युट् । व्याकरणोक्ते सम्बोधने । तेन हि सम्बोधनपदाद्युच्चारणे श्रोता अभिमुखो भवति इति तस्य तथात्वम् । “सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते” इति हर्युक्त्यादिया अभिमतक्रियाप्रवर्त्तनाविषयबोधनस्यैव सम्बोधनपदार्थत्वात् प्रवर्त्तयितव्यस्य तत्राभिमुखीभावस्यावश्यकत्वात् तथात्वम् ।

**अभिमुखीभाव** पु० अनभिमुखस्य अभिमुखतया भावः । १आभिमुख्ये २ कार्य्योन्मुखतायाम् ३ तत्तत्क्रियोद्यमे च ।

**अभिमृष्ट** त्रि० अभि+मृश–स्पर्श–वा क्त । १स्पृष्टे २धर्षिते ३मिश्रिते ४संसृष्टे च । मृज–क्त । कृतमार्जने त्रि० ।

**अभिमेषक** त्रि० अभि+मिष–ण्वुल् । सर्वमाभिशाधने वाक्यभेदे । स्त्रियां तु टापि अत इत्वम् । “सर्वाभिर्वा एषा वाच यदभिमेषिका सर्वे कामाः अश्वमेधे सर्वया वाचा सर्वान् कामानाप्नवाम” शत०ब्रा० ।

**अभिम्लात** त्रि० अभि+म्ला–तन् । सर्वतोम्लाने । न०त० । अनभिम्लात तस्यापत्यम् । शिवा०अण् । आनभिम्लात· अनभिम्लात इत्यपि गणपाठ· ।

**अभियाचन** न० अभि+याच+ल्युट् । अभिमुखप्रार्थने ।

**अभियाति** पु० अभिमुखं युद्धार्थं याति या–क्तिच् । १रिपौ भावे क्तिन् । २युद्धार्थमभिगमने स्त्री । [इनि । यत्नौ ।

**अभियातिन्** पु० अभियातमनेन अभि+या–भावे क्त इष्टा०

**अभियाति** पु० अभिमुख याति युद्धार्थम् अभि+या–डच् । १शत्रौ, २अभिमुखगन्तृमात्रे त्रि० । स्त्रियां ङीप् ।

**अभियायिन्** त्रि० अभिमुख याति या–णिनि । अभिमुखगन्तरि । “राजाभियायिनां तेषां तदेवाभूदमङ्गलम्” रघु ।

**अभियुक्त** त्रि० अभि+युज–क्त । १परैः यत्ने, २आक्रान्ते व्यवहारविषये ३प्रतिवादिनि च । “अभियुक्तोऽभियोगस्य यदि कुर्यादपक्रमम्” नार० । “अभियुक्तस्तु नान्येन नोक्तं विप्रकर्तुं मर्हति” या० । ४पराक्रान्ते ‘नानाभियुक्त इव मुक्तमहो गहेभः” माघः । ५कामे दक्षतमे ।

**अभियुग्व(न्व)न्** त्रि० अभि+युज–क्वनिप् वेदे पृ० कुत्वम् । अभियोक्तरि “स रथेन रथीतमोऽस्माकेनाभियुग्वना” ऋ० ६,४५,१५ लोके तु अभियुज्वा । स्त्रियां ङीप् वनोरच ।

**अभियुज्** त्रि० अभिमुखं युनक्ति अभि+युज–क्विप् । अभि-

योक्तरि "आभिर्विश्वा अभियुजो विषूची" ऋ० ६,२५,२।

**अभियोक्तव्य** त्रि० अभि+युज-तव्य । जियेये "न च राजाभियोक्तव्य स्वकं संसाधयन् धनम्" मनु । व्यवहारे यं प्रति अभियोगः कर्त्तुं शक्यते २ तस्मिन् प्रतिवादिनि आभिमुख्य ३योजनीये च ।

**अभियोक्तृ** त्रि० अभि+युज-तृच् । १व्यवहारे—अपराधयोजनकर्त्तरि वादिनि, स्त्रियां ङीप् "अभियोक्ता दिशे देश्य करणं वान्यदुद्दिशेत्" ।"अभियोक्ता न चेत् ब्रूयाद्वध्यो दण्ड्यश्च धर्मतः" इति च मनु २युद्धार्थमाक्रामिणि च ।

**अभियोग** पु० अभि+युज-घञ् । अन्यकृतस्य निजधर्मबाधस्य नृपाय १विज्ञापने, (नालिश) अभियोगो द्विविधः "अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतान्तु संसर्गात् तत्त्वं होढाभिदर्शनात्" नारदोक्तेः । "अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्" या० २युद्धार्थमाक्रमे, ३यत्ने, ४उद्योगे, ५आग्रहे "मन्त्र स्वयं परहितेषु कृताभियोगाः" नीति० ६अपचिकीर्षयाक्रमणे, "समापदप्राप्तपराभियोगम्" कुमा० ७अभिनिवेशे "नयाभियोग मनस प्रसाद् समापयस्वात्मगुणेन कामम्" रामा० ८अपचिकीर्षयानिरोधे । "कुपित वनगोचराभियोगात्" किरा० ।

**अभियोगिन्** त्रि० अभि+युज-घिनुण् । १अभियोगकर्त्तरि वादिनि "मिथ्याभियोगी दण्ड्यःस्यात् विवादात् द्विगुणं दमम्" या० । २आक्रमणकर्त्तरि, ३आग्रहयुक्ते, ४अभिनिविष्टे, ५योजनकर्त्तरि च ।

**अभियोजन** न० अभ्य योजनम् । योजितस्य दार्ढ्यार्थं पुनर्योजने "अभियोजन नाम युक्तस्य पुनर्योजनमिति" माध० ।

**अभिरक्षण** न० अभितो रक्षणम् । मन्त्रादिना सर्वत एव सर्पादिविक्षेपैः यातुधानादिभ्यो १ रक्षणे २ सर्वतो रक्षणे चाभावे अ । अभिरक्षाप्यत्र स्त्री । "प्रयान्तमाधिद्यतोऽभिरक्षया" किरा० ।

**अभिरक्षित** त्रि० अभितोरक्षित । सर्वतोरक्षिते ।

**अभिरक्षितृ** त्रि० अभितोरक्षति तृच् स्त्रियां ङीप् । सर्वतो रक्षके 'वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता" मनु

**अभिरत** त्रि० अभिमुखतया अस्य वा रतः । १आसक्ते २अभिमुखतया रते च ।

**अभिरति** स्त्री अभितो रति प्रा०स० । आसक्तौ "न जगयाभिरतिर्मृदुरोदरम्" रघु । [मनोरमे ।

**अभिरम्य** त्रि० अभिरमते अत्र रमतेऽत्र आधारे यत् ।

**अभिराज्** त्रि० अभितो राजते अभि+राज+क्विप् । १ अभितोदीप्तिशीले २ अधीश्वरे च ।

**अभिराद्ध** त्रि० अभि+राध—क्त । दैविते ।

**अभिराम** पु० अभिरम्यतेऽस्मिन् रम+आधारे घञ् । १ सुन्दरे २ प्रिये, ३ मनोहरे च । "श्रोत्राभिरामा ध्वनयो रथस्य नेमिस्वनोन्मुखी" "श्रोत्राभिरामध्वनिना रथेन" "यथा सङ्गेते नयनाभिराम" इति च रघुः पीवारकाभिराम शकुन्तपतति सन्ध्ने दशाटिः यरा० । "राम इत्यभिरामेण वपुषा तस्य चोदित" रघुः ।

**अभिरुचि** पु० अत्या मनसा रुचि प्रा०स० । १ अभिलाषौ

**अभिरूप** त्रि० अभिरूपयति सर्वं सात्मकं करोति पु०रूप—अच् । १ प्रिये, २ शिक्षौ च । अभिरूपयति निरूपयति । ३ पण्डिते । उत्कृष्टं रूपं यस्य । ४ कन्दर्पे, ५ चन्द्रे च । ६ मनोहरे त्रि० । "उत्कृष्टायाभिरूपाय वराय सदृशाय च" मनुः । "अभिरूपगुणभूयिष्ठा परिषत्" शकु० ७ अनुरूपे त्रि० "कामममभिरूपमस्या वयसो वल्कलम्" शकु० । अभिरूपस्य भाव मनोज्ञा० वुञ् आभिरूपकम् ष्यञ् आभिरूप्यञ्च सौन्दर्य्यादौ न० । "अर्चकस्य तपोयोगादर्चनस्यातिशायनात् । आभिरूप्याच्च बिम्बानां देव सान्निध्यमृच्छति" ति०त०पु० ।

**अभिलक्ष्य** त्रि० अभिलक्ष्यते उद्दिश्यते अभि+लक्ष ण्यत् । १उद्देश्ये । लक्ष्यस्य पर्य्यन्तस्याभिमुख्यम् अव्ययी० । २पर्यान्ताभिमुख्ये अव्य० । "यत्र प्रतिगजमेघुरभिलक्ष्यमपातयत्" रघु । ल्यप् । ३लक्ष्यीकृत्येत्यर्थे अव्य० ।

**अभिलङ्घन** न० अभि+लघि—भावे ल्युट् । उल्लङ्घने । "तयापामेव भूतानां सागरस्याभिलङ्घने' रामा० ।

**अभिलषणीय** त्रि० अभि+लष-कर्म्मणि अनीयर् । काम्ये । एष्ट्ये । तव्य । अभिलषितव्योऽप्यत्र त्रि० ।

**अभिलषित** त्रि० अभि+लष—कर्म्मणि क्त । १ इष्टे अभिलाषविषये । भावे क्त । २अभिलाषे इच्छायाम् न० ।

**अभिलाप** पु० अभिलप्यते मनःसंकल्पोऽनेन । १ मनःसंकल्पावेदके कञ्चिद करिष्ये इत्यादिरूपे वाक्ये "काम्ये हि नामाभिलापसहितगुणकलतिसत्यागरूप सङ्कल्प कार्य्य इति प्रा०त० प्रकरणाधिकरणम् । २ आत्मीयज्ञानाकारोल्लेखिवाक्ये च यथा भूतले घटाभाववदिति ज्ञानावेदक घटोनास्तीति वाक्यं यथा च अयं घट इति ज्ञानोत्तरमनुव्यवसायात्मकज्ञानस्यावेदक घटमहं जानामीति वाक्यम् "न निर्विकल्पकं ज्ञानं तस्य व्याहर्तुमिष्यते तथाऽभिलाप-

स्पर्शयोग्यत्वविरहात्सच सविकल्पकज्ञानमेवाभ्यां हि पचन-प्रयोगयोग्यता न तु रसस्येति" सा०द० । कथने च "तद्-भावाभिलापात्" सा०सू० ।

**अभिलाव** पु० अभि+लू—घञ् । छेदने ।

**अभिलाष(स)** पु० अभि+लष(स)-घञ् । १इच्छायां, २लोभे च । अभेरिच्छाद्योतकत्वात् तदुपसृष्टलसेरिच्छार्थत्वम् । "अतोऽभिलाषे प्रथमं तथाविधे" इति रघु' मातुर्यामतुल-व्याम्र । साभिलाषा सुतान् प्रति" देवीमा० । "न खलु सत्यमेव शकुन्तलायां ममाभिलाषः" शकु० ।

**अभिलाषक** त्रि० अभि+लष—ण्वुल् । १ अभिलाषयुक्ते ।

**अभिलाषिन्** त्रि० अभि+लष—णिनि स्त्रियां ङीप् । अभि-लाषशीले "जलाभिलाषी जलमाददानाम्" "अगच्छदंशेन गुणाभिलाषिणी" इति च रघु "असंशयं क्षत्रपरिग्रह-क्षमा यदार्यमस्यामभिलाषि मे मनः" शकु० ।

**अभिलाषुक** त्रि० अभि+लष—उकञ् । अभिलाषशीले, "जयमत्र भवान्नूनमरातिष्वभिलाषुकः" किरा० ।

**अभिवदन** न० अभिरानुकूल्ये अनुकूल वदन कथनम् । १आनुकूल्यार्थकथने अभिवादने । वदनस्य मुखस्या-भिमुख्यम् अव्ययी० । २मुखस्याभिमुख्ये अव्य० ।

**अभिवन्दन** न० अभित सर्वतोऽभिमुखे वा वन्दनम् । १सर्वतोनतिकरणे २ अभिमुखप्रणामे च । "उभयोरेव शि-रसा चक्रे पादाभिवन्दनम्" रामा० ।

**अभिवयस्** त्रि० अभिमत एव वयोऽस्य प्रा०ब० । प्रकृष्ट-वयस्के "तीव्रस्याभिवयसो अस्य पाहि" ऋ०१०,१६०,१ ।

**अभिवर्त्तिन्** त्रि० आभिमुख्येन वर्त्तते अभि+वृत-णिनि स्त्रियां ङीप् । १ अभिमुखे वर्त्तमाने "कलत्रा च रथा-र्थाय स्तुकाभिवर्त्तिन" रामा० ।

**अभिवर्धक** त्रि० अभितोवर्धक । १ सर्वतोवर्धयितर्तरि ।

**अभिवर्षण** न० अभितोवर्षणम् । सर्वतोवर्षणे ।[सर्वतोवर्षके ।

**अभिवर्षिन्** अभितोवर्षति अभि+वृष—णिनि स्त्रियां ङीप् ।

**अभिवात्** त्रि० आभिमुख्येन वाति गच्छति वा—शतृ स्त्रियां ङीप । १अनुचरे, २"अभिवान्तमभिमूर्त्यै रूपम्"शत०ब्रा०।

**अभिवाद** पु० अभि+चु०वद—भावे अच् । १अभित प्रणामे- "प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते" इति "नामधेयस्य ये केचिदभिवादं न जानते" इति च मनु

**अभिवादक** त्रि० अभि+चु०वद—ण्वुल् । १ आभिमुख्येन नतिकारके । "आयुष्मान् भव सौम्येति वाच्योविप्रोऽभि-वादक (ने) मनु ।

**अभिवादन** न० अभिमुखीकरणाय वादनं वदनम् चु०—वद—ल्युट्, अभिमुखं वाद्यते आशीरनेन वद—णिच्—ल्युट् वा । १नामग्रहणपूर्व्वकनतौ २पादग्रहणेन वाचा वा नतौ । तत् प्रकारो यथा "ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यून स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि संप्रवर्द्धन्ते आयुर्विद्या यशो बलम् ॥ अभिवादात् परं विप्रो ज्यायांस-मभिवादयन् । असौ नामाहमस्मीति स्व नाम परिकीर्त्तयेत् ॥ नामधेयस्य ये के'चदभिवाद न जानते । तान् प्राज्ञोऽह-मिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥ भो शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावोहि भोभाव ऋषिभिः स्मृतः ॥ आयुष्मान् भव सौम्येति वाच्यो विप्रो-ऽभिवादक (ने) । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वा-क्षरप्लुतः ॥ यो न वेत्त्यभिवादस्य विप्र प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव स ॥ ब्राह्मण कुशल पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्य क्षेम समागम्य शूद्रमारोग्यमेव च ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्व्वकं त्वेनमभिभाषेत धर्मवित् ॥ परपत्नी तु या स्त्री स्यादसम्बन्धा च योनित । तां ब्रूया-द्भवतीत्येवं सुभगे भगिनीति च ॥ मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् । असावहमिति ब्रूयात् प्रत्युत्थाय यवीयस ॥ मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा । संपूज्या गुरुपत्नीवत् समास्ता गुरुभार्य्यया ॥ भ्रातुर्भार्य्यो-पसंग्राह्या सवर्णाहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषित ॥ पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्य्यपि मातृवद्वृत्तिमातिष्ठेत् माता ताभ्यो गरीयसी ॥ दशाब्दाख्यं पौरसख्य पञ्चाब्दाख्यं कलाभृताम् । त्र्यब्द-पूर्व्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥ ब्राह्मणं दश-वर्षन्तु शतवर्षन्तु भूमिपम् । पितापुत्रौ विजानीयाद्-ब्राह्मणस्तु तयो पिता ॥ वित्तं बन्धुर्वय कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदु-त्तरम् ॥ पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च । यत्र स्यु सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः । स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥ तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ । राजस्नातकयोश्चैव स्नातको नृपमानभाक्" इति मनु "राजर्त्विक्श्रोत्रियाधर्मप्रतिषेध्युपाध्यायपितृव्य मातामहमातुलश्वशुरज्येष्ठभ्रातृसम्बन्धिनश्चाचार्य्यवत् । पत्न्य

सामयिकात्यन्ताभावत्वसम्भवाच्च । तथाचाकालिकात्यन्ताभावो-
ऽतिरिक्तः किन्तु घटो ध्वस्तो घटो भावी घटोऽत्र नास्ती-
त्यादिप्रत्ययनियामकतया किञ्चिद्वस्त्वाकाङ्क्षायां तद्भावरूप-
मेव कल्प्यते लाघवात् । अभावस्यातिरिक्तस्य कल्पने गौरवा-
दिति" प्र०भा० ॥ "नासदुत्पादो नृशृङ्गवत्" सू०॥ नरशृङ्ग-
तुल्यस्यासत उत्पादोऽपि न सम्भवतीत्यर्थः ॥ "उपादाननिय-
मात्" सू०॥ मृद्येव घट उत्पद्यते तन्तुष्वेव पट इत्येव
कार्य्याणामुपादानकारणं प्रति नियमोऽस्ति । स न सम्भवति
उत्पत्तेः प्राक् कार्य्यासत्तायां हि न कोऽपि कारणे विशेषो-
ऽस्ति येन कञ्चिदेवासन्तं जनयेन्नेतरमिति । विशेषाङ्गी-
कारे च भावत्वापत्तेर्गतमसत्तया । स एव च विशेषोऽ-
स्माभिः कार्यस्यानागतावस्थेत्युच्यत इति । एतेन यद्वैशे-
षिकाः प्रागभावमेव कार्य्योत्पत्तिनियामकं कल्पयन्ति तद-
प्यपास्तम् । अभावकल्पनापेक्षया भावकल्पने लाघवात् ।
भावानां दृष्टत्वादन्यानपेक्षत्वाच्च । किञ्चाभावेषु सतो
विशेषे भावत्वापत्तिः । प्रतियोगिविशेषश्च प्रतियोग्यसत्ता-
काले नास्ति । अतोऽभावानामविशिष्टतया न कार्य्योत्पत्तौ
नियामकत्वं युक्तमिति ॥ "शक्तस्य शक्यकरणात्" सू०॥कार्य्य-
शक्तिमत्त्वमेवोपादानकारणत्वम् अन्यस्य दुर्वचत्वात् लाघ-
वाच्च । सा शक्तिः कार्य्यस्यानागतावस्थैवेयत शक्तस्य शक्य-
कार्य्यकरणादसत उत्पाद इत्यर्थः ॥ "कारणभावाच्च" सू०
उत्पत्तेः प्रागपि कार्य्यस्य कारणाभेदः श्रूयते तस्माच्च
सत्कार्य्यसिद्धौ नासदुत्पाद इत्यर्थः । कार्यस्यासत्त्वे हि
सदसतोरभेदानुपपत्तिरिति । उत्पत्तेः प्राक् कार्य्याणां
कारणाभेदे च श्रुतयः । "तद्धेदं तर्ह्यव्याकृतमासीत् । सदेव
सौम्येदमग्र आसीत् । आत्मैवेदमग्र आसीत् । आप एवे-
दमग्र आसुरित्याद्याः ॥ "न भावे भावयोगश्चेत्" सू०॥
नन्वेवं कार्यस्य नित्यत्वे सति भावरूपे कार्ये भावयोग उत्-
पत्तिप्रयोगो न सम्भवति असतः सत एवोत्पत्तिव्यवहारा-
दिति चेदित्यर्थः ॥ "नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यव-
हारौ" सू०॥ कार्य्योत्पत्तेर्व्यवहाराव्यवहारौ कार्य्याभिव्यक्ति-
निमित्तकौ । अभिव्यक्तित उत्पत्तिव्यवहारोऽभिव्यक्त्यभा-
वाच्चोत्पत्तिव्यवहाराभावः न त्वसत्सत्त्वयेत्यर्थः ।
अभिव्यक्तिश्च न नाम किन्तु वर्त्तमानावस्था । कारणव्या-
पारोऽपि कार्यस्य वर्त्तमानलक्षणपरिणाममेव जनयति ।
सतश्च कार्य्यस्य कारणव्यापारादभिव्यक्तिमात्रं लोकेऽपि
दृश्यते । यथा शिलामध्यस्थप्रतिमायाः शैल्पिकव्यापारेणा-
भिव्यक्तिमात्रं तिलस्थतैलस्य च निष्पीडनेन, धान्यस्थतण्डु-
लस्य चावघातेनेति । तदुक्तं वार्त्तिके । "स्वरूपेणावस्थया
चक्रपद्मरेखाः शिलोदरे । यथा स्थितास्थितैरन्तस्तथैवं
जगदात्मकौ" ॥ एतेनाभिव्यक्तमनागतावस्थाया प्रागभा-
वरूपतया अभिव्यक्तिहेतुत्वाच्चेति । नन्वतीतमप्यस्तीत्यत्र
किं प्रमाणं ? न ह्यनागतसत्तायामिव श्रुत्यादयोऽतीतसत्ता-
यामपि स्फुटमुपलभ्यन्त इति । नैवम् । योगिप्रत्यक्षस्या-
न्यथानुपपत्त्यानागतातीतयोरुभयोरेव सत्त्वसिद्धेः प्रत्यक्ष-
सामान्ये विषयस्य हेतुत्वात् । अन्यथा वर्त्तमान-
स्यापि प्रत्यक्षेणासिद्ध्यापत्तेः । तस्माद्वियामौत्सर्गिकप्रामा-
ण्येनासति बाधके योगिप्रत्यक्षेणातीतमप्यस्तीति सिध्यति
योगिनामतीतानागतप्रत्यक्षे च श्रुतिस्मृतीतिहासादिकं
प्रमाणं योगवार्त्तिके प्रपञ्चितमिति । नन्वभिव्यक्तिरपि पूर्वं
सती वाऽसती वा । आद्ये कारणव्यापारात् प्रागपि कार्य-
स्याभिव्यक्त्या स्वकार्यजनकत्वापत्तिः कारणव्यापारश्च
विफलः । अन्त्ये चाभिव्यक्तावेव सत्कार्यसिद्धान्तक्षतिः
अवस्थायाः एवाभिव्यक्तेरभिव्यक्त्यङ्गीकारादिति अत्रोच्यते ।
कारणव्यापारात् प्राक् सर्वकार्य्याणां सदासत्त्वाभ्युपगमेनो-
क्तविकल्पानवकाशाद्दृष्टवत् तदभिव्यक्तेरपि वर्त्तमानावस्थया
प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् ।
अनागतावस्थया च सत्कार्यसिद्धान्तस्याक्षतेः । नन्वेकदा
सदसत्त्वयोर्विरोध इति चेत् । प्रकारभेदस्योक्तत्वात् ।
नन्वेवमपि प्रागभावानङ्गीकारेण प्रागसत्त्वमेव कार्य्याणां
दुर्वचमिति । नैवम् । अवस्थानामेव परस्पराभावरूपत्वा-
दिति ॥ ननु सत्कार्यसिद्धान्तरक्षार्थमभिव्यक्तेरप्यभिव्यक्ति-
रेष्टव्येत्यत आह । "पारम्पर्य्यतोऽन्वेषणा बीजाङ्कुरवत्" सू०॥
पारम्पर्य्येण परम्परारूपेणैवाभिव्यक्तेरनुधावनं कर्त्तव्यम्
बीजाङ्कुरवत् प्रामाणिकत्वेन नास्या अदोषत्वादित्यर्थः । बीजा-
ङ्कुराभ्यां चायमेव विशेषो यद्बीजाङ्कुरस्थले क्रमिकपरम्पर-
यानवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति । प्रामाणि-
कत्वन्तु तुल्यमेवेति । सर्वकार्य्याणां स्वरूपतो नित्यत्वमव-
स्थाभिर्विनाशित्वं चेति पातञ्जलभाष्ये वदद्भिर्व्यासदेवैरपीय-
मनवस्था प्रामाणिकत्वेन स्वीकृतेति । "उत्पत्तिवद्वाऽदोषः"
सू०॥ यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेव वैशेषिकादिभि-
रसदुत्पादवादिभिरिष्यते लाघवात् तथैवास्माभिर्घटाभिव्यक्ते-
रप्यभिव्यक्तिः स्वरूपमेवेष्यते लाघवात् । अत उत्पत्तावि-
वाभिव्यक्तावपि नानवस्थादोष इत्यर्थः । अथैवमभिव्यक्तेर-
भिव्यक्त्यनङ्गीकारे कारणव्यापारात् प्राक् तस्या असत्त्वानु-
भवस्था सत्कार्यवादक्षतिरिति चेन्न । अस्मिन् पक्षे सत

एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात् । अभिव्यक्तेश्चाभिव्यञ्जयभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिः । नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यतां किमभिव्यञ्जयाख्यावस्थाकल्पनेनेति चेन्न । तमेवेदं तर्ह्यव्याकृतमासीदित्यादि श्रुतिभिरव्यक्तावस्थाया सतामेव कार्य्याणां सिद्धे तथाप्यभिव्यक्तेः प्रागभावादिस्वीकारापत्तिरिति चेन्न । तिसृणामनागताद्यवस्थानामन्योऽन्यस्याभावरूपतयोक्तत्वात् तादृशाभावनिवृत्तय एव च कारणव्यापारसाफल्यादिसम्भवात् । अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषो यत् तैरुच्यमानौ प्रागभावध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते । वर्त्तमानताख्या चाभिव्यक्त्यवस्था घटाद्यतिरिक्तेति घटादेरवस्थात्रयस्याप्यनुभवादिति । अन्यत् तु सर्वं समानम् । अतो नास्त्यनवस्थाधिकरणद्भावकाश इति सा० प्र०भा० । “अत सिद्धं प्राक् कार्य्योत्पत्तेः कारणसद्भाव । कार्य्यस्य चाभिव्यक्तिलिङ्गत्वात् अभिव्यक्ते कार्य्यस्य च सद्भाव प्रागुत्पत्ते सिद्ध । कथम् ? अभिव्यक्तिलिङ्गत्वात् । अभिव्यक्तिलिङ्गमस्येत्यभिव्यक्तिर चाक्षादिसाधनावलम्बनत्वप्राप्तिः । यदि लोके प्रावृत तमआदिना घटादि वस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत् प्राक् सद्भाव न व्यभिचरति । तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छाम न हि अविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते” छ०भा० । २ अन्यथा स्थितस्य अन्यरूपेण प्रकाशे “अभिव्यक्तेरित्याश्मरथ्य ” शा०सू० । “अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् अभिव्यज्यते किल प्रादेशपरिमाणः परमेश्वर उपासकानां कृते, प्रदेशेषु वा हृदयादिषु प्राणविद्यास्थानेषु विशेषेणाभिव्यज्यते अत परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्य्यो मन्यते” इति भा० ।

**अभिव्यञ्जक** त्रि० अभिव्यञ्जयति प्रकाशयति अभि+वि+अन्ज–णिच्–ण्वुल् । प्रकाशके आलङ्कारिकप्रसिद्धव्यञ्जनया वृत्त्या प्रकाशके च गुणाभिव्यञ्जकौ शब्दार्थौ “गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि रसाभिव्यञ्जकत्वेन उपचारेण” इति च सा०द० ।

**अभिव्यापक** त्रि० अभि+वि+आप–ण्वुल् । अभितोव्यापके सर्वावयवावच्छेदेन व्यापके यथा घटादेराकाशसंयोगः, कपिसंयोगादिस्तु नैव तस्य स्वाधिकरणे वृक्ष एव मूलावच्छेदेनासत्त्वात् । वैयाकरणोक्ते सर्वथा व्यापकतावति आधारभेदे “औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा” सि०कौ० । यथा सर्वस्मिन् ब्रह्मास्ति ।

**अभिव्याप्ति** स्त्री अभि+वि+आप–भावे क्तिन् । १ अभितोव्याप्तौ सर्वावयवावच्छेदेन व्याप्तौ । व्याप्तिशब्दे विस्तरः ।

**अभिव्याप्य** त्रि० अभि+वि+आप–कर्मणि ण्यत्' । १ सर्वावयवावच्छेदेन १ व्याप्ये । ल्यप् २ सर्वतो व्याप्येत्यर्थे अव्य० । “अभिव्याप्याकर्षणमपवर्गे” इति मुग्ध० ।

**अभिव्याहार** पु० अभि+वि+आ+हृ–घञ् । १ प्रयत्नोक्तौ २ अभित कथने व्याङुपसर्गद्वयस्य हरतेः कथनार्थत्वादभियोगात्तस्यैव सम्यक्त्वार्थता । अतएव “कच वा यजुर्वा साम वाऽभिव्याहरतीति” शत० ब्रा० “नाभिव्याहरेत् ब्रह्म स्वधानिनयनादृते” मनौ च तथार्थे एव अभिव्याहरते प्रयोग । सत्युपसर्गयोगे तु साहित्येऽस्य रूढि ।

**अभिङ्ग** पु० अभि+इगि–गतौ घञ् । अभिगमने “यासां तिस्रः पञ्चाशतोभिङ्गैरपावय” ऋ० १,११२,४ । अभिङ्गैरभिगमनै इङ्गतिर्गतिकर्मेति” भा० ।

**अभिशंसन** न० आभिमुख्येन शंसनमाक्रोशवचनं वारोपणवादश्च । सम्यगाक्रोशरूपे पारुष्यकथने १ अयं चौर” इत्यादिना २ मिथ्यापवादे च “मत ब्राह्मणमाक्रुश्य” त्युपक्रम्य “पञ्चाशद्ब्राह्मणो दण्ड्य क्षत्रियस्याभिशंसने इति वाक्पारुष्ये “अभिशंसनप्रवेशात्तयोस्तुल्यार्थत्वम् “स्वभार्य्यान्तु यदा क्रोधादगम्येति नरो वदेत्” या० व्याख्यायां स्वभार्य्याभिशंसनमिति विज्ञानेश्वरेणोक्तम् । २ आभिमुख्येन कथनमात्रे च “मत स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने” इति याज्ञ० ।

**अभिशंसिन्** त्रि० अभि+शन्स–णिनि । १ सम्यगाक्रोशके २ अपवादवाक्यप्रयोक्तरि च “मिथ्याभिशंसिनो दोषो द्वि गुणोऽन्त्यवादिन” इति या० ।

**अभिशङ्का** स्त्री अभि+शङ्क–भावे अ । १ सर्वथा शङ्कने २ संशये ३ भ्रमे च । “उपेयुषो कल्पलताभिशङ्कया” किरा० “कल्पलताभिशङ्कया कल्पलताभ्रमेण” मल्लि० । संशयस्य स्थाणुर्वा नरो वेति उभयकोटिज्ञानरूपत्वेऽपि तदीयावयवार्थकोटिविषयत्वेन भ्रमस्य तदीयैकतरकोटिविषयकत्वात् तथात्वम् । अयञ्च मिथ्याभूतकोटिमेवावगाहते इति विशेष । कर्त्तरि अच । २ सर्वत शङ्किते त्रि० ।

**अभिशङ्कित** त्रि० अभि+शङ्क–क्त । १ सन्दिग्धे २ भ्रान्ते च ।

**अभिशप्त** त्रि० अभि+शप-क्त । इद तेऽभिष्ट भूयादित्येव रूपस्य

गुरुविमाद्यभिशापस्य उद्देश्ये। "न नाम दूष्यं कुर्य्यात् जनकस्य गुरोस्तथा। भार्य्याया अभिशप्तस्य क्षपणस्य विशेषत" इति पुरा०। [२समन्तकथिते च।

अभिशब्दित त्रि० आभिमुख्येन शब्दित। १ समन्ततमाहूते

अभिशस् त्रि० अभि+शन्स–क्विप्। अभिशंसनकर्त्तरि "यदाशंसा निःशसाभिशसा" ऋ०१०,१६४,३।

अभिशस्त त्रि० अभि+शन्स–क्त। अयं परस्त्रियं गच्छतीत्यादिना मिथ्यावाक्येन मैथुनविषयकदोषारोपो यस्मिन् जने कृतः तस्मिन्। "अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा" या०। "नियतं प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत्" स्मृति०। अभि+शस वधे क्त। १हिंसिते २आक्रान्ते च त्रि०। "आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भये" मनु०। "अभिशस्तामाक्रान्तामिति" प्रा०त० रघु०। उभयत भावे–क्त ४ आक्रोशे, ५ अपवादकथने ६हिंसने ७ अभिशापे च न०। "एवमेव नरश्रेष्ठ रक्ष्या एव द्विजातयः। शापदानामपि हि तान् विषयान्ते समुत्सृजेत् अभिशस्तमपि ह्येषां कृपायीत विशाम्पते" भा०शा०प०।

अभिशस्तक त्रि० अभिशस्ते अभिशापे भव कन्। वैद्यकोक्ते अभिशापजज्वरादौ "हन्ता ये देवद्रोहाभिशस्तका अथर्वकृता उपसर्गहताश्च" सुश्रुत।

अभिशस्ति स्त्री अभि+शन्स–क्तिन्। १ अभिशापे "उरुष्या णो अभिशस्तेः सोम" ऋ०१,९१,१५। "अभिशस्तेरभिशापरूपाच्चिन्हनात्" भा०। २ अपवादे "इमां मिथ्याभिशस्तिञ्च कृष्णस्य समुदाहृताम्" ह० व०। अभि+शस वधे भावे क्तिन्। ३ हिंसायां "तितिक्षन्ते अभिशस्तिं जनानाम्" ऋ०३,३०,१। "अभिशस्तिं हिंसाम्" भा०। शस्यते हिंस्यतेऽनेन करणे क्तिन्। ४हिंसाहेतौ, "पुरा तस्या अभिशस्तेरधीहि" ऋ० १,७१,१० "अभिशस्तेः हिंसाहेतोः" भा०। आभिमुख्येन शस्तिर्याचनम्। ५प्रार्थनायाम्। [गार्हे च

अभिशस्य त्रि० अभिशस्तिमर्हति यत्। १हिंसार्हे २आक्रो-

अभि(भी)शाप पु० अभि+शप–घञ् वा दीर्घः। १ मिथ्यापवादकथने २ आरोपितदोषकथने ३ अनिष्टं ते भूयादित्याक्रोशे च "येऽद्य मिथ्याभिशापार्त्तं न स्पृशन्ति कदाचन" ह०वं०।

अभिशिरोग्र त्रि० शिरसोऽभिमुखमग्रं यस्य। १ ऊर्द्ध्वमूलाधोग्रे "ओषधे। त्रायस्वैनमिति सप्त दर्भपिञ्जूलीर्दक्षिणस्यां कपिष्णिकायामभिशिरोग्रा उपदधातीति" गो०। अभिशिरोग्राः ऊर्द्ध्वमूलाधोग्राः" स०त०रघुनन्दन।

अभिशोक पु० अभितस्य शोकः। कस्मिंश्चिदभिलषितस्य कृते शोके। शुच–ल्युट्। अभिशोचनमप्यत्र न०।

अभिश्रा(श्र)व पु० अभि+श्रु–अप् वेदे घञ्। अभितः श्रवणे "स्वर्त दिवे तदवोचं पृथिव्यामभिश्रावाय" श्रुति।

अभिश्वैत्य त्रि० अभितः श्वैत्यं शुभ्रतादिरस्य। शुभ्रचरिते "अदर्शिषमयन्त्रानमभिश्वैत्येति व्याहरन्" भा०द्रो०प०

अभिषङ्ग पु० अभि+षञ्ज–घञ्। १ पराभवे, २ आक्रोशे, ३ शपथे, ४ व्यसने च "अभिषङ्गजडं विजज्ञिवानिति" रघु० "तीव्राभिषङ्गप्रभवेण वृत्तिम्" कुमा० "आर्त्ताभिषङ्गो न्यपतदभिषङ्गात्" "ततोऽभिषङ्गानिलविप्रविद्धा" "विमोचयिष्यन्ति नवाभिषङ्गाम्" इति च रघु "नवाभिषङ्गा नूतनदुःखामिति" मल्लि०। ५ आसक्तौ "इष्टुरिति वनयिभ्रमाभिषङ्गात्" माघ. ६भूताद्यावेशे "अभिघाताभिषङ्गाभ्यामभिचाराभिशापत" माधवनिदानम्।

अभिषव पु० अभि+सु–अप्। १ यज्ञाङ्गस्नाने, २निष्पीडने, ३ सुरोत्पादनादिव्यापारे, ४ सोमलतापाने, ५ तत्कण्डने च "प्रक्रादानप्रभृति त्रिपर्यायानभिषवान् करोति" कात्या० १०,१,४। "निर्यात्य राजानमभिषुण्वन्ति व्याख्यातोऽभिषव" इति कर्क०। "आप्यायनाभिषवाम्बुदाभ्येषु च" कात्या० ७,६,२८। सर्वजित् महाव्रत संवत्सरदीक्ष समाप्ताभिषवस्विस्त उपसद् कात्या० "संवत्सरादूर्द्ध्वं समाप्तेऽतीतेऽभिषव कृत्वा" कर्क०। ६स्नाने। "जपोपवासाभिषवैर्मुनीनाम्" किरा०। करणे अप्। ७ अद्भुत्यामिति निरु० सोमकण्डनसाधनत्वात् तथात्वम्। आधारे अप्। ८यज्ञे।

अभिषवण न० अभि+सु–ल्युट्। अभिषवशब्दार्थे स्नानमात्रे "शिरसा हरिन्मणिनिभः स वहन् कृतजन्हुजाभिषवणेन जटाः" किरा०। करणे ल्युट् स्त्रियां ङीप्। अभिषवसाधने "सूर्पं पवित्रं तुषा ऋजीषाभिषवणीराप" अथ०।

अभिषह्य त्रि० अभितः सह्य। १ सोढुं शक्ये। ल्यप्। २सहित्वेत्यर्थे अव्य० "अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः"। मनुः।

अभिषाच् त्रि० अभि+षच-णिच्–स्वार्थे णिच्–क्विप् वा। १ आभिमुख्येन सम्बन्धुं समर्थे २ अभिभावुके च "यशो अभिषाचमव्वान्" ऋ० ६,६२,९।

अभि(भी)षाह् त्रि० अभि+सह–णिच् णिच्–क्विप् वा षत्वम् वा दीर्घः। १शत्रुजयिनि २सहनशीले च।

अभिषिक्त त्रि० अभि+षिच–क्त। १ कृताभिषेके राजादौ

**अभिसंहित** त्रि॰ अभि+सम्+धा—कर्मणि कर्त्तरि वा क्त । १ फलोद्देशेन कृते २ अभिसन्धिविषयभूते ३ अभिसन्धि-कर्त्तरि च "विसृष्टिदायेऽनभिसंहितेषु" रघुवंशः ।

**अभिसन्ताप** पु॰ अभिसन्ताप्यतेऽनेन अभि+सम्+तप—णिच्-करणे अच् । १ अभिघाते । तप—भावे घञ् । २ अभित सन्तापे । तप—आधारे । घञ् । ३ युद्धे ।

**अभिसन्धक** त्रि॰ अभि+सम्+धा—क—स्वार्थे कन् । १ पर-गुणाच्छादनेन आक्षेपके, "बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभि-सन्धकः मनुः" । "अभिसन्धक परगुणाच्छादनेन सर्वाक्षेपक इति" कुल्लू॰ । [२ फलोद्देशे ३ वञ्चने च ।

**अभिसन्धा** स्त्री अभि+सम्+धा—भावे अङ् । १ अभिसन्धौ

**अभिसन्धान** न॰ अभि+सम्+धा—ल्युट् । १ परवञ्चने । "पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम्" रघु । "परा-भिसन्धानपरामन्त्रिण" काद॰ २ फलोद्देशे ३ अभि-सन्धौ च । "फलाभिसन्धानपरा न योगिनः" पुरा॰ ।

**अभिसन्धाय** पु॰ अभि+सम्+धा—भावे घञ् । १ अभिसन्धौ फलाद्युद्देशे । ल्यप् । २फलाद्युद्दिश्येत्यर्थे अव्य॰ । "अभि-सन्धाय तु फलं दम्भार्थमपि चैव यत्" गीता ।

**अभिसन्धि** पु॰ अभि+सम्+धा—भावे कि । १ फलाद्युद्देशे । "स्वर्गाभिसन्धि सुकृतं वञ्चनामिव मेनिरे" कुमा॰ । "सुधामुजः काम्यफलाभिसन्धौ" इत्यादि ।

**अभिसन्धित** त्रि॰ अभिसन्धा जाताऽस्य तार॰ इतच् । १ जाताभिसन्धौ अभिसन्धिविषये ।

**अभिसम्पत्ति** स्त्री॰ अभि+सम्+पद—क्तिन् । १ अभितः स-म्पत्तौ अन्यरूपस्यान्यथाभवने, "चित्यस्याहवनीयाभिसम्पत्ते" कात्या॰ १८,६,२५ । "आहवनीय एव चित्याभिसम्पत्ति श्रवणात् "यो वाव चितोऽग्निर्निधीयते तमेवेष्टकामेव सर्वोऽग्निरभिसम्पद्यत" इतिश्रुतिः एकवारं चित्यस्यो-परि निधानेनाहवनीयाग्नेरेव सर्वदा चित्यात्मकता-सम्पत्ता" कर्क॰ ।

**अभिसम्पद्** स्त्री अधिका सम्पद् प्रा॰स॰ । १ अधिक-सम्पत्तौ । अभिसम्पद् संख्या सम्पद् । तत्सदृशसंख्यादिसाम्येन सम्पन्नतायाम् "तान्युभयान्येकविंशति सम्पद्यन्ते द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश एतामभिसम्पदम्" शत॰ब्रा॰ । "येषां सङ्ख्यासम्पत्तिसामान्ये-नैष्य भवति" भा॰ । सम्पदमभिलक्ष्य अव्ययी॰ टच् समा॰ । अभिसम्पदम् सम्पदमभिलक्ष्यीकृत्येत्यर्थे अव्य॰ ।

**अभिसम्पात** पु॰ अभि+सम्+पत—आधारे घञ् । १ युद्धे । भावे घञ् । २ पतने । करणे घञ् । ३ अभिशापे शोकमेदिनिः ।

**अभिसम्बन्ध** पु॰ अभि+सम्+बन्ध—घञ् । १ अभितः सम्बन्धे "द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः" "फलार्थित्वा तु स्वामित्वे नाभि" जै॰सू॰ "यौनिकादभिसम्बन्धादन्-बन्ध्यादथ नाहम्" मनु २ वाक्यादौ आकाङ्क्षितपदान्वये च पदानामन्वयः पदार्थान्वयोन्यतरएव ।

**अभिसर** त्रि॰ अभितः सरति सृ+ट स्त्रियां ङीप् । १ सहाये, २ अनुचरे । "तथैवाभिसरास्तेषां स्वकात्मानो जये धृता" भा॰उ॰प॰ । "अथ साभिसरं शरैस्तरस्वी" माघ ।

**अभिसरण** न॰ अभि+सृ—ल्युट । १ अभिगमने २ नायक-योरेकतरेण रागेण सङ्केतस्थानगमने च । [३ उत्सृष्टे च

**अभिसर्जन** न॰ अभि+सृज—भावे घञ् । १ दाने, २ वधे

**अभिसाय** अव्य॰ आभिमुख्ये अव्ययी॰ । सायाह्नाभिमुख्ये । "श्रितोदयाद्रेरभिसायमुच्चैरच्युतचन्द्रमसोऽभिरामताम्" माघः ।

**अभिसार** पु॰ अभि+सृ—आधारादौ घञ् । १ युद्धे, २ साहाय्ये, ३ साधने, ४ स्त्रिया पुंसो वा सम्भोगार्थं निर्जन-सङ्केतस्थानगमने च । "आरब्धे रमणाम्मया प्रियसखि । क्रीडाभिसारोत्सवे" । अभिसारप्रकारश्च । "स्वेषु गात्रेषु संलीना मूकीकृतविभूषणा" । अवगुण्ठनसंवीता कुल-जाऽभिसरेद्यदि । विचित्रोज्ज्वलवेशा तु रणन्नूपुरमे-खला प्रमोदस्मेरवदना स्याद्वेश्याऽभिसरेद्यदि । मदस्ख-लितसंलापा विभ्रमोत्फुल्ललोचना । आविद्धगति-सञ्चारा स्यात् प्रेष्याऽभिसरेद्यदि । क्षेत्रं वाटी भग्नदेवा-लयो दूतीगृहं वनम् । मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा एव कृताभिसाराणां पुंसलीनां विनोदने, स्थानान्यष्टौ तथा ध्वान्तच्छन्नेषु कुत्रचिदाश्रये" इति सा॰द॰ । कर्त्तरि घञ् । अनुचरे पु॰ "अभिसारेण सर्वेण ततोयुद्धमवर्त्तत" भा॰व॰प॰ ।

**अभिसारिका** स्त्री अभिसरति अभिसारयति वा कान्तं सङ्केत-स्थानं अभि+सृ—णिच्—वा ण्वुल् । १ "अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं वाभिसरत्येषा धीरैरुक्ताभि सारिका" सा॰द॰ उक्ते नायिकाभेदे "अनभिज्ञाता-भिज्ञाता दुर्दिनेऽभिसारिका" कुमा॰ "यः सञ्चरेऽभूद-भिसारिकाणाम्" रघु ।

**अभिसारिन्** त्रि॰ अभिसरति णिनि । १आभिमुख्येन गन्तरि २अनुचरे च स्त्रियां ङीप् । "कं लिङ्गपे कंटभपदा

भितपदार्थज्ञानोपस्थितौ पदार्थज्ञानं विशेष्यमिति तदुपस्थितौ पदार्थस्य विषयत्वात् विशिष्टज्ञानस्य विशेष्यविषयत्वनियमादिति तत्रैव शक्तिः कल्प्यते लाघवात् गत्यन्तरायोगेऽपि गौरवात् अस्तु वा प्रथममितरान्विते शक्तिः पश्चोऽप्ये तस्य त्याग आकाङ्क्षायोग्यतादिलभ्यत्वप्रतिसन्धानात् अनन्यलभ्यस्यैव शब्दार्थत्वात् प्रथमगृहीतत्वमात्रस्याकिञ्चित्करत्वात् तथा च घटपदत्वेन ज्ञातं पदं स्वार्थस्मरणद्वाराकाङ्क्षादिसहकारिवशात् समभिव्याहृतपदार्थेन सह स्वार्थस्यान्वयमनुभावयति स्वभावादित्यन्वयांशान्वयज्ञानोदयात् किं तत्र शक्त्या, अन्वयमात्रशक्तावपि अन्वयविशेषज्ञानार्थमाकाङ्क्षादेरवश्यमपेक्षणात् तैरेव सहकारिभिरन्वयविशेषावगमसम्भवात्। क्रियाकारकपदयोः प्रत्येकमितरान्वितस्वार्थबोधकत्वेऽप्यन्तरयोक्तार्थद्वयबोधकत्वात्। न चैकमेव पदमन्विताभिधायकमितरत्तु अन्वयप्रतियोगिमात्रमिति वाच्यम् अविशेषात् कस्याभिधायकत्वमित्यनिश्चयात्। किञ्च किमशक्ययोरेवान्वये शक्तिः? उत शक्ययोः? आद्ये यस्य कस्यापि अन्वयबोधकत्वापत्तेरतिप्रसङ्गः स्यात् तथा च शक्यान्वयाभिधायकत्वं वाच्यं एव च शक्ये शक्यान्वये च द्विधा शक्तिः कल्पनीयेति गौरवम्। अथ अन्वयतात्पर्यकत्वया तत्प्रतिपादकं पदमित्युभयसम्मतम् तात्पर्यनिर्वाहिका च वृत्तिः सा च न गौणी न वा लक्षणेति अगत्या शक्तिः स्वीकार्येति चेत् वृत्तिं विनापि तात्पर्यनिर्वाहात् किं वृत्त्या, पदानामक्रमेणान्वयबोधकत्वसम्भवात् अन्यथा शक्त्यैव तात्पर्यनिर्वाहवश्यम्भावे लक्षणोच्छेदः स्यात्। अथ घटमानयेत्यादौ प्रत्येकमन्वये सत्येव विशेषान्वयसामान्ये जिज्ञासा भवति न च सामान्यानवगमे विशेषे सा स्यादित्यतस्तत्र शक्तिरिति चेन्न कारकेण क्रियायाः क्रियया च कारकस्य सामान्यत आक्षेपात् दृष्टे फले तदीयरवजिज्ञासावत् तदुपपत्तेः ततश्च पदार्थे एव शक्तिः न पदार्थान्वयांशे तस्मात् पदज्ञानं करणं पदार्थस्मरणं व्यापार आकाङ्क्षादिसहकारवत् कारितपदार्थान्वयानुभव फलमिति"।

अभिहूति स्त्री अभि+ह्वे—क्तिन्। आभिमुख्येनाह्वाने।

अभिह्रुत् त्रि० अभि+ह्रु—कर्मणि क्विप् वेदे पृ० न गुणः। आभिमुख्येन क्लियमाणे। "दुरितादभिह्रुतः शंसादभिह्रुतः" ऋ० १,१२८,५ "अभिह्रुतः आभिमुख्येन क्लियमाणान्" भा०।

अभिह्वर त्रि० अभि+ह्वृ—विच्। १ कुटिलगन्तरि "नाभिह्वरे पदं निदधाति जानते" अथ० ६,७६,२ अभि+ह्वृ—कर्मणि अप्। अभिह्वर उपह्वरे गन्तव्यदेशादौ।

अभिह्रुत् त्रि० ह्रु कौटिल्ये कर्त्तरि क्विप् पृ०। आभिमुख्येन कुटिलं कुर्वति "भिनिताभिह्रुताम्" ऋ० १,१८८,६, "अभिह्रुतामाभिमुख्येन कुटिलं कुर्वताम्" भा०।

अभिह्रुति स्त्री अभि+ह्रु—क्तिन् वेदे पृ०। कुटिलस्वभावे। "गतमुजिमिसमभिह्रुतेरघाते" ऋ० १,१६६,८ "अभिह्रुते कुटिलस्वभावात्" भा०।

अभी त्रि० नास्ति भीर्यस्य। भयशून्ये। कप्। अभीकोऽप्यत्र

अभीक त्रि० अभि+कन् "अनुकाभिकाभीकाः कमिता" पा० नि०। १ कामयमाने "मेदस्विनः प्रमकोपगतानभीकान्" माघ। २क्रूरे ३उत्सुके च। आभिमुख्येन कायति प्रकाशते दीर्घ। ४समीपे "मतद्धावयो वह्न्वन्तस्ताभीके" ऋ० १,११८,५, "अभीके गृहसमीपे" भा०। ४ अभि+इण+कक्। ५ अभिगते त्रि० "सामग्रु ग्म्यतामभीके" ऋ० ७,८६,१, "अभीके अभिगते" भा०। ६कवौ ७स्वामिनि च त्रि०।

अभीक्ष्ण त्रि० अभि+क्ष्णु—तेजने बा०न पृ०दीर्घ अभिगतः क्षणं वा पृ०। १ सन्तते २ भृशे च। ३ क्रियापौनःपुन्ये" न०। "मन्दारप्रसवमनीक्ष्णोपसेवितम्" रामा०। अभीक्ष्णस्य भावः ष्यञ्। आभीक्ष्ण्यम् सन्ततभावे "नित्यवीप्सयो" पा० "आभीक्ष्ण्ये" इति सि०कौ०।

अभीक्ष्णम् अव्य० अभि+क्ष्णु—बा०,णमु पृ० दीर्घ। पौनःपुन्ये स्वरादि। "अभीक्ष्णमष्णतयाऽतिदुर्गमम्", माघ।

अभीत त्रि० अभि+इण—क्त न०त०। १ अभिगते। न भीतः विरोधे न०त०। २ भीतभिन्ने उत्साहान्विते त्रि०।

अभीति स्त्री अभावे न०त०। १ भयाभावे २ तद्वायोपायाम् अभयमुद्रायाम्। "परशुमृगवराभीतिहस्तं प्रसन्नम्" शिवध्यानम्। ६त०। २ भीतिशून्ये त्रि०। अभि+इण—क्तिन्। अभिगमने ३ "अभीतिमर्य्ये" इति ऋ०७,२१,६। "अभीतिमभिगमनम्" भा०। कर्मणि क्तिन्। ४समीपे।

अभीपत् त्रि० अभि+पत—क्विप् दीर्घ। अभिगमनकर्त्तरि। "अभीपतोऽष्टिभिसर्मयन्तम् ऋ० १,१६४,५२, "अभीपतोऽभिगमनवत" भा०। [अधिते।

अभीप्सित त्रि० अभि+आप+सन—क्त। १ अभीष्टे वाञ्छि-

अभीप्सु त्रि० अभि+आप+सन्—उ। अभिलाषुके।

अभीम त्रि० विरोधे न०त०। १ भयानकभिन्ने सौम्ये।

अभीमान पु० अभि+मन—क्विप् वा दीर्घ। अभिमानयन्तरि

अभीर पु० अभिमुखीकृत्य ईरयति गाः अभि+ईर अच्।

**अभुज्** त्रि० न भुङ्क्ते भुज–क्विप् न०त० । अभक्षके । "अभ आपद्यो किमभुग्वदामि" ऋ०१०,८५,११ ।

**अभूत** त्रि० न भूतः । भूतशब्दार्थभिन्ने । "अभूतमासज्य विरुद्धमीहितम्" माघ । २ मिथ्याभूते ३ अविद्यमाने च

**अभूततद्भाव** पु० अभूतस्य प्रकृतिरूपेणाविर्भूतस्य तेन रूपेण भावः । य कश्चित् पदार्थः येन रूपेण प्रागभूतस्तेन रूपेण तस्याविर्भावे । यथा मृत्तिका घटीभवति । "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्वि" पा० "अभूततद्भावे इति वक्तव्यम्" वा० । [त्वाभिमाने ।

**अभूताभिनिवेश** पु० अभूतेऽसत्येऽभिनिवेशः । असत्ये सत्य-

**अभूति** स्त्री अभावे न०त० । १ भवनाभावे "तस्य ह न देवाय नाभूत्या ईशते" शत० ब्रा० । "अभूत्यै अभवनाय" भा० २ सम्पदभावे" "ध्वजाशामि व्ययोर्व्यन्न भरतामामभूतये" भा०य०प० । न०ब० । भूतिशून्ये त्रि० ।

**अभूमन्** पु० विरोधे न०त० । १ भूरिभिन्ने स्वल्पे ।

**अभूमि** स्त्री न०त० । १ अगम्ये अविषये "अभूदभूमिः प्रतिपक्षजन्मना भियामिति" माघः "अभूमिरियमपनयस्य" शकु० "नाभूद्भूमिः करग्रायकानाम्" नैष० । "सखलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कार" इति शकु०। अप्राशस्त्ये न०त० । अप्रशस्तभूमौ । न०ब० । भूमिशून्येत्रि०।

**अभूमिज** त्रि० न०त० । १ भूमिजभिन्ने आकाशजे जलादौ २ अप्रशस्तभूमौ उत्पन्ने धान्यादौ च । "अभूमिज नवस्यापि न धान्यं गुणवत् स्मृतमिति" सुश्रुतः ।

**अभूयिष्ठ** त्रि० विरोधे न०त० । भूरिभिन्ने अल्पे ।

**अभूषित** त्रि० विरोधे न०त० । भूषितभिन्ने अपरिष्कृते

**अभृत** त्रि० न भृत । १ अप्राप्तवेतने । गोस्वाम्यनुमते भृत्य सा स्यात् पालेऽभृते भृति" मनु २ अपुष्टे च ।

**अभृश** त्रि० न०त० । १ भृशभिन्ने मन्दे अल्पे ।

**अभेद** पु० अभावे न०त० । भेदाभावे ऐक्ये "गतयोरभेदमिति सैन्ययोस्तयोः" माघ "अभेद पितरामयो" पुरा० "रसयोर्लशयोश्चैव जययोर्बवयोरपि । शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्" आलङ्कारिकाः "गुणगुणिनोः क्रियाक्रियावतोरभेद" इति सांख्यादयः । अभेदश्च भेदाभाव इति नव्याः। तादात्म्यमिति तु प्राञ्चादयः । तादात्म्यञ्च तत्तत्स्वनियतसत्ताकत्वं तेन गुणगुणिनो क्रियाक्रियावतोरपि तादात्म्यं गुणक्रिययोर्द्रव्यनियतसत्ताकत्वात् अतएव वेदान्तपरिभाषायाम् घटैक्यो मिथोभेदस्तादात्म्यमित्युक्तं द्रव्यगुणयोर्मिथोभेदसत्त्वेऽपि तत्तत्स्वनियतसत्ताकत्वात् तथात्वम् ।

**अभेद्य** त्रि० भेत्तुं शक्यते भिद्–शक्यार्थे यत् न०त० । १ भेत्तुमशक्ये "अभेद्यकवचं दधे" भा०द्रो०प०। २ हीरके न० तस्य केनापि धातुना भेत्तुमशक्यत्वात् तथात्वम् ।

**अभोक्तव्य** त्रि० न भोक्तुमर्हम् स्मृत्यादिनिषिद्धत्वात् । अभक्ष्ये । तच्चाभक्ष्यशब्दे २७४ पृष्ठे दर्शितम् ।

**अभोक्तृ** त्रि० न भोक्ता स्त्रियां ङीप् । भोक्तृभिन्ने । [त्रि०

**अभोग** पु० अभावे न०त० । १ भोगाभावे न०ब० । २ भोगशून्ये

**अभोजन** न० अभावे न०त० । भोजनाभावे उपवासे "स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्" इति च मनुः । भोजनाभावश्च भोजनविषयकनिवृत्तिरिति मीमांसकाः भोजनानुकूलाभाव इति नैयायिकाः अयत्नाभावस्य कैमिकजन्यत्वाङ्गीकाराच्च क्लिशसाध्यत्वमिति विवेकः । भोजनाभावश्च भोजने कश्चिद्रागाभावेन रोगेण वा, कश्चिच्च शास्त्रादितो भोजने बलवदनिष्टसाधनत्वज्ञानेन विरोधात् इष्टसाधनताज्ञानानुदयेन, यथा न कलञ्जं भक्षयेदित्यादौ । कश्चिच्च व्रतरूपे भोजनाभावे इष्टसाधनताज्ञानेन । स च भोजननिवृत्तिस्तदन्याभावो वेत्युक्तम् । विस्तरस्तु निषेधनिषेधविधिशब्दयोर्दृश्यः । "अजीर्णे भोजनं येषां जीर्णे येषामभोजनम् शालावभोजनं येषां तेषां नश्यन्ति धातव" इति वैद्य० । न०ब० । २ भोजनशून्ये त्रि० ।

**अभोज्य** त्रि० न भोक्तुं शक्यं निषिद्धत्वात् । अभक्ष्ये तत्स्वामिनि उपचारात् "अभोज्यानान्तु भुक्त्वान्नमिति" मनु अभक्ष्यशब्दे २७४ पृष्ठे विवरणम् ।

**अभोज्यान्न** त्रि० न भोज्यमन्नं यस्य स्मृतिनिषिद्धत्वात् । अभक्ष्यान्नस्वामिनि ते च अभक्ष्यशब्दे २७४ पृष्ठे उक्ता । "य एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिता" मनु ।

**अभौम** न० भूमौ भवम् न०त० । भौमभिन्ने नाभसजलादौ विरणं जलशब्दे "अभौममम्भोभिस्सृजन्ति मेघा" इति पुरा०

**अभ्यक्त** त्रि० अभि+अन्ज–क्त । १ कृततैलाद्यभ्यङ्गे २ अभितोलिप्ते च ।

**अभ्यग्र** त्रि० अभिमुखमग्रं यस्य । आसन्ने निकटे ।

**अभ्यङ्ग** पु० अभि+अन्ज–घञ् कुत्वम् । तैलादिमर्द्दने । "मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् । स्रोतोऽभितर्पयेत् गात्रं अभ्यङ्गः स उदाहृतः" "तैलमल्पं यदाङ्गेषु न च स्याद्गात्रतर्पणम् । सर्वार्द्धकायोऽभ्यङ्गोऽमशकादौ प्रकीर्त्तित." इति च वैद्यकोक्ते २ विशेषाभ्यङ्गे च । "तैलाभ्य-

भूमिभेदे न निक्ततैलं निषिध्यते" । "यतैलं सार्षपं तैलं यत् तैलं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यश" इति च ति॰त॰ स्मृतिः । "अभ्यङ्गमेपथ्य मलञ्चकार" कुमा॰ । "अभ्यङ्गमङ्गस्नानोद्वर्त्तन-ञ्चलनधारणमिति" मनुः । "अभ्यङ्गमाचरेन्नित्यं सजरा-श्रमवातहम्" । "शिरःश्रवणपादेषु तं विशेषेण शीलयेत्" वैद्य॰ ।

**अभ्यञ्जन** न॰ अभि+अन्ज–भावे ल्युट् । अभ्यङ्गशब्दार्थे "भोजनाभ्यञ्जनाद्दानात् यदन्यत् कुरुते तिलैः" मनु । "ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" प्र॰त॰ प्रचेताः । करणे ल्युट् । २तैलादौ अञ्जनादिदाने । ३ तत्साधने द्रव्ये । अभि+अन्ज–णिच् ल्युट् । अभ्यञ्जनकारण-व्यापारे "अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च । गुरु-पत्न्या न कार्याणि" मनुः ।

**अभ्यञ्जनीय** त्रि॰ अभि+अन्ज–कर्मणि अनीयर् । १अनु-लेप्ये चन्दनादौ २ मर्द्दनीये तैलघृतादौ च "एतदभ्यञ्ज-नीयं घृतमिति" दुर्गोत्सवपूजापद्धति" ।

**अभ्यधिक** त्रि॰ अधिकमधिक प्रा॰स॰ । उत्कृष्टतमे । "अय चैन चेह" इति छ॰उ॰ भाष्ये चेदः समस्ततः अभ्यधिकइति व्याख्यानात् तथात्वम् । "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" गीता । २ अधिकपरिमाणे "धान्यं दशभ्यः कुम्भेभ्यो हर-तोऽभ्यधिकं वधः" "तथा धरिम (मम) मेयानां शताद-भ्यधिके वधः" इति । "पञ्चाशतस्त्वभ्यधिके हस्त-च्छेदनमिष्यते" इति च मनुः ।

**अभ्यध्व** अव्य॰ अध्वनोऽभिमुखम् अव्ययी॰ अच्समा॰ । मार्गाभिमुखे "संस्थितेऽभ्यध्वं राजन्यमीपसमीपे स्थित्वाऽ-भ्यध्व मध्यां मासति" कात्या॰ २४,५,२५, "अभ्यध्व मार्गाभिमुखम्" कर्कः । "ययोरभ्यध्वे उत यद्दूरे चित्" "ऋ॰ ४,२८,२" ऋतीयात्मम्योर्भवत्यम्" मा॰भा भाम्

**[illegible]** पु॰ अभि–अम–अच् पु॰ । तिलकल्के । (खलि)

**अभ्यनुज्ञा** स्त्री॰ अभि+अनु+ज्ञा–अङ् । अनुज्ञायाम् इदं कुरु इत्यादिना प्रवर्त्तने "कृताभ्यनुज्ञा गुरुणा गरीयसा" कुमा॰ "ययौ वशिष्ठेन कृताभ्यनुज्ञः" रघुः ।

**अभ्यनुज्ञात** त्रि॰ अभि+अनु+ज्ञा–क्त । इदं कुरु इत्या-नुज्ञा नियोजिते आभिमुख्येनानुज्ञाते ।

**अभ्यनुज्ञान** न॰ अभि+अनु+ज्ञा–भावे ल्युट् । १ अनुज्ञा-याम् इदं कुरु इत्याद्युक्त्या नियोजनभेदे । "भरद्वाजाभ्य-नुज्ञानाच्चित्रकूटस्य दर्शनम्" रामा॰ । [२ प्रकाशिते च

**अभ्यनूक्त** त्रि॰ अभि+अनु+वच–क्त । १ आभिमुख्येन अनूक्ते

**अभ्यन्तर** न॰ अभिगतमन्तरम् । १ अन्तराले, मध्य-स्थाने । "मणोटजाभ्यन्तरसम्भृतानलम्" कुमा॰ । "प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया" "मणीमिवाभ्यन्तरलीन-माचकाम्" इति च रघुः । "अब्राह्मिदपरिचितिस मध्या-भ्यन्तर एव च" मनु । २ उभयोर्मध्ये ३ अन्तःकरणे च । अभ्यन्तरे भव, अण् आभ्यन्तरम् । अन्तःकरणस्थे त्रि॰ "शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम् । अशौचाद्धि वरं वाह्यं तस्मादाभ्यन्तरं वरम्" दक्षः ।

**अभ्यन्तराराम** त्रि॰ अभ्यन्तरे सर्व्वाभ्यन्तरे परमात्मनि आर-मति कर्त्तरि अच् । आत्मारामे आत्मज्ञे योगिनि "आत्मन "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्य-क्तात् पुरुषः परः" इति गीतावाक्येन अन्तर्यामिब्राह्मणेन १२० पृष्ठे दर्शितेन च सर्व्वाभ्यन्तरवर्त्तित्वम् ।

**अभ्यमन** न॰ अभितः अमनम् अम–गत्यादौ भावे ल्युट् । १ अभिगमने । चु॰ अम–ल्युट् अमन्तत्वात् ह्रस्व । २ । रोगे, करणे ल्युट् । ३तत्साधने अहितसेवने च ।

**अभ्यमित** त्रि॰ अभि+चु॰+अम–कर्मणि क्त । १ रुग्णे २ पीड़िते च । वा मि॰ । अभ्यान्तोऽप्यत्रैव "वकुभिस्तेन चाभ्यान्तं विव्याध ततोऽधिकैः" भा॰ द्रो॰प॰ ।

**अभ्यमित्र** अव्य॰ अमित्रस्याभिमुख्यम् अव्ययी॰ । अमित्रस्य शत्रोराभिमुख्ये । अमित्रसङ्गामीन्यर्थे "अत्र गामोऽधि-कारे "अभ्यमित्राच्छ च" पा॰छ अभ्यमित्रीय यत् खतौ अभ्यमित्रीय अभ्यमित्र्य । सामर्थ्येन शत्रोरभिमुखगामिनि वीरे पु॰ । "मारीचोऽहमयं खलासादभ्यमित्रोऽभवामि ते" "सद्योगमभ्यमित्रीणोयथेष्ट त्वञ्च सन्ततु" इति च भट्टिः ।

**अभ्यमिन्** त्रि॰ अभि+चु॰+रोगे–अम–कर्त्तरि अम-न्तत्वात् ह्रस्व णिनि । १रोगयुक्ते २आभिमुख्येन पीड़के ।

**अभ्यय** पु॰ अभितः सर्व्वतः अयः निवृत्तिः इण–अच् । १ अस्तगमने "आदित्याभ्ययेऽस्तावानपि" कात्या॰ ८, ८,११ "यथाहोमात् पूर्व्वमादित्यास्तमने" कर्कः । २अपगमे च "तमसोऽभ्यये सायं जुहुयात्" कात्या॰ ४,१५,१२ तमसोऽन्धकारस्याभ्ययेऽपगमे" कर्कः ।

**अभ्यर्चन** न॰ अभि+अर्च–ल्युट् । १ सम्यक्पूजने २ आभिमुख्येन पूजने च । "नित्य स्नात्वा शुचिः

कार्य्यादिषूपक्रमे "देवताभ्यर्चनञ्चैव" मनु । भावे घ । अभ्यर्चाप्यत्र स्त्री ।

**अभ्यर्च्य** त्रि॰ अभि+अर्च—कर्मणि ण्यत् । १ अभितः पूज-नीये "देवाग्नय सदाभ्यर्च्याःटहस्थैस्तु विशेषत " पु॰ । ल्यप । २आभिमुख्येन पूजयित्वेत्यर्थे अव्य॰ "देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्" मनु ।

**अभ्यर्ण** त्रि॰ अभि+अर्द्—कर्मणि क्त आविदूर्य्ये इडभावे नि॰ नत्वम् । समीपे । "कालोऽभ्यर्णजलागम कुशलिनो-वत्सस्य वार्त्तापि न" सा॰द॰ । "अभ्यर्णमागस्कृतमस्पृ-शद्भि " रघु॰ । "कृष्णार्णवाभ्यर्णचरैकहंस " प्रतप्तमभ्यर्ण-तया विवस्वता" इति च माघ ।

**अभ्यर्थना** स्त्री अभि+अर्थ—भावे युच् । आभिमुख्येन प्रार्थने "अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" कुमा॰। भावे ल्युट् । तत्रैव न॰। [अभिमुखं याचनीये ।

**अभ्यर्थनीय** त्रि॰ अभि+अर्थ-गौणे कर्मणि अनीयर् ।

**अभ्यर्थित** त्रि॰ अभि+अर्थ-गौणे कर्मणि क्त । १प्रार्थिते "अवकाश किलोदन्वान् रामायाभ्यर्थितो ददौ" रघु । गौणकर्म्माविवक्षाया मुख्ये क्त । २प्रार्थनाकर्म्मणि ।

**अभ्यर्थ्य** त्रि॰ अभि+अर्थ-ण्यत् । प्रार्थनीये । "कार्य्येषु चैककार्य्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा" रघु । ल्यप् । अभिमुख याचयित्वेत्यर्थे अव्य॰ ।

**अभ्यर्द्दित** त्रि॰ अभि+अर्द् क्त । अत्यपीडिते ।

**अभ्यर्हणा** स्त्री अभि+अर्ह-भावे युच् । १ पूजायाम् २अभि-मुखमर्यादायाञ्च । भावे ल्युट् । तत्रैव न॰ ।

**अभ्यर्हणीय** त्रि॰ अभि+अर्ह—अनीयर् । पूजनीये । "शा-रङ्गो मन्दपाथेन जगामाभ्यर्हणीयताम्" मनु ।

**अभ्यर्हित** त्रि॰ अभि+अर्ह—कर्मणि क्त । १पूज्ये २उचिते च ।

**अभ्यवकर्षण** न॰ अभि+अव+कृष-भावे ल्युट् । शल्याद्युद्धारे ।

**अभ्यवस्कन्द** पु॰ अभि+अव+स्कन्द—घञ् । १ शत्रोराक्रमे, २ निर्बलीकरणाय शत्रुभि क्रियमाणे प्रहारे ३अभ्य-वसादने ४ प्रहारमात्रे, ५ आसादने, ६ प्रपाते च । ल्युटि अभ्यवस्कन्दनमप्यत्रार्थे न॰ ।

**अभ्यवहरण** न॰ अभि+अव-हृ-ल्युट् । भोजने ।

**अभ्यवहार** पु॰ अभि+अव+हृ-घञ् । भोजने । "अत्याशा-भ्यवहारेण" मनु ।

**अभ्यवहार्य्य** त्रि॰ अभि+अव+हृ-ल्युट् । भोक्तुयोग्ये ।"सर्व्व लोदरिकस्याभ्यवहार्य्यमेव"विक्र॰।'खर विरदभ्यवहार्य्यम्'मा॰म॰

**अभ्यवहृत** त्रि॰ अभि+अव+हृ—क्त । भक्षिते ।

**अभ्यवायन** न॰ अभि+अव+इण-ल्युट् । आभिमुख्येनापयाने "यत्र शुष्कस्य चार्द्रस्य च सन्धि स्यात्तदुपगूहेत यद्यु अभ्यवायनाय" शत॰ब्रा॰ ।

**अभ्यसन** न॰ अभि+अस—ल्युट् । १अभ्यासे २पौन पुन्येनैक-क्रियाकरणे ३ पुन पुनरावर्त्तने "विद्यामभ्यसनेनेव प्रसा-दयितुमर्हसि" रघु । "स्वाध्यायाभ्यसन चैव वाङ्मय तप उच्यते"गीता"अनभ्यसनशीलस्य विद्येव तनुता गता"रामा॰ "भेदस्वीकरण पूर्व्वं विचारोऽभ्यसन जप" दक्ष ।

**अभ्यसनीय** त्रि॰ अभि+अस—आवश्यकार्थे अनीयर् । अव-श्याभ्यासयोग्ये वेदादौ ।

**अभ्यसूयक** त्रि॰ अभि+असू—उपतापे कण्ड्वा॰ यक् ण्वुल् अत्यन्तासूयाकर्त्तरि सन्मार्गवर्त्तिना गुणेषु दोषारोपके । "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका " गीता ।

**अभ्यसूया** स्त्री अभि+असू—उपतापे कण्ड्वादि॰ यक् प्रत्य-यान्तत्वात् अ, स्त्रीत्वात् टाप् । गुणेषु दोषारोपणे । "केनाभ्यसूया पदकाङ्क्षिणा ते" कुमा॰ "क्षमेषु वेशेषु च साभ्यसूया" "शक्राभ्यसूयाविनिवृत्तये य" "नून तेषा-मभ्यसूयापरोऽभूत्" इति च रघु ।

**अभ्यस्त** त्रि॰ अभि+अस—क्त । पौन पुन्येनैकजातीयाक्रिया कर्मणि पुन पुनरावर्त्तिते । "शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणामिति" रघु । २ "उभे अभ्यस्तम्" पा॰ उक्तयो कृतद्वित्वयोरुभयो धातुभागयो । "नाभ्य-स्ताच्छतु" "अभ्यस्तस्य च" पा॰ ।

**अभ्यस्य** अव्य॰ अभि+अस—ल्यप् । पुन पुनरावर्त्त्येत्यर्थे ।

**अभ्याकाङ्क्षित** न॰ अभि+आ+काङ्क्ष—भावे क्त । १मिथ्या-भियोगे । (मिथ्यानालिश) कर्म्मणि क्त । २ईप्सिते त्रि॰।

**अभ्याख्यान** न॰ अभि+आ+ख्या-ल्युट् । १ मिथ्याभियोगे, "शत मे धारयसीत्यादि" मिथ्याभियोगे २ मिथ्योद्भावने च ।

**अभ्यागत** पु॰ अभि+आ+गम+क्त । भिन्नग्रामीणे गृह गते-ऽतिथौ "सर्व्वस्याभ्यागतो गुरु " पुरा॰ । २ सम्मुखागत-मात्रे त्रि॰ । "अभ्यजातोऽभ्यागततूर्णतर्णकान्" माघ ।

**अभ्यागम** आभिमुख्येनागम्यतेऽत्र अभि+आ+गम—अप् । १ युद्धे । कर्मणि अप् । २ अन्तिके । करणे अप् । ३ विरोधे । भावे अप् । ४ अभ्युत्थाने ५ अभिघाते ६ अभिमुखगमने "किं वा मदभ्यागमकारण ते" रघु ।

**अभ्यागमन** न॰ अभि+आ—गम—ल्युट् । १ आभिमुख्ये नोद्गमने २ अभ्युत्थाने च ।

**अभ्यागारिक** पु॰ अभ्यगारे तद्गतकर्म्मणि व्यापृत ठन् ।

१ एतद्दर्शितपुत्रादिपोषणेषु व्यापृते २तेनैव व्यावृते ।

**अभ्याघात** पु० अभि+आ+हन-घञ् । १ आघाते २ ताडने च । करणे घञ् । ३ आघातोपदेशे । "अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतम्" मनु "अभ्याघातेषु चौर्योपदेशेषु" कुल्लू० ।

**अभ्याघातिन्** त्रि० अभि+आ+हन-ताच्छील्ये घिनुण् । हिंसाशीले । "अभ्याघातिभिरामिषग्राहकैः परिराटिभिः" भट्टि ।

**अभ्याचार** पु० अभि+आ+चर-घञ् । आभिमुख्येनाचरणे । "अवारयन्त वरुणेन देशाभ्याचारमसुराणाम्" ऋग० १०,१,२

**अभ्याम्नाय** पु० अभि+आ+म्ना-घञ् । अभिज्ञाने पूर्व्वघातस्य तथात्वरूपेण ज्ञाने "तस्मिन् दक्षिणा ददाति तूपरौ मिथुनौ दद्यादित्यभ्याम्नायेनेदमय" इति शत०ब्रा०

**अभ्यातान** पु० अभि+आ+तन-घञ् । वत्यन्तसन्ततौ ।

**अभ्यात्त** पु० अभि+आ+अत+सातत्ये कर्त्तरि क्त वेदे नि० । १सर्व्वव्यापके परमेश्वरे । "सर्व्वमिदमभ्यात्तोऽवाक्यनादर" छा०उप० । "सर्व्वमिदं जगदभ्यात्तं अभिव्याप्तः अततेः व्याप्त्यर्थस्य कर्त्तरि निष्ठा" भा० । अभि+आ-दा-क्त । २आभिमुख्येन गृहीते त्रि० । [२ आरब्धे च ।

**अभ्यादान** न० अभि+आ+दा-ल्युट् । १ आभिमुख्येनादाने,

**अभ्याधान** न० अभित आधानम् । अभितोमन्त्रादिना वस्त्रादेराधाने "यानिध्मस्य परिदधात्यभ्याधानाय" शत० ब्रा० । [अभ्यभितशब्दे २७५ पृष्ठे विवरणम् ।

**अभ्यान्त** पु० अभि+अम-क्त नि० । रोगयुक्ते निष्पीड़िते

**अभ्यापत्ति** स्त्री अभि+आ-पद-क्तिन् । अभिमुखागमने ।

**अभ्यामर्द** अभि+आ+मृद-आधारे घञ् । १ रणे । भावे घञ् । २निष्पीड़ने ।

**अभ्यायंसेन्य** त्रि० अभि+आ+यम-कर्म्मणि बा० सेन्य । अभितो नियन्तव्ये । "तासत्यावभ्यायंसेन्या भवतं मनीषिभिः" ऋ० १,३४,१, "अभ्यायंसेन्यौ अभितोनियन्तव्यौ" भा० ।

**अभ्यारम्भ** पु०० अभि+आ+रभ-घञ् मुम् । प्रथमारम्भे

**अभ्यारूढ** त्रि० अभि+आ+रुह-क्त । अग्रमारूढे "तेनैव क्षत्रमभ्यारूढम्" शत०ब्रा० ।

**अभ्यारोह** पु० अभि+आ+रुह-घञ् । १ अभिमुखारोहणे । आभिमुख्येनारोहति देवभावमनेन करणे घञ् । २मन्त्रजपभेदे "अथातोऽभ्यारोहजपविधिर्वेशोऽर्थवाद" इति वृ०भा० । "श्रेयान् वा एषोऽभ्यारोहाद्भवति" शत०ब्रा० ।

**अभ्यारोहणीय** त्रि० अभि+आ+रुह-अनीयर् । आभिमुख्येनारोहणीये । यज्ञ । अभ्यारोहणीयोऽयन ।

**अभ्यावर्त्त** त्रि० अभि+आ+वृत-अच् । १ पुनः पुनरावर्त्तमाने "प्रजा वै बर्हीरेतः आज्यं तत्प्रजास्वेवैतत् रेत सिच्यते तेन रेतसा सिक्तेनेमाः प्रजा पुनरभ्यावर्त्तं प्रजायन्ते" शत० ब्रा० । भावे घञ् । २ अभ्यावर्त्ते पु० । अभि+आ+वृत-णिच कर्म्मणि अच् । ३ पुनः पुनरावर्त्तनीये स्तोमादौ त्रि० । "चतुर्विंशः सप्तमासाः त्रिवृदभ्यावर्त्त पञ्चदशचत्वारिंशः सप्तमासाः एकविंशमभ्यावर्त्तम् अष्टाचत्वारिंशः सप्तमासास्त्रयस्त्रिंशमभ्यावर्त्तम्" शत०ब्रा० ।

**अभ्यावर्त्तिन्** त्रि० अभ्यावर्त्तते अभि+आ+वृत-णिनि । १ सन्तत वर्त्तमाने । २वेदप्रसिद्धे चायमानराजपुत्रे पु० । "शेषोऽभ्यावर्त्तिने चायमानाय शिक्षन्" ऋ० ६,२७५ । "अभ्यावर्त्ती चायमानो ददाति" ऋ०६,२७,८ ।

**अभ्यावृत्त** पु० अभि+आ+वृत- उपर्युक्तात् कर्म्मणि क्त । आभिमुख्येन आनीते सोमयोग्यद्रव्ये । "वातोऽभ्यावृत्त" य० १,५८ । "अभ्यावृत्तः सोमयोग्योभूत" वे०दी० २ पुनः पुनरभ्यस्ते त्रि० ।

**अभ्यावृत्ति** स्त्री अभि+आ+वृत-क्तिन् । पौनःपुन्येनाभ्यासे "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" पा० । "मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी" माघ ।

**अभ्याश** पु० आभिमुख्येनाश्नुते व्याप्यतेऽनेन अश-व्याप्तौ करणे घञ् । निकटे । निकटस्य अभिमुखव्यापनात्तथात्वम् । २फले तस्याव्यवहितकालेन व्यापनात्तथात्वम् । "यदेतदेवं विद्वान् साधु शामेत्युपासे अभ्याशो ह यदेनं साधवोधर्म्मा अभ्यागच्छेयुः" छा०उ० । "अभ्याश क्षिप्रम्" भा० "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्" । य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्" छा०उ० ।

**अभ्यास** पु० आभिमुख्येनास्यते क्षिप्यते अस-क्षेपे कर्म्मणि घञ् । १ निकटे । "घृतवद्भिरिवाभ्यासे वह्नौ वरप्रतीक्षणो" कुमा० । अभेर्व्वीप्सार्थत्वे । २ पुनः पुनरनुष्ठाने पौनःपुन्येन करणे । "अनङ्गकाभ्यासरति विचिन्त्य तमिति" कुमा० । "अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" । "अभ्यासेन च कौन्तेय । वैराग्येण च गृह्यते" । "अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमोभव" २ "अभ्यासयोगयुक्तात्मा ततो याति परां गतिम्" इति च गीता ३वेदादेरावृत्तौ च अभ्यासश्च पञ्चधा । "वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्योवेदाभ्यासो हि पञ्चधा"

ष्ठ्यः । ४ शब्दतात्पर्य्यग्राहके पौनःपुन्येन कथनरूपे लिङ्गभेदे "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये इति" उक्तेः यथा छान्दोग्ये षष्ठप्रपाठके "तत्त्वमसि श्वेतकेतो" इत्यस्य नवकृत्वः अभ्यासः । ५ एकस्मिन्नालम्बने देशादौ इतरतः समाहृत्य मनसः स्थापने च । कर्म्मणि घञ् । ६ व्याकरणोक्तयोः द्विरुक्तभावापन्नयोः धातुभागयोः । "स्यादिष्वभ्यासेन चाभ्यासस्य" पा० ।

**अभ्यासयोग** पु० अभ्यासेन सततानुशीलनेन योगः । सततैकविषयचिन्तनेन जाते समाधौ । "अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" । "अभ्यासयोगयुक्तात्मा ततो याति परां गतिमिति" च गीता ।

**अभ्यासादन** न० अभि+आ+सद–णिच् ल्युट् । १ शत्रोरभिमुखगमनेन आक्रमणे, २ शत्रोः सम्मुखगमने ३ समीपस्थापने च ।

**अभ्याहार** पु० अभि+आ+हृ–घञ् । १ अभिहारार्थे २ समाहरणे ३ आभिमुख्येन आनयने च । "अग्निमुद्धैकेऽन्वाहार्य्यदेशे कृत्वा ततोऽभ्याहारं कुर्व्वन्ति" शत०ब्रा० ।

**अभ्याहित** त्रि० अभि+आ+धा–कर्म्मणि क्त । १ आभिमुख्येन मन्त्रादिना स्थापिते विधिना कृतसंस्कारे वह्नौ ।

**अभ्युक्त** त्रि०आभिमुख्येनोक्तः । १ सम्यगुक्ते २ प्रकाशिते च

**अभ्युक्षण** न० अभि+उक्ष–सेचने ल्युट् । "उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम् । न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्" स्मृत्युक्ते अवतानपाणिना सेच्याभिमुख्येन, सेचने २सेचनमात्रे "पत्त्रराभ्युक्षणतत्पराणाम्" रघु अभ्युक्षणं च दानकार्य्ये कात्या०२२,६,१४ ।कर्त्तव्यमिति शेष । अभ्युक्षणादि च द्रव्यादिसंस्कारविशेषः अभ्युक्षितद्रव्याणामेव यागाङ्गत्वात् । स च संस्कार अदृष्टविशेषरूपः द्रव्यनिष्ठ इति मीमांसका तेषामयमाशय । यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनक इति नियमेन व्रीह्यादिगतावघातानुकूलसंस्काररूपफलार्थितया क्रियमाणानां प्रोक्षणाभ्युक्षणादीनां अवघातादिरूपफलजनकव्यापारत्वम् तथा च प्रोक्षिता एव व्रीहयोऽवघातादौ क्षमन्ते प्रोक्षणादिजन्यः संस्कारश्चावघातजनकोव्यापारो व्रीह्यादिनिष्ठ एव कल्प्यते" इति । नैयायिकास्तु "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" कुसुमा० उक्तेः प्रोक्षणादिभिः संस्कारोऽदृष्टं पुरुष एव जनितः एव लौकिक्यते प्रतिप्रोक्ष्यादि नानाशक्तिकल्पनापेक्षया एकसंस्काराणाम् ... आत्मनिष्ठस्य प्रोक्षणादिजन्यस्य लाघवेन कल्पनात् शास्त्रदेशित फलमनुष्ठातरीतिन्यायेन क्रियाकर्त्तर्य्येव प्रधानफलवत्तत्तदवान्तरादृष्टस्यापि तत्रैव कल्पनौचित्यात् अन्यथा अन्यगतादृष्टेन अन्यगतप्रधानापूर्व्वजनने वैयधिकरण्यात् अतिप्रसङ्गः स्यात् व्रीह्यादेश्च सर्व्वपुरुषसाधारणत्वेनानियामकत्वात् अन्यथा अन्यकृतप्रोक्षणादिसंस्कारस्यापि पुरुषान्तरकृतसंस्कारेण प्रधानापूर्व्वजनकत्वापत्तेः । यो यद्गतफलार्थितयेत्यादिनियमश्च शत्रुनिधनाद्युद्देशेन क्रियमाणे श्येनयागादौ व्यभिचारात्साध्यसाधकत्वं तत्र हि शत्रुगतवधफलाद्युद्देशेऽपि अभिचारिपुरुषगतस्यादृष्टविशेषस्य कल्पनावश्यम्भावात् अन्यथा तत्कर्त्तुः प्रायश्चित्तोपदेशस्यानर्थक्यापत्तेः अभिचारकर्म्मणश्च उपपातकमध्ये मन्वादिभिर्गणनात् तस्य पापजनकत्वसिद्धिरिति ।

**अभ्युक्षित** त्रि० अभि+उक्ष–क्त । कृताभ्युक्षणे यज्ञपात्रादौ

**अभ्युक्ष्य** त्रि० अभि+उक्ष–अर्हार्थे ण्यत् । अभ्युक्षणार्हे । ल्यप् । अवतानपाणिना सिक्त्वेत्यर्थे अव्य० "अधस्त्यैनमवटं कृत्वाभ्युक्ष्य सोमोपनहनेन" कात्या० २२,६,१२ । तेनोदकेनात्मानं पूजनोपकरणञ्चाभ्युक्ष्येति" स०सा० ।

**अभ्युच्चय** पु०अभि+उद्+चि–अच् । १वृद्धौ । "अभ्युच्चयस्तु वृद्धौ" किरा०२,१८ मल्लिनाथोक्ते २समुच्चयेऽपि ।

**अभ्युत्थान** न० अभि+उत्–स्था–ल्युट् । १आदरेणासनादित उत्थाने २गौरवेणोत्थानादिना ३प्रत्युद्गमने, ४उत्थानमात्रे, ५उद्यमे, ६उन्नये च । "नवाभ्युत्थानदर्शिन्योननन्दुः सप्रजाः प्रजाः" रघु "अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्" गीता । [कर्त्तरि स्त्रियां ङीप् ।

**अभ्युत्थायिन्** त्रि० अभि+उद्+स्था–णिनि । अभ्युत्थान

**अभ्युत्थित** त्रि० अभि+उद्–स्था–क्त । १कृताभ्युत्थाने अभिवादे सम्मानार्थमासनादित उत्थिते । २अभिमुखेनोद्गते च "अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्" रघु० ।

**अभ्युत्थेय** त्रि० अभि+उद्+स्था–उपसृष्टत्वात् कर्म्मणि यत् । अभिवाद्ये यस्याभिवादनार्थमासनादित उत्थानं क्रियते तस्मिन् । "अभ्युत्थेयस्यापि" कात्या० २२,५,२७ गुर्व्वादेरभ्युत्थेयस्यापि अभ्युत्थानमिति" कर्क० ।

**अभ्युत्पतन** न० अभि+उत्+पत–ल्युट् । आभिमुख्येनोत्पतने "अवक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः" रघु ।

**अभ्युदय** पु०अभि+उत्+इण्–अच् । १अभीष्टकार्य्याणां प्रादुर्भावे, २वृद्धौ, "भवो हि लोकाभ्युदयाय तादृशाम्"रघु ।

अभ्युदीयतेऽनेन करणे अप् । ३आयाससमानचूडादिसंस्कारे च । अत एव तदर्थकश्राद्धम् आभ्युदयिकमित्युच्यते । ४अभ्युदयसाधने इष्टलाभे ५वृद्धिनिमित्तके श्राद्धे च "सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि" मनु । "अभ्युदये वृद्धिश्राद्धे" कुल्लू० । "प्रतिवेशोऽपि चेद्या तु भद्यमभ्युदयेष्वपि" मनुः । भावे अप् । ६उत्तरोत्तरवृद्धौ "अभ्युदयफलं धर्मस्थानमिति" शा० भा० "धर्मं श्रेय समुद्दिष्टं श्रेयोऽभ्युदयसाधनमिति" भवि० पु० । अभ्युदय इष्टलाभादि प्रयोजनमस्य ठञ् । आभ्युदयिकं निमित्ते श्राद्धे । "अथाभ्युदयिके श्राद्धे युग्मान्भोजयेत्" गोभि० "अभ्युदयः इष्टलाभः विवाहादि तदर्थं श्राद्धम् आभ्युयिकम् तच्च भूतभविष्यद्भेदेन द्विविधम् भूतं सुतजन्मादि भविष्यत् विवाहादि श्रा० त० रघुनन्दनः ।

**अभ्युदयार्थक** न० अभ्युदयः इष्टलाभादि अर्थो निमित्तं यस्य । अभ्युदयनिमित्ते श्राद्धे "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्" मार्क० पु० ।

**अभ्युदानयन** न० अभि+उद्+आ+नी–ल्युट् । अग्नेरभिमुखानयने "अभ्युदानयन्" गो० सू० अभ्युदानयन् अग्नेरभिमुखमानयन् जपेदिति श्रा० त० रघुनन्दनव्याख्यानात् तदुपलक्षणस्य नयते: तथार्थत्वम् ।

**अभ्युदाहरण** न० अभि+उद्+आ+हृ–ल्युट् । १ अभिमुखकथने २आभिमुख्येनोर्द्ध्वमुत्क्षेपणे च ।

**अभ्युदित** त्रि० अभित सर्व्वत उदितमुत्क्रान्तं प्रातर्विहित कर्म यस्मात् । सूर्य्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये ब्रह्मचारिणि । "सूर्य्येण ह्यभिनिर्म्मुक्तः शयानोऽभ्युदितश्च यः" मनु । २अभितउदिते, ३ प्रकाशिते च त्रि० "माघे मासि रटन्त्याप किञ्चिदभ्युदिते रवौ" म० त० पुरा० । [भावे क्त कथने न० ।

**अभ्युदीरित** त्रि० अभि–उद्+ईर–क्त । अभिमुखमुक्ते ।

**अभ्युद्गम** पु० अभि+उद्+गम–भावे अप् । १ अभ्युत्थाने २ उद्गमे च । ल्युट् । अभ्युद्गमनमप्यत्र न० ।

**अभ्युद्यत** त्रि० अभि+उद्+यम–क्त । उद्युक्ते "कुसुममभ्युद्यत मूर्त्तनेश्वरम्" रघु । १अयाचितोपनीते फलादौ, "एधोदकं मूलफलमन्नमभ्युद्यतञ्च यत्" मनु ।

**अभ्युद्धृत** त्रि० अभि+उद्+हृ–क्त । १अयाचितोपनीते २अभ्यर्थ्य दत्ते च "एधोदकं मूलफलमन्नमभ्युद्धृतञ्च यत्" प्रा० त० मनुवचनपाठः 'अभ्यर्थ्य दत्तमिति व्याख्यातं च रघुनन्दनेन । अभि+उद्+धृ–क्त । ३आभिमुख्येनोत्तोलनेन धृते ।

**अभ्युन्नत** त्रि० आभिमुख्येन उन्नत । आभिमुख्येन उन्नते अत्यन्तोन्नते । "अभ्युन्नताङ्गुष्ठनखप्रभाभिः" कुमा० ।

**अभ्युपगत** त्रि० अभि+उप+गम–क्त । १स्वीकृते अङ्गीकृते । २ समीपगते ३अभिमुखमुपगते च ।

**अभ्युपगम** पु० अभि+उप+गम–अप् । १स्वीकारे "क्रियाभ्युपगमात्त्वेतद्वीजार्थं यत् प्रदीयते" मनुः । २समीपगतौ च ३ "नियमदयादीनामभ्युपगमेत्यादि" सुश्रुत ।

**अभ्युपपत्ति** स्त्री अभि+उप+पद–क्तिन् । अनिष्टनिवारणपूर्व्वकाभीष्टसम्पादनरूपे अनुग्रहे, "ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकमिति" "स्त्रीणामाभ्युपपत्तौ च धर्मेण नाम दुष्यति" "स्त्रीबालाभ्युपपत्तौ च बाह्यानां शिविकारणम्" इति च मनु अभ्युपपूर्व्वपदधातोः सान्त्वनानुग्रहार्थत्वेनैव "रतिमभ्युपपत्तुमातुरामिति" कु० प्रयोग । २ सान्त्वने च

**अभ्युपपत्तुम्** अव्य० अभि+उप+पद–तुमुन् । सान्त्वयितुम् अनुग्रहीतुमित्यर्थे "रतिमभ्युपपत्तुमातुराम्" कुमा० ।

**अभ्युपपन्न** त्रि० अभि+उप+पद–क्त । अनुगृहीते ।

**अभ्युपाय** पु० अभि+उप+इण्–अच् । १ स्वीकारे २ अभिकोपाये च । "तस्मिन् सुराणां विजयाभ्युपाये" कुमा० "तान् वोऽभ्युपायान् वक्ष्यामि" मनु ।

**अभ्युपेत** त्रि० अभि+उप+इण–क्त । १अभिमुखसमीपगते २अङ्गीकृते ३ अङ्गीकर्त्तरि च ।

**अभ्युपेत्य** त्रि० अभि+उप+इण–कर्म्मणि क्यप् । अभिमुख समीपगम्ये । ल्यप् । स्वीकृत्येत्यर्थे अव्य० । "अभ्युपेत्य च शुश्रूषामिति" नार० ।

**अभ्युपेत्याशुश्रूषा** स्त्री अभ्युपेत्य अङ्गीकृत्य अशुश्रूषाऽसेवनम् । अङ्गीकृत्य पश्चात् दास्याकरणरूपे विवादभेदे "अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते" नार० । "आज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्यो न सम्पादयति, तद्विवादपदमभ्युपेत्याशुश्रूषाख्यमिति" मिताक्षरा ।

**अभ्युपेत्या** स्त्री अभि+उप+इण–भावे क्यप् । सेवायाम् ।

**अभ्युषित** त्रि० अभि+वस–क्त । १अभिमुखमुषिते अभिमुखस्थिते सेवकादौ पु० ।

**अभ्यु(भ्यू)ष** पु० अभित उ(ऊ)ष्यते अग्निना दह्यते अभि+उ(ऊ)ष–दा० कर्म्मणि क । १ यवगोधूमादिपूपकृते (रोटि) प्रसिद्धे दग्धान्नभेदे । अप भावे कर्म्मणि वा घञ् । अग्निना ईषद्दग्धेऽन्ने हेम० भावे घञ् । कलायादेरीषद्दहने अभि+उष–भाषादौ घञ् । अभ्योषोऽप्यत्र अभ्यु(भ्यू)(भ्यो)षायहितं च यतौ अभ्यू(भ्यु)(भ्यो)षीयम् अभ्यू(भ्यु)(भ्यो)-

यत् । तत्सहिते गोधूमकषायादौ । अपूपादिगणपाठात् लि० अभ्येषणश्चोऽप्युक्तार्थे ततोऽपि अयतौ उक्तार्थे ।

**अभ्यूह** अभि+ऊह-घञ् । स्वबुद्धिमात्रकल्पिते तर्के "नैषा तर्केण मतिरापनेयेति" कठ उ० भाष्ये 'स्वबुद्ध्यभ्यूहेन केवलेन तर्कमात्रेण इति" उक्तम् ।

**अभ्यूहनीय** त्रि० अभित· ऊहनीयः । स्वबुद्ध्या तर्कणीये ।

**अभ्यूह्य** त्रि० अभित ऊह्य· । १स्वबुद्धिमात्रेण तर्कणीये । ल्यप् । २अभितस्तर्कयित्वेत्यर्थे अव्य० ।

**अभ्र** गतौ भ्वादि०पर०सक० सेट् । अभ्रति आभ्रीत् आनभ्र अभ्रम् "तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः" भट्टि· ।

**अभ्र** न० अभ्र-अच् । १मेघे २स्वर्णे ३आकाशे च अनभ्र-वर्षेऽभिकं इष्यम् । "तदा विद्यादनध्यायमनृतौ चाभ्र-दर्शने" मनु· "अभ्रं लिहाग्रं रविमार्गभङ्गम्" भट्टि· । "वर्षात्ययेन रुचमभ्रघनादिवेन्दो·" रघु· कुर्वादिगण-पाठात् तन्नामके ऋषिभेदे पु० । तस्य अपत्यम् कुर्वादि०ण्य । आभ्र्य तदपत्ये पुंस्त्री । अभ्रमिवाचरति क्यङ् अभ्रायते ।

**अभ्रक** न० पु० अभ्र-कुन् । कचित् पुंस्त्वमप्यस्य । (आब)-धातुभेदे एतच्च गौरीरजोजात यथोक्तम् रसेश्वरदर्शने शिववाक्यम् । "अभ्रकस्तव बीजन्तु मम बीजन्तु पारद अनयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनम्"। जारिताभ्रस्य पारदमेलनद्वारा मृत्युनाशकत्वमतश्च जारणविधिर्दर्शित स्तत्रैव । "कृष्णाभ्रकमनेकधपुटं ध्मात्वा चैव कृपात्मक कृत्वा । काष्ठमयोदूखलके चूर्णं सयत्नेन कुर्वीत ॥ भूयो हयादि च पिष्टं मास·सूक्ष्मासवकाम्बलगलितम् । मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत्त्रिदिनम् ॥ उद्धृत्य तद्रसादय पिंष्याद्वैमन्तिकधान्यभक्तस्यम् । अथोदात्य-न्ताम्लस्वच्छजलेन प्रयत्नेन । मण्डूकपर्णिकाया पूर्वं सुरसेनालोडन कुर्यात् । स्थालीपाक पुटनं चार्द्रैरपि भृङ्गराजाद्यै ॥ ताडादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्माग्नौ । तावद्देहेन यावद्धूमोऽग्निर्दृश्यते सुचिरम् ॥ निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु । पिष्ट्वा दृढा वस्त्रे चूर्णं निश्चन्द्रकं कुर्यात्" इति ।

**अभ्रंलिह** त्रि० अभ्रं गगनं लेढि स्पृशति अभ्र+लिह-खश् मुम् । गगनस्पर्शिनि अत्युच्चे "प्रासादमभ्रंलिहमा-रुरोह" रघु·"अभ्रंलिहाग्रं रविमार्गभङ्गमिति" भट्टिः ।

**अभ्रङ्कष** त्रि० अभ्रं गगनं कषति पीडयति उच्चत्वात् अभ्र+कष-ख मुम् । अत्युच्चे । "आदायाभ्रङ्कषं प्रायात्प्रलयं पवनाशिनम्" भट्टि· ।

**अभ्रजा** त्रि० अभ्रात् मेघात् जायते जन-विट् ५त० । मेघ-जाते "यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीनृसचता पर्वतांश्च, अथ० १,१२,३अग—ड । अभ्रजोऽप्युक्तार्थे त्रि०

**अभ्रनाग** पु० ६त० । ऐरावते गजे ।

**अभ्रपथ** पु० ६त० अच् समा० । विमाने गगनमार्गे ।

**अभ्रपिशाच** पु० अभ्रे गगने पिशाच इव । राहुग्रहे तस्य छायात्मकत्वेन नीलवर्णतया पिशाचतुल्यत्वम् ।

**अभ्रम** पु० भ्रमो भ्रमणं मिथ्याज्ञानञ्च अभावे न०त० । १भ्रमा-भावे । न०ब० । २भ्रान्तिशून्ये त्रि० । [जटामांस्याम् ।

**अभ्रमांसी** स्त्री अभ्रमिव जटाया मांसमस्य गौ०ङीष् ।

**अभ्रमाला** स्त्री ६त० । मेघसमूहे । [कैन लिप्ताया स्त्रियाञ्च ।

**अभ्रलिप्ती** स्त्री ३त०ङीप् । १अल्पाभ्रैर्लिप्ताया दिवि २अल्पमुख-

**अभ्रवर्ष** पु० अभ्रैर्मेघैर्वृष्यते कर्मणि घञ् । १मेघैः सिच्यमाने "दिव्यानकोशासो अभ्रवर्षाः" ऋ० ८,८८,६, अभ्रवर्षाः अभ्रैर्वृष्यमाणा भा० । भावे घञ् । २मेघवर्षणे ।

**अभ्रवाटिका** स्त्री अभ्रेण शून्येन वाटो वेष्टन यस्याः गौ० ङीप् । आम्रातकवृक्षे । तस्याः पत्रशून्यकाले शून्यावृतत्वेन प्रतीतेस्तथात्वम् ।

**अभ्राज** त्रि० न भ्राजते भ्राज-अच् न०त० । १ दीप्ति शीलभिन्ने २सामगानविशेषद्रष्टरि ऋषिभेदे पु० । तेन दृष्टं साम अण् । आभ्राजं तद्दृष्टे सामभेदे न० तच्च "परिस्वानो गरिरा इत्यस्यामृचि गीयमानं साम" ता०ब्रा०भा० । तदपि ऊहगाने ६प्र० दर्शितम् । तस्य च पाठविनियोग ता०ब्रा० उक्त यथा "भ्राजाभ्राजे पवमानमुखे भवत" इति गवामयने विषुवन्नामाहे तत् पाठ्यम् ।

**अभ्रातृ(क)** पु स्त्री नास्ति भ्राता यस्य वेदे न कप् लोके तु कप् । भ्रातृशून्ये । "अभ्रातेव पुंस एति प्रतीची" ऋ० १,१२४,७, कबभावे स्त्रियां ङीप् । "नाभ्रातीमुपयच्छेत्" स्मृ० । कपि तु अभ्रातृका तत्रार्थे "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्" मनु ।

**अभ्रातृव्य** त्रि० नास्ति भ्रातृव्य शत्रुर्यस्य । शत्रुरहिते "अभ्रातृव्योऽभ्रातृव्यहा भवति य एवं विद्वान्" शत०ब्रा०

**अभ्रान्त** त्रि० विरोधे न०त० । १ भ्रान्तभिन्ने यथार्थज्ञानयुक्ते २ भ्रमणशून्ये स्थिरे च ।

**अभ्रान्ति** स्त्री अभावे न०त० । १मिथ्याज्ञानाभावे २ भ्रमणाभावे च । न०ब० । ३मिथ्याज्ञानशून्ये ४ भ्रमणशून्ये च त्रि० ।

**अभ्रावकाश** पु० अभ्रमेवावकाशः । इतरावरणशून्ये आकाश-मात्रावकाशे ।

स्तथ पुष्पफलं दर्शयन्ति वनद्रुमाः ॥ गर्भिण्यो राजपुत्राश्च जनयन्ति विभीषणान् । क्रव्यादाः पक्षिणश्चापि सहाश्नन्ति परस्परम् ॥ त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः । द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः । त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्द्दंष्ट्रा विषाणिनः ॥ तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् । वैनतेयान् मयूरांश्च जनयन्त्य पुरे तव ॥ गोवत्सं वड़वा सूते श्वा शृगालं महीपते । । कुक्कुटान् करभांश्चैव शुकाश्चाशुभवादिनः ॥ स्त्रियः काश्चित् प्रजायन्ते चतस्रः पञ्च कन्यकाः । जातमात्राश्च नृत्यन्ति गायन्ति प्रहसन्ति च ॥ पृथग्जनस्य सर्व्वस्य क्षुद्रकाः प्रहसन्ति च । नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् । प्रतिमाश्चालिखन्त्येते सशस्त्राः कालचोदिताः । अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः । अन्योन्यमथ मृद्नन्ति नगराणि युयुत्सवः ॥ पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च । विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति । अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च । श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति । अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ धूमकेतुर्महाघोरः पुष्यञ्चाक्रम्य तिष्ठति । सेनयोरशिवं घोरं करिष्यति महाग्रहः ॥ मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः । भाग्यं(मघाम्)नक्षत्रमाक्रम्य सूर्य्यपुत्रेण पीड्यते ॥ शुक्रः प्रोष्ठपदे पूर्व्वे समारुह्य विरोचते । उत्तरे तु परिक्रम्य सहितः समुदीक्ष्यते ॥ श्वेतो ग्रहः प्रज्वलितः सधूम इव पावकः । ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ ध्रुवः प्रज्वलितं घोरमपसव्यं प्रवर्त्तते । रोहिणीं च पीडयत उभौ च शशिभास्करौ ॥ चित्रास्वात्यन्तरे चैव धिष्ठितः परुषो ग्रहः । वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः । ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥ सर्व्वसस्यपरिच्छन्ना पृथिवी सस्यमालिनी । पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः ॥ प्रधानाः सर्व्वलोकस्य यास्वायत्तमिदं जगत् । ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत ॥ निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशम् । व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् ॥ अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च । कवचानां ध्वजानाञ्च भविष्यति महान् क्षयः ॥ पृथ्वी शोणितावर्त्ता ध्वजोडुपसमाकुला । कुरूणां वैशसे राजन्! पाण्डवैः सह भारत! ॥ दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः । अत्याहितं दर्शयन्तो वेदयन्ति महद्भयम् ॥ एकपक्षाक्षिचरणः शकुनिः खचरो निशि । रौद्रं नदति संरब्धः शोणितं छर्द्दयन्निव ॥ शस्त्राणि चैव राजेन्द्र । प्रज्वलन्तीव सम्प्रति । सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा ॥ संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ । विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ ॥ चन्द्रादित्यावुभौ ग्रस्तावेकपक्षे त्रयोदशीम् । अपर्व्वणि ग्रहं यातौ प्रजासंक्षयमिच्छतः ॥ अशोभिता दिशः सर्व्वाः पांशुवर्षैः समन्ततः । उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् ॥ कृत्तिका पीड्यते तीक्ष्णैर्नक्षत्रं पृथिवीपते । ॥ अभीक्ष्णं वाता वायन्ते धूमकेतुमवस्थिताः । विषमं जनयन्त्येते आक्रन्दजननं महत् ॥ त्रिषु छत्रेषु सर्व्वेषु नक्षत्रेषु विशाम्पते । गृध्रः सम्पतते शीर्षे जनयन् भयमुत्तमम् ॥ चतुर्द्दशीं पञ्चदशीं भूतपूर्व्वां च षोड़शीम् । इमान्तु नाभिजानामि भूतपूर्व्वां त्रयोदशीम् ॥ चन्द्रसूर्य्यावुभौ ग्रस्तावेकमासे त्रयोदशीम् । अपर्व्वणि ग्रहावेतौ प्रजाः संक्षपयिष्यतः । शोणितैर्व्वक्त्रसम्पूर्णा अतृप्तास्तत्र राक्षसाः । प्रतिस्रोतोवहा नद्यः सरितः शोणितोदकाः । फेनायमानाः कूपाश्च कूर्द्दन्ति वृषभा इव ॥ पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः । अद्य चैव निशां व्युष्टामुदये भानुराहतः ॥ ज्वलन्तीभिश्च वह्नीभिरुल्काभिः सर्व्वतो दिशम् । अन्योन्यमवकृष्यद्भिस्तत्र घोरं महर्षिभिः । भूमिपालसहस्राणां भूमिः पास्यति शोणितम् ॥ कैलासमन्दराभ्यान्तु तथा हिमवतो गिरेः । सहस्रशो महाशब्दाः शिखराणि पतन्ति च ॥ महाभूता भूमिकम्पे चत्वारः सागराः पृथक् । वेलामुद्वर्त्तयन्तीव क्षोभयन्तो वसुन्धराम् । वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ॥ अभग्नाः सुमहावातैरशनीभिः समाहताः । वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च । नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः । वामार्चिर्दुष्टगन्धश्च शब्दान् वै दारुणं स्वनम् ॥ स्पर्शा गन्धा रसाश्चैव विपरीता महीपते । । धूम ध्वजाः प्रसृजन्ति कम्पमाना मुहुर्मुहुः ॥ मुञ्चन्त्यङ्गारवर्षञ्च भेर्य्यश्च पटहास्तथा ॥ शिखराणां समस्तानामुपरिष्टात् समन्ततः । वायसाश्च रुवन्त्युग्र वामं मण्डलमाश्रिताः । पक्षापक्षेति सुभृशं वावाश्यन्ते वयांसि च ॥ निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥ ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः । दीनास्तुरङ्गमाः सर्व्वे वारणाः सलिलाश्रयाः ” इति असाधारणानि अमङ्गलानि च दर्शितानि यथा “सक्तवेर्यौ छिन्नमासां रुदतीश्च दिगम्बराम् । कम्पमानपरीधाना-

मत्वम् अमनुष्याणां मनुष्यभिन्नानां गन्धर्वादीनां सम्भवात् सहस्रायुष्यं भवति मनुष्याणां तु तदसम्भवात्" कर्क० ।

**अमनोगत** त्रि० न०त० । १ अनभिप्रेते २ मनसाऽचिन्तिते । [अस्पृष्टे २ अनभिप्रेते च

**अमनोनीत** त्रि० न मनसा नीत गृहीत । १ मनोऽगम्ये

**अमनोयोग** पु० मनसो योग विषयेषु सावधानतया संयोजनम् अभावे न०त० । अवधानाभावे तत्त्वनिर्णायकमनोवृत्त्यभावे । न०ब० । तच्छून्ये त्रि० ।

**अमनोहर** त्रि० विरोधे न०त० । रम्यभिन्ने कुत्सिते ।

**अमन्तु** त्रि० मन्तुर्मन्ता मन–तुन् न०त० । अज्ञातरि "अकर्मा दस्युरभितो अमन्तुरन्यव्रत" ऋ०१०,२२,८ । १ मन्तुरपराध न०ब० । २ तच्छून्ये त्रि० ।

**अमन्त्र** त्रि० नास्ति मन्त्र पाठ्यो यत्र कर्मणि । १ मन्त्रशून्ये कर्मादौ "सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्" मनु नास्ति मन्त्र मन्त्राध्ययनमस्य । २ वेदपाठशून्ये "अव्रतानाममन्त्राणां जातिमात्रोपजीविनां नैषां प्रतिग्रहो देय" "निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमितीरिता" इति च मनु । वा कप् । अमन्त्रकोऽप्युभयत्र "अमन्त्रकं तु शूद्रस्य सर्वकर्माणि कारयेत्" अमन्त्रकस्य शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति च स्मृति । [कटे च ।

**अमन्द** त्रि० विरोधे न०त० । १ मन्दभिन्ने पटौ २ उत्-

**अमम** त्रि० नास्ति ममेत्यभिमान गेहादिषु यस्य । गृहपुत्रादिषु ममेत्यभिमानशून्ये "शरण्योऽममश्चैव वृक्षमूलनिकेतनः" मनु । २ जिनविशेषे पु० । अममकारादयोऽत्र

**अमर** पु० मृ–पचाद्यच् न०त० । बहुकालस्थायितया मृत्युहीने देवे, "तत्रामरालयमरालमरालकेशी" नै० "सुधाश्च रत्नानि हरामराङ्गना" माघ । तोयस्तुरांश्च क्रमशः सवन्तममरामराः" मनु अष्टधात्रिकमध्ये २ अमरसिंहनामके धात्रिके, "चाक्षिण्यमरजैनेन्द्राः जयन्त्यष्टादिधात्रिकाः" इति कविक० । स च काण्डत्रययुक्तलिङ्गानुशासनकोषकर्त्ता विक्रमादित्यसभासद्नवरत्नमध्ये, यथाह "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" शङ्कु क्षपण वररुचिर्मणिरंशुदत्तो जिष्णुस्त्रिलोचनहरी घटकर्पराख्य । अन्येऽपि सन्ति कवयोऽमरसिंहपूर्वा यस्यैव विक्रमनृपस्य सभासदोऽमी" इति च ज्योतिर्विदा० । ३ गुडूचीवृक्षे, स हि छिन्नोऽपि पुनः पुनः प्ररोहति, अतश्च न म्रियते । ४ पारदे तस्य भस्मादौ बहुतापनेऽपि न ध्वंस । अपादाने वा अप् । तत्रैव तस्य सेवने हि मृत्युराहित्यम् रसेश्वरदर्शनशब्दे वक्ष्यते । ५ अस्थिसंहारे च स हि बहुकाल भूमौ स्थितोऽपि न जीर्य्यति । ब०व० ६ मरणशून्ये त्रि० । "अजरामरवत् प्राज्ञो विद्यामर्थाञ्च चिन्तयेत्" हितो० "उत्पादयति सावित्र्या सा नित्या साऽजराऽमरा" मनु ज्योतिषोक्ते ७ विवाहयोटकार्थे नक्षत्रगणभेदे "हस्तास्वातिश्रुतिमृगशिरः पुष्यमैत्राश्विभानि पौष्णादित्ये जगुरिह बुधा देवगणानि भानि" ज्योतिस्तत्त्वचिन्ता० अधिक गणशब्दे दृश्यम् । मरुत्वतीगर्भजाते ८ मरुद्गणभेदे पु० । "मरुत्वती च मरुतो देवानजनयत् सुतान् अग्निश्चक्षुर्हविर्ज्योतिः सावित्रं मित्रमेव च । अमरं शरवृष्टिञ्च सुदर्शं महाभुजम्" इत्यादि हरिवं० ९ गुडूच्याम् १० दूर्वायां ११ वास्तूकवृक्षे १२ महानीलीवृक्षे १३ घृतकुमार्य्याम् १४ स्नुहीवृक्षे च स्त्री । एतासां छेदनेऽपि पुनः प्ररूढत्वात् यथायथं दुर्मरत्वाच्च तथात्वम् । न म्रियतेऽनया करणे अप् । १५ जरायौ स्त्री । तच्चर्म्मणा वेष्टनेनैव जठरानलदाहनिवारणात् मरणनिवारकत्वात् तथात्वम् । १६ नाभिनालायाम् राजनि० १७ स्थूणायां गृहस्य संनिवारकत्वात्तथा । अमरा सन्त्यस्याम् अर्श आ०अच् । १८ इन्द्रपुर्य्याममरावत्यां स्त्री

**अमरकोष** पु० अमरेण कृत कोष । अमरसिंहकृते लिङ्गानुशासनाख्ये त्रिकाण्डात्मके अभिधानभेदे ।

**अमरज** पु० अमर दुर्मर इव जायते जन–ड । विट्खदिरे कालस्कन्दाख्ये खदिरभेदे दुर्मरत्वेन जातत्वात्तथात्वम् ।

**अमरदारु** पु०न० । अमराणां प्रियं दारु । देवदारुवृक्षे ।

**अमरद्विज** पु० अमरपूजक द्विज शाक०त० । देवले (पूजारीति) ख्याते विप्रे ।

**अमरपति** पु० ६त० । देवराजे इन्द्रे अमरभर्त्रादयोऽप्यत्रार्थे

**अमरपुष्पक** पु० अमरमविशीर्णं पुष्पं यस्य । १ कल्पवृक्षे २ इक्षुगन्धायां स्त्री । ३ काशतृणे पु० रत्नमा० ।

**अमरपुष्पी** स्त्री अमरमविशीर्णं पुष्पमस्याः जातित्वात् ङीप् । अमाकुष्माण्डाम् । कप् अत इत्वम् । अमरपुष्पिकाप्यत्र ।

**अमरप्रभु** पु० ६त० । १ विष्णौ तस्य सर्व्वेश्वरत्वात्तथा । २ शक्रे च

**अमररत्न** न० अमर इव शुद्धं रत्नम् । स्फटिके मणौ ।

**अमरराज** पु० ६त० टच् समा० । देवराजे इन्द्रे ।

**अमरलोक** पु० ६त० । १ स्वर्गे । अमराणामिव लोको भुवनं यस्य । २ प्राप्तदेवलोके धार्म्मिके त्रि० । "तेषां सप्तसुरर्ष-

**अमुष्यपुत्र** पु० ६त० नि० अलुक्। प्रख्यातवंशे कुलीने तस्य भावः मनोज्ञा० वुञ् आमुष्यकम्। कौलीन्ये न०।

**अ(आ)मुष्यायण** पु० अमुष्य अपत्यम् फ (फञ्) अलुक्। विख्यातकुलोत्पन्ने अपत्ये अमुष्यापत्ये च।

**अमूदृश** त्रि० अमुष्येव दर्शनमस्य अदस्+दृश–कञ् आत्वम् अत्वञ्च। अद शब्दार्थसदृशे। कञ्। अमूदृश किन् अमूदृक् क्सच् अमूदृक्षः। उक्तार्थे। कञ् प्रत्यये स्त्रियां ङीप् "अमूदृशी तत्कविदन्द्वन्द्विता" नै०।

**अमूर** स्त्री अमूः मूर्च्छाभावः कुञ्जा० अस्त्यर्थे र। मूढभिन्ने मोहशून्ये "संजानत खेदसैरमूरा" ऋ० १ ६८ ४, "यास्कस्तु मूढा वयं स्मोऽमूढस्त्वमसि इति" मूढ-शब्दस्य रूपमाह तत्र पृ० साधुत्वम्।

**अमूर्त्त** त्रि० न०त०। मूर्त्तभिन्ने अवयवशून्ये अपरिच्छिन्नपरिमाणे "क्षितिर्जलं तथा तेजः पवनोमन एव च। परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी" भाषा० "मूर्त्तत्वमपरिच्छिन्नपरिमाणवत्त्वमिति" सि०मुक्ता० तद्धीने गगनादौ। "द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तमेव च" शत०ब्रा०।

**अमूर्त्तगुण** पु० ६त०। वैशेषिकोक्ते अमूर्त्ताकाशादेर्गुणविशेषे "धर्माधर्मौ भावना च शब्दोबुद्ध्यादयोऽपि च एतेऽमूर्त्तगुणाः सर्वे" भाषा०।

**अमूर्त्ति** त्रि० नास्ति मूर्त्तिरस्य। १अवयवशून्ये गगनादौ २विष्णौ पु० "अमूर्त्तिरनघोऽचिन्त्य" विष्णु स० "मूर्त्तिर्देहरूप धारणसमर्थं चराचरवपुस्तन्नास्ति यस्य" भा०।

**अमूर्त्तिमत्** त्रि० न०त०। १मूर्त्तिमद्भिन्ने गगनादौ २विष्णौ पु० "दीप्तमूर्त्तिरमूर्त्तिमान्" वि०स०।

**अमूल** त्रि० नास्ति मूलं यस्य। १ आदिकारणशून्ये "मूले मूलाभावादमूलम्" सा०सू०। "त्रयोगुणानां साम्यावस्थारूपमुपादानं प्रधानं अमूलं मूलशून्यं अनवस्थापत्त्या तत्र मूलान्तरासम्भवात्" प्र०भा०। "इयं वा इदं जीवन "मूलि चैवामूलञ्च तदुभयं देवानां यन्मनुष्या उपजीवन्ति यथाऽमूला ओषधयोमूलिन्य" शत० ब्रा०। मूलि च अमूलञ्चान्नाद्य प्रतिष्ठितम्" शत०ब्रा०। २ मूलद्रव्यादिरहिते तच्छून्ये त्रि० मूलाभावे। पा० अजादित्वात् टाप्। सा च ३ आर्मिर्णयसानाश्वे। कप्। अमूलकोऽप्युक्तार्थे मूलमन्वेषु—अहष्टे च "एतद्वचनममूलकम्" भूरिलोकप्रसिद्धिः।

**अमृक्त** त्रि० मृज–शोधनक्षरणयोः वेदे न पत्वम् न०त०। १अशोधिते अनिर्भिन्ने "अमृक्तेन रुशता वाससा" ऋ० ९,६९,५ लोके तु अमृष्टः। तत्रार्थे धातूनामनेकार्थत्वात् २अहिंसिते। "रथोराजा ऋभुक्षणो अमृक्तः" ऋ०७,२७,१। "अमृक्त अहिंसित" भा०।

**अमृणाल** न० सादृश्ये न०त०। मृणालसदृशे वीरणमूले।

**अमृत** त्रि० न मृतः। १मरणशून्ये जीविते "अमृते जारजः कुण्डः" अमरः "अपाम सोममृता अभूम" इति श्रुति मरणश्च "आभूतसंप्लवस्थानममृतत्वं हि भाष्यते इति" विष्णु पु० उक्तम् महाकल्पावस्थायित्व, देवानामपि तथैवामृतत्वम् "कार्य्यात्यये तदध्यक्षेण सहातः परमान्नायात्" शा०सू० कार्य्यब्रह्मणा सह सर्वेषां तथाभिधानात्। न मृत मरणं यस्मात्। २पीयूषे तत्सेवने हि अमृतत्वं भारतादौ प्रसिद्धम्। तच्च प्रथम पृथूपदिष्टै र्देवैरिन्द्रं वत्सं कृत्वा गोरूपधरायाः पृथ्व्या दुग्धम् पश्चाच्च दुर्वासःशापात् समुद्रमध्यं गतम् ततो देवासुरैः समुद्रे मथिते पुनरुत्पन्नमिति पौराणिकी कथानुसन्धेया "देवासुरैरमृतमम्बुनिधिर्ममन्थे" किरा० न वै देवा अश्नन्ति पिबन्ति एतदेवामृत दृष्ट्वा तृप्यन्ति" छा०उ०। "अमृतदीधितिरेष विदर्भजे। भजसि तापममुष्यकिमंशुभि। यदि भवन्ति मृता सखि। चन्द्रिका इति" नैषधम्। ३ जले तस्य प्राणहेतुत्वात् अमृतत्वम्। "अन्नमय हि सौम्य। मन आपोमय प्राणः" इत्युपक्रम्य षोडशकलः सौम्य। पुरुष पञ्चदशाहानि माशीः काममप पिबापोमय प्राणो न पिबतो विच्छेत्स्यते" छा०उ०। जलपानाभावे प्राणविच्छेदोक्ते तत्पाने च प्राणदत्त्वे जलस्य मरणाहेतुत्वम्। "अमृतोपस्तरणमसि स्वाहा" "अमृतापिधानमसि स्वाहेति" आपोशनमन्त्र। ४ घृते तस्य, "आयुर्वै घृत" मित्युक्तेरायुर्जनकत्वात् मरणाहेतुत्वात्तथात्वम्। "अमृत नाम यत् सन्तोमन्त्रजिह्वेषु जुह्वति। शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना" माघ। ५पारदे तस्य च रसायनादिना पाने "अभ्रकस्तव बीजन्तु मम बीजन्तु पारद अनयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनम्" इत्युक्ते बहुकालजीवनहेतुत्वात् तथात्वम् रसेश्वरदर्शने विवरणम्। ६यज्ञशिष्टे द्रव्ये "यज्ञशेषोऽमृतं स्मृत" मित्युक्तेस्तथात्वम्। ७ अयाचिते वस्तुनि "मृत स्याद्याचित भैक्ष्यममृत स्यादयाचितम्" मनूक्तेस्तस्य मरणरूपापमानहेतुयाचनशून्यत्वात् तथात्वम्। "ऋतामृताभ्यां जीवेत" मनु। ८दुग्धे तस्य देहधारकत्वेन मरणाहेतुत्वात् तथात्वम्। ९अन्ने "अन्नं हि जीवन" मित्युक्तेस्तथात्वम्। न म्रियते जीवते। १०स्वर्गे।

"अग्नौ सुवर्णमक्षीणमिति" श्रा० उक्तेस्तस्य वह्नौ बहुतापनेऽपि अक्षीणत्वात्तथात्वम् अतएव तस्य तैजसत्व "स्वर्णं तैजसमत्यन्तानलसन्तापेऽपि अनाश्यत्वादित्यनुमानेन" सि०मु०साधितम्। एतदभिप्रायेणैव "अमृतं वै हिरण्य-मित्युक्तम्" शत०ब्रा०। ११भक्षणीयद्रव्यमात्रे, तस्यास्वाद्यत्वात्तथा-त्वम् १२स्वादुद्रव्ये अमृततुल्यस्वादवत्त्वात्। १३ तद्गुणाधने द्रव्ये त्रि० "आदित्यो वै देवमधु" इत्यादि मधुविद्यायाम् 'ता एता-न्यमृतानामधून्यमृतानि" छा०उ०पञ्चकस्य पाठ। १४कृष्णे अमृत-वदाह्लादकत्वात् तथात्वम् १५ विषे १६ वत्सनाभे विषे तयो वैद्यकोक्तदिया योधने अमरत्वहेतुत्वात्तथा। अतएव "विषमप्यमृतं क्वचिद्भवेदिति" रघु १७मोक्षे "विद्यया-मृतमश्नुते" इति श्रुति अयमृत्युत्वात्तथा "अमृत-स्यैव सेतुरिति" श्रुतिः "स्थिये चामृताय च" अमरः। १८ अमृतलक्ष्मे आनन्दरत्वात्तथा। "अमृत वाग्भाषितमिति" हितो०। "आप्यायितोऽसौ वच-नामृतेन तत्कटः"। अमृतमस्त्यस्य स्वामित्वेन भक्षक-त्वेन वा अर्श०अच्। १९ धन्वन्तरौ स हि अमृतमय-कलसहस्ते अमृत बिभ्रदुत्थित इति पुराणे प्रसिद्धम्। २० देवे तद्भक्षत्वेन तथात्वम्। देवानामामृतदर्शनेनैव तृप्त-त्वम् "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्य-न्तीति" छा०उ०उक्तेः "स्येनामृतं मर्त्यं च" य०११,४० अमृतं देवादिकमिति" वे०दी०। न म्रियते म कर्त्तरि क्त। २१वाराहीकन्दे तस्य बहुच्छेदनेऽपि पुनः प्ररूढत्वात्तथा २२ वनमुद्गे च तस्य ओषधितया फलपाकान्तत्वेऽपि चिर महत्त्वात्तथात्वम्। २३ गुडूच्याम्। २४ इन्द्रवारुण्यां २५ ज्योतिष्मत्याम् २६ गोरक्षदुग्धायाम् २७ अतिविषायां २८ रक्तत्रिवृति २९ दूर्वायाम् ३०आमलक्यां ३१ हरी-तक्यां ३२ तुलस्यां ३३ पिप्पल्यां ३४ स्थूलमांस-हरीतक्यां च स्त्री। एतासां यथायथ रोगनिवारकत्वेन तथात्वम्। अमृतेन सहोत्पन्नत्वात् अमृततुल्यास्वाद-त्वाच्च ३५ सुरायां स्त्री। ३६सूर्य्यरश्मिभेदे स्त्री "तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने। शतत्रय हिमोत्सर्गे तावद्धर्मस्य सर्जने। आनन्दाश्च हि मेध्याश्च भूतनाः पूतना इति। शत शतं ह्रादिन्याः वर्ण्याख्या अमृता स्त्रियः" वह्नि० यादवः। तासाममृतस्य जलस्य दायित्वात्तथा। 'सौरीभिरिव नाडीभिरमृताख्याभिर-म्मयः' रघुः। ३७अश्वगन्धे विष्णौ पु० "अमृतः शाश्वतः आयुः" वि०स०। नास्ति मृतं मरणं यस्मात्। ३८ अजरामरत्वप्रदे त्रि०। "इन्द्रियवान्मदिन्तमः सोमोऽमृतमधु" यजु० १९,७२,७३,७४,७५। "अमृतमजरा मृत्युप्रदत्वात् आनन्दकरम् अमृततुल्यम् वे०दी० "मन्दा भौमार्कयोर्भद्रा शुक्रेज्योश्च जया बुधे। सिद्धयोगा गुरौ रिक्ता पूर्णा मन्देऽमृताह्वया। "आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः' जया च आह गुरौ रिक्ता पूर्णाख्ये चामृता शुभेति" इति ज्योतिषोक्ते ३९ तिथिवार-योगरूपे योगभेदे "भृगुसुतकरमूलं पौष्णमान्यं च वारे हरिगुरुगविभिसुक्ते मलुणीभाद्रयुग्मे। दिवसकरहरक्षौ मैत्ररोहिण्यवारे। गुरुदुगमनयातोपास्वमीन्नाण्णि सौरे। दहनविधियताश्चामैत्रभ भौमवारे। अदितिभद्वयामैत्रभं सोमवारे। भगद्युगमधुनमोविष्णुमैत्रे विवारे। शतकमलयोगी सौरिवारेऽमृतानि" राज मा० उक्ते आदित्यहस्ता गुरुपुष्ययुक्ता बुधानुराधा शनिरोहिणी च। सोमे च विष्णु भृगुरेवती च मुक्तादिनी चामृतयोगसंज्ञाः। उक्ते च ४० वारनक्षत्रयोगजे योगभेदे "यदि सिद्धियती-पातौ दिनवाम्यमेवं भवेत्। उच्यतेऽमृतयोगेन भास्क-रेण तमो यथा" ज्योति०। ४१मङ्गलि न०।

अमृतगति स्त्री यदि दयमं गुरु विहितं विनिवनित रुच विहितम्। अमृतगतिः कथिता दुर्लभिका नय। कथिता" इत्युक्तलक्षण छन्दोभेदे।

अमृतगर्भ पु० अमृतं ब्रह्म गर्भेऽभ्यन्तरे यस्य। १ जीवे तस्य ब्रह्मात्मकत्वात् ब्रह्मणा चान्तर्यामितया तदन्तःस्थितत्वात् तथात्वम्। "यो न जीवोऽपि न क्षतो देवानाममृतगर्भोऽपि सन्न" अथ० ६,४६,१ "अथायम् जीव तदा अमृतो भवतीति" श्रुतेः मुमुक्षुत्वावस्थायां ब्रह्मज्ञानतोऽभावेन तद्रूपत्वया जीवस्य ब्रह्मरूपापत्त्या तथात्वम् अर्थिकं हृदयम् अमृतस्य मोक्षस्य गर्भ आधारः। २ब्रह्मणि

अमृतजटा स्त्री अमृतमिव स्वादु जटा यस्याः। जटामांस्याम्

अमृतत्व न० अमृतस्यामरणस्य भाव त्व। १मोक्षे। "नान्यैवे अमृतत्वमाशास्ति" श्रुति "कश्चिद्धीर प्रत्यगात्मानमैक्षदा-वृत्तचक्षुरमृतत्वमिच्छन्" क०उ०। "अमृतत्वममरत्वमित्यनम्" भा० "अहिंसया च भूतानाममृतत्वाय कल्पते" इति मनुः "आभूतसंप्लवस्थानममृतत्वं हि भाष्यते" इति विष्णु०पु० उक्ते २कल्पस्थायित्वे च।

अमृततरङ्गिणी स्त्री अमृतस्य सुधायाः तरङ्ग यस्याः तरङ्गिणी नदीव। ज्योत्स्नायाम् राज०नि०।

अमृततिलका स्त्री अमृतममोघरचिता ब्रह्मनिरामित-

कुरा। षड्लघुद्वीर्घयुगलका भवति सखेऽमृततिलका प्रयुता- लक्षणे दशाक्षरपादके वर्णवृत्तभेदे "त्वरितगतिश्च नजन- गैरित्युक्तत्वरितगतिलक्षणाक्रान्तत्वात् तस्या एव नामान्तरम्।

**अमृतदीधिति** पु० अमृतमिवाप्यायिका दीधितिरस्य। चन्द्रे "अमृतदीधितिरेष विदर्भजे भजसि तापमसुष्य" नै०।

**अमृतद्युति** पु० अमृतमिवाप्यायिका द्युतिरस्य। चन्द्रे।

**अमृतधारा** स्त्री अमृतस्य धारा सन्ततिः। अमृतसन्ततौ। "चरमचरणद्वयमक्षरितिरुद्युग्मम्। अखिलमपरमुपरि- गतमिति कलितपदयुक्ता तदियममृतधारा" वृ० र० उक्ते- १षट्चत्वारिंशदक्षरपादके २छन्दोभेदे। उपरिगतम् "सुषमादोऽष्ट- भिर्वर्यौ परेऽस्मान्मकरालयैः क्रमाहृता" इत्याद्युक्तलक्षणम् दैत०। २सुधासन्ततौ च। [उपनिषच्छब्दे विवरणम्।

**अमृतनाद** पु० उपनिषद्भेदे सा च कृष्णयजुर्वेदान्तर्गता

**अमृतनालिका** स्त्री अमृतस्य स्वादुरसस्य नालीव। कर्पूर- नालिकाभेदे पक्वान्नभेदे पद्म०र०।

**अमृतप** पु० अमृतं पाति रक्षति असुरेभ्यः पा–रक्षणे क। १विष्णौ सहि अमृतमन्थनसमये असुरैर्ह्रियमाणममृतं मोहिनीरूपं विधाय तान् वञ्चयित्वा देवेभ्योऽदाग्तात् तत् पालक इति भागवती कथा। "सोमपोऽमृतपः सोमः" इति विष्णुस०। अमृतं पिबति पा पाने क। २देवे तद्दर्शनेन तत्पानात्तत्पायित्वम् अमृतशब्दे दृश्यम्। ३ अमृततुल्यम- द्यादिपातरि त्रि०। "भुवममृतपनामयाच्छयासावधरमधु मधुपस्तवाजिहीते" माघः।

**अमृतपक्ष** पु० अमृतस्य हिरण्यस्य पक्ष इवाकारित्वात्। १वज्रे "अन्नौ सुवर्णमक्षीयम्," या० उक्ते सर्वदाहक- स्यापि वज्रे न सुवर्णनाशकत्वमित्यतस्तस्य स्वर्णपक्षत्वम्। "तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी" इति शत०ब्रा० अमृतं स्वर्गमिव पीतौ पक्षावस्य। २सुवर्णपक्षे श्येनभेदे "हिरण्यपक्ष ~ शकुनोभुरण्युममृतं वै हिरण्यममृतपक्ष शकुन" शत०ब्रा०।

**अमृतफल** न० अमृतमिव स्वादु फलम्। (नासपातीति) १ जवनप्रसिद्धे वृक्षफले "अमृतफलं लघु हृद्यं सुस्वादु त्री- न्गुरुदोषान्। देषेषु शक्रलाना बहुलं तल्लभ्यते लोके" भा०प्र०। दै०व०। २ आमलक्याम् ३ द्राक्षायाश्च स्त्री ४पटोले ५पारावतवृक्षे च पु०।

**अमृतबन्धु** पु० अमृतस्य बन्धुः एकस्मान्नोत्पत्तिकत्वात् सहो- दरः। १ चन्द्रे तस्य अमृतमन्थनसमये समुद्रात् उत्पन्नत्वात् तथात्वम्। "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात्

अमृतात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः" इति भा०आ० प०। अमृतस्य बन्धुरिव आह्लादकत्वात्। २ देवमात्रे "तं देवा अन्वजानन् भद्रा अमृतबन्धवः" ऋ० १०,७२,५,।

**अमृतभल्लातकी** स्त्री "सुपक्वभल्लातफलानि सम्यक् द्विधा विदा- र्याढकसम्मितानि। विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषेण व्य- पनीय तेन॥ पुनः पचेत् क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात्। सितोपला षोडशभिः पलैस्तु विमिश्र्य सं- स्थाप्य दिनानि सप्त॥ ततः प्रयोज्याग्निबलेन मात्रा ज- येद्गुदोत्थानखिलान् विकारान्। कचान् सुनीलान् घन- कुञ्चिताग्रान् सुवर्णदृष्टिं सुकुमारताञ्च॥ जवं हयानाञ्च मतङ्गजं बलं, स्वरं मयूरस्य हुताशदीप्तिम्। स्त्रीषु प्रभुत्वं लभते प्रजाश्च नीरोगमब्दद्विशतानि चायुः॥ न चात्र पाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च। प्रयोगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम्॥ भल्लातकी शुद्धिरिह प्रागिष्टा चूर्णगुरुत्वनात्। घृतात्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते" चक्रदत्तोक्ते घृतभेदे।

**अमृतभुज्** पु० अमृतं भुङ्क्ते दृष्ट्वा भोगतुल्यं तृप्तिमश्नुते भुज- क्विप् दैत०। देवे "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति" छा०उ० उक्तेः दर्शनमात्रेण भोजनतृप्ति- मत्त्वात्तथात्वम्। अमृतम् अयाचितं यज्ञशिष्टं वा भुङ्क्ते। २ यज्ञशिष्टान्नभोक्तरि ३ अयाचितान्नभोक्तरि च त्रि०।

**अमृतयोग** पु० अमृताख्योयोगः। ज्योतिषोक्ते। तिथि- वारादियोगभेदे स चामृतशब्दे उक्तः।

**अमृतरस** पु० अमृतं रस इव आस्वाद्यम्। १ अमृतरूपे आस्वाद्ये "विज्ञानेन विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः" कुमा०। अमृतस्य रस सारः। २सुधारसे "सिक्ता इवामृ- तरसेन मुहुर्जनानाम्" माघ। अमृतं मोक्ष रस इव यस्य। ३ परमात्मनि "स एष सैन्धवघनोऽमृतरस इति" श्रुतिः अमृतस्येव रस आस्वादोऽस्याः। ४ कपिलद्राक्षायां (अन्नरसा) प्रसिद्धे ५ पक्वान्नभेदे च स्त्री। सा च "तृतीयभागसक्तुकेन मिश्रितं शर्करापिष्टकम्। गुडमधुसर्पिषा युतं मर्दयेद्दण्डपाणिना। एवं मर्दितं कृत्वा स्थापयेद्र- जनीमितम्। ततोऽस्य विमलकांसे तु विलितं निम्नमानसैः विधाय पूपकं तेन तप्तिकायां घृते पचेत्। ततोऽमृतरसा जाता वातसुश्रुतमर्द्दनी" इति भा०प्र० उक्ता।

**अमृतलता** स्त्री अमृतालता। १ गुडूच्याम्" (अमरलता) इति २ ख्यातायां लतायाञ्च।

**अमृतवपुस्** अमृतेनाप्यायितं वपुरस्य। १ चन्द्रे स हि कृष्ण-

पक्षे वह्न्यादिभि कलानामेकैकश भक्षणेऽपि पुन यथाक्रिष्टरूपामृतेनाप्याय्यते । यथोक्तं कालमाधवीये सोमोत्पत्तिवाक्येन "प्रथमां पिबते वह्निर्द्वितीयां पिबते रवि । विश्वे देवास्तृतीयान्तु चतुर्थीं सलिलाधिप । पञ्चमीं तु वषट्कार षष्ठीं पिबति वासव । सप्तमीमृषयो दिव्या अष्टमीमजएकपात् । नवमीं कृष्णपक्षस्य यम प्राश्नाति वै कलाम । दशमीं पिबते वायु पिबत्येकादशीमुमा । द्वादशीं पितर सर्वे सम प्राश्नन्ति भागश । त्रयोदशीं धनाध्यक्ष कुबेर पिबते कलाम् । चतुर्दशीं पशुपति पञ्चदशीं प्रजापति । निष्पीतश्च कलाशेषश्चन्द्रमा न प्रकाशते । कला चैषोडशीकाख्या या तु सा लयो विशते तदा । अमायां तु सदा सोम ओषधी प्रतिपद्यते । तमोषधिगत गाव पिबन्त्यम्बुगतञ्च यत् । तत्क्षीरममृत भूत्वा मन्त्रपूत द्विजातिभि । हुतमग्निषु यज्ञेषु पुनराप्यायते शशी । दिने दिने कलावृद्धि पौर्णमास्यां तु पूर्णता" इति । यद्यपि ज्योतिषे कृष्णपक्षे सूर्यमण्डले प्रवेश एव उक्तस्तथापि तत्तद्दिवसे चन्द्रकलाभक्षणवत् वह्न्यादीना तृप्तिरित्येतत्परत्वसोमोत्पत्तिवाक्यस्य देवानाम् अस्मदादीनामिव भोजनस्यासिद्धे तृप्तिमात्राधायकत्वेन तद्भोग्यत्वम् "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा० उ० उक्तेरवगम्यते इत्यविरोध । अनश्वरत्वरूपे विष्णौ "अमृतांशोऽमृतवपु" विष्णुस० ।

**अमृतवल्ली** स्त्री अमृता वल्ली । गुडूच्याम् (गुलञ्च) ।

**अमृतवाक्** त्रि० अमृतमिव वाक् वचन यस्य । १ अमृततुल्यवचने "अमृतवाका वयसां वा क्षिप्रश्येनं जनयति" मन० भा०

**अमृतसम्भवा** स्त्री अमृतेन सम्भवति सम् भू+अच् । गुडूच्याम् (गुलञ्च) ।

**अमृतसयाव** न० अमृतमिव स्वादु संयावम् । पक्वान्नभेदे । "पचेत् घृतोत्तमे तप्ते न्यसेत् पक्वं नवे घटे । ततो मरिचचूर्णेन सशर्करचूर्णावचूर्णितम् । कुर्यात् कर्पूरसंयुक्तं संयावममृतोपमम् । संयावममृतस्वादु पित्तघ्न मधुर स्मृतमिति भा० प्र० ।

**अमृतसार** पु० अमृतस्य दुग्धस्य सार । ष० त० । चक्रदत्तोक्ते घृत पाकभेदे यथा 'क्षीरस्य पाकमधुना नागार्जुनमिष्टमभिदध्म ॥ क्षीरादर्कुटतान्मलकटाहे तदमृतमवे प्रणम्य पिबम् । तदग पचेत्पवनः काष्ठेननेन वह्निना मृदुना ॥ निक्षिप्य त्रिफलाजलमदित यस्तत् घृतञ्च दुग्धञ्च । सघास्य सौक्ष्म्यता दर्व्या सम्म यत्नतार्थ । मृदुमध्यखरभावै पाकस्त्रिविधोऽत्र कथ्यते पुसाम् । स्तिमितमीरवरे समतलीनां मध्यमस्य सम ॥ अम्यक्त्वदर्वीलेहं सुखद खरलवमयोगि मृदु मध्यम् । उज्झितदर्वि खर परिभाषन्ते केचिदाचार्या ॥ अन्ये चिक्कणदर्व्याम्प्रलेपमाखुकराकृति ब्रुवते । मृदुमध्यमकेचूर्ण सिकतापुञ्जोपमन्तु खरम् ॥ त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफल । प्रकृतिविशेषे स्वल्पौ गुणदोषौ अमयतीत्यल्पम् ॥ विधाय पाकमेव घ्राणगताय्ये क्षितौ क्षणान् क्षिपत । विश्राम्य तत्र कोष्णे त्रिफलाद्वे प्रक्षिपेच्चूर्णम् ॥ यदि कर्पूरप्राप्तिर्भवति ततो विगलिते यदुष्णत्वे । चूर्णीकृतमनुरूपं क्षिपेत् वा न यदि तल्लाभ ॥ पक्व तदग्नसार सुचिरघृतस्निग्धभाजनविन्यस्ते । गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् । यदि तु परिस्रुतिरेतौघृतमीषेताधिक ततोऽप्यधिकम् । भाण्डे निधाय रक्षेत्प्राग्युपयोगो क्रमेन महान् ॥ अवनि विवरीभूते ह्यज्जलितघृतेन सस्थाप्य । एततो गुणोत्तरमित्यसमा स्नेहनीय तत् ॥ अनलकफप्रकृतेर्भगपवनशोऽसमैव यंवन्ति । केवलमपीदमपित जनयत्यवशो गुणान् विहित ॥ अमृतसार" चक्र० द० ।

**अमृतसारज** पु० अमृतादिव स्वादो सारात् जायते जन–ड ५त० । गुडे रा० नि० ।

**अमृतसू** अमृतं दीधितिरूपमाश्रयन सूते सू–क्विप् । चन्द्रे । अमृतान् देवान् सूते । देवमातरि स्त्री ।

**अमृतसोदर** अमृतस्य सोदर एकत उत्पन्नत्वात् । उच्चैःश्रवसि अश्वे । तस्यामृतमथने समुद्रादुत्पन्नत्वात् तथात्वम् । "सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा" भा० आ० प० । तज्जातीयत्वात् घोटकमात्रे राजनि० ।

**अमृतस्रवा** स्त्री० अमृतमिव स्रवति स्रु–पचाद्यच् । १ रुदन्तीलतायाम् । भावे अप् ६त० । २ अमृतनिस्यन्दे पु० ।

**अमृतांशु** पु० अमृतमिवाप्यायक अंशु रस्य । चन्द्रे ।

**अमृतांशूद्भव** पु० अमृतांशोश्चन्द्रस्योद्भवो यस्मात् । विष्णौ "अमृतांशूद्भवो भानु" विष्णुस० । ५त० चन्द्रोद्भवे त्रि० ।

**अमृतान्धस्** पु० अमृतमन्धोऽन्नमिव दर्शनात् तृप्तिकरमस्य । अमृतायने देवे तेषाममृतायनस्य दर्शनमात्रेण 'न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" श्रुते । तेषां तत्पानकथा "ततस्तदमृत देवो विष्णुरादाय वीर्यवान् । जहार दानवेन्द्रेभ्यो नरेण सहित प्रभु । ततो देवगणा सर्वे पपुस्तदमृत तदा" भा० आ० प० ।

**अमृताफल** न० अमृतावा फलम् । पटोले राजनि० ।

**अमृतायमान** त्रि० अमृतमिवाचरति अमृत+क्यङ् शानच् ।

अमृतत्वम्‌ "उत्तिष्ठ वत्से ननु सामृतायमानम्‌ वचो निशम्येति" रघुः ।

**अमृताश** पु० अमृतममरत्वं यथाभावमश्नुते अश—व्याप्तौ अण्‌ । विष्णौ "१अमृताशोऽमृतवपुः" विष्णुस० अमृतं सुधामश्नाति अश-भोजने अण्‌ । २देवे । [अ शब्दे विवरणम्‌

**अमृताशन** पु० अमृतमश्नाति अश-भोजने ल्यु । देवे अमृता

**अमृताश्म** त्रि० न म्रियते मृ—तन्‌ न०त० औत नित्य कर्म्म० टच्‌ समा०। प्रस्तरभेदे ओषधिप्रस्तरस्तरभेदे ।

**अमृताष्टक** पु० अमृताप्रभृतीनामष्टकं यत्र । गुडूचीन्द्रयवारिष्टपटोलं कटुका तथा नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्‌ "अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः" चक्रदत्तोक्ते कषायभेदे ।

**अमृतासङ्ग** न० अमृतस्य विषस्येवासङ्गो यत्र । नीलवर्णे तुत्थभेदे हेम० तस्य विषतुल्यनीलवर्णत्वात्‌ तथात्वम्‌ ।

**अमृतासु** त्रि० अमृता अनश्वरा असवो यस्य । अनश्वरप्राये बहुकालजीविनि । "आवभूवामृतासुर्वर्धमान सुजन्मा" "उतामृतासुर्व्रतएमि" इति च अथ० ५,१,१,७ ।

**अमृताहरण** पु० अमृतमाहरति मातृदासत्वनिवारणार्थं स्वर्गात्‌ भूलोकं नयति आ+हृ-ल्युट्‌ । गरुड़े तत्कथा भा० आदि प० ३२ अ० । "तान्‌ कृत्वा पतगश्रेष्ठः सर्व्वांस्तत्क्रान्तजीवितान्‌ । अतिक्रान्तोऽमृतस्यार्थे सर्व्वतोऽग्निमपश्यत ॥ आवृण्वानं महाज्वालमर्च्चिर्भिः सर्व्वतोऽम्बरे । दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितम्‌ ॥ ततो नवत्या नवतीर्मुखानां कृत्वा महात्मा गरुड़स्तरस्वी । नदीः समापीय मुखैस्ततस्तैः सुशीघ्रमागम्य पुनर्ज्जवेन ॥ ज्वलन्तमग्निं तममित्रतापन समास्तरत्‌ पत्ररथो नदीभिः । ततः प्रचक्रे वपुरन्यदल्पं प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ जाम्बूनदमयो भूत्वा मरीचिनिकरोज्ज्वलः । प्रविवेश बलात्‌ पक्षी वारिवेग इवार्णवम्‌ ॥ स चक्रं क्षुरपर्य्यन्तमपश्यदमृतान्तिके । परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम्‌ ॥ ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम्‌ । घोररूपं तमत्यर्थं यन्त्रं देवैः सुनिर्म्मितम्‌ ॥ तस्यान्तरं स दृष्ट्वैव पर्य्यवर्त्तत खेचरः । अरान्तरेणाभ्यपतत्‌ सङ्क्षिप्याङ्गं क्षणेन ह ॥ अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती । विद्युज्जिह्वौ महावीर्य्यौ दीप्तास्यौ दीप्तलोचनौ ॥ चक्षुर्विषौ महाघोरौ नित्यं क्रुद्धौ तरस्विनौ । रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ ॥ सदा संरब्धनयनौ सदा चानिमिषेक्षणौ । तयोरेकोऽपि यं पश्येत्‌ स तूर्णं भस्मसाद्भवेत्‌ ॥ तयोश्चक्षूंषि रजसा सुपर्णः सहसाऽऽवृणोत्‌ । ताभ्यामदृष्टरूपोऽसौ सर्व्वतः समताडयत्‌ ॥ तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरीक्षग । अच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ समुत्पाट्यामृतं तत्र वैनतेयस्ततो बली । उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्य्यवान्‌ ॥ अपीत्वैवामृतं पक्षी परिगृह्याशु निःसृतः । अगच्छदपरिश्रान्त आवार्य्यार्कप्रभां खगः" ॥ टष्‌ । अमृताहर्त्ता तत्रैव । 'काश्यपेयोऽमृताहर्त्ता' ध्वजपूजामन्त्र ।

**अमृताह्व** न० अमृतमाह्वयते स्पर्द्धते तुल्यस्वादफलेन आ+ह्वे—क (आराकानदेश) जाते लघुशिम्बाकृतौ (नासपाति) नामके रुचिफले वृक्षे । अमृतफलशब्दे विवरणम्‌ ।

**अमृतेशय** पु० अमृते जले शेते शी—अच्‌ अलुक्‌ स० । विष्णौ तस्य प्रलये जलशायित्वात्‌ तथात्वम्‌ ।

**अमृतोत्पन्न** न० अमृत विषमिव उत्पन्नम्‌ नीलवर्णत्वात्‌ । खर्परीतुत्थे राजनि० । [५त० । मक्षिकाया राजनि० ।

**अमृतोत्पन्ना** स्त्री अमृतमिव स्वादु मधु उत्पन्नं यस्या

**अमृतोद्भव** न० अमृतं विषमिव नीलवर्णतया उद्भवति उद्+भू—अच्‌ । खर्परीतुत्थे (तुते) तुत्थभेदे । अमृत मृत्युञ्जयं शिवमुद्भवते प्राप्नोति स्वसाध्यार्चनावत्त्वात्‌ । बिल्ववृक्षे । 'अमृतोद्भव श्रीवृक्ष' महेशस्य सदा प्रिय" तद्दानमन्त्र ।

**अमृत्यु** पु० अभावे न०। १ मृत्युविगमे । नास्ति मृत्युर्यस्मात्‌ । २मृत्युहेतुभिन्ने त्रि०। "स्नानवे अयोऽमृत्यु ध्रुवत" ऋ०६,४८,१२ "अमृत्यु अमरणहेतु अयोऽन्नम्" भा०। मृत्युर्विनाशो नास्त्यस्य । ३ विनाशशून्ये विष्णौ "अमृत्यु सर्व्वदृक्‌ सिंह" विष्णुसहस्रनाम ।

**अमृध्र** त्रि० मृध उन्दने बा० रक्‌ न०त०। केनाप्यहिंस्ये । 'पृथुं मिहोमयातममृध्रम्‌' ऋ० १,३७,११, 'अमृध्रं केनाप्यहिंस्यम्‌' भा० । [सातिस्त्वेव पुरुषोऽनृषा' शत०ब्रा० ।

**अमृषा** अव्य० न०त०। मिथ्याभिन्ने सत्ये । "यथा रथो मम

**अमेधस्‌** त्रि०नास्ति मेधा धारणावती बुद्धिर्यस्य असिच्‌ समा०। ग्रन्थमात्रेण विप्रकीर्णश्रुतिधारणासामर्थ्यबुद्धिमति मूर्खे ।

**अमेध्य** त्रि० न मेध्यम्‌ पवित्रम्‌ विरोधे न०त० । अपवित्रे । "अमेध्यादपि काञ्चनम्‌" "नामेध्यं प्रक्षिपेदग्नौ" इति "अमेध्यमधमामि च" इति च मनुः । २ पुरीषे न०।

**अमेनि** त्रि० मि—नि—न०त०। परिच्छेदाभावे । 'मेन्या मेनिरसमेमयस्ते सन्तु मेऽस्मानभ्यघायन्ति' अथ०५,६,९ ।

**अमेय** त्रि०न मेय । १ परिच्छेत्तुमशक्ये २ ज्ञातुमशक्ये च "अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः" रघुः ३ "इयत्कपरिमेयात्मा" विष्णुस० ।

**अमोघ** त्रि० मोघो निष्फलः न०त०। १ सफले, २ अव्यर्थे च ।

"अमोघास्तु पतन्त्येते धर्मपोतेन सन्तर" भा० शा०प०। 'यदमोघमपामन्तरुप्तं बीजमज! त्वया' कुमा० "धनुष्यमोघं समधत्त सायकम्" "अमोघाः प्रतिगृह्णन्तावर्घानुपदमाशिषः" इति च रघुः। ३मदभेदे पु०। ४पटोललतायां, हरितक्यां ५विडङ्गे च स्त्री। ६विष्णौ पु० "अमोघः पुण्डरीकाक्ष" विष्णु स० "सत्यकाम सत्यसङ्कल्प" इति श्रुते अवितथसङ्कल्पत्वात्तस्य तथात्वम्।

**अमोत** न० अमा सह ऊतम् वे-क्त। अच्छिन्नदशवस्त्रयुग्मे 'अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम्' आश्व०९ ५,१४

**अम्ब** गतौ भ्वादि० पर०सक० सेट्। अम्बति आम्बीत् आनम्ब अम्बा अम्बालिका अम्बिका अयमिदित् शब्दे इत्येके।

**अम्बक** न० अम्बति शीघ्रं नक्षत्रस्थानपर्यन्तं गच्छति अम्ब-ण्वुल्। १नेत्रे। अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क। २ पितरि।

**अम्बर** न० अवि-शब्दे घञ् अम्ब शब्दस्तं राति धत्ते रा-क ६त०। १शब्दाश्रये आकाशे २मर्मरशब्दयुते वस्त्रे, स्वनाम ख्याते ३गन्धद्रव्ये ४अभ्रकधातौ च। "अकुप्याकरायाङ्गुल्या तावतर्जयताम्बरे" इति रघु "पीतदुकूलवल्कलधवलाम्बर" इति काद० "आकाशगाम्यं दधुरम्बराणि" माघ० "संयिब्युरम्बरविकाशि चमूसमुत्थम्" माघ। २अन्तिके निरु०।

**अम्ब(रि)रीष** पु०न० अम्ब्यते पच्यतेऽत्र अम्ब-अरिष नि० वा दीर्घः। (भाजनाखोला) इति ख्याते भर्जनपात्रे। आम्बरीषमपि। "वैश्यकुलाम्बरीषमहानसाद्वा" कात्या० ४,७,१६, । "अग्निमाहृत्य गार्हपत्यागारे निर्मथ्याभ्यादधीतेति शेषः वैश्यकुलाच्च लौकिकोऽग्निर्हुतोच्छिष्टो वा आहृत्य न तु परिगृहीत आवसथ्यादिः। अथवा अम्बरीषात् भ्राष्ट्रात् कन्दुकटहात् महानसाद्वेति कर्क०। दीर्घमुक्तस्य २ विष्णौ, ३ शिवे, ४ भास्करे ५बालके ६आम्रातकवृक्षे, ७ नरकभेदे, ८ अनुतापे। ९ सूर्यवंश्यनृपभेदे पु० स च। "भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः। नाभागस्तु श्रुतस्यासीत् पुत्रः परमधार्मिकः। अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्" इति हरिवंशोक्तः सूर्यवंश्यभगीरथपौत्रः "अम्बरीष! शुकप्रोक्तं नित्यं भागवतं शृणु। पद्म० उ०। 'भगवान् अम्बरीषश्च ब्राह्मण्यामभितोऽजसे' भा० आनु०प०। "पुण्यश्लोकोऽम्बरीषश्च पुण्यश्लोको युधिष्ठिर" इति प्रातःस्मरणीयेषु पुरा०।

**अम्बरौकस्** पु० अम्बरमोको यस्य। देवेषु तेषां मेरुस्थितत्वेऽपि मेरो सर्वत उच्चत्वादत्रत्याद्यपेक्षयाम्बरवासित्वम्। तेन आकाशस्य धारणाक्षमत्वेऽपि न क्षतिः। "विलिख्यते मौलिभिरम्बरौकसाम्" कुमा०।

**अम्बर** आभरणे कण्ड्वा०। अम्बर्यति।

**अम्बष्ठ** पु० अम्बाय चिकित्सकशब्दाय तदभ्यासार्थं तिष्ठतेऽभिमैति स्था-क षत्वम्। चिकित्सके "विप्रात् वैश्यकन्यायां जाते १सङ्कीर्णवर्णे, "ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते" मनु "सजातिजानन्तरजाः षट्सुता द्विजधर्मिणः" इति मनूक्ते "द्विजातीनां सजातीयासु जाता तथानुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः, क्षत्रियेण वैश्यायामिति षट् सुता द्विजधर्माण उपनेया तानन्तरजनाम्न इति यदुक्तं तत् तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कस्यचिद्भ्रमः स्यात् अत एवा द्विजातिसंस्कारार्थवचनमिति" कुल्लू० उक्तेष अम्बष्ठादीनामुपनयनसंस्कारसत्त्वेऽपि इदानीन्तनानां संस्कारलोपेन शूद्रत्वम् अतएव इदानीं क्षत्रियादीनां शूद्रत्वमेवमम्बष्ठादीनामपि" इति रघु० ये तु व्रात्यदोषप्रायश्चित्तमाचरन्ति तेषामुपनयनयोग्यता भवत्येव "येषां पितादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम्" यस्य पिता पितामहावनुपनीतौ स्यातान्तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्यं यस्य प्रपितामहादीनां नानुस्मर्य्यते उपनयनन्तस्य द्वादशवार्षिकं त्रैविद्यकं ब्रह्मचर्यमिति" मिता० उक्तेः। "सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्" मनूक्ता तेषां वृत्तिः। २देशभेदे, ३हस्तिपके च। ४यूथिकायां स्त्री। स्वार्थे कनि ह्रस्वे अत इत्वे। अम्बष्ठिकाप्यत्रैव (आमनच्छाटीति) प्रसिद्धायां ५ब्राह्मीलतायाञ्च।

**अम्बष्ठकी** स्त्री अम्बष्ठं कायति आदानार्थमाह्वयति कै-क गौरा० ङीष्। १ (पटाण्ड) इति ख्यातायां लतायां पाठायाम्।

**अम्बष्ठा** स्त्री अम्ब्यते शब्द्यते अम्बा तादृशी सती तिष्ठति स्था-क अम्बा० षत्वम्। (अम्बाड़ा) इति ख्यातायाम् पठाख्यायाम् (पटाकु) इति हिमगिरिप्रसिद्धायां १पाठायाम्। २आम्रेय्याम्। ३यूथिकायाञ्च। संज्ञायां कन् अत इत्वे। अम्बष्ठिका। (आमन् छाटी) ४ब्राह्मीलतायाम्।

**अम्बा** स्त्री अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्मणि घञ्। १मातरि, लोके सम्बोधने तदर्थे ह्रस्वः। "कृताञ्जलिस्तत्र यदम्ब! सत्यात्" रघु। वेदे तु "अम्बेऽम्बालेऽम्बिके पूर्वेति" पा० निर्देशात् न ह्रस्वः। "अम्बे! अम्बिके

अम्बालिके ! न मानयति कश्चन" य० २३,१८ । माध्योक्ता-वपि तत्रैव, २ अम्बष्ठलतायां, ३ काशीराजकन्यायाञ्च । "अथाश्रौषं महाबाहो तिस्रः कन्याः स्वयंवरा । रूपेणाप्रतिमा लोके काशीराजसुतास्तदा । अम्बा चैवाम्बिका चैव तथैवाम्बालिकापि । राजानश्च समाहूताः पृथिव्यां भरतर्षभ । । "अम्बा ज्येष्ठाभवत्तासा-मम्बिका त्वथ मध्यमा । अम्बालिका च राजेन्द्र ! राजकन्या कनीयसी इत्युपक्रम्य । अम्बाया उपा-ख्यानं विस्तरेण वर्णितम् भा० उ०प० अम्बोपाख्याने । "मया सौभपतिः पूर्वं मनसा हि वृतः पतिः" इत्यम्बि वाक्ये "अनुजस्य तदा ज्येष्ठामम्बां काशीपतेः सुताम् । अम्बिकाम्बालिके भार्ये प्रादात् प्रीत्या यवीयसे । भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा" भा०आ०प० ।

अम्बाला स्त्री अम्बेति शब्दं लाति ला—क । मातरि ।

अम्बालिका स्त्री अम्बालैव स्वार्थे के ह्रस्वे अत इत्त्वम् । मातरि, १पाण्डुराजमातरि काशीराजकन्यायां विचित्रवीर्यस्य भार्यायाम् ।

अम्बिका स्त्री अम्बैव कन् । १मातरि २दुर्गायाम् "व्यापी-भिरेधयामास पुरः । पाकाभिरम्बिकाम्" कुमा० । काशी-राजस्य मध्यमकन्यायां विचित्रवीर्यस्य भार्यायां धृत-राष्ट्रस्य ३मातरि ।

अम्बिकापति पु० ६त० । शिवे । [ १गणेशे २धृतराष्ट्रे च ।

अ(आ)म्बिकेय पु० अम्बिकाया अपत्यम् ढ (ढक्) वा ।

अम्बु न० अबि शब्दे—उण् । १अम्बावधिके चतुर्थस्थाने २(बाला) इति ख्यातायामोषधौ ३ जले "गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः" का०प्र० । "धातेनराम्बु-कूटा" का०प्र० "विप्रापाय विहङ्गानामालवालाम्बु-पायिनाम् । "तौ सरांसि रसवद्भिरम्बुभि" इति च रघु । "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम्" मनुः । तच्च जलम् रसतन्मात्रादुत्पन्नो भूतविशेष इति सांख्याः पञ्चीकृतेभ्य एव पञ्चभ्यो भूतेभ्यः स्थूलतया उत्पन्नमिति वेदान्तिनः जलभूतांशबाहुल्यात् जलत्वव्यवहारः "वैशेष्यात्तद्वाद" शा०सूत्रात् । तस्य च रूपरसस्पर्शवत्त्वा विशेषगुणाः "शोषोमावतिवर्णं वा च स तावद्गुणं स्मृत" इति मनुना भूतमध्ये चतुर्थस्य जलस्य चतुर्गुणत्वाभिधानात् "शब्दस्पर्शौ रूपरसौ च विज्ञेया गुणा अमी" भा०शा०प० उक्तेश्च "जले चतुर्गुणावृत्तिः । शीतस्पर्शः शुक्लरूपं रसो माधुर्य-मीरितम्" भाषाप० । "अग्नेरापः" इति श्रुतेस्तस्याग्निप्रभव-त्वम् यथोक्तं "तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते पुरुषस्तेजस एव तदध्यापो जायन्ते" छा० उ० । "तेज इति प्रसिद्धं लोके दग्धृपक्तृप्रकाशकं रोहितञ्चेति तत्सृष्टं तेज ऐक्षत । तेजोरूपसंस्थितं सदैक्षतेत्यर्थः । बहु स्यां प्रजायेयेति पूर्ववत्तदपोऽसृजत । आपो द्रवाः स्निग्धाः स्यन्दिन्यः शुक्लाश्चेति प्रसिद्धं लोके । यस्मात्तेजसः कार्यभूता आप-स्तस्माद्यत्र क्व च देशे काले वा शोचति सन्तप्यते स्वेदते प्रस्विद्यते वा पुरुषस्तेजस एव तदापोऽधिजायन्ते । ता आप ऐक्षन्तेति पूर्ववदेव अबाकारसंस्थितं सदैक्षतेत्यर्थः भा० । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति "सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्" छा०उ०॥ "सेयं तिस्रो देवता अनुप्रविश्य स्वा-त्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीति तासाञ्च तिसृणां देवतानामेकैकां त्रिवृतं करवाणि एकै-कस्याः त्रिवृत्करणे एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभा-वोऽन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यात् न तु तिसृणां पृथक् त्रिवृत्करणमिति । एवं हि तेजोऽबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्तेज इदम्" इमा आपः, अन्नमिद-मिति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात् । एवमीक्षित्वा सेयं देवतेमा-स्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्यबिम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवतादीनां च पिण्डमनु-प्रविश्य यथासङ्कल्पमेव नामरूपे व्याकरोदसौनामायमिदं-रूप इति तासाञ्च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृ-तमेकैकामकरोत्कृतवती देवता" भा० । "अद्भिः सोम्य ! शुङ्गेन तेजो मूलमन्विच्छ" छा०उ० "अद्भिः शुङ्गेन तेजो मूलं कार्येण कारणम् अन्विच्छ "तेजो वा अद्भ्यो भूयस्तद्वा एत-द्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्च-रन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति" छा०उ० । "तेजो वा अद्भ्यो भूयः, तेजसोऽप्कारण-त्वात् । कथमप्कारणत्वमित्याह । यस्मादद्भ्योनिस्तेजसा-तद्वा एतत्तेजो वायुमागृह्यावष्टभ्य आत्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुवत्तपति यदा, तदाहुर्लौकिकाः अभि-शोचति सन्तपति सामान्येन, जगन्ति तपति देहास्ततो वर्षि-

ष्यति वै इति । प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्ट्वतः कार्यं भविष्यतीति विज्ञानम् ॥ तेज एव तत्पूर्व्वमात्मानमुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजतेऽतोऽप्सृष्टत्वात्त्वापोऽन्नयोनेऽप्यस्तेजः । किञ्चाप्यत्रदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति । कथं ऊर्द्ध्वाभिश्चोर्द्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्य्यग्गताभिश्च महान्त्वादाः स्तनयनशब्दाश्चरन्ति । तस्मात्तद्दर्शनादाऽलौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थमतस्तेज उपास्वेति भा० ।

नैयायिकादयस्तु परमाणुविशेषेभ्य एव तस्योत्पत्तिः । तच्च द्विविधं नित्यमनित्यञ्च नित्यं परमाणुरूपमनित्यं द्व्यणुकादि । प्रकारान्तरेण अनित्यमपि त्रिविधं देहेन्द्रियविषयभेदात् । देहः अयोनिजः वरुणचन्द्रलोकयोः श्रुत्यादिप्रसिद्धः इन्द्रियं रसनं शब्दादिषु मध्ये रसमात्रव्यञ्जकत्वात् तस्य जलीयत्वम् । द्व्यणुकादिकमारभ्य हिमकरकसिन्धुपर्य्यन्तं विषयः उपभोग्यत्वात् । स्पर्शसंख्यापरिमितिसंयोगविभागपरत्वापरत्वानीत्यष्टौ वेगः गुरुत्वं रूपं रसः स्नेहश्च जलस्यैते चतुर्द्दशसामान्यविशेषगुणाः यथोक्तं "स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्द्दश । वर्णः शुक्लोरसस्पर्शौ । जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम्" । नित्यतादि प्रथमवत् किन्तु देहमयोनिजम् इन्द्रियं रसनं सिन्धुहिमादिविषयो मतः" भाषा० । एवं स्थूलभूतजलस्य उपाधिभेदेन सुश्रुते गुणदोषादिविवेकाय भेदा दर्शिता यथा "पानीयमान्तरीक्षमनिर्द्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमञ्च तदेवावनौ पतितमन्यतमं रसमुपलभते स्थानविशेषात् नदीनदसरस्तडागवापीकूपचुण्टीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति । तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासंख्यमुदकानि सम्भवन्तीत्येके भाषन्ते तत्तु न सम्यक् तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण तत्र स्वगुणभूयिष्ठायां भूमावम्लं लवणञ्च । अम्बुगुणभूयिष्ठायां मधुरम् । तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च । वायुगुणभूयिष्ठायां कषायञ्च । आकाशगुणभूयिष्ठायामव्यक्तरसमव्यक्तं ह्याकाशमित्यतस्तत्प्रधानमव्यक्तरसत्वात् तत्पेयमान्तरीक्षालाभे । तत्रान्तरीक्षं चतुर्व्विधम् । तद्यथा । धारं कारं तौषारं हैममिति । तेषां धारं प्रधानं लघुत्वात्तत्पुनर्द्विविधं गाङ्गं सामुद्रं चेति । तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति तयोर्द्वयोरपि परीक्षणं कुर्व्वीत शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिः कुर्व्वीत स यदि मुहूर्त्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्तदुपादेयम् । सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति । तत्तु प्रधानं तदुपाददीताश्वयुजे मासि, शुचिशुक्लविततपटैकदेशप्रस्रुतमथ वा हर्म्यतलपरिभ्रष्टमन्यैर्व्वा शुचिभिर्भाजनैर्गृह्णीत सौवर्णे राजते मृण्मये वा पात्रे निदध्यात्तत्सर्व्वकालमुपयुञ्जीत तस्यालाभे भौमम् । तत्राकाशगुणबहुलं तत्पुनः सप्तविधम् । तद्यथा । कौपं नादेयं सारसं ताडागं प्रास्रवणमौद्भिदं चौण्ट्यमिति तत्र वर्षास्वान्तरीक्षमौद्भिदं वा सेवेत महागुणत्वात् शरदि सर्व्वं प्रसन्नत्वात् हेमन्ते सारसं ताडागं वा, वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेऽप्येवं प्रावृषि चौण्ट्यमनवममनभिवृष्टं सर्व्वञ्चेति ॥ कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् । तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥ योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम् । स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात्क्षिप्रमेव तु ॥ तत्र यत् शैवालपङ्कतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात् ॥ तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् सम्भवन्ति । तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः । पङ्कसिकताशैवालबहुवर्णता रूपदोषाः । व्यक्तरसता रसदोषः । अनिष्टगन्धता गन्धदोषः । यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः । यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोष इति । त एते त्वान्तरीक्षे न सन्ति ॥ व्यापन्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्व्वापणं प्रसादनञ्च कर्त्तव्यं नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा । पुष्पावतंसे भौमे वा सुगन्धि सलिलं पिबेत् ॥ व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम् । दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत् ॥ व्यापन्नं सलिलं यस्तु पिबतीहाप्रसादितम् । श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम् ॥ श्वासकासप्रतिश्यायशूलगुल्मोदराणि च । अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च ॥ तत्र सप्त कलुषस्य प्रसादनानि भवन्ति । तद्यथा । कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति ।

यत्र चिलेपनानि भवन्ति । तद्यथा । फलकं ताम्रकं छक्षलवत उदकमक्तिका पिक्काश्वेति । तत्र शीतोष्ण-कानि भवन्ति प्रवातस्यापनमुदकप्रक्षेपण यष्टिकाभ्रामण अजनं चक्षोदरणं वालुकाप्रक्षेपणं पिक्कावलम्बनश्वेति

अम्बुकणा पु० ६त० । शीकरे जलविन्दौ स्त्रीलिङ्गे । [च ।

अम्बुकण्टक पु० अम्बुन कण्टकमिव । १कुम्भीरे, २ग्राहकटके

अम्बुकिरात पु० अम्बुनि किरात इव हिंस्र । कुम्भीरे ।

अम्बुकीश पु० अम्बुनि कीशः वानर इव । (शुशुक) इति ख्याते शिशुमारे जलजन्तुभेदे ।

अम्बुकूर्म पु० अम्बुनि कूर्म इव । शिशुमारे (शुशुक) हेम० ।

अम्बुकेशर पु० अम्बुजातः केशरोऽस्य । छोलङ्गवृक्षे रत्नमा० ।

अम्बुचर त्रि० अम्बुनि चरति चर-ट ७त० । जलचरे हंसादौ स्त्रियां ङीप् । [ख्याते शैवाले ।

अम्बुचामर न० अम्बुनि चामरमिव । (सेओयाला) इति

अम्बुचारिन् त्रि० अम्बुनि चरति चर-णिनि ७त० । जलचरे हंसादौ स्त्रियां ङीप् । "कूताहिमरटानाञ्च तिरश्चां चाम्बुचारिणाम्" मनुः ।

अम्बुज न० अम्बुनि जायते जन+ड । १पद्मे २सारसपक्षिणि । ३चन्द्रे ४कर्पूरे ५हिज्जल इति ख्याते वृक्षे च पु० । ६शङ्खे पु०न० । ७वज्रे च । वज्रस्य जलदाद्भवत्वात्तथात्वम् । "चापं पायाम्बुज वरविलाम्बहस्तं सुख्यवापमिति"-भुवनेश्वरीध्याने अम्बुजं पद्म नतु वज्रमिति तन्त्र-धारोक्तेः अस्य वज्रवाचकतापीति ज्ञायते ।

अम्बुजन्मन् न० अम्बुनो जन्मास्य जन्मोत्तरपदत्वात् व्यधि-करणो बहुव्रीहिः । १पद्मे २सारसविहङ्गे ३शङ्खे पु०च ।

अम्बुजासना स्त्री अम्बुजमासनम् यस्याः । १लक्ष्म्याम् । २अब्जोद्भवे त्रि० । [वाम् चच् । शैवाले (सेओयाला) ।

अम्बुताल पु० अम्बुनि तालवत् प्रतितिष्ठति कु० तल-प्रतिष्ठा-

अम्बुद पु० अम्बु ददाति दा-क । १मेघे, "नवाम्बुदश्या-मवपुर्न्यविक्षत" माघ० "नवाम्बुदानीकमुहूर्तलाञ्छने" "सतडुतं वज्रिनिवाग्निरम्बुदः" इति च रघुः । २मुस्तके च ।

अम्बुधर पु० अम्बूनि धरति धृ-अच् । १मेघे "सरत्प्रमृ-ष्टाम्बुधरोपरोधः" रघुः "अमलेरम्बुतलम्बोभमोर्व-विमलाम्बुधराब वीमकः" कुमा० । २मुस्तके च ।

अम्बुधि पु० अम्बूनि धीयन्तेऽत्र धा-आधारे कि । १समुद्रे । "रत्नाकरोऽम्बुधिराबवस्म" माघः २उदकाधारे घटादौ अम्बुधिर्घटः सि०कौ० । ३चतुःसंख्यान्विते च ।

अम्बुधिप्रसवा स्त्री अम्बुधिमिव प्रचुररसं प्रसूते प्र+सू-अच् । १घृतकुमार्याम् ।

अम्बुनिधि अम्बूनि निधीयन्तेऽस्मिन् अम्बु+नि+धा-आधारे कि । समुद्रे । 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' किरा० । "ये पक्षिणः प्रथममम्बुनिधिं गतास्ते" माघ ।

अम्बुप पु अम्बूनि पाति पिबति वा पा-रक्षणे-पाने वा क । १जलेश्वरे वरुणे "रक्षोऽम्बुपानिलशशीशपुराणि चाष्टौ" सि०शि० । २समुद्रे च ३जलपायिनि त्रि० ।

अम्बुपत्रा स्त्री अम्बूनि पत्रे यस्याः । उच्चटावृक्षे । अम्बु-युक्तं पत्रमस्याः गौरा० ङीष् । अम्बुपत्रीत्यप्यत्र ।

अम्बुप्रसाद पु० अम्बूनि प्रसादयति प्र+सद-णिच्-अण् उप०स० । कतककवृक्षे (निर्मालि) ।

अम्बुप्रसादन न० अम्बूनि प्रसादयति प्र+सद+णिच्-ल्यु ६त० । कतकफले "फल कतकवृक्षस्य यद्यम्बुप्रसादनम्" मनु । जलप्रसादकारके त्रि० तानि ३२०पृष्ठे दृश्यानि ।

अम्बुभृत् पु० अम्बु बिभर्त्ति-भृ-क्विप् ६त० । १ मेघे २मुस्तके ३समुद्रे च । ४जलाधारमात्रे त्रि० ।

अम्बुमत् त्रि० अम्बूनि बाहुल्येन सन्त्यस्मिन् । १बहूदके देशादौ स्त्रियां ङीप् । सा च २नदीभेदे । "ततोऽम्बुमत्या धर्मज्ञ सुतीर्थञ्चाप्यनुत्तमम् भा०व०प० ।

अम्बुमात्रज पु० अम्बुमात्रे अल्पजले जायते जन-ड ७त० । शम्बूके, (शामुक) हेम० । [२मुस्तके च ।

अम्बुमुच् पु० अम्बूनि मुञ्चति मुच-क्विप् ६त० । १मेघे

अम्बुर पु० अम्ब-बा०उरन् । द्वाराध काष्ठे (गोबराट)हेम०

अम्बुराशि पु० अम्बूनां राशयो यत्र । समुद्रे । "नैतम-भोमवल्लभमम्बुराशि" सा०द० 'अभूतपूर्वा वृषमम्बु-राशे' माघः 'पापं दधज्ज्वलनमौर्यमिवाम्बुराशि" रघु ।

अम्बुरुह् न० अम्बुनि रोहति रुह-क्विप् ७त० १ पद्मे "विकसद्भिरम्बुरुहां रजोभिः" माघ' । २सारसविहङ्गे च

अम्बुरुह पु० अम्बुनि-रोहति रुह-क ७त० । १ पद्मे । "ऋष्यशाम्बुरुहं दिव्य गोष्टङ्गं नाम पर्वतम्" । "नदीं गोदावरीं चैव प्रययाम्बुरुहां तत" इति च रामा० । अम्बुरुहं पद्ममिव पुष्पमस्याः अर्श०अच् । स्थल पद्मिन्यांस्त्री

अम्बुरुहिणी स्त्री अम्बुरुहाणां समूहः सन्निकृष्टदेशोवा इनि । १ पद्मसमूहे २ पद्मलतायाञ्च । [रक्षे च ।

अम्बुरोहिन् न०अम्बुनि रोहति रुह-णिनि । १पद्मे २सा-

अम्बुवाची स्त्री अम्बु तद्गर्भं वाचयति सूचयति वच-णिच्-अण् उप०स०ङीप् । आर्द्राद्यपादस्यरविकालिकभूमौ "आर्द्राद्यादि

विशाखान्तं रविचारेण वर्षति” इत्युक्तेस्तथा दृष्टिरूपकत्वम्। तत्काले हि भूमेरन्तर्गतरजोयोगरूपत्वतस्तस्यास्तथात्वम्। यथोक्तम् “रजोयुक्ताम्बुवाची च रौद्राद्यपादगे रवौ” ज्योति०। मिथुनराशिर्हि मृगशिर शेषार्द्धार्द्रापादचतुष्क पुनर्वसुपादत्रयात्मक। तत्र मृगशिरसि भुक्ते यदा आर्द्राया प्रथमपादोपभोगार्थं रविर्गच्छति तदा पृथ्वी ऋतुमती भवति तच्च मिथुने ६।४० चत्वारिंशत्कलाधिकषड्‌भागमतीत्य आर्द्राद्यपादावधि यावत्तिष्ठति तावत्। यथोक्तं राजमा०। “रवौ रौद्राद्यपादस्थे भूमेः सञ्जायते रज” इत्युपक्रम्य। “चत्वारिंशत्त्रिभिर्भक्त षड्भागयुतोरविर्यदा भवति। तत्राम्बुवाची ज्ञेया शिवर्क्षपादे स्थितो यावत्। द्विर्भागन्मून्यलिप्तोगणितेन भवति रविर्यदा याम्य” इति। तत्र च वर्ज्यानि “न स्वाध्यायं वषट्कार न देवपितृतर्पणम्। हलानां वाहनञ्चैव बीजानां वपनं तथा” राजमा०। “तस्या पाठोवीजवापोनाद्भिर्दुग्धपानत” ज्यो०। यदा दृष्ट्वा समादाय भानोर्मन्त्रयगामिता। पुनस्तत्स्थेममादाय यजन त्रिदिन त्यजेत्। काम्यं नैमित्तिकं चैव यात्रां मन्त्रक्रियां तथा। ऋतुमत्या न कुर्वीत पूर्व्वसङ्कल्पितादृते। न कुर्यात् खनन भूमे सूच्यग्रेणापि यद्धर। मत्स्य सू०। “यतिनोव्रतिनश्चैव विधवा च द्विजस्तथा। अम्बुवाचीदिने चैव पाकं कृत्वा न भक्षयेत्। स्वपाक परपाक वा अम्बुवाचीदिने तथा। भक्षण नैव कर्त्तव्य चण्डालान्नमय स्मृतम्” विष्णुरहस्यम्।

**अम्बुवासिन्** त्रि० अम्बुप्रधाने देशे वसति वस–णिनि ङीप्। १ पाटलाद्रुमे। २ जलवासिमात्रे त्रि०। [पाटलाद्रुमे।

**अम्बुवासी** स्त्री अम्बुप्रधाने देशे वासो यस्या गौरा०ङीष्।

**अम्बुवाह** पु० अम्बूनि वहति वह–अण् उप० स०। १ जलधरे मेघे। “व्याजेन यस्यावहिरम्बुवाह यतोऽभि ताभिर्मुहुरम्बुवाहै” “हलधरपरिधानश्यामलैरम्बुवाहैः” इति च माघ। २मुस्तके। पुंस्यम्बुवाहभयत्र।

**अम्बुवाहिन्** त्रि० अम्बूनि वहति धारयति वह–णिनि ६त०। १ जलधारके त्रि० २ मेघे ३ मुस्ते च पु०।

**अम्बुवाहिनी** स्त्री अम्बूनि वहति स्थानान्तरं नयति वह–णिनि ६त० ङीप्। १नौकाजलसेचनार्थे काष्ठनिर्मिते पात्रभेदे २ जलवाहिकायां स्त्रियाञ्च।

**अम्बुविहार** पु०७त०। जलक्रीडायाम् सत्तरपादौ “न पुरम्बुविहारहिमं मुचिमा” माघ। [भेकूदकायां एतकुमार्य्याम्।

**अम्बुविस्रवा** स्त्री अम्बूनि विस्रवति वि+स्रु–अच्। घृतकुमार्य्याम्।

**अम्बुवेतस** पु० अम्बुजातो वेतसः शाक०त०। जलवेतसे।

**अम्बुशिरीषिका** स्त्री अस्य शिरीषः अस्यार्थे कन् स्त्रीत्वम् जलशिरीषे। [(जोंक) इति ख्यातायां जलौकायाम्।

**अम्बुसर्पिणी** स्त्री अम्बुनि सर्पति सृप–णिनि ७त०।

**अम्बुसेचनी** स्त्री अम्बूनि सिच्यन्ते नौकातः अनया सिच–करणे ल्युट् ६त० ङीप्। नौकादेर्जलसेचनीपात्रे।

**अम्बूकृत** न० अनम्बु अम्बु कृतं अम्बु न प्रकाशाम्बु अम्बारासद्युक्त ततः च्वि+कृ–क्त। निष्ठीवनयुक्ते वचसि।

**अम्भ** पु० अबि–शब्दे क्त नि० न इट्। १अम्भसि २तद्वति त्रि०।

**अम्भ** ध्वनौ भ्वा० आ० अक० सेट्। अम्भते आम्भिष्ट आनम्भे आनम्भे अयम् इदित्त्वेऽ तेन आनम्भे इत्येव। अम्भः

**अम्भस्** न० आप्यते आप–असुन् “उदके नुम्भौ चेति” उणा० अम्भ–शब्दे असुन् वा। १जले “शैवलाम्बरं मात्र कोऽम्भसा परिषिञ्चति”?। “त्रिस्रोतसः कान्तमारमम्भ” इति च माघः। “परिश्रमाम्भःपुलकेन सर्पता” किरा०। “कथमप्यम्भसामन्तरा निष्पत्तेः प्रतीक्षते” कुमा० “अम्यर्हेऽम्भ पतनसमये” इति मेघ०। २देवे, जलस्रष्टृत्वात् तथात्वम् ३ पितृलोके, तेषां जलमयचन्द्रलोके स्थितत्वात् अम्भयदेहत्वाच्च तथात्वम्। ४मनुष्ये “नैव सौम्य। यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति” छा०उ०श्रुतौ। पुरुषाणां जलमयत्वात् तथात्वं पञ्चाग्निविद्यापदे द्रष्टव्य। ५असुरे, युद्धे देवसर्वथा गन्तावमानत्वात्तथा। ‘तानि ह वा एतानि चत्वार्य्यम्भांसि देवा मनुष्या पितरोऽसुरा’ इति श्रुति। ६वालनामौषधौ। ज्योतिषोक्ते ७लग्नाच्चतुर्थस्थाने। योगशास्त्रोक्तासु नवविधतुष्टिषु मध्ये प्रकृत्याख्याया इत्याध्यात्मिकतुष्टौ च। यथा “आध्यात्मिक्यश्चतस्र प्रकृत्युपादानकालभाग्याख्या। बाह्या विषयोपरमात् पञ्च, नव तुष्टयोऽभिमता सा०का०। “प्रकृतिव्यतिरिक्त आत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्य चतस्र आध्यात्मिक्यस्तुष्टयो भवन्ति प्रकृतिव्यतिरिक्तात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, काशः, इत्यत आह प्रकृत्युपादानकालभाग्याख्याः प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशः “विवेकसाक्षात्कारोऽपि प्रकृतिपरिणामभेदः तच्च प्रकृतिरेव करोतीति कृत ते ध्यानाभ्यासेन, तस्मादेवमेवास्व वत्सेति”। सेयमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्याख्या तुष्टिः अम्भ इत्युच्यते” त०कौ०। अम्भ अम्भः–

शब्दशास्त्रे चेतुमद्व्याख्याने दर्शितोऽस्माभिः यथा "अथाय तदेरम्भस इव प्रसन्नधातु उपदेशरूपशब्दहेतु-कत्वाच्च अम्भस्त्वम् अभि—शब्दे इति धातोरसुन्नन्तस्य शब्दहेतुकरूपार्थानुगमात्" । द्वावार्थविभ्यो द्वि०व० निरु० । [रा०नि० ।

**अम्भ (म्भसा)सार** न० अम्भसा सारं वा सत्वम् । मुक्तायां

**अम्भ (म्भसु)सू** पु० अम्भांसि सूते सू-क्विप् वा सत्वम् । धूमे हे० ।

**अम्भसांनिधि** पु० ६त० अलुक् स० । समुद्रे "शिखाभिरा-श्लिष्ट इवाम्भसां निधिः" माघः ।

**अम्भृण** पु० भृण—शब्दे यङ् लुक् अच् वेदे नि० । १महति निरु० । २भयङ्करशब्दकारके "पिशङ्गभृष्टिमम्भृणं पिशाचिम्" ऋ० १,१३३,५, "भयङ्करशब्दायमानमतिप्रवृद्धं वेति" भा० । "कुम्भीभ्यामम्भृणो सुते" य० १६,२७ ।

**अम्भोज** न० अम्भसि जायते जन—ड ७त० । १पद्मे "गिरा सुधाम्भोजमियं युयोज" नैष० । "वक्त्राम्भोज सरस्वत्यधिवसति सदा शोण एवाधरस्ते" का०प्र० । २सारसे ३चन्द्रे "पिबन्ति तन्मुखाम्भोजच्युत हरिकथामृतमिति" भाग० । चन्द्रादेवामृतच्युति सम्भव ४कर्पूरे च पु० । ५शङ्खे पु०न० । ६जलजातमात्रे त्रि० ।

**अम्भोज(ख)षण्ड** न० अम्भोजानां समूह (ख)षण्डच् । पद्म-समूहे "कुमुदवनमपश्रि श्रीमदम्भोजष(ख)ण्डम्" माघ ।

**अम्भोजजन्मन्** पु० अम्भोजाज्जन्म यस्य जन्माद्युत्तरपदोव्यधि-करणोऽपि साधु वामन । चतुर्मुखे हरिनाभिपद्मजे ब्रह्मणि अब्जजशब्दे विवरणम् । "अम्भोजजन्मजनितस्त-दन्तरगतो यत्नानितो यत्नवान्" भाग० अम्भोजजन्मनः हिरण्यगर्भस्य जनिजन्मरुत्पत्तिर्यस्मात् तथाविधो विष्णुरित्यर्थः ।

**अम्भोजयोनि** पु० अम्भोज हरिनाभिपद्म योनिः उत्पत्ति-स्थानं यस्य । विधातरि । अब्जजशब्दे विवरणम् । "मदनसपगतोऽथ पूर्वमम्भोजयोनेरिति" प्रबो० ।

**अम्भोजिनी** स्त्री अम्भोज+समूहार्थे तदस्ति देशे वा पुष्करा० इनि । १पद्मसमूहे, २ लतारूपे पद्म(पद्मिन्यां) देशे च ।

**अम्भोद** पु० अम्भो ददाति दा—क । १मेघे, २मुस्तके च । ३जलदातृमात्रे त्रि० । [२मुस्तके ३समुद्रे, च ।

**अम्भोधर** पु० अम्भो धरति धृञ्—धारणे अच् । १मेघे ।

**अम्भोधि** पु० अम्भांसि धीयन्ते यत्र धा—आधारे कि । समुद्रे । "समभूयाम्भोधिमभ्येति महानद्या नगापगा" । "अम्भोधिरोधसि पृथुप्रतिमानमानैति" "अम्भोधिर्धिविकसित वारिजाननोऽसौ" इति च माघः ।

**अम्भोधिवल्लभ** पु० ६त० । प्रवाले राजनि० ।

**अम्भोनिधि** पु० अम्भांसि निधीयन्तेऽत्र अम्भस्-नि+धा-कि । समुद्रे । "मैनाकमम्भोनिधिमप्रसङ्ख्यम्" कु० "अम्भो-निधिर्भवति दुर्वहवाडवाग्निम्" चौ० प० । [समुद्रे ।

**अम्भोराशि** पु० अम्भसां राशिरिव एकत्रोपचितत्वात् ।

**अम्भोरुह** न० अम्भसि रोहति रुह—क । १पद्मे २सारसे च ३जलजातमात्रे त्रि० "हेमाम्भोरुहशस्यानां तद्वाप्यो धाम साम्प्रतम्" कुमा० ।

**अम्मय** त्रि० अपां विकारादि अप्+मयट् । १जलविकारे २जल-प्रचुरे च "सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" रघु । "नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः" भाग० ।

**अम्ल** पु० अमति सौरभेण दूरं गच्छति अम—क्लन् । आम्रवृक्षे । फलपत्रादौ न० । एव प्रायः सर्वत्र द्ववाचकेषु ।

**अम्ला(म्ला)न** पु० अम्लं रसं सर्वत्र पत्रपुष्पादौ अतति व्याप्नोति अत—अण् वा रस्य लत्वम् । (आमड़ा) आम्रातकवृक्षे । स्वार्थे कन् अम्ला(म्ला)तकोऽपि ।

**अम्ल** न० अम—क्त । (घोल) १तक्रे । (टक्)रसभेदे पु० । २ तद्वति त्रि० "कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन" गीता । अम्लरसद्रव्याणि च सुश्रुते दर्शितानि यथा । दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दवदरकोलप्राचीनामलकतिन्तिडीककोशाम्रभव्यपारावतवेत्रफललकुचाम्लवेतसदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लोवर्गः" ।

**अम्लक** पु० अम्लोऽस्य अत्यार्थे कन् । (मान्दार) लकुचवृक्षे ।

**अम्लकाण्ड** न० अम्लं काण्डं यस्य । लवणतृणे राजनि० ।

**अम्लकेशर** पु० अम्लः केशरोऽस्य । बीजपूरे (गोड़ानेबु) ।

**अम्लचूड** पु० अम्ला चूडा शिखाऽस्य । अम्लशाके ।

**अम्लजम्बीर** पु० अम्लो जम्बीरः । (गोड़ानेबु)जम्बीरवृक्षे ।

**अम्लनायक** पु० अम्लं रसं नयति नी—ण्वुल् । अम्लवेतसे ।

**अम्लनिशा** स्त्री अम्लरसे नि शेषेण शेते शीङ् ड । शठीवृक्षे

**अम्लपञ्चफल** त्रि० "कोलं च दाडिमञ्चैव वृक्षाम्लं चुक्रिका तथा । अम्लवेतसमित्येतदम्लपञ्चफलं स्मृतम्" जम्बीर नागरङ्गञ्च तथाम्लवेतसं पुनः । तिन्तिडीकं बीज-पूरमम्लपञ्चफलं स्मृतमिति चोक्ते फलपञ्चके ।

**अम्लपत्र** पु० अम्लं पत्रं यस्य । अश्मन्तकवृक्षे ।

**अम्लपत्री** स्त्री अम्लं पत्र यस्याः ङीप् । पलाशीलतायाम् ।

**अम्लपनस** पु० अम्लः पनसः कर्म० । (मान्दार) लकुचवृक्षे ।

**अम्लपित्त** त्रि० अम्लाय पित्तम् । रोगभेदे तल्लक्षणं

च चतुरङ्कोभाग वस्मादोऽङ्कायिङ्ग्राम्यस्मिन्निति व्युत्पत्ते तस्मै, क्षतनामभवते, यदा द्यूते प्रवृत्तानां मध्ये स कोऽपि जयति तदा तस्मै क्षतनामभवते विजिताय अधरेवा संयन्तीति सम्बन्ध तदर्थं व्याचष्टे तदर्थमिति अधरेयान् व्याकरोति त्रेतेति । अयस्य यस्मिन् भागे त्रयोऽङ्काः स त्रेतानामाय यत्र तु द्वावङ्कौ स द्वापरनामाय । यत्र एकोऽङ्क स कलिनामाय इति । तादर्थ्येनेतराङ्कानामन्तर्भावमुक्तं व्यक्तीकरोति चतुरङ्क इति तदन्तर्भवति तस्मिन् कृताये त्रेतादयस्तेऽन्तर्भवन्ति महासंख्यायामवान्तरसंख्यान्तर्भाव प्रसिद्ध इति" आनन्दगिरि । यन्ति मारा' यस्मिन् इण-आधारे अच् । द्यूते सर्वमारगन्तव्ये ७स्थलभेदे अयानयशब्दे विवरणम् । अयते अच् । दगन्तादि त्रि० । विद्या आ नाम कर०६,६६,५ ।

**अयःपान** न० अयः द्रवीभूत तप्तलौह पीयतेऽत्र ल्युट् । नरकभेदे यथा भाग० ५स्कन्धे तामिस्रादिनरकगणनायाम् वीचिरय पानमित्युक्त्वा तद्विवरण सप्तेतकं तत्रैवोक्तं 'यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुराः व्रतस्थो वा पिबति प्रमादत तेषां निरयं नितानामुरसि पदाक्रम्य वह्निना द्रवमाण कार्ष्णायसं निषिञ्चन्ति" इति ।

**अय शूल** न० अय एव शूलम् उपतापकम् । १तीव्रे उपतापे, २लौहकृतास्त्रभेदे च । वा सत्वम्, अयशूलमप्यत्र ।

**अयक्ष्म** त्रि० नास्ति यक्ष्मा रोगोयस्य वेदे नि०अच् समा० । १नीरोगे रोगशून्ये "यथा न सर्वमिज्जगदयक्ष्म सुमना असत " यजु०१६,४ अयक्ष्म नीरोगम् वेददी० । ५५० । २उपद्रवासाधने "तयाम्भिस्रतस्त्वमयक्ष्मयापरिभुज" यजु० १६,११, "अयक्ष्मया निरुपद्रवया" वेददी० ।

**अयज्ञ** त्रि० नास्ति यज्ञो यस्य । अक्षतयज्ञे । "यर्मो अयज्ञ अदेषा अयज्ञान्" ऋ० ७,६,३ ।

**अयज्ञिय** त्रि० न यज्ञाय हित यज्ञ-घ न०त० । १यज्ञकर्मणि दातुमनर्हे२माषादौ "अयज्ञिया वै माषा" श्रुति यज्ञकालेऽनुज्ञार्थेऽपशब्दे च अयज्ञियवाक्यवने भ०भ०२यज्ञ कर्त्तुममर्हे असञ्जातेऽनुपनीतादौ "अयज्ञिया वै गर्भाश्चेत न्यकृत्यैव यजुषा यज्ञिय करोति" शत०ब्रा० ।

**अयज्यु** त्रि० यज-वा० उ नि० युट्० न०त० । १यष्टृभिन्ने २यज्ञविघातके च 'मायसमिन्द्र मर्त्यमयज्यु' श्वसस्रते ।" ऋ० १,१२१,४ "यज्वेदयज्योर्विभजातिभोजनम्" ऋ०२,२६,१ ।

**अयज्वन्** पु० विधिनेष्टवान् यज्वा न०त० । अक्षतयज्ञे । "अयज्वानमदक्षिणमभिस्वैत्येति व्याहरन्" भा०द्रो०प० योङ्गयथा पाठ । "योऽनाहिताग्निः शतगुरयज्वा च सहस्रगु " "अयज्वनान्तु यद्वित्तमासुरं वै तदुच्यते" मनु ।

**अयत** त्रि० न यम्यते यम-क्त न०त० । १असंयमे अयते न्द्रियनिग्रहे । यतते यत-अच् न०त० । २यत्नशून्ये ।

**अयत्न** पु० अभावे न०त० । १यत्नाभावे आयासाभावे "तदयाभ्रोत्ययत्नेन यो छिनत्ति न कश्चन" मनु । न०ब० । २प्रयासशून्ये त्रि० "तद्योधधारवाणामामयत्नपटवासताम्" रघुः ।

**अयत्नवत्** त्रि० न यत्नवान् । १ यत्नशून्ये "तेन तुल्यम् क्रिया चेद्वति" "तत्र तस्येविति" पा० वा वति । ४यत्नशून्यतुल्यक्रियादौ ३यत्नशून्यस्य समाने च अव्य० ।

**अयथा** अव्य० यथा योग्यत्वे न०त० । यस्य यथा मिथाभयुचितं १यथा करणाभावे २अनुचितकरणे ३मिथ्याभूते च नास्ति तथा योग्यत्वं यत्र । ४अयोग्ये ५ अयत्ने च त्रि० । "तथा अयथं कर्पदेतत्" ऋ० १०,१८,१५ अयथमयत्नेन लीलया" भा० ।

**अयथातथ** त्रि० यथा योग्य तथा न भवति "यथातथयथापुरयोरिति" पा० निर्देशात् नि०स० । १अयथार्थे यत् यदर्थं क्रियते तस्मिन् तदर्थमभूते च । "दैवे कर्मणि पित्र्ये च तत्स्वयथातथम्" मनु । यत् कर्म यदर्थं क्रियते तत्र साधयति ' कुल्लू० तस्य भाव ष्यञ् वा पूर्व्वपदवृद्धिः आयातथ्यम् अयाथातथ्यञ्च तद्भावे न० ।

**अयथार्थ** त्रि० विरोधे न० त० । यथार्थभिन्ने मिथ्याभूते यथा अयथार्थानुभव । स च तदभाववति तत्प्रकारक ज्ञान तच्च त्रिविधम् संशयभ्रमारोपरूपतर्कज्ञानभेदात् । तेषां सर्वेषाम् तदभाववति तत्प्रकारकज्ञानरूपत्वात्तथात्वम् ।

**अयथावत्** अव्य० अयोग्यरूपमर्हेति अर्हार्थे वति । अनतुक्रमे यथोचितभिन्ने । [२सत्त्वे त्रि० ।

**अयथेष्ट** अव्य० न०त० । १इच्छानुरूप्याभावे । अयं आद्यच्

**अयन** न० अय-भावे ल्युट् । १गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य चन्द्रस्य च २गतौ, तथा हि द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धे मकरादिमिथुनपर्य्यन्तम् राशिषट्क क्रमेण उत्तरायनत तत्र स्थितोऽर्कश्चन्द्रो वा सगत्यां प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्य्यग्गत्या उत्तरामभिक्रामति, एव कर्कटादिधनु पर्य्यन्त राशिषट्क क्रमेण दक्षिणायनत तत्र स्थितोऽर्कश्चन्द्रो वा प्राग्वत् दक्षिणामेवाभिक्रामति सेय गतिरयनशब्देन ज्योतिषे व्यव-

मात् क्रान्तिरपकृतेति सम्पातावधिकपञ्चभोगात् क्रान्तियुक्ता तत्र सम्पातावधिकपञ्चभोगज्ञानार्थं पूर्व्वसम्पातावधिकपञ्चाधिकारोक्तो पञ्चभोगो वर्त्तमानसम्पातपूर्व्वसम्पातान्तरक्रान्तिसमप्रदेशयोरन्तरभागैरयनांशाख्यैः पूर्व्वसम्पातप्रदेशस्य पूर्व्वं चलनस्यानुक्रमेण युतहीनो भवति । क्रान्त्युपजीव्याः पदार्था अपि वर्त्तमानसम्पातादनुपपन्ना इति तत्साधनमपि तत्संस्कृतपञ्चात् । अयनांशानाम् तु षट्शतभगणेभ्यः पूर्व्वोक्तपातरीत्याहर्गणाद्भपञ्चभोगो भगणादिकस्तत्र शतभगणमित पदपूर्व्वमपक्रमापचयत्वं गतम् । वर्त्तमानं त्वारब्धं पश्चिमापचयनात्प्रागिषट्क्रान्तर्गते राश्यादिके पश्चिमापचयनमनन्तर्गते पूर्व्वापचयनम् । तत्रापि त्रिभान्तर्गतान्तर्गतत्वक्रमेण चलनं परावर्त्तनमिति भुजसाधितस्ततो नवतंशैर्यदि सप्तविंशतिभागास्तदा भुजांशैः किमित्यनुपातेन गुणहरौ नवभिरपवर्त्त्य भुजांशास्त्रिगुणिता दशभक्ता इति सर्व्वमुपपन्नम् रङ्ग०" ॥ 'स्फुटं दृक्तुल्यता गच्छेदयने विषुवद्द्वये । प्राक् चक्रं चलितं हीने छायार्कात् करणागते । अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके' सू० सि० । "अयने दक्षिणोत्तरायणसन्धौ विषुवद्द्वये गोलसन्धौ चलितं चक्रं दृक्तुल्यतां दृष्टिगोचरतां स्फुटमनायासं गच्छेत् । तत्र प्रत्यक्षतस्तस्मिन् गत्यन्तरं दृश्यत इत्यर्थः । तथा च कल्यादिकाले रेवतीयोगताराप्रावधिमेषतुलादौ कर्कमकराद्योर्विषुवायनप्रवृत्तेरिदानीमन्यत्र तत्प्रवृत्ते प्रत्यक्षे इति क्रान्तिवृत्तं चलितमन्यथा तदनुपपत्तेरिति भावः । ननु पूर्व्वतोऽपरत्र वा चलितमिति कथं ज्ञेयमित्यत आह । प्रागिति । छायार्काद्यद्दिने सूर्य्यस्यायनदिक्परावर्त्तनमुदये प्राच्यपरक्रमस्यात्र वा तस्मिन् दिनेऽन्यस्मिन् दिने वा मध्याह्नच्छायातो वक्ष्यमाणप्रकारेण सूर्य्यं साध्यस्तस्मादित्यर्थः । करणागते प्रागुक्तप्रकारेणानीत स्पष्ट सूर्य्यस्तस्मिन्नित्यर्थः । न्यूने सति अन्तरांशैः सूर्य्ययोरन्तरांशैश्चक्रं क्रान्तिवृत्तं प्राक् पूर्व्वस्मिन् चलितमिति ज्ञेयम् । अथ यद्यधिके सति शेषैः सूर्य्ययोरन्तरांशैश्चक्रमावृत्य परिवृत्य पश्चात् पश्चिमाभिमुखं तथा चलितमिति ज्ञेयम् । अत्रोपपत्तिः । छायातो वक्ष्यमाणप्रकारेण सूर्य्यो वर्त्तमानसम्पाताद्गणितागतस्तु रेवतीताराभसम्पातावधितोऽतस्तयोरन्तरमयनांशास्तत्र क्रान्तिवृत्तस्य पूर्व्वचलने गणितागतच्छायार्कोऽधिको भवति पश्चिमचलने तु न्यूनो भवतीति सर्व्वमुपपन्नम्" । रङ्गनाथः । एवमयनस्य प्रकृतस्याभावात् चलने स्थिते सौरमते "त्रिंशत्कृत्यो युगे भानां" मित्युक्तेः सोमसिद्धान्ते "युगे षट्शतकृत्वो हि भचक्रं प्राक् विलम्बते" इत्युक्तेश्च ४३२०००० वर्षमिते युगे षट्शतैर्विभाजिते लब्धैः ७२०० वर्षैरेकोऽयनस्य भगणो भवतीति गम्यते । एतस्योक्तदिशा युगादितः प्रथमं मीनान्तात् मेषसप्तविंशतिपर्यन्तं प्राक् गत्वा ततः परिवृत्य मीनशेषपर्यन्तं सप्तविंशत्यंशैरागत्य ततोऽपि पश्चाद्गत्वा सप्तविंशत्यंशैः मीनचतुर्थांशपर्यन्तमागत्य परावृत्य प्रागगत्या पुनः सप्तविंशत्यंशैः मीनशेषपर्यन्तं धावति इत्येवं चतुर्भिः सप्तविंशत्यंशैः अष्टोत्तरशतांशैः प्राक्पश्चाद्गतिभेदेन एकोऽयनभगणो भवति प्रागुक्तैः ७२०० वर्षैः यदि १०८ अंशाः तदा एकांशे किमित्यनुपातेन ६६ । ८ अब्दमासाधिकषट्षष्टिवर्षैरेकैकांशायनचलनम् इति प्रतिभाति ततश्च यदि ६६। ८ वर्षादिभिः ६०कलात्मकोऽंशस्तदा एकवर्षेण किमित्यनुपाते ५४ विकलाः प्रतिवर्षमयनस्यानचलनमायाति अत्र प्रागित्युक्तेः कल्यादौ युगादौ च प्रथमं प्रागेव गतिर्न तु पश्चिमतः तथात्वे इदानीन्तनागतस्यानुपपत्ते । तथा हि ४३२०००० युगे यदि षट्शतानि अयनभगणास्तदा १७२८००० कृतयुगे किमित्यनुपातेन २४० भगणाः १२९६००० त्रेतायुगे १८० भगणाः ८६४००० द्वापरे १२० भगणाः इत्येवं त्रियुगे ५४० भगणा गता इदानीं कलियुगस्य वर्षाणि गतानि ४९७२ यदि ७२०० वर्षेषु १०८ अंशात्मको भगणस्तदा ४९७२ वर्षेषु किमिति त्रैराशिके ७४ अंशाः २५ कलाः ४४ विकलाः लब्धाः तथा च १०८ अंशात्मकायनभगणमध्ये एतावदंशादयो गता इति लभ्यते । तत्र यदि प्रथमं पश्चाद्गत्या भगणारम्भस्तदा मीनान्तात् चतुर्थांश यावत् पश्चाद्गत्या परावृत्य मीनपर्यन्तगमने ५४ अंशाः गताः ततः प्राग्गत्या मेषसप्तविंशत्यंशगतिस्वीकारे इदानीं मेषस्य २०।२५।४४ अयनांशादिः स्यात् । न च तत् छायादिसाधितम् । प्रागतिस्वीकारे तु प्राग्गत्या प्रथमं मीनान्तात् मेषस्य सप्तविंशत्यंशपर्यन्तं गत्वा पश्चाद्गत्या सप्तविंशत्यंशैः मीनान्तगमने ५४ अंशाः गताः ततः पश्चाद्गत्या मीनस्य एते २०।२५।४४ अंशादयो गतास्तथा च पश्चाद्गत्या मीनस्य नवमांशे इदानीमयनांशादिरिति सर्व्वज्योतिर्विदां सम्प्रदायः । अतएव एतदयनांशमादायैव पञ्चस्पष्टादिकं पञ्चाङ्गं साध्यते दिनमानादिकञ्चानीयते । इदानीन्तनाः ज्योतिर्विदां शिरोमणयः सर्वगणकावतंसाः पण्डितोत्तमाः श्रीमन्तो बापूदेवशास्त्रिणः अयनचलनस्य राशित्रयात्मकेन सर्व्वथा

ऋतुत्रयमयनं तथा च वाजसनेयिनः पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः समामनन्ति । "यान् षण्मासान् दक्षिणादित्य एति, यान् षण्मासानुदङ्ङादित्य एतीति" तथा छन्दोगा अधीयते । "यान् षड्दक्षिणैति- मासान् तान्, यान् षडुत्तरैति मासांस्तानिति" तैत्तिरीयाः क्रतु षड्ब्राह्मणे पठन्ति "तस्मादादित्यः षण्मासान् दक्षिणेनैति षडुत्तरेणैति" एवमादित्यगतिमुपजीव्यायननिरुक्ते सौरमानेनैतत् अत एव विष्णुधर्म्मोत्तरे सौरमानमधिकृत्योक्तम् "ऋतुत्रयं चायनं स्यादिति" केचित्तु चान्द्रमानेनायनद्वयमभ्युपगच्छन्ति "माघमासादिकैस्त्रिभिः ऋतुभिः कल्पितः कालः षण्मासात्मकमुत्तरायणं श्रावणमासादिकैः दक्षिणायनमिति तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यं श्रौतस्मार्त्तकर्मानुष्ठाने तु मकरकर्कटसंक्रान्त्यादिकं एवायनद्वयकाल इति यथोक्तस्मृतिश्रुतिभ्यामवगन्तव्यम् उत्तरायणस्य यागकर्माङ्गत्व कण्वा अधीयते "उदगयन आपूर्य्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वेत्यादि" । चौलादेरुत्तरायणकर्त्तव्यता गृह्यसूत्रेषु प्रसिद्धा । सत्यमतश्च देवताप्रतिष्ठादीनामुत्तरायणदक्षिणायनयोर्विधिनिषेधावाह "देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ । दक्षिणाभिमुखे कुर्व्वन् न तत्फलमवाप्नुयादिति" उपदेवतानां प्रतिष्ठा दक्षिणायने कर्त्तव्या तथा च वैखानससंहितायामभिहितम् "मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने इति" कालमाधवीये माधवः । "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च । अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता" । सू० सि० उक्ते अयने सौरमानेनैवेत्यवगम्यते । क्रान्तिपातारम्भस्थानचलनं च सर्वेषां राशीनां स्वस्वस्थानात् प्राक् पश्चाद्वा अयनांशानुसारेणान्यत्र स्थाने भवति । तस्य स्फुटार्थमयनमयनसंक्रान्तिशब्दे वक्ष्यते । "संक्रान्तिषु यथा कालस्तद्वदेवाऽयने तथा" का० मा० स्मृतिः । एति समस्तिमनेन करणे ल्युट् । १२सत्रविशेषे यथा गवामयनम् तद्विवरणं गवामयनशब्दे । अयनेन निर्वृत्तम् अयनस्येदं वा अण् । आयनम् अयनसाध्ये अयनसम्बन्धिनि च त्रि० । "युतायनांशोडुपकोटिशिञ्जिनी जिनांशमौर्व्या गुणिता विभाजिता । द्युज्यैवया लब्धफलस्य कार्म्मुकम् भवेच्च याम्यायनदिक्कमायनमिति" आयनं वलनमस्फुटेषुणा सङ्गुणं द्युगणभाजितं कृतम् । पूर्वपूर्वदृष्टिभिर्वाञ्छितस्य भोदयकृदायना वधाः "अस्फुटेषुवलनाक्षतिस्तु वा प्रष्टिहृत् फलकला स्फुटायना" इति च सि० शि० । अयने भव ठञ् । आयनिकः अयनभवे त्रि० स्त्रियां ङीप् ।

**अयनकाल** पु० अयधारः कालः । अयनांशाधारे काले

**अयन(च)चलन** न० ६त० । अयनांशस्य प्राक् पश्चाद्वा स्थानान्तरचलने ।

**अयनज** पु० अयनात् राशीनां स्वस्वस्थानचलनात् जायते जन–ड । अयनांशजाते मासादौ ।

**अयनभाग** पु० अयनज्ञापको भागः । अयनांशे ।

**अयनमास** पु० अयनकृतः मासः । अयनांशानुसारेण दिनमानादिज्ञानार्थं कल्पिते मासे ।

**अयनसंक्रम** पु० अयनांशानुसारेण संक्रमः । मेषादिषु राशिषु अयनांशानुसारेण ग्रहाणां प्रभापुञ्जसञ्चारे अयनसंक्रान्तिशब्दे विवरणम् ।

**अयनसंक्रान्ति** स्त्री अयनेन राशिचक्रस्य पश्चात्, प्राग्वा गत्या कृता संक्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चारः सम्+क्रम–क्तिन् । चलसंक्रान्तौ, संक्रान्तिर्द्विविधा चला अचला चेति भेदात् तस्यानुपदं वक्ष्यते मेषादिभिर्द्वादशभिः स्थानैर्विभक्तस्य निराधारतया स्थितस्य राशिचक्रस्य दोलायमानतया प्राक् पश्चाद्वा निर्दिष्टमेषादिस्थानात् पश्चात् पूर्व्वं वा राश्यन्तरे मण्डलगतिं विनापि ग्रहाणां प्रभापुञ्जमात्रसंचारः चलसंक्रान्तिः अनियतस्थानतया चलत्वात् । निर्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्तिः राशिसंक्रान्तिरिति चोच्यते तस्या नियतमेकस्थानएव जायमानत्वादचलत्वम् । अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोषः चलसंक्रान्त्या तु बहवो दोषास्तथा निरूप्यते तथा हि ग्रहाणामाक्रान्तराशितो राश्यन्तरक्रमणं संक्रान्तिरित्युच्यते सा च द्विधा मध्यमा स्पष्टा च । षट्कर्म्मसंस्कृतो मध्यग्रहो यदा राश्यन्तरं संक्रामति तदा मध्यसंक्रान्तिरित्युच्यते यदा तु स्पष्टीकृतसंस्कारो ग्रहो राश्यन्तरं गच्छति सा स्पष्टसंक्रान्तिरित्युच्यते तत्र मध्यसंक्रमस्य स्पष्टीकरणार्थत्वादेव तज्जनितसंक्रान्तेः स्पष्टीकारएवोपयोगात् लोकशास्त्रयोर्व्यवहारे न तस्य उपयोगः किन्तु "गुरोर्मध्यमसंक्रान्तिहीनो यश्चान्द्रवत्सरः । अधिसंवत्सरस्तस्मिन् कारयेत वत्सरम् । वर्जनीया प्रयत्नेन प्रतिष्ठा सर्व्वकर्म्मणाम् स्फुटसंक्रान्तिहीनश्चेत् कोऽप्याचरधिमासकम्" इति कालमाधवीयधृतस्मृतेः मध्यसंक्रान्तेरपि अधिवत्सरोपयोगिता तदन्यत्र तु तस्या-

यदि अयनांशशोधनमन्तरेणैव सूर्य्यस्य तत्तद्राशिघटकनक्षत्रस्थितिस्वीकारस्तदा इदानीमयनांशानुसारेण २०, २५, ४४ एतदंशादितः पूर्व्वं रवेर्मेषादौ गत्यावश्यकत्वात् तस्य च तद्घटकनक्षत्रस्थितेस्तत्रत्यतद्दर्शनक्षत्रस्य सन्ध्याया प्रथमोदयादर्शनं च तथा दृश्यते तथा यस्मिन् दिने इदानीममापूर्णिमादयो दृश्यन्ते तत पूर्व्वं २०,२५,४४ सूर्य्यचन्द्रयोरेकराशिस्थत्वेन अमावस्याप्राप्तिस्ततः पञ्चदशेऽहनि पूर्णिमाप्रसक्तिश्च नचैतत् प्रत्यक्षसंवादीति। अयनांशशोधनेन निरयनांशसंक्रमादितस्तु सर्व्वं प्रत्यक्षसंवादि। किं च सायनसंक्रमरहितस्य चान्द्रमासस्याऽधिमासत्वव्यवहारप्रसङ्गः संक्रान्तिद्वययुतस्य तस्य क्षयमासत्वव्यवहारप्रसङ्गश्च। एवं च बहुविप्लवात् चलसंक्रान्तेः मुख्यत्वेऽपि तेनैव मासवर्षगणनादिशङ्का न कार्य्या प्रागुपदर्शितपुलस्त्यवचनेन, अयनशब्दे दर्शितेन सौरागमवाक्येन, "दिनरात्रिप्रमाणानां निर्णयो न भसंक्रमात्" अत्र सकलकर्माणि" इति सिद्धान्तशिरोमणिवाक्येन च श्रौतकर्म्मविशेषे, स्नानदानादिकर्म्मस्वेव तस्य मुख्यत्वाभिधानात् न तेन सर्वव्यवहार अन्यथा तत्तद्विशेषोपादानं व्यर्थं स्यात्। एकान्तेन राशिसंक्रमानङ्गीकारे प्रागुक्तवचनजाते राशिसंक्रान्तिवत् पुण्यकालताभिधानानुपपत्तिः तथा च यथा भाषयतारापामनेकविधत्वेऽपि क्रियाविशेषे तेषां ग्राह्यता एव चलस्थिरसंक्रान्त्योरपि विषयविशेषेऽपि ग्राह्यता। किन्तु सायनसंक्रममात्रेण सर्वव्यवहारे अनेके विसंवादा पीयूषधारायां दर्शिता। तेऽप्यत्रोपदर्श्यन्ते। सायनगणनया स्वयोग्येऽपि काले यत्र कदाचिदेकनक्षत्रान्तरे नक्षत्रयोरन्तरे योपलभ्येत सूर्य्यचन्द्रयोस्तु तेजोबहुत्वाभ्यत्वतेजः परिभवाच्च नक्षत्रसंनिधावुपलम्भो यद्यपि। तथापि कदाचित् क्षीणचन्द्रस्याप्युपलम्भोऽस्त्यत एव गोचरादिविषयकदुष्टफलानि एकराशिस्थितग्रहयोगफलानि च विरुध्येरन् ग्रहणादिविसंवादश्च। तस्मान्निरयनगणनयैव सर्वोऽपि व्यवहारो युक्तः यत्तु अजागलस्तनवदित्यादि प्रागुक्तवचनम् "पुण्यत्वं राशिसंक्रान्तेः केचिदाहुर्मनीषिणः नैतन्मम मतमित्यादि वशिष्ठवाक्यञ्च तत् चलसंक्रान्तेः स्तुतिपरम् "न निन्दा निन्द्यं निन्दति किन्तु विधेयं स्तौतीति" न्यायात् अन्यथा संक्रान्तिशब्दे दर्शयिष्यमाणानां राशिसंक्रान्तिपुण्यकालताबोधकवचनानां बहूनां विप्लवापत्तेः "दिनपतिसंक्रमात् प्राक् षोडश नाड्यस्तु पुण्यकालः स्यात्। परतः षोडश नाड्यः स्नानदानकार्य्येष्विति" वशिष्ठस्यैव वचनान्तरेण विरोधः स्यात् अयनसंक्रान्तिषु तु अन्यविधस्यैव तेन पुण्यकालतोक्तेस्ततो विलक्षणविषयत्वौचित्यं तादृशवचनानाम्।

**अयनांशज** पु० अयनस्य अंशं तज्ज। प्राथमिकक्रान्तिपातारम्भस्थानातिक्रमेण जाते मासे "अयनांशजमासान्ते व्युत्क्रमेणादितो बुधे" ज्यो०तत्त्व०।

**अयव** पु० अल्पो यवस्तुल्यो वा। १पुरीषजे कृमिभेदे कृमिशब्दे विवरणम्। नास्ति यवः यवसाधनं यत्र। अद्भुतया यवहीने तिलसाधने २पितृकृत्यादौ। यु मिश्रणे कर्त्तरि अच् न०त०। ३असम्बद्धे पत्नौ ४रविचन्द्रयोर्वियोजके कृष्णपक्षे च "अयवानामाधिपत्यमिति पूर्वपक्षा वा यवा अपरपक्षा वा अयवास्ते हीदं सर्वं युवते चायुवते" इति शतब्रा०।

**अयवस्** पु० न युतः पृथग्भूतौ चन्द्रसूर्य्यौ यत्र यु—असुन् न०त०। कृष्णे मासे पक्षे। "सजूरब्दो अयवोभिः" यजु० १२७४ "यवाश्चायवाश्चार्द्धमासा उच्यन्ते" वे०दी०।

**अयशस्** विरोधे न०त०। यशोविरोधिनि अपवादे। अयशो "महदाप्नोति नरकञ्चैव गच्छति" मनु। "स्वभावलोलेत्ययशः प्रमृष्टम्" रघु। न०ब०, कीर्त्तिशून्ये त्रि० वा कप्। अयशस्क तत्रैव।

**अयशस्कर** त्रि० अयशः करोति कृ—ताच्छील्यादौ ट स्त्रियां ङीप्। अपवादकरे।

**अयशस्य** न० यशसे हितम् यत् यशस्यम् विरोधे न०त०। अपवादकरे "पैशुन्यानृतालस्यायशस्यानि हित्वा" सुश्रु०।

**अयश्चूर्ण** न०६त०। "शकलम् तरङ्गस्य त्रिफला भावयेदिति। नि क्वाथेन विहङ्गाना चूर्णं प्रथमनन्तु तत्। अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक्" सुश्रुतोक्ते लौहचूर्णघटितौषधभेदे।

**अयस्** न० एति गच्छति अयस्कान्तसान्निध्यात् इण्—असुन्। लौहे धातुभेदे तस्य स्थिरत्वेऽपि अयस्कान्तसान्निध्याच्चलनात्तथात्वम्। "अयहृदयोऽहृदय प्रतिगर्ज्जताम्" "अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्" इति च रघु "साम्नाय कांस्यरैत्यानां त्रपुणः सीसकस्य च" अय कांस्यपलाशास्तु द्वादशाक्षमयाश्च ता" इति च मनु। अयसः पाकादि अश्रुतसारशब्दे २२९ पृष्ठे दृश्यम्। अधिकं लौहशब्दे वक्ष्यते। उपचारात् २अयोनिर्म्मिते शस्त्रादावपि। "तेजोऽयसो न धाराम्" ऋ० ६,३,५, अयस अयोमयस्य परश्वादेर्धाराम्" भा०। हिरण्यस्तूपोऽयो अस्यपादा ऋ० १,१६३,६भावे असुन्। २गमने न०। 'ज्योतिरकार्हरितो

माऽयसे ऋ० १,५७,२ "अयसे गमनाय" भा० अयसा निर्म्मितम् अण् । आयसम् लौहमये कटाहादौ अयसो- विकार अण् आयस । लौहविकारे 'अयस्कान्तमिवायसम्' रघु "आयसेन तु पात्रेणेत्यादि २७८ पृष्ठे दर्शितम् । मयट् अयोमय । वेदे तु अयस्मयादि० नि० अयस्मय । लौहविकारे त्रि० स्त्रियां ङीप् । चतुरर्थ्यां छण् । आयसीय अयसाभिलष्टदेशादौ त्रि० स्त्रियां ङीप् । एति यज्ञस्थानम् इण असुन् । २यज्ञे पु० । "अयाश्चाग्नेऽस्यनभिशस्तश्च सत्यमित्त्वमया असि । अयासो यज्ञं वहास्यया नोऽर्धेहि भेषजम्" यजु० । ४हिरण्ये निघ० "रक्षोहा विश्वचर्षणिरभियोनि- मयोहतम् अभ्यनूषतायोहतम् ऋ० ९,१,२,८०, "अय इति हिरण्यनामेति भा० "हिरण्यपाणि प्रति- दोषमस्थात् अयोहनुर्यजते इति ऋ० ६,७१,१, अयोहनुर्हिरण्मयहनु" भा० ।

**अयस्कंस** पु०न० । अयोविकार कंस पात्र सत्यम् । लौहनिर्म्मिते पानपात्रे ।

**अयस्कर्णी** स्त्री अय इव कर्णोऽस्य गौ० ङीप् । लौह- तुल्यकठिनकर्णयुक्तायां स्त्रियाम् ।

**अयस्कान्त** पु० अयस् कान्त रमणीय कस्कादि- त्वात् सत्वम् । (कान्तिलोह) इति ख्याते १लौहभेदे । अयसा कान्त इष्ट सन्निधिमात्रेणाकर्षकत्वात् । सन्निधि- मात्रेण लौहाकर्षके (चुम्बक) इति ख्याते २प्रस्तरभेदे । "यमोर्यतव्यमाकृष्टमयस्कान्तेन लौहवत्" कुमा० "स चकर्ष परस्मात्तदयस्कान्तमिवायसम्" रघु । अयस्कान्तेनाकर्ष- णीयशल्यापनयनार्थे ३शल्यचिकित्साभेदे यथोक्तं सुश्रुते "अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन" ।

**अयस्काम** त्रि० अय कामयते कम–अण् उप०स० सत्वम् । लौहाभिलाषिणि । [षत्वम् । लौहकारे (कामार) ।

**अयस्कार** त्रि० अयोविकार करोति कृ–अण् उप०स०

**अयस्कुम्भ** पु० अयोविकार कुम्भ सत्वम् । लौहमये घटे ।

**अयस्कुशा** स्त्री अय सहिता कुशा शाक०त० सत्वम् । लौहसहितकुशायाम् ।

**अयस्कृति** स्त्री अयसा कृति चिकित्साप्रक्रिया सत्वम् । सुश्रु- तोक्ते महाकुष्ठचिकित्साभेदे "अथ अतऊर्द्ध्वमयस्कृतीर्व्याख्यास्यामः । तीक्ष्णलौहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्नि- प्रतप्तानि त्रिफलाशालसारादिकषायेण निर्वापयेत् षोडश- वारांस्ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्म- चूर्णानि कारयेद्घनवस्त्रपरिस्रावितानि ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत । जीर्णे यथाव्याध्य- नम्लमलवणमाहारं कुर्व्वीत । तुलामुपयुज्य कुष्ठमेहमेद- श्वयथुपाण्डुरोगोन्मादापस्मारानपहृत्य वर्षशतं जीवति तुलायां तुलायां वर्षशतगुणोत्कर्ष । एतेन सर्व्वलौहेष्वय- स्कृतयो व्याख्याताः" ।

**अयस्थूण** पु० अयोनिर्म्मित स्थूणा वा विसर्गलोप । लौह- मये १स्तम्भे स्थूणे ६त० । तथाविधगृहस्थूणायुक्ते २गृहस्थे । "अयस्थूणगृहपतीनां वै" शतब्रा० अयस्थूणा गृहपतय- स्तोपासितास्तेषाम् हीनद्रव्यकत्वादाक्षेप भा० । ७त० ३अयोमयाक्षे रथादौ त्रि० । "व्युष्टावयस्थूणमुदिता सूर्य्यस्य" ऋ० ५,६२,८, अयस्थूणमयोमयगर्त्तं रथं वेति भा० । ४ऋषिभेदे पु० तस्य गोत्रम् अण् आयस्थूण तस्य बहुषु लुक् । अयस्थूणा । गौ० पाठात् ङीप् अयस्थूणी ।

**अयस्पात्र** न० अयोमयं पात्रं सत्वम् । लौहमये पात्रे ।

**अयस्मय** त्रि० अयोविकारः अयस्+मयट् वेदे नि० भत्वम् स्त्रियां ङीप् । अयोमये लौहमये "अयस्मया एव लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं दिवि" शत०ब्रा० । "भूम्या अयस्मयम् पातु" अथ० ५,२८,९, शतस्मादिरयस्मयी अथ० ४,२७,८, छन्दसीति भाविक तेन लोकेऽपि "परिभ्रमन्तमनिश तीक्ष्णधारमयस्मयम्" भा०आ०प० "तत शक्ति गृहीत्वा तु रुक्मदण्डमयस्मयीम् भा०द्रो०प० ।

**अयस्मयादि** पु० ६त० "अयस्मयादीनि छन्दसि" पा० उक्ते भत्वादिकार्य्यार्थे निपातार्हे आकृतिगणभेदे ।

**अयाचित** न० याच+क्त न०त० । १अमृताख्यवृत्तौ "अमृतं स्यादयाचितमिति मनु" । २अप्रार्थिते त्रि० । "अया- चितोपस्थितमम्बु केवलम्" "अयाचिताहृत ग्राह्यमपि दुष्कृतकर्म्मणः" स्मृति "याचेर्दुहादिपाठात् गौणे कर्म्मणि" क्त । यस्य सकाशे न याच्यते ३तस्मिन् जने च ।

**अयाज्य** त्रि०न याजयितुमर्हः यज-णिच् कर्म्मणि यत् न०त० । पतितादौ स्मृतिनिषिद्धयाजने । ते च स्मृतौ दर्शिता यथा देवल "पतितेन सहोषित्वा जानन् संवत्सरं नर मिश्रित- स्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेत् । याजनं योनिसम्बन्ध स्वाध्याय सहभोजनम् । कृत्वा सद्य पतत्येव पतितेन न संशय" । बोधा० "संवत्सरेण पतति पतितेन न संशय याजनाध्यापनाद्यौनात् सद्यो न शयनासनात्" ।

मनुविष्णू। "संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनात् न तु यानासनाशनात्" पैठीनसिः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनाच्च स्वेकशयनासनात्"। पतिताभिधायाह यमस्तु। "यस्तैर्योनिमौखस्रौवाणां सम्बन्धानामन्यतमेन सह संवत्सरं सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात्" इयात् कुर्यात् द्वादशवार्षिकमित्यर्थः मौखं मुखसाध्यमध्यापनं स्रौवं स्रुवसाध्यं याजनमित्यर्थः अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते प्रा०वि०। हारीतः। "संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनादेकशय्यैकभोजनात्" बृहस्पतिः। "षाण्मासिके तु संयोगे याजनाध्यापनादिना। एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्"। "याजनादिकं लघुगुरुभेदेन द्विविधं भवति तत्र गुरुणा ज्ञानकृतेन याजनादिना एकैकेन सद्यःपातः तेनैवाज्ञानकृतेन वत्सरत्रयाभ्यासात्। लघुनि याजनादावज्ञानकृते संवत्सरेण पतति तस्मिन्नेव ज्ञानकृते वत्सरार्द्धेनेति व्यवस्था। तथाहि याजनं योनिसम्बन्धमित्यत्र देवलवचने पतितेन सहोषित्वा जानन्निति पूर्ववचनस्थस्य जानन्निति पदस्य सम्बन्धात् ज्ञानकृतत्वे गुरुत्वं दर्शितं गुरुयाजनाध्यापनादिकमाह देवलः। "आचार्य्याद्व्रतनियमशुश्रूषादिभिरुपयोगिविद्योपादानमध्ययनम्। तस्य चाचाराध्ययनप्रक्रमसामर्थ्यं भक्तिशीलशुश्रूषोपगताय शिष्याय प्रदानमध्यापनं, पश्वोराज्यपुरोडाशसोमौषधिचरुप्रभृतिभिः खदिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखलमुषलकुठारखनित्रयूपदारुचर्मदर्भग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैः प्रोतृहोतृब्रह्माध्वर्य्युब्रह्मादिभिः ऋत्विग्भिः काम्यनैमित्तिकानां पश्वादिपूर्व्वकाणां यथोक्तदक्षिणानां यज्ञानां समापनं यजनम् एतेन याजनं व्याख्यातम्"। तथा च ज्योतिष्टोमादियज्ञानां याजनं गुरु, पूर्त्तादिकर्मणां याजनं लघु। कौर्मम् "याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः। कृत्वा सद्यः पतत्यज्ञानात् सहभोजनमेव च"। यमः। "अवसृष्टप्रतिग्रहीतारस्तथैवायाज्ययाजकाः। नक्षत्रैर्जीव्यते यश्च सोऽन्धकारं प्रपद्यते"। वसिष्ठः। "शूद्रधान्यस्य भोक्तुश्चौरस्य च विशेषतः। न त्वेव बहुयाज्यस्य यथो पचयते बहन्"। बौधायनः। "बहुप्रतिग्राह्यस्याप्रतिग्राह्यस्य वाऽप्रतिग्राह्ययाजनं वा याजयित्वाऽप्रतिग्राह्यस्य वा प्रतिगृह्य अनाशनस्य वाऽन्नमशित्वा तरत्समन्दीयं जपेत्"। वसिष्ठः। "एतेनैव गर्हिताध्यापकयाजका व्याख्याताः" "दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते" "एतच्च शूद्रेतरस्योपपातकादिगर्हितस्य प्रश्नमहायज्ञयाजनादिविषयमिति धर्मप्रदीपः" प्रा०वि०। तत्रैव शूद्रपुरोहितयाजकाध्यापकाद्यन्तुरसौ यमः। "एतेषामेव सर्व्वेषां प्रत्यापत्तिन्तु मार्गताम्। भैक्षाशी प्रयुक्तात्मा द्विजश्चान्द्रायणं चरेत्। फलं नागह्रदे तोये ज्ञात्वैवदभिभावितम् अश्नीत्सर्गेण यन्त्रान्ते तस्मात् पापात् प्रमुच्यते। अधारणसमर्णं कृत्वा पिबेद्ब्रह्मसुवर्चलाम्। तस्योपनयनं कृत्वा व्यवहार्य्यस्तदा भवेत्" इति। फलं तत्र धन नागह्रदे गजमज्जनयोग्यह्रदे अभिभावितम् अभुक्तम्। यन्त्रान्ते व्रतान्ते।

**अयाज्ययाजन** न० अयाज्यस्य याजनम्। अयाज्यस्य पतितादेर्याजने। याजनं च लघुगुरुभेदेन द्विधेत्युक्तम् अयाज्यशब्दे। "अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः" मनुः।

**अयाज्यसंयाज्य** न० सम्+यज–णिच्–भावे यत् ६त०। अयाज्यस्य पतितादेर्याजने "सेवायायाज्यसंयाज्य,पारदार्य्यात्मविक्रय" इति मनुः।

**अयातयाम** पु० न यातो याम समयोऽस्य। १अपर्य्युषिते २अनतिक्रान्तकाले ३विगतदोषे च। "छन्दांस्येवैतत् पुनराप्याययत्ययातयामानि करोति—न वा अत्र स्तुवते न शंसन्ति तच्छन्दांस्येवैतत् पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते" इति शत० ब्रा०। "छन्दांस्ययातयामानि" भाग०। "अयातयामानि विगतदोषाणि" श्रीधरः।

**अयातु** पु० भीमो भीमसेनवत् यातुर्यातुधानः न०त०। १राक्षसभिन्ने २अहिंसके च योभायातुं यातुधानेत्याह ऋ० ७,१०४,१६, अयातुमराक्षसम् भा०। "क्रयामि देवा अयातुरग्ने। ऋ०७,३४,८ अयातु अहिंसकः भा०।

**अयाथातथ्य** न०त०। मिथ्यात्वे। अयथातथशब्दे विवृतिः।

**अयान** न० न यानं चलनं यस्य। १स्वभावे निसर्गे यथा जले शैत्य अग्नेरुष्णता न हि तत् कदापि चलतीति तस्य तथात्वम् अभावे न०त०। २गमनाभावे। यानं गमनं वाहनञ्च न०ब०। ३यानशून्ये त्रि०।

**अयानय** पु० द्यूते सर्व्वशारगन्तव्यशेषसीमाभूते घोर्य्यस्थाने व्युत्पत्तिविवरणम् मत्कृतसरलायाम् यथा आनीयन्ते शारा अस्मिन् इत्यानयः अयेन दक्षिणावर्त्तेनापसव्य-

**अयुग्मशर** पु० अयुग्माः पञ्च शरा अस्य । पञ्चवाणे कामदेवे अयुग्मवाणादयोऽप्यत्र । वाणपञ्चकं च पञ्चवाणशब्दे वक्ष्यते।

**अयुज्** त्रि० न युज्यते सजातीयेन, युज-क्विन् न०त० । अयुग्मे (बिजोड़) विषमे "अयुजि नयुगरेफतो यकारो युजि नजरगाश्च पुष्पिताग्रा" "अयुग्दान्तं स्त्रीणाम्" गोभि० । "अयुक् अयुग्मास्तरम्" स०त० रघु० "अयुक्षु तु पितॄन् सर्व्वान्" मनुः । "ववुरयुक्च्छदगुच्छसुगन्धय" माघ ।

**अयुत** त्रि० न युतः संयुक्तः सम्बद्धो वा । १असंयुक्ते २असम्बद्धे च ३दशसहस्रसंख्यायाम् न० "सूर्य्याश्विसंख्यया द्वित्रिसागरैरयुताहतैः" सू०सि० । "न विद्येत परं धर्म्मान्नाशाना-हृदितोऽयुतैः" मनुः । ४तत्संख्यान्विते च ।

**अयुतनायिन्** पु० अयुतं पुरुषमेधानामयुतं नीतवान् जि-भूते णिनि । पुरुवंश्ये महाभौमपुत्रे राजभेदे । "पूरोस्तु भार्य्या कौशल्यानाम तस्यामय जज्ञे जनमेजय" इत्युपक्रम्य "महाभौमः खलु प्रासेनजितीमुपयेमे तस्य पुत्रो जज्ञे अयुतनायी यः पुरुषमेधानामयुतमनयत् तेनास्यायुत-नायित्वम्" भा० आ०प० ।

**अयुतशस्** अव्य० अयुतमयुतम् वीप्सार्थे कारकात् शस । अयुतमयुतमित्यर्थे ।

**अयुतसिद्ध** त्रि० युतं पृथग्भूतं सन् सिद्धो न भवति न०त० । कारणकपालादेरपृथग्भूततया सिद्धे १कार्य्यद्रव्ये घटादौ तथाभूते वैशेषिकोक्ते द्रव्याश्रिते २गुणे ३कर्म्मणि च तदेतदयुतसिद्धत्वं कार्य्यद्रव्यगुणकर्म्मणां वेदान्तिभिर्निराक्रियते यथा शा०भा० । गुणकर्म्मादीनां कारणद्रव्यात्मकतां व्यवस्थाप्य द्रव्यगुणादेरयुतसिद्धत्वनिराकरणायोक्तम् "गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यात् अपृथक्कालत्वं वा अपृथक्स्वभावत्वं वा । सर्व्वथापि नोपपद्यते । अपृथग्देशत्वे तावत् स्वाभ्युपगमो विरुध्येत कथं तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते न तु पटदेशः पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः तथाचाहुः । "द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरमिति" । तन्तवो हि कारणद्रव्याणि कार्य्यद्रव्यं पटमारभन्ते तन्तुगताश्च गुणाः शुक्लादयः कार्य्यद्रव्ये पटे शुक्लादि गुणान्तरमारभन्ते इति हि तेऽभ्युपगच्छन्ति । सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत । अथापृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः सम्भवति तस्य तादात्म्येनैव प्रतीयमानत्वात् । युतसिद्धयोः सम्बन्धः संयोगः अयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव। तेषां प्राक्सिद्धस्य कार्य्यात् कारणस्यायुतसिद्धत्वानुपपत्तेः अथान्यतरापेक्ष एवायमभ्युपगमः स्यात् अयुतसिद्धस्य कार्यस्य कारणेन सम्बन्धः समवाय इति" एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन सम्बन्धो नोपपद्यते द्व्यायत्तत्वात् सम्बन्धस्य । सिद्धं भूत्वा सम्बध्येत इति चेत् प्राक्कारणसम्बन्धात् कार्यस्य सिद्धावभ्युपगम्यमानायाम् अयुतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते इतीदमुक्तं दुरुक्तं स्यात् । यथा चोत्पन्नमात्रस्याक्रियस्य कार्य्यद्रव्यस्य विभुभिराकाशादिद्रव्यान्तरैः सम्बन्धः संयोग एवाभ्युपगम्यते न समवाय एवं कारणद्रव्येणापि सम्बन्धः संयोग एव स्यान्न समवायः । नापि संयोगस्य समवायस्य वा सम्बन्धस्य सम्बन्धिव्यतिरेकेणास्तित्वे किञ्चित्प्रमाणमस्ति । सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेन्न एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयाऽनेकशब्दप्रत्ययदर्शनात् । यथैकोऽपि सन् देवदत्तो लोके स्वरूपं सम्बन्धिरूपञ्चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति । तथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति तथा सम्बन्धिनोरेव सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं न व्यतिरिक्तवस्त्वस्तित्वेनेत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य । नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्यययोः सततभावप्रसङ्गः स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात् । तथाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः सम्भवति प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात् । कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेन्न अविद्यमानार्थस्य कल्पनायां सर्व्वार्थसिद्धिप्रसङ्गात् इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमहेत्वभावात् कल्पनायाश्च स्वायत्तत्वात् प्रभूतत्वसम्भवाच्च । नच वैशेषिकैः कल्पितेभ्यः षड्भ्योऽर्थेभ्योऽन्येऽधिकाः शतं सहस्रं वार्थान कल्पयितव्या इति निवारको हेतुरस्ति । तस्माद्यस्मै यस्मै यद्यद्रोचते तत्तत् सिध्येत् । कश्चिद्दयालुः प्राणिनां दुःखबहुलः संसार एव मा भूदिति कल्पयेत् अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्

**अयोगव** पु० अय इव कठिना गौर्वाणी यस्य नि० अच्। अयोग दुष्टयोग वाति वा–क वा। "शूद्रादयोगव क्षत्ता चाण्डालश्चाधमोनृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः इति मनूक्ते शूद्रात् वैश्याया जाते प्रतिलोमजे सङ्कीर्णवर्णे। "मत्स्याघातो निषादानां त्वष्टिस्त्वायोगवस्य च" इति मनुः। अयोगवस्यायम् अण्। आयोगव तज्जातिसम्बन्धिनि त्रि० स्त्रियां ङीप्। "अवन्त्यायोगवीष्वेते जातिहीना पृथक् त्रय" मनु।

**अयोगवाह** पु० अवर्णसमाम्नायस्थलेषु "अइउण्" इत्यादिषु चतुर्दशसु नास्ति योगः पाठादिरूप सम्बन्धो येषां ते तथापि वाहयन्ति सत्त्वणत्वादिकार्य्यादिक निष्पादयन्ति वाहि: अच् कर्म्मधा०। "अनुस्वारो विसर्गश्च ᳲक ᳲपौ चैव पराश्रितौ। अयोगवाहा विज्ञेया" इति शिक्षोक्तेषु पटिटेषु अनुस्वारविसर्गादिषु

**अयोगुल** (ड) पु० गुल. गोलाकार. अयसा निर्म्मितोगुलः। (गोलीति) ख्याते लौहगुटिकायाम्। वा लस्य ड।

**अयोगू** पु० अयोलोहविकारं गच्छति कर्त्तृत्वेन गम–डा० डू। अयोगन्तरि अयस्कारे "मायाये कर्म्मारं ... अयोगूमिति"। पुरुषमेधे यजु० ३०५ 'अयोगूमयोगन्तारम्। वेद दी०।

**अयोग्य** त्रि० न०त०। १योग्यभिन्ने अनर्हे २अनुचिते च।

**अयोऽग्र** न० अयोऽग्रे मुखे यस्य। मुषले तस्य मुखे लौहावलित्वात् तथात्वम्।

**अयोघन** पु० अयांसि हन्यन्तेऽनेन हन-अप् घादेशश्च नि०। (हातुड़ीति) ख्याते लौहमुद्गरे। "अयोघनेनाय इवाभितप्तम्" रघु।

**अयोजाल** न०अयोविकारं जालम्। १लौहमये जाले अय इव दुर्भेद्यं जालं मायाऽस्य। २दुर्भेद्यकपटे असुरादौ त्रि० "अयोजाला असुरा मायिनोऽयस्मयैः" अथ० १,१८,१६।

**अयोदंष्ट्र** त्रि० अयोमयी दंष्ट्रा चक्रस्यधारा यस्य। लौहमयधारे रथादौ। "पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्" ऋ० १,८८,५, "दंष्ट्रा चक्रधारा" भा०।

**अयोदत्** त्रि० अयइव कठिनो दन्तोयस्य समासान्ते दतादेश। लौहवत्कठिनदन्तयुक्ते राक्षसादौ स्त्रियां ङीप्।

**अयोध्य** त्रि० योद्धुमशक्य युध–ण्यत् न०त०। योद्धुमशक्ये "अष्टाचक्रा नवद्वारा देवानां पूरयोध्या" अथ० १०, २,३१, इक्ष्वाकुवंश्यानां राजधान्यां स्त्री सा च सरयूतीरसन्निकृष्टा सेवनादौ मोक्षदा च। "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिका" पुरा० "चलत्प्रकाण्ड गवाक्षं तस्या मायादयोध्याम्" भट्टि।

**अयोध्याकाण्ड** न० अयोध्यायास्तत्रस्थस्तानवर्णनस्य काण्डम्। रामायणान्तर्गते अयोध्यावर्णनात्मके ग्रन्थे।

**अयोनि** स्त्री न०त०। १योनिभिन्नस्थाने। "अमानुषीषु पुरुषे उदक्यायामयोनिषु। रेत सिक्त्वा जले चैव कृच्छ्रं सान्तपन चरेत्" मनु। नास्ति योनिरुत्पत्तिस्थानं यस्य। २अजन्ये नित्ये। "जगद्योनिरयोनिस्त्वम्" कु०।

**अयोनिक** त्रि० न आम्नाता योनिरस्य कप्। अनाम्नात योनिकेषु मन्त्रेषु पयःपातादौ "नायोनिकेषु" कात्या० ६,५,२१, अयोनिकेषु यत्र "एष ते योनि" इत्ययमाम्नातो न भवति तत्र "एष ते योनि" इत्यनेनासादनं भवति "सर्वे स्विति मातुस्त्वोऽविशेषात्" कात्या० ६,५,२७ "सर्वेष्वाम्नात योनिकेषु अनाम्नातयोनिकेषु च ग्रहेषु परिमार्जनानन्तरम् एष ते योनिरिति मन्त्रेणासादनं भवत्येव" कर्क०।

**अयोनिज** न० योनेर्न जायते जन–ड। योनितोऽनुत्पन्ने- शुक्रशोणितसन्निपातादनुत्पन्ने जरायुजभिन्ने ऊष्मजादौ तथाहि "शरीरं द्विविधं योनिजमयोनिजञ्च" वै० सू०। तत्र पार्थिवादिशरीरेषु मध्ये पार्थिव शरीरं द्विविधं योनिजमयोनिजञ्चेति आप्यतैजसवायवीयशरीराणां वरुणादित्यवायुलोकेषु प्रसिद्धानामयोनिजत्वमेव शुक्रशोणितसन्निपातानपेक्षत्वात्। अयोनिजञ्च देवानामृषीणाञ्च श्रूयते हि "ब्रह्मणो मानसानन्वादय' इति। कारणमन्तरेण कथं कार्य्यमिति चेत् योने शरीरावयवकृद्विशेषाकारणत्वात् अण्डजमशकमिमयकादिशरीरे व्यभिचारात् संस्थानविशेषवत्त्वस्य चासिद्धे देवर्षिशरीराणामप्यण्डजादिशरीराणामन्याहृतत्वात्, योनिजमपि द्विविध जरायुजमण्डजञ्च, जरायुज मानुषपशुमृगाणां, गर्भाशयस्य जरायुत्वात् पक्षिसरीसृपाणामण्डज पतिल सर्पस्यापीत्वात् सर्पकीटमत्स्यादयोऽपि सरीसृपा एव यद्यपि वृक्षादयोऽपि शरीरभेदा एव भोगाधिष्ठानत्वात् न खलु भोगाधिष्ठानत्वमन्तरेण जीवन-मरण-स्वप्न-जागरणभेषज-प्रयोग-बीजसजातीयानुबन्धानुकूलोपगम-प्रतिकूलापगमादय सम्भवन्ति एहिक्षतमग्नसंरोहणे च भोगोपपादके स्फुटे एव, आगमोऽप्यस्ति। "नर्म्मदातीरसम्भूता सरलार्ज्जुनपादपा। नर्म्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्"।

"श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः", इत्यादिश्च तथापि चेष्टावत्त्वमिन्द्रियवत्त्वञ्च नोद्भिदां स्फुटतरमतो न शरीरव्यवहारः उ० वृ०॥ एतादृशामयोनिजशरीराणां प्रमाणान्तरमप्यस्ति 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" मनुना कर्मविशेषैर्नराणां तद्भावप्राप्तिरुक्ता। "गुरुं हुङ्कृत्य त्वङ्कृत्य विप्रं निर्जित्य वादतः। श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः" इत्यादि वचनेन। अयोनिजशरीरोत्पत्तिकारणमाह। "अनियतदिग्देशपूर्वकत्वात्" वै० सू०। "धर्मविशेषाच्च" "समाख्याभावाच्च" "अनियतदिग्देशाः परमाणवो धर्मविशेषजनितकर्माणस्तत्पूर्वकत्वात् अयोनिजशरीराणाम् ननु परमाणूनां कर्म विना कथं द्रव्यासमवायिकारणं संयोगमन्तरेण द्रव्योत्पत्तिरत आह। अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म तेन च कर्मणा सम्भूय परमाणवो द्व्यणुकादिक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्ते इत्यर्थः, उपलक्षणञ्चैतत् अधर्मविशेषाच्च क्षुद्रजन्तूनामूष्मजानां यातनामयानि शरीराण्युत्पद्यन्ते इत्यपि द्रष्टव्यम् देवर्षीणामयोनिजे शरीरे प्रमाणान्तरमाह। समाख्या अन्वर्था संज्ञा श्रुतिस्मृतीतिहासपुराणादिषु संज्ञाया आदित्वात् प्रसिद्धा तथाहि दुर्वासःप्रभृतयो मानसाः "अहङ्कारेभ्यः समभवदङ्गिराः" इत्यादिका, तथाऽपि गम्यते सन्त्ययोनिजानि शरीराणि देवर्षीणामिति प्रमाणान्तरमाह। सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकी तया ज्ञायते अस्त्ययोनिजं शरीरमिति नहि तदा ब्रह्मणो मातापितरौ स्तः याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः उपसंहरति। "सन्त्ययोनिजाः" "वेदलिङ्गाच्च वै० सू०" शरीरविशेषा इति शेषः उपसंहृतेऽप्यतिदार्ढ्यार्थं प्रमाणान्तरमाह। वेदो मन्त्रः स च लिङ्ग्यते गम्यतेऽनेनेति वेदलिङ्गं ब्राह्मणम्, ततोऽप्ययोनिजं शरीरं प्रतिपद्यते इत्यर्थः। तथाहि ब्राह्मणम् "प्रजापतिः प्रजा असृजत स तपोऽतप्यत प्रजाः सृजेयमिति स मुखतो ब्राह्मणमसृजत् बाहुभ्यां राजन्यमूरुभ्यां वैश्यम् पद्भ्यां शूद्रम्" इति, वेदोऽपि "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृत ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इत्यादिः, एवं योनिजमयोनिजञ्च पार्थिवशरीरमुक्तम्, आप्यं तैजसं वायवीयञ्चायोनिजमेव "ब्रह्मणो मानसा मन्वादयः" इति उप० वृत्तिः। "किन्तु देहमयोनिजमिति" भाषा० छा० उ० तद्भाष्ये च त्रैविध्यमुक्तं यथा "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति" छा० उ० "तेषां जीवाविष्टानां खल्वेषां पक्ष्यादीनां भूतानामेषामिति प्रत्यक्षनिर्देशात् तेजःप्रभृतीनां तेषां त्रिवृत्करणस्य वक्ष्यमाणत्वादर्वाक् त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः। देवताशब्दप्रयोगाच्च तेजःप्रभृतिषु इमास्तिस्रो देवता इति। तस्मात्तेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति। कानि तानीत्युच्यन्ते। आण्डजमण्डाज्जातं अण्डजमेवाण्डजं पक्ष्यादि। पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते। ते च पक्षिणां बीजम्। सर्पः सर्पाणां बीजम्। तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः भा०। २अयोनिजदेहवति नरादौ च त्रि० "रामनाम तनया-मयोनिजाम्" रघु ३विष्णौ पु०। "वाचस्पतिरयोनिजः" इति वि० सह०।

**अयोमय** त्रि० विकारे मयट् स्त्रियां ङीप्। लौहविकारे अस्त्रशस्त्रादौ। "निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः" "गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये" इति च मनुः।

**अयोमल** न० अयसो मलमिव। (लोहगू) इतिख्याते लौहमले तत्किट्टे "शताह्वसमं किट्टं मध्वाज्याभ्यामिति वार्षिकम्" अधमं मलिवर्णीयं ततो हीनं विशोधनम् यस्मात् यद्गुणं लौहं तत्किट्टं चापि तद्गुणमिति" राजनि०।

**अयोमुख** न० अयोविकाररूपं मुखं यस्य। १लाङ्गलादौ "भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्" २अयःफलकयुक्ते त्रि० भेत्स्यत्यज "कुम्भमयोमुखेन" रघु। अय इव कठिनं मुखं यस्य। ३लौहवत्कठिनमुखे विहगादौ "अयोमुखाः सूचीमुखाः अयोविलसितमुखाः पिशाची वृक्षादौ वातरंहसः" अथ० ११,१०,३। "काको भीषणकाया अयोमुखानि वयांसि जले व्युष्प्रपक्षिणश्च घनाः" भा० शा० प०। ४असुरभेदे पु०। "शङ्कुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा अयोमुखः शम्बरश्च कपिशो वामनस्तथा" हरिवं०। अयः स्वर्णं मुखमाद्यं यस्य। स्वर्णादिधातौ "अयोमुखेव विश्व" पर्वतो धातुमियुत" इति हरिवं० तत्र भव छ। अयोमुखीयः तद्भवे त्रि०।

**अयोरस** पु० ६त०। लौहमले। तामप्रमाणीकृत्य यद् दृश्यम् भवति तस्मिन् "अयोरसोपमम्" घट भावे कात्या० १५,५,२, "अयोरसः लौहविकारः

७५,१८ "अरण्योऽरममाणः" इति भा० । ४दुःखिते "मा भूम निर्ऋत्या इन्द्र ! अरणा इव" ऋ० ८,१,१२, "अरणा अरममाणाः दुःखिन." भा० ।

**अरणि** पु० ऋ–अनि । १सूर्य्ये 'गणियारीति' ख्याते २वृक्षे । ऋच्छति प्रापयत्यग्निम् । ३अग्निमन्थनकाष्ठे द्वि० । स्त्रियां ङीप् । "जाते पुत्रेऽरणिं मथितेति" श्रुति "आत्मानमरणिं कृत्वा" पुरा० "अग्न्यावारणेन्द्" ६१५६ विवरणम् "अरणीसहितं यस्य ब्राह्मणस्य तपस्विनः । मृगस्य घर्षमाणस्य विषाणे समसज्जत" भा०व०प० । "ततः पुनर्महत्मानः पाणिं वेनस्य दक्षिणम् । अरणीमिव संरब्धा ममन्थुर्जातमन्यव" इति हरिवं० "पराशरकुलोद्भूतः शुकोनाम महातपाः । भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः । व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन्" हरिव० । अरणीमधिकृत्य कृतोग्रन्थः ढक् । आरणेयम् भारतवनपर्व्वान्तर्गते अरणीहरणाधिकारेण व्यासकृतेऽवान्तरपर्वभेदे ।

**अरणिक** पु० अरणये अग्निमन्थनकाष्ठाय साधु ठन् । अग्निमन्थनकाष्ठसाधने अग्निमन्थनद्रव्ये ।

**अरणीकेतु** पु० अरणी केतुरस्य । अग्निमन्थनद्रव्ये राजनि० ।

**अरणीसुत** पु० ६त० । शुकदेवे "स दृष्ट्वा परमं देवाहरं सत्यवतीसुत" । अरणीसहिते दृष्ट्वा ममन्थाग्निचिकीर्षया । अथ रूपं परं राजन् बिभ्रतीं स्वेन तेजसा । घृताचीं नामाप्सरसमपश्यद्भगवानृषिः । ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः । अभवद्भगवान् व्यासो वने तस्मिन् युधिष्ठिर ! । सा च दृष्ट्वा तदा व्यासं कामसंविग्नमानसम् । शुकीभूत्वा महाराज ! घृताची समुपागमत् । स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् । शरीरजेनानुगतः सर्व्वगात्रातिगेन ह । स तु धैर्य्येण महता निगृह्णन् हृच्छयं मुनिः । न शशाक नियन्तुं तद् व्यासः प्रविसृतं मनः । भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः । यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया । अरण्यामेव सहसा तस्य शुक्रमवापतत् । सोऽविशङ्केन मनसा तथैव द्विजसत्तम । अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ! । शुक्रे निर्मथ्यमाने स शुको जज्ञे महातपाः । परमर्षिर्महायोगी अरणीगर्भसम्भवः । यथाऽध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन् । तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा" भा०शा०प० ।

**अरण्य** पु०न० अर्य्यते गम्यते वयसान्ते ऋ–अन्य । १वने, गर्भस्रावादि । "माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्" चाणक्य० । "सावित्रीमप्यधीयीत गत्वारण्यं समाहितः । गृहे गुरौ वारण्ये वा निवसन्नात्मवान् द्विजः" मनु । "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्" मनुना अन्ते वनस्यैव अरण्यवासविधानात्तस्य तथात्वम् । स्वार्थे कन् तत्रैव । "य एवमेव विन्दन्ति ये चारण्यकमाश्रिताः" भा०अनु० । २कट्फलवृक्षे पु० । उत्करादि० चतुरर्थ्यां छ । अरण्यीयः अरण्यसन्निकृष्टदेशादौ त्रि० । अरण्ये ऽभवः वुञ् । आरण्यक वनभवे अनुवाकभेदे "आरण्यकमधीत्य च" मनुः । अरण्यमधिकृत्य कृतः ग्रन्थः आरण्यम् रामायणान्तर्गतारण्यकाण्डे ।

**अरण्यकदली** स्त्री अरण्यस्यैव कदली । गिरिकदल्यां तस्या ग्रामादप्युत्पत्तेस्तथात्वम् । [धान्यभेदे ।

**अरण्यकाण्ड** न० रामायणान्तर्गते रामस्य वनगमनवर्णनात्मके

**अरण्यकार्पासी** स्त्री अरण्ये कार्पासी । (वनकापास) इति ख्यातायां वनकार्पास्याम् ।

**अरण्यकुलत्थिका** स्त्री अरण्यस्य कुलत्थिका । (वनकुलथीति) ख्यातायाम् वनकुलत्थिकायाम् ।

**अरण्यकुसुम्भ** पु० ६त० । वनकुसुम्भे ।

**अरण्यगज** पु० अरण्यस्थो गजः । दुर्दान्तगजे ।

**अरण्यगान** न० अरण्ये गीयते कर्म्मणि ल्युट् । सामवेदान्तर्गते अरण्ये गेये गानभेदे । [भेदे राजनि० ।

**अरण्यघोली** स्त्री अरण्यजा घोली । वनघोल्या शाकभेदे

**अरण्यचटक** पु० ६त० । वनचटके ।

**अरण्यचन्द्रिका** अरण्ये चन्द्रिकेव निष्फला द्रष्टुरभावात् । निष्फलभूषणे । लोके हि चन्द्रिका उन्मीलितनेत्रपङ्क्तिभिरालोक्यते अरण्ये तु लोकाभावेन दर्शकाभावात् दर्शनेन प्रीतिजनिका न भवतीति तस्या यथा निष्फला शोभा एवमन्यस्यापि तथा, अतएव "स्त्रीणां प्रियालोकफलो हि वेष" इति कुमा० व्याख्यायां मल्लिनाथेन "अन्यथा अरण्यचन्द्रिका स्यादित्युक्तम्" ।

**अरण्य(ण्ये)चर** त्रि० अरण्ये चरति चर–ट ७त० वा अलुक्स० । वनचरे व्याधादौ ।

**अरण्यज** त्रि० अरण्ये जायते जन–ड उप०स० । वनजाते ।

**अरण्यजार्द्रक** न० अरण्ये जायते जन–ड कर्म्म० । (वन आदा) इति ख्याते वनार्द्रके ।

**अरण्यजीर** पु० । ६त० । वनजीरके ।

**अरण्यजीव** त्रि० अरण्येन तद्भवफलादिना जीवति जीव-क । वनस्थफलादिना जीविकावति वानप्रस्थादौ ।

**अरण्यधर्म्म** पु० अरण्ये आचरणीयो धर्मः । वानप्रस्थधर्मे । स च धर्मः "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् । सन्त्यज्य ग्राम्यमाहारं सर्वञ्चैव परिच्छदम् । पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा । अग्निहोत्रं समादाय गृह्यञ्चाग्निपरिच्छदम् । ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः । मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा । एतानेव महायज्ञान्निर्वपेद्विधिपूर्व्वकम् । वसीत चर्म्म चीरं वा सायं स्नायात् प्रगे तथा । जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च । यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षाञ्च शक्तितः । अम्मूलफलभिक्षाभिरर्च्चयेदाश्रमागतान् । स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः । दाता नित्यमनादाता सर्व्वभूतानुकम्पकः । वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि । दर्शमस्कन्दयन् पर्व्व पौर्णमासञ्च योगतः । ऋक्षेष्ट्याग्रयणञ्चैव चातुर्मास्यानि चाहरेत् । उत्तरायणञ्च क्रमशो दक्षिणायनमेव च । वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैव विधिवन्निर्व्वपेत् पृथक् । देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः । शेषमात्मनि युञ्जीत लवणञ्च स्वयंकृतम् । स्थलजौदकशाकानि पुष्पमूलफलानि च । मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसम्भवान् । वर्जयेन्मधुमांसञ्च भौमानि कवकानि च । भूस्तृणं शिग्रुकञ्चैव श्लेष्मान्तकफलानि च । त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम् । जीर्णानि चैव वासांसि शाकमूलफलानि च । न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् । न ग्रामजातान्यार्त्तोऽपि मूलानि च फलानि च । अग्निपक्काशनो वा स्यात् कालपक्वभुगेव वा । अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोपि वा । सद्यः प्रक्षालको वा स्यान्माससञ्चयिकोऽपि वा । षण्मासनिचयो वा स्यात् समानिचय एव वा । नक्तञ्चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः । चतुर्थकालिको वा स्यात् स्याद्वाप्यष्टमकालिकः । चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत् । पक्षान्तयोर्व्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् । पुष्पमूलफलैर्व्वापि केवलैर्वर्त्तयेत् सदा । कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः । भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेत् सवने षूपयन्नपः । ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः । उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत् । तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः । अग्नीनात्मनि वैतानान् समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः । अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः । तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाचरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु । ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा । एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः । ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः । विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये । अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः । आ निपाताच्छरीरस्य युक्तो वार्य्यनिलाशनः । आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनूम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते" मनु० ६अ० ।

**अरण्यधान्य** न० ६त० । नीवारादौ वनधान्ये ।

**अरण्य(ण्यानाम्)पति** पु० अरण्यानां तत्रस्थानां चौराणां पतिः वा अलुक् समा० । चौराधिपे तादृशे १रुद्रे "नमो नमो निषङ्गिणे परिचरायारण्यानां पतये नमः" यजु० १६,२०, "रुद्रो हि लीलया चौरादिरूपं धत्ते यद्वा रुद्रस्य जगदात्मकत्वाच्चौरादयो रुद्रा एव ध्येयाः यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति तत्र जीवरूपं स्तेनादिशब्दवाच्यम् तदीश्वररुद्ररूपं लक्षयति यथा शाखाग्रं चन्द्रम्" वे०दी० । तस्य सर्वनियन्तृत्वेन चौराणामपि पतित्वं युक्तमेव "एष एव साधु कर्म्म कारयति तं यमुन्निनीषते एष एवासाधु कर्म्म कारयति तं यमधो निनीषते" इति श्रुत्या तस्य साध्वसाधुकर्म्मनियन्तृत्वस्योक्तेः पूर्व्वकृतकर्म्मसापेक्षत्वेन च न वैषम्यनैर्घृण्ये इत्याकरे व्यक्तम् । २अरण्यचरव्याधपतौ च ।

**अरण्यभव** त्रि० अरण्ये भवति भू-अच् । वनभवे ।

**अरण्यमक्षिका** स्त्री ६त० । (डांश) इति ख्याते दंशे ।

**अरण्यमार्ज्जार** पु० अरण्ये मार्ज्जारः । वनविड़ाले ।

**अरण्यमुद्ग** पु० ६त० । वनमुद्गे ।

**अरण्ययान** न० अरण्ये यानम् । अयोग्यकाले वनगमने "अरण्ययाने सुकरे पिता माम्" इति भट्टिः ।

**अरण्यरक्षक** पु० अरण्ये रक्षकः । वनरक्षके वनेषु लोकरक्षार्थं राज्ञा नियुक्तसैन्यभेदे ।

अरण्यराशि अरण्यभवो राशिः। "मकरादिमार्द्धसिंहो वर्षौ द्विपदोऽजवृषभौ चेति" ज्योतिषोक्ते सिंहादिराशौ।

अरण्य(ण्ये)रुदित न० अरण्ये रुदितं रोदनम् सप्तम्या वा अलुक्। फलानुपायकारकत्वोत्पत्त्यर्थे निष्फले १ रोदने २ तत्तुल्ये निष्फले वस्तुमात्रे च। लोके हि रोदने तच्छ्रवणात्सदुपायोदयानुभिः क्रियते अरण्ये रोदने तु न कश्चित् तथ्यं गमयतीति तस्य निष्फलत्वम्।

अरण्यवायस पु० ईत०। (दाँड़काक) इतिख्याते द्रोणकाके।

अरण्यवास पु० अरण्ये वासः। वनवासे।

अरण्यवासिन् त्रि० अरण्ये वसति वस–णिनि। वनवासिनि १मुन्यादौ "वने हिमगिरेर्वपाळकारण्यवासिन" इति महा०। स्त्रियां ङीप्। सा च २ [illegible] राजनि०। [वास्तूके।

अरण्यवास्तुक पु० ईत०। (वनवेतो) इति ख्याते वन-

अरण्यशालि पु० अरण्यभवः शालिः। वनभवे नीवारादौ।

अरण्यशूकर पु० अरण्यस्य शूकरः। वनवराहे। [शूरणे।

अरण्यशूरण पु० शा०त०। वनभवे (ओल) इति ख्याते

अरण्यश्वन् पु० अरण्ये श्वेव हिंस्रः। वृके।

अरण्यषष्ठी स्त्री अरण्याय गन्तुं षष्ठी। ज्यैष्ठशुक्लषष्ठ्याम्। "ज्यैष्ठे मासि सिते पक्षे षष्ठी यारण्यसंज्ञिता। व्यजनैक-करासक्तामटन्ति विपिने स्त्रियः" इति राजमा०।

अरण्याध्यक्ष पु० अरण्यरक्षणादौ अध्यक्षः। वनेषु गोकरक्ष-णार्थं राजनियुक्ते सैन्यपतिभेदे।

अरण्यानी स्त्री महदरण्यम् नि०ङीप् आनुक् च। महा-रण्ये। "यथारण्यान्याहुत्साचरत" शत०ब्रा०।

अरण्यायन न० अरण्येऽयनं वानप्रस्थधर्मैकादशाचरणस-स्यस्य यत्र। "यद् अरण्यायनमित्याचक्षते ब्रह्मचर्य्य-मेव तदिति" श्रुत्युक्ते ब्रह्मचर्य्ये। "तदरण्य पदवार्थवाविस्या-दिना तत्रैव व्युत्पत्तिर्दर्शिता।

अरण्येतिलक पु० सप्तम्या अलुक्। वनतिलभेदे।

अरण्येऽनूच्य त्रि० अरण्ये अनूच्य नियतपाठोऽस्य यस्य अलुक् समा० १ अरण्यमात्रपाठ्यमन्त्रेण शतपथब्रा-ह्मणादौ "पश्चादरण्येऽनूच्यम्" १८,४,२०। "अरण्येऽ-नूच्या शतप्याः पठनीया मन्त्रा यस्यासौ अरण्येऽनूच्य" इति कर्क०। ७त०अलुक्स०। २अरण्येऽनूच्ये (पाठ्ये) मन्त्रभेदे पु०। स च "उपच भोमचेत्यादिमन्त्र कश्चि नियतमरण्ये पठ्यते" इति कर्क०। "यागेयारण्येऽनूच्या-सोऽरण्येऽनूच्यो भवति" ता०ब्रा०। "अरण्येऽनूच्यः कवि-दतुभाक्तेन ह्रूयमानोऽपि पुरोडाशोऽरण्येऽनूच्यो भवति" ब्रा०। अयमेव पाठः श्रेयान् कर्कमते बहुव्रीहौ प्रयन्दे सप्तम्या लुक् न स्यात् अलुक्समासस्य तत्पुरुषैकविषयत्वात् अत उपचारात् तत्सम्बन्धिवाचकत्व युक्तम् "सोऽरण्येऽनूच्य मात्र एतस्य प्रजापतेः सोऽरण्येऽनूच्यो भवति" शत०ब्रा०।

अरण्यौकस् पु० अरण्ये निवासेनौको यस्य। १वन्यादौ २वान-प्रस्थे "वैकृत्यमम तावदीदयमपि स्वे वाटरण्यौकस०" मह०।

अरत त्रि० न रत। १अननुरक्ते २विरते च। [त्रि०।

अरतत्रप पु० अरता विरता त्रपा यस्य। १कुक्कुरे २लज्जाहीने

अरति पु० ऋ–अति। १क्रोधे। रम–क्तिन् न०त०। २अनवस्थितचित्ततायाम्, ३रागाभावे, "मुक्तकलाव-मरतिर्गौरवं कक्षवृद्धौ" सुश्रुत। ४ रतिविरहे, ५उद्वेगे, "स्वामोच्चरम्यकाभेन चेतसो याऽनवस्थितिः अरतिः सा" इत्येवं क्त्वे ६ इष्टवियोगात्मनोऽस्वास्थ्याभावे ७ वक्रलोपे "अयमरति हि विक्लोभ" इति। किरा० अरति ८ नायकदशाभेदे च स्त्री। "उद्वेग-महदाहस्याभागरः तमताऽरतिः। ह्रोन्मादोन्मादमूर्च्छा-सा इत्यनङ्गदशा दश" भक्ति०। सा च विषयविद्वेष करोति। न०ब०। ९रागहीने त्रि०।

अरत्नि पु० ऋ–कत्नि रति वद्धमुष्टिकरः स नास्ति यत्र। १विस्तृतकनिष्ठे बद्धमुष्टिकरे, २कफोणिमारभ्य कनिष्ठाङ्गुलि-पर्यन्तपरिमाणे। शततत प्रमाणे मात्रच्। तत्परिमिते त्रि०। "अरत्निमात्रान्तरिते देशे" भवदेव। "तावतर-तोऽग्नेर्निदध्यादरत्निमात्रे" व्यवहा०। "अरत्निमात्र युपका पल्लवैर्युक्तसम्मितैः" छन्दो०। ३ कफोणौ (कुनो) बाहोरवयवे। "भौमौ भवद्भागुपजान्वरत्नि" भट्टि०। "अथनेनाङ्गमनीयमरत्नौ सवत्स" शत०ब्रा०। ४ बाहौ बाहुर्वा अरत्निः बाहुना वीर्यं क्रियते" शत० ब्रा०। स्वार्थे कन्। अरत्निकोऽप्यत्रार्थे।

अरथि पु० अच्छति रथिना सह युद्धभूमिम् ऋ–रथिन् सारथि न०त०। सारथिभिन्ने। "अश्वसनकविप्र-मजाप्यरथोः" ऋ० ६,६६,७, "रथिः सारथि न रथि-अरथिः" ऋ०दीप० भा०। [२ मन्दगमने हते च

अरद पु० न जातो रदो यस्य। अजातदन्तस्य बाले

अरधू त्रि० राध–हिंसने, कर्मणि रक् ह्रस्वं न०त०। सत्० "निरर्हिंस्रो उपसत्वस्य तवसत्वीयोऽरधस्य रमदरोधम्" ऋ० ६,१८,४, राध–सिद्धौ रक् ह्रस्वः भा०।

२ समर्थे च "ता ह त्यद्वर्त्तिर्यदरध्रमुग्र इत्था" ऋ० ६,६२, ४, अरध्रम् समृद्धम् भा० ।

**अरन्तुक** न० कुरुक्षेत्रान्तर्गतसमन्तपञ्चकसीमाभूते स्थानभेदे । "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकम्" इति भा०व०प० ।

**अरन्धन** न० अभावे न०त० । पाकाभावे स च सिंह-सङ्क्रान्तौ कन्यासङ्क्रान्तौ च विधेय "कर्कटिमध्यात् सिंहार्के सिंहार्द्धं सिंहकन्ययो" । इत्याचारमार्त्तण्डोक्तेः तस्मिन् पर्य्युषितान्नभोजनविधानेन पाकाभावो गम्यते ।

**अरन्ध्र** त्रि० नास्ति रन्ध्रं छिद्रं यस्य । निविड़े छिद्ररहिते

**अरपस्** त्रि० नास्ति रपोऽदुरितं यस्य । पापशून्ये "शं योररपो दधातन" ऋ० १०,१५,४, "तदस्मे शं योररपो दधातन" ऋ० १०,३७,११ ।

**अरम्** अव्य० ऋ—अम् वा लस्य रत्वम् । १ वक्ष्यमाणेऽसमर्थे २ शीघ्रतायाञ्च । अरङ्गतमत्के अरङ्कृतिमत्के च उदा० । ३ अत्यर्थे च । "तस्मा अर गमाम" य० ११,५२ "अरमिद्भे स्तवासहे गीर्वणसे अरंगमाय जग्मये" ऋ०८,४६,१७ ।

**अरम** त्रि० न रम्यतेऽत्र आधारे घञ् । अधमे ।

**अरमति** स्त्री अरात्यर्था पर्य्याप्ता वा मतिः । १पर्य्याप्तबुद्धौ २दीप्तौ च । "त्वादस्मे अरमतिर्वसूयुः ऋ०७,३४,२१ । "उप त्मनारमतिर्वसूयु" का०उ० ।

**अरर** त्रि० ऋ-अरन् । १ कपाटे । "उरभ्रमररराणि द्वारपाङ्कव्य" धीर० च० । २आपिधाने ३ शरकोषे विश्व० ४ ऋषिभेदे पु० । गर्गा० यञ् । आरर्य्यस्तदपत्ये पुंस्त्री०

**अररि** पु०न० ऋच्छति ऋ+णिच् अरमियर्त्ति ऋ—इन् । कपाटे

**अररिन्द** न० रा-क्विप् इव ररिर्दाता नाश्न्योरररस्य पिपासोपशमस्य अररि पिपासोपशमं ददाति दा-ख मुम् । जले निरु० । "अधारयदररिन्दानि सुक्रतुः" ऋ०१।१३९।१० । भाष्ये भाषुक्ता अन्या च व्युत्पत्तिर्दर्शिता । 'यद्वा—अरररिरितयेतय गमनं औणादिकोऽरिप्रत्यय' । आतोऽनुपसर्गे क' पृषोदरादित्वादभिमतरूपस्वरसिद्धि । नद्दतीत्यररिन्दान्युदकानि चेष्टासदाणीत्यर्थं । 'आपो मया प्राणा' इति श्रुते । यद्वा ररिर्दानं न विद्यते तादृशं दानमितरमल्पु तदररि अन्येरदेयं लो कोपकारि भोगं ददतीत्यर्थः" इति ।

**अररिवस्** त्रि० रा—क्वसु' ररिवान् न०त० । अदातरि । "योनो अग्ने अररिवा अघायुररातीः" ऋ० १,१४७,४ ।

**अररु** पु० ऋ—अरु । १शत्रौ सि०कौ० । २आयुधे उज्ज्वलद० ३ गमनस्वभावे त्रि० अररुं, अपूर मर्त्यं परिरक्षसि मर्त्यं ऋ० १,१२९,२, 'अररुं' गमनस्वभावम् भा० ।

**अररुस्** पु० ऋ—अरुस् । अर्त्तेररुः इति" इत्यं शान्तमिति माधव । उपद्रवकर्त्तुमागते शत्रौ "मा नः शंसो अररुषो धूर्त्तिः" ऋ० १,१८,३, । "अररुष उपद्रवं कर्त्तुमस्मत्-समीपे प्राप्तस्य शत्रुरूपस्य मनुष्यस्य" भा० ।

**अरे** अव्य० अर शीघ्रं राति रा—के । शीघ्रं मनुत्तर लाभेच्छया कृते अतिव्यग्रतया सम्बोधने । तच्च नीच सम्बोधे

**अरलु** पु० अर लाति ला—कु—ऋ अरु कपिलका० रस्य ल वा । (शोना) श्योनाकवृक्षे । "अरलुत्वक्प्रियङ्गू च मधूकं दाड़िमाङ्कुरान् । अवाप्य पिष्टा दधनि यवागू साधयेद्-द्रवम्" सुश्रु० । स्वार्थे कन् "तत्रैव । कपोतवङ्कारलुको वरुण पारिभद्रक" इति सुश्रु० ।

**अरव** पु० अभावे न०त० । १रवाभावे प्रतिषेधार्थक शब्दाभावे न०ब० । २तच्छून्ये त्रि० ।

**अरविन्द** न० अरान् चक्राङ्गानीव पत्राण्यपि विन्दते विद—श । पद्मे "सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् रघुः" "रविन्दधानेऽप्यरविन्दधाने" माघ "रागेण श्रिय-मरविन्दत करायैः" माघ २सारसपक्षिणि ३ नीलोत्-पले, ४ रक्तकमले ५ ताम्रे च । [नाभे विष्णौ ।

**अरविन्दनाभ** पु० अरविन्दं नाभौ यस्य अच् समा० । पद्म-

**अरविन्दाक्ष** त्रि० अरविन्दमिव मनोहरमक्षि यस्य षच् समा० स्त्रियां ङीप् । १ पद्मसदृशनेत्रे २ पुण्डरीकाक्षे विष्णौ पु० । "पद्मनाभोऽरविन्दाक्ष" विष्णु सह० ।

**अरविन्दिनी** स्त्री अरविन्दस्य सन्निकृष्टदेशादि इनि ङीप् । १पद्मयुते देशे २पद्मलतायाञ्च । तेषां समूह इनि । ३ पद्मसमूहे ।

**अरश्मन्** त्रि० नास्ति रश्मिः रस्य वेदे वा० अनिच्समा० । प्रग्रहरज्जुरहिते रथादौ "अरश्मानो येऽरथा अयुक्ता" ऋ० ८,६,७,२,० । "अरश्मानो रज्जुरहिता." भा० ।

**अरस** पु० अभावे न०त० । १ आस्वादाभावे । रस्यते आस्वाद्यते कर्म्मणि अच् । आस्वाद्यं मधुरादि न०त० । २ मधुरादिरसभिन्ने ३ अप्रकटरसे । न०ब० । ४ रसशून्ये त्रि० "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" श्रुतिः ५ असारे त्रि० । "वृश्चिकस्यारसं विष-मरसं वृश्चिक ते विषम्" ऋ० १,१९१,१६, "अरसम-सारमिति भा०" । रस वेत्ति अच् न०त० । रसानभिज्ञे । "किमरसानाम सादरसपुरुषाणादरमरैः" नैष० ।

स्था यद्वासे तेषां तत्कालिकारयो भवन्ति तएव यद्वा यदि नैसर्गिकरिपवस्तदा अधिशत्रव नैसर्गिकसमाश्चेत् रिपवः, इति भेदः । यथोक्तं हितसमरिपुसंज्ञा ये निसर्गे निरुक्ताः अधिहितहितसमध्यास्ते ऽपि तत्कालमित्रैः । रिपुसमसुहृदाख्या ये निसर्गोपदिष्टा अधिरिपुरिपुमध्याः यत्नभिश्चिन्तनीयाः इतिराजमा०। निसर्गसमाश्च "बुध कुजेज्यास्कुजिदर्कपुत्राः शुक्रार्कजौ भौमसुरेज्यमन्दाः । शनि , कुजेज्यौ, सुरराजमन्त्रो रव्यादितोऽमी समसंश्रिताः स्युः" इत्युक्ताः यथा रवेः बुधः, चन्द्रस्य कुजगुरुशुक्रशनयः । कुजस्य शुक्रशनी, बुधस्य कुजगुरुशनयः । गुरोः शनिः , शुक्रस्य कुजगुरू शने गुरुः, एतेषां क्रमेणैते समास्त एव समा अपि तात्कालिकरिपवश्चेत् रिपव इति अवगन्तव्यम् । एतेषां बलज्ञानार्थं तत्तत् संज्ञा तथाहि अधिमित्रस्टष्टे २२।३०कला बलम् मित्रस्टष्टे १५ कला , समस्टष्टे ११।४५कला शत्रुगेहे ७।३ कलाः अधिशत्रुस्टष्टे ३।४५ कलाबलम् ।मूलं जातकादौ द्रष्टव्यम्। नैसर्गिकरिपुता तु सर्वकार्यमात्रे इति भेदः । एतच्च जातोक्तग्रहादिबलज्ञानोपयोगि। ताजके तु "दृष्टिः स्यान्नवपञ्चमे बलवती प्रत्यक्षतः स्नेहदा पादोना (४५कला ) ऽखिलकार्यसाधनकरी मेलापकाख्योच्यते । गुप्तस्नेहकरी तृतीयभवने कार्य्यस्य संसिद्धिदा लं ग्रपोना कथिता (४०कला ) तृतीयभवने षड्भागदृष्टिर्भवे (१०-कला ) । दृष्टि पादमिता (१५कला ) चतुर्थदशमे गुप्तारिभावा स्मृताऽन्योन्यं सप्तमे तथैकभवने प्रत्यक्षवैराखिला" (६०कला) इति दृष्टिविशेषमभिधाय "पञ्चन्मित्रदृशा (३,५,९,११,) सुहृत्, रिपुदृशा (१,४,७,१०,) शत्रुः । समस्त्वन्यया २ ६,८,१२ ,इति नील०उक्तदिशा तात्कालिकमित्रादि । तेन स्वापेक्षया १,४,७,१०, स्थानस्था ग्रहा रिपवः । तत्र "स्वस्वाधिकारोक्तबलं सुहृद्भे पादोनमर्द्धं समभेऽरिभेऽङ्घ्रि" नील० । राहोर्निसर्गरिपवस्तु "सूर्यं शशाङ्को धरणीसुतश्च राहो रिपुः" इत्युक्ता ज्ञेया । तत्कालिकास्तु प्रागुक्तदिशा ज्ञेयाः केतोस्तु "शुक्रशनी विपक्षौ" इत्युक्तौ ज्ञेयौ । जातके षष्ठस्थाने "षष्ठे च सर्वमित्रिपौ" इत्युक्तौ चिन्तनीयौ। ताजके तु "रिपौ मातुलमान्द्यारिचतुष्पाद्भ्ययमीक्षणा" इति नील० ताजकोक्ता चिन्तनीया । ८ तन्त्रोक्ते मन्त्रभेदे ।
तथाहि षोडशकोष्ठात्मके सिद्धादिचक्रे चतुश्चतुःकोष्ठादिक्रमेण सिद्ध , साध्य सुसिद्ध अरिरिति संज्ञा । तत्रापि तेषु चतुःकोष्ठात्मकेषु प्रत्येकं चतुर्थकोष्ठमपि अरिसंज्ञं तथा च पञ्चमकोष्ठं सप्तमकोष्ठं त्रयोदशकोष्ठं एकादशकोष्ठम् द्वादशं पञ्चदश कोष्ठं षोडशं चेति सप्तकमरिसंज्ञं तत्रारिसंज्ञकत्वात् तत्रस्थवर्णा अप्यरिसंज्ञाः । षोडशकोष्ठस्थवर्णेषु मध्ये साधकनामाक्षर यत्र तिष्ठति तस्यैवादित्व प्रकल्प्य दक्षिणावर्त्तेन सर्व्वत्र चतुर्षु चतुःकोष्ठात्मकेषु गणना तथा च प्रथमादिकोष्ठस्थाक्षरादिको मन्त्र सिद्धादिनामभाक् । यथा आद्यकोष्ठचतुष्टये प्रथमे १सिद्धसिद्ध २ द्वितीये सिद्धसाध्यः । तृतीये ३सिद्धसुसिद्धः ४ चतुर्थे सिद्धारि । द्वितीयकोष्ठचतुष्के आद्ये साध्यसिद्धः द्वितीये साध्यसाध्य । तृतीये साध्यसुसिद्धः चतुर्थे साध्यारिः । तृतीयकोष्ठचतुष्टये आद्ये सुसिद्धसिद्ध द्वितीये सुसिद्धसाध्य । तृतीये सुसिद्धसुसिद्धः चतुर्थे सुसिद्धारि । चतुर्थकोष्ठचतुष्के आद्ये अरिसिद्ध । द्वितीये अरिसाध्य तृतीये अरिसुसिद्ध चतुर्थे अर्य्यरिरिति गणना । एतच्च प्रदर्शनमात्रमुक्तम् किन्तु सर्व्वत्र यत्र कोष्ठे साधकनामाक्षर तदारभ्यैव गणना तथाच साधकनामाक्षर यत्र तिष्ठति तत्कोष्ठस्यैवादित्वं प्रकल्प्य दक्षिणावर्त्तेन गणने मन्त्राक्षरं यत्र तिष्ठति तत्पर्य्यन्तगणनाया सिद्धादिषोडशसंज्ञा तथा च ३८ पृष्ठे दर्शिताऽकथहचक्रानुसारेण प्रथमादिसंज्ञा साधकनामाक्षरादिकल्पनयैव। ततश्च सिद्धादिचक्रस्यकोष्ठानां प्रथमादिसंख्या या उक्ता सा न नियता अकथहचक्रशब्दे तन्मूलं द्रष्टव्यम् ।"अरिमन्त्र न गृह्णीयादिति"तन्त्रम् । राज्ञो विषयानन्तरस्थे ८ भूपतौ । स च द्वादशराजचक्रमध्ये आदिभूत यथोक्तं माघ २,८१ श्लोकव्याख्यायां मल्लि०। "अरिमित्रमरेर्मित्र मित्रमित्रमतः परम् । अरिमित्रस्य मित्रञ्च विजिगीषोः पुरःसराः" पञ्चेति शेष "पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः" पार्ष्णिग्राहासारः आक्रन्दासारश्चेति चत्वार इति शेष एवं नव भवन्ति विजिगीषुर्द्वयश्च 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थोव्यस्तयोर्वधे। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः" इति मध्यमोदासीनाभ्यां सह द्वादश इति । अरये साधु तस्मै हितं वा यत् । अराय्य तत्र साध्वादौ त्रि० "असौ यो अधराद्गृहस्तत्र सन्त्वराय्यः" अथ० २,१४,३,। १० प्रेरके त्रि० अरिष्टुतशब्दे उदा० ।

**अरिक्थभाज्** त्रि० रिक्थं पित्रादिदायं न भजते भज–क्विप् अस०स०। दायानर्हेषु अन्धे क्लीवपतितादौ अनंशशब्दे १४१ पृष्ठेऽस्य विवरणम् ।

**अरिगूर्त्त(र्त्त)** पु० अरये शत्रुनाशाय गूर्त्तः उद्युक्तः गुरी उद्यमे क्त तस्य न वेदे नत्वम् । शत्रुवधायोद्युक्ते "पर्षदरि गूर्त्तः सूरिः" ऋ०१,१८६,३ लोके तु अरिगूर्ण इत्येव ।

**अरिता** स्त्री अरेर्भावः तल् । शत्रुतायामभिसम्पादने ।

**अरितृ** पु० ऋ—अन्तर्भूतण्यर्थे तृच् वेदे इट् । नाविके कर्णधारे "इयर्त्ति वाचमरितेव नावम्" ऋ०९,९५,२, २४२,१, लोके तु नेट् अर्त्ता गन्तरि स्त्रियां ङीप् ।

**अरित्र** न० ऋच्छत्यनेन ऋ—इत्र । (हालि) इति ख्याते १नौकाचालनकाष्ठे । "लोलैररित्रैश्चरणैरिवाभितः" माघ "नौर्ह वा एषा स्वर्ग्या यद्धविर्धानं तस्याः पाशिज एव स्फ्यावारित्राय" शत०ब्रा० । २गमनसाधने वाहनादौ च "अरित्रं वां दिवस्पृथु" ऋ०१,४६,८, 'अरित्रं गमनसाधनं नौरूपम्' भा० । "शतारित्रां नावमातस्थिवांसम्" ऋ०१,११६।५, "शतारित्रां बह्वरित्रां ये काष्ठे पार्श्वतो बद्धे जलालोडने कृते नौः शीघ्रं गच्छति तान्यरित्राणि' भा० । अरितः पापादितस्त्रायते त्रै—क । पापादितो ३रक्षके त्रि० । "दशारित्रो मनुष्यः स्वर्षाः" ऋ०२,१८,१, "दशारित्रः अरिभ्यः पापेभ्यस्त्रायन्ते इत्यरित्रा यद्वा दशसङ्ख्याकाप्रहायस" भा० । काश्या० ठञ्ञिठौ । तत्सम्बन्धिनि आरित्रिक तस्यादौ च त्रि० ञिठ स्त्रियां ङीप् ।

**अरिदान्त** पु० अरिर्दान्तो येन निष्ठान्तत्वात् विशेष्यस्यापि परनिपात । यदुवंश्ये क्षत्रियभेदे । "रामे भारं समासज्य, युयुधाने च वीर्य्यवान् । अक्रूरे विपृथौ चापि गदे च कृतवर्म्मणि । चक्रदेवे सुदेवे च सारणे च महाबले । निदसपतौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशव । राजाधिदेवे मृदरे प्रसेने चित्रके तथा । अरिदान्ते दृढ़रथे श्वफल्के सात्यकौ पृथौ । कृष्णान्धकेषु चान्येषु मुख्येषु मधुसूदन । गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति" । इति हरिवं० ।

**अरिधायस्** त्रि० अरिभिरीश्वरैः धार्य्यते धा—असुन् ष० युट् च । ईश्वरधार्य्ये । "अदितावरिधायसो गाः" ऋ० १,१२६,५, अरिधायसः "अरिभिरीश्वरैः धार्य्यमाणाः" भा० ।

**अरिनन्दन** त्रि० अरीन् शत्रून् नन्दयति तोषयति नन्द—णिच्—ल्यु उप०स० । शत्रुसन्तोषके अजितेन्द्रियजये व्यसनासक्ते ।

**अरिन्दम** त्रि० अरीन् शत्रून् कामादीन् वा दाम्यति दमयति दम—अन्तर्भूतण्यर्थे खच् मुम् उप०स० । पराभिभावके १शत्रुतापके २जितकामादौ च । काश्या० ठञ्ञिठौ आरिन्दमिकः । तत्सम्बन्धिनि त्रि० ञिठ स्त्रियां ङीप् च ।

**अरिप्र** त्रि० रिप्रमिति निरुक्ते पापनाम तन्नास्ति यस्य । पापरहिते "अरिप्रा वृत्रहन्तमा" ऋ०८,८,९, "रिप्रमिति पापनाम" भा० । "न वो वय शुचिमरिप्रमद्य" । ऋ०७,४७,१, "अरिप्रं पापरहितम्" भा० ।

**अरिमर्द** पु० अरिं रोगरूपं शत्रुं मर्दति मर्द—अण् उ०स० १कासमर्दवृक्षे । २शत्रुतापके त्रि० ।

**अरिमर्द्दन** त्रि० अरिं मर्द्दयति मृद—ल्यु—उप०स० । १शत्रुतापके गान्दिनीपुत्रे अक्रूरसोदरे श्वफल्कस्य पुत्रे यदुवंश्ये क्षत्रियभेदे "श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत । गान्दिनी नाम तस्यै गां सदा प्रददौ पिता । तस्यां जज्ञे महाबाहुः श्रुतवानिति विश्रुत । अक्रूरोऽथ महाभागो यज्वा विपुलदक्षिण । उपमद्गुस्तथा मद्गुश्च दरश्चारिमर्द्दन । अरिक्षेपस्तथोपेक्ष शत्रुघ्नोऽथारिमर्द्दन । धर्मभृद्यतिधर्मा च गृध्रभोजान्धकस्तथा आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना" हरिवं० ।

**अरिमेजय** पु० अरिमेजयति कम्पयति एज—णिच्—खच् मुम् उ०स० । शत्रुतापके अक्रूरसोदरे यदुवंश्ये क्षत्रियभेदे अरिमर्द्दनशब्दे विवृतिः ।

**अरिमेद** पु० अरेर्विट्खदिरस्येव मेद सारः गन्धोऽस्य । (गुयेबाबला) १वृक्षभेदे । अरिरिव मेद्यति इव-त्वात् अस्य स्निह्यति मिद—अच् । २विट्खदिरे । संज्ञायां कन् । ३कृमिभेदे तद्वचनायाम् "वाह्यका पिप्पिट पुष्पो वर्णकीटोऽरिमेदक" सुश्रु० ।

**अरिला** स्त्री 'नोक्ष्यबन्धे विलासिनि । कन्दर्पमतिपदमन्वे यमकविलासिनि । अरिला नाम पयोधरधारिणि । येथ नियतसयुहृयधारिणि" "इत्युक्तलक्षणे मात्रावृत्तभेदे ।

**अरिष** पु० न इयर्त्ति मल यस्मात् ऋ-किषन् न० त० । १अपानमार्गजे रोगभेदे । न रिष्यति विच्छिद्यते रिष-क न०त० । २अविच्छिन्नधारावर्षणे न० ।

**अरिषड़ष्टक** न० षट् च अष्टौ च द्व० ततः परिमाणार्थे कन् षडष्टकम् अरिस्वामिकं षडष्टकं शाक० त० । विवाहे वर्जनीये योगविशेषे, तथाहि दम्पत्योः परस्परराश्यपेक्षया परस्परस्य राशेः षष्ठत्वेऽष्टमत्वे वा अशुभं तयो राश्योर्मित्रस्वामिकत्वे शुभं दोष शत्रुस्वामिकत्वेऽतीव दोषः । यथोक्तं 'मकरः कर्कटुर्वारितुला कन्या मेषेण सह धनस्तुलया । वर्षिटौ इमयपी

वृश्चिकमिथुने वारिविधौ। यदि कन्याष्टमे मर्त्तुर्भर्त्तुः षष्ठे च कन्यका। षडष्टकं विजानीयात् वर्ज्जित त्रिदशैरपि" ज्यो०त०। तत्र प्रतिप्रसव। "सौहृद्ये हृदुभयोर्द्वयोरपि तयोरेकाधिपत्येऽपि वा ताराचक्रस्य सुमिलमिलत्सुयदसेमार्थसमदादि। षट्काष्टे नयपञ्चमे व्ययधने योगे च पुंयोषितो प्रोत्याय सुखप्रदद्विपुष्टिजननं कार्यो विवाहः शुभः" भुज०भी०। अत्यन्तापद्विषये व्याध। "मैत्र्यादियोगैरपि षडष्टकादौ ताराविपत्प्रत्य रिनैधनाख्या। वर्ज्या विवाहे पुरुषोद्गता हि प्रीतिःपरा जन्मम तारकास्तु"। तत्रदानप्रकारम् तत्रैव। षडष्टके गोमिथुनं प्रदेयमिति"।

**अरिषड्वर्ग** पु० अरीणां वर्गः समुदायः षड्वर्गः कामक्रोधलोभमोहमदमात्सर्य्यरूपाणामन्त रात्रूणां षड्वर्गं देवीभागवतवत् विष्णुभागवतयञ्च सामिवत्येऽपि गमकतया स०। कामादिषु षट्स्वान्तरेषु रिपुषु "जितारिषड्वर्गजयेन" किरा०।

**अरिषण्य** त्रि० न रिषति हिनस्ति रिष हिंसायाम् अन्यक् न०त०। अहिंसके "त्वानेव नौ अरिषण्या तनूनाम्" ऋ०२,३६,४, "अरिषण्यावाहिंसकौ त्वानौ" भा०।

**अरिष्ट** पु० रिष—हिंसायां कर्त्तरि—क्त न०त०। १लशुने २निम्बे। "सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च "मणि रक्षायां सुश्रुत। "सुमनायाश्च पत्राणि पटोलारिष्टयोस्त-थेति" विद्रधिचिकित्सायां सुश्रुत। ३ लङ्काभिकटवर्त्तिपर्वतभेदे ४काके ५कङ्के (रीठा) इति ख्याते ६फेनिलफलकवृक्षे। "अरिष्टकस्त्रिदोषघ्नो ग्रहघ्नजिह्मगर्भपातन" वैद्य०। ७असुरभेदे। "यत्र याश्च मेन्द्रस्य कस हि विदमेव च अरिष्ट वृषभ केशि पूतनां दैत्यदारिकाम्। नाग कुवलयापीडं चाणूरं मुष्टिक तथा। दैत्यान् मानुषदेहस्थान् सूदयामास वीर्य्यवान्" हरिव०। ८अशुभे। ९तक्रे। १०सूतिकागृहे। "अरिष्टशय्यां परितोविसर्पिभा" रघुः तत्करणप्रकारस्तु "नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्तातिथ्यादौ तत्रारिष्ट माख्यापयत्तिमवैश्यशूद्राणां श्वेत-रक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातक-सर्षपदूर्वानिर्मितं यथागारं यथासंख्यं तत्रायपर्यङ्कमुपलि-प्तभित्ति सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाऽष्टहस्ता-यत चतुर्हस्तविस्तृत रक्षामङ्गलसम्पन्नं विधेयम्" सुश्रु०। तत्र प्रवेशे "रोहिण्यां स्वयपौष्णे तु स्वातीवरुणयोरपि। पुनर्वसौ पुष्यहस्तधनिष्ठासुत्तरासु च। मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारमाविशेत्" मि० चि० तारा उक्ता। एतच्च सम्भवे "प्रसूति समये प्राप्ते सद्यएव प्रवेशयेत्" वशिष्ठोक्तेः। तच्च नैर्ऋत्यां वास्तुभूमौ-कार्यम् "वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम्" वशिष्ठोक्ते "दशाहं सूतिकागारमायुधैश्च विशेषत। वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः। मुषलेन तथा द्वारि वर्णकैर्लिखितैन च" विष्णु०पु०। ११अनिष्टसूचके उत्-पाते भूमिकम्पादौ अरिष्टे त्रिविधोत्पाते" इतिज्यो० १२अनिष्टस्यासस्येषु रव्यादिग्रहेषु। १३पानेमारिष्टकाम्ये मद्ये। "रक्तारिष्टं योषिताजीर्णं पेयम्" माघः। "अरिष्टं लघु पाकेन सर्वतस्तु गुणाधिकम्। अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समा" वैद्य०। मद्ये युक्तमपि भावप्र०। नास्ति रिष्टं यतोऽधिकम् ५ब०। १४मरणचिह्ने। "रोगिणो मरणं यस्मादवश्यं भावि लक्ष्यते। तल्लक्षणमरिष्टं स्यात् रिष्टमप्यभिधीयत" इति सुरा०। न०त०। १५शुभे न० ५य०। १६ शुभदायके विधाने १७अविनाशिनि च त्रि०। १८ बलिसुते दैत्यभेदे पु० "अरिष्टो बलिपुत्रश्च वरिष्ठोऽथ चिलायुधः" हरिव० (कटकी) ख्यातायां १९ कटुकायां २०कश्यपपत्नीभेदे च स्त्री "अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खशा" इत्युपक्रम्य "कद्रुर्मुनिश्च राजेन्द्र! ताश्चपत्या-नि मे शृणु अरिष्टा तु महासत्वान् गन्धर्वानमितौजस" हरिव० रिष्टं हिंसा विरोधे न०त०। २१सुखे-मावस्थाने न० "मर्त्तवेऽयो अरिष्टतातये" ता०ब्रा०। "अरिष्ट सुखेनावस्थानं तस्य तातये विस्ताराय" भा०। स्वार्थे कन्। निम्बादौ।

**अरिष्टगातु** अरिष्ट हिंसितं गच्छति गम—तुन् नि० आदन्तादेश। अहिंसितगमने। "अरिष्टगातुः सहोता-सहोभरिः" ऋ० ५,४४,२, "अरिष्टगातुरहिंसित-गमन" भा०।

**अरिष्टताति** अरिष्टस्य करः भेदे अरिष्ट+तातिल्। सुख-करणे 'जीवातवे न मृत्यवेऽथोऽरिष्टतातये' ऋ०१०,६०, ८, "ओषधीरक्षा अरिष्टतातये" यजु०। स्त्रीत्वे तु ताय-क्तिन्। अरिष्टविस्तारे "सद्यस्त्वभवता निष्प्रमायिप्रमरिष्ट-तातिमायाकाङ्क्षे" वीरच०। क्वचिद्देशेऽपि तथा अरिष्ट-मल्ले ह्यस्य।

**अरिष्टदुष्टधी** त्रि० अरिष्टेन मरणसूचकनिमित्तेन दुष्टा धीरस्य। आसन्नमरणसूचक-निमित्तेन दुष्टमतौ

**अरिष्टनेमि** पु०दैत० कश्यपपुत्रे विनतायाः पुत्रभेदे "तार्क्ष्य-

चारिष्टनेमिव गरुड्व महाबल”। अरुणगरुडावपि वै विनतायाः सुतौः स्मृताः” भा० २तीर्थङ्करे जिनभेदे च।

**अरिष्टि** स्त्री न रिष्टिः हिंसा अभावे न०त०। हिंसाभावे। “पोषं रयीणामरिष्टिं तनूनाम् ऋ० ७, २१, ६,। ‘अरिष्टिमहिंसाम्” भा०।

**अरिष्टुत** त्रि० अरिभिः प्रेरयितृभिः स्तुत वेदे षत्वम्। प्रेरयितृभिः स्तुते यथाह “राधते विप्रमूर्त्तो अरिष्टुतः ऋ० ८,१,२२। लोके तु न षत्वम्। [स्थातरि।

**अरिष्ठ** त्रि० अरये तिष्ठते स्था—क वेदे षत्वम्। शत्रुनाशाय

**अरिह** त्रि०अरीन् हन्ति हन—ड। १शत्रुनाशके “हरिहयोऽरिहयोगविचक्षण” रघु “पौरवे नृपभेदे” अवाचीनोऽपि वैदर्भीमुपयेमे मर्य्यादां नाम तस्यामस्य जज्ञे अरिहः, अरिह अङ्गेयीमुपयेमे” भा० आ० प०।

**अरीढ** त्रि० न रीढः लीढः न आस्वादितः लस्य रः। १अनास्वादिते। ऋग्वेदे तु ढस्य ळह” अरीळ्हः इत्येव। “अरीळ्हं वत्सम्” ऋ०४,१८,१०। अरीळ्हं शत्रुभिरनभिभूतमानम् भाष्योक्ते २अर्थे च।

**अरीहण** पु० अरि हन्ति हन—अच् पूर्व्वदीर्घः। नृपभेदे अरीहणेन निर्वृत्तम् वुञ्। आरीहणकम्। चतुरर्थ्याम् उत्करा० छ। अरीहणीय ततुसन्निकृष्टदेशादौ त्रि०।

**अरीहणादि** पु० अरीहण आदिर्यस्य। निर्वृत्ताद्यर्थे विहितवुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दसमूहे। स च गण अरीहण, द्रुघण, द्रुहण भगल, उलन्द, किरण, साम्परायण क्रौष्ट्रायण, औष्ट्रायण, त्रैगर्तायन, मैत्रायण भास्त्रायण, वैमतायन। गौमतायन, सौमतायन। सौसायन, धौमतायन, सौमायन, ऐन्द्रायण,। कौन्द्रायण खाडायन, शाण्डिल्यायन, रायस्पोष, विपथ, विपाश। उद्दण्ड, उदञ्चन, खाण्डवीरण, वीरण, कशकृत्स्न, जाम्बवत शिंशपा, रैवत, बिल्व, सुयज्ञ, शिरीष, बधिर जम्बु खदिर सुशर्मन्, दलतृ, भलन्दन, खण्डु, कनल यज्ञदत्त, अरीहणादिः।

**अरुंषिका** अरुंषि मर्मस्थानान्यधिकृत्य जाता ठन् टा०, सम्। क्षुद्ररोगभेदे। “समासेन चतुश्चत्वारिंशत्क्षुद्ररोगा भवन्ति॥ तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता। कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जालगर्द्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्प कुनखोऽनुशयी विदारिका शर्कराऽर्बुद पामा विचर्च्चिका रकसा पाददारिका कदरमलसीन्द्रलुप्तो दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्मशकश्चर्मकीलस्तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकाश निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति”। अरुंषि बहुमुखानि बहुक्लेदानि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम्” “अरुंषिकाकृते रक्तं सेचयेन्निम्बवारिणा’ इति च सुश्रुत।

**अरुगण** त्रि० रुगणः विरोधे न०त०। रुग्णे रोगशून्ये “रुजदरुगणं वियवस्य सानुम्” ऋ०६,२९,२।

**अरुच्** त्रि० नास्ति रुक् कान्तिर्यस्य। प्रकाशहीने अदीप्ते “अयं रोचयदरुचोरुचानोऽयम्” ऋ०६,३९,४।

**अरुचि** पु० न रुचियत्न। सम्यगभिलाषे १भोजनादावभिलाषसम्पादके १रोगभेदे। न रुचिः सन्तोषः न०त०। २सन्तोषाभावे ‘इत्यरुचेराह’ जगदीश’। पूर्व्वोक्तानिवृत्तदोषस्य शिथिलत्वशङ्कया सन्तोषाभावादित्यर्थः। भोजनादौ ३अभिलाषाभावे च “सन्निपातज्वरश्वासकासहिक्काऽरुचिभ्रमतृट्” “स्याद्बर्विरिक्ते कफपित्तकोपो दाहोऽरुचिर्गौरवमग्निसाद” इति च सुश्रुतः।

**अरुज** त्रि० नास्ति रुक् रोगो यस्य। १रोगशून्ये २अतुलकरोगे च “कोऽरुक् कोऽरुक् कोऽरुक् “इति प्रश्ने” हितभुग्मितभुक् शाकभुक् सोऽरुगित्युक्तः “अरुक् सप्तान्यवक्षो महाव मर्म्मोत्थितश्चापि विवर्ज्जनीय’ सुश्रुतः।

**अरुज** पु० न रुजति रुज—क। (सोंदाल)इति ख्याते १वृक्षे। नास्ति रुजा यस्मात् ५ब०। २रोगाभावसाधने त्रि० “शिरेभ्य खलु सर्व्वेभ्य कर्णिकामरुजा स्थिराम्” सुश्रुत। ३ दानवभेदे पु० दानवगणनायां हरिव०“अनुह्रादो हरिहयोवराह सहारोऽरुज ”। हेव०। ४रोगशून्ये नीरोगे च त्रि०। “अपाककठिनः स्थूलोपमन्थिर्वर्त्मभवोऽरुज ” सुश्रुत। “अरुज या ह्यत स्तुममन्त क्षिप्र स्वस्त्यपि”सुश्रु०।

**अरुण** पु० ऋ—उनन्। १सूर्य्ये, २सूर्य्यसारथौ, ३गुडे, ४सन्ध्यारागे ५निःशब्दे, ६दानवभेदे ७ कुष्ठभेदे, ८पुन्नागवृक्षे। ९ अव्यक्तरागे १० कृष्णमिश्रितरक्तवर्णे च ११ तद्वति त्रि०। १२ कुङ्कुमे, १३ सिन्दूरे च न०। १४ मञ्जिष्ठायाम् १५ श्यामाकायाम्, १६ अतिविषायाम् १७ नदीभेदे १८ कटम्भरायाञ्च स्त्री। १९ त्रिवृतायां मेदि०२०इन्द्रवारुण्याम् २१गुञ्जायां राजनि० २२गुणलिकायाम् च स्त्री। तत्र सूर्य्ये ‘विभावरी यद्यरुणाय कल्पते’ कुमा०“यावत् प्रतापनिधिराक्रमते न भानुरह्नाय तावदरुणेन तमोनिरस्तम्” रघुः। “तार्क्ष्यश्चारिष्टनेमिश्च गरुड्व

महामल्लः अरुणस्तरणिश्चैव विनतायाः सुता स्मृता" हरि० "अरुणो गरुडभ्राता जवापुष्पसमप्रभः । योगात्मा स्त्रैव सर्वेषां साध्यानामधिपः स्मृत" हरिवं०। "तदुत्पत्त्यादिकथा अनूरुशब्दे" १६१ उक्ता । सूर्य्ये "संपृज्यते सरसिजैररुणांशुभिन्नैः" रघु "रागेण बालारुणकोमलेन" कुमा०। वर्णे तद्वति च "नयनान्यरुणानि घूर्णयन्" कुमा० "अरुणपुष्पाणि फाल्गुनानि" शत०ब्रा०। "दधत् स व्याप्तव्योमस्फुरत्ताराणुकारिणी" माघ । द्वादशादित्यमध्ये माघमासाधिपे २३आदित्यभेदे "अरुणो माघमासे वै" आदित्यहृदयम् विवरणमादित्यशब्दे । २४देवभेदे पु० । धूमादि० वुञ् । आरुणक तद्भवे त्रि० गुणवचनात् भावे इमनिच् अरुणिमा पु० ष्यञ् आरुण्यम् न०। तल् अरुणता स्त्री त्व अरुणत्वम् न० । रक्तादिवर्णे। अपत्ये इञ्। आरुणि जटायौ सूर्य्यपुत्रे मन्दे यमे कर्णे वैवस्वतमनौ सुग्रीवे ऋषिभेदे च । अश्विनीकुमारयोः द्वि०व० यमुनायां तपत्यां च स्त्री गुणवचनात् भृशा० अभूततद्भावे क्यङ् अरुणायते अरुणायमानः । गौरा० ङीष् । २५अरुणवर्णायां गवि स्त्री। "अरुण्योगाव उपसामिति" निरुक्तोक्तायाम् २६ ऊषायामपि स्त्री । २७ मन्दरगिरिस्थे सरोवरे तस्य चारुणजलत्वात्तथात्वम् "सरांस्येतेष्वरुणञ्च मानसं महाह्रदः श्वेतजलं यथाक्रमात्" सि०शि० । "एतेषु मन्दरादिविपुलकभागेषु गुडकुङ्कुमसिन्दूरादीनाञ्चारुणवर्णत्वात्तथात्वम् ।

**अरुणकमल** न० कृष्णसर्पवत् नित्यकर्म्मधा० । रक्तोत्पले

**अरुणदूर्वा** स्त्री कृष्णसर्पवत् नित्यसमास । रक्तदूर्व्वाभेदे, "यद्यदारान्न विन्देयु अरुणदूर्व्वा अभिषुणुयात् एष वै सोमस्य न्यङ्गो यदरुणदूर्व्वा तस्मादरुणदूर्व्वा अभिषुणुयात् यद्यरुणदूर्व्वा न विन्देयु" शत० ब्रा० ।

**अरुणप्रिया** स्त्री अरुणस्य प्रिया। सूर्य्यभार्य्यायाम् १ संज्ञायाम् २ छायायाञ्च अरुणभार्य्योद्योऽप्यत्र "तस्य भार्य्याऽभवत् देवी संज्ञा त्वाष्ट्री विवस्वतः" इति । "असहन्ती तु सा छायां सवर्णां निर्म्ममे ततः । छायामयीं तु सा संज्ञा, तस्याञ्छायासमुत्थिता । प्राञ्जलिः प्रणता भूत्वा छाया संज्ञां नरेश्वर! । उवाच किं मया कार्य्यं कथयस्व शुचिस्मिते! । स्थितास्मि तव निर्देशे शाधि मां वरवर्णिनि! । संज्ञोवाच । अहं यास्यामि भद्रं ते स्वमेव भवनं पितुः । त्वयेह भवने मह्यं वस्तव्यं निर्विकारया । इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा । सम्भाव्यास्ते न चाख्येयमिदं भगवते क्वचित् । छायोवाच । आकचग्रहणाद्देवि! आ शापाद्वैव कर्हिचित् । आख्यास्यामि मतं तुभ्यं गच्छ देवि! यथेच्छया" । इति हरिवं० । ३प्रभाकन्याभेदे च । "सुषुवेऽष्टौ महाभागा प्रभा देवर्षिपूजिता" । अनुवन्ध्या मनूकाश्च अनुग्रामरुणप्रियाम् अनुगां सुभगाश्चैव" हरिवं० अरुणवर्णं पुष्पादि प्रियमस्य । ४रक्तवर्णपुष्पप्रिये सूर्य्ये पु० ५तद्वर्णपुष्पप्रियमात्रे त्रि० ।

**अरुणप्सु** त्रि० अरुणं प्सुः रूपं (निरु०) यस्य । रक्तवर्णरूपे "ऋतावरीमरुणप्सु विभातीम्" ऋ०५,८०,१, "अरुणप्सुमरुणरूपाम्" भा० । [ २ रक्तनेत्रयुक्ते त्रि० ।

**अरुणलोचन** पु० अरुणे रक्ते लोचने यस्य । १पारावतपक्षिणि

**अरुणसारथि** पु० अरुणः गरुडाग्रजः सारथिरस्य । सूर्य्ये विवरणमनूरुशब्दे ।

**अरुणात्मज** पु० ६त० ।१जटायौ पक्षिणि । २सूर्य्यपुत्रे मन्दे ३ सावर्णे मनौ ४ कर्णे ५ सुग्रीवे ६ यमे च ७ अश्विनीकुमारयो द्वि०व० ८ यमुनायां तपत्यां च स्त्री । "लोकपत्यानि कौरव्य! संज्ञाया तपतांवर! । आदित्यो जनयामास कन्यां द्वौ च प्रजापती । स च वैवस्वतः पूर्व्वं श्राद्धदेवः प्रजापतिः । यमश्च यमुना चैव यमजौ संभूवतुः" । संज्ञायां द्वौ सुतौ सुता चेति लोकपत्यानि । "द्वितीयायां तु संज्ञायां संज्ञेयमिति चिन्तयन् । आदित्यो जनयामास पुत्रमात्मसमं तथा । पूर्व्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः । मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते । द्वितीयायां सुतस्तस्याः स विज्ञेयः शनैश्चरः" । इति सावर्णशनिश्च एतौ द्वौ सुतौ, संज्ञाया छायात्मायां द्वितीयायां सवर्णायां जातौ हरिवं० । वडवारूपधारिण्या संज्ञायाञ्च अश्विनीकुमारौ जातौ यथा तत्रैव । "वडवारूपमास्थाय वने चरति शाद्वले । स तथारूपमास्थाय स्वां भार्य्यां शुभलोचनाम् । ददर्श योगमास्थाय स्वां भार्य्यां वडवां ततः । अदृश्यां सर्व्वभूतानां तपसा नियमेन च । वडवावपुषा राजंश्चरन्तीमकुतोभयाम् । सोऽश्वरूपेण भगवांस्तां मुखे समभावयत् । मैथुनाय विचेष्टन्तीं, परपुंसोपशङ्कया । सा तन्निरवमच्छुक्रं नासिकाया विवस्वतः । देवौ तस्यामजायेतामश्विनौ भिषजांवरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति" । तपतीशब्दे तदुत्पत्ति कर्म्मोत्पत्तिः यथा "एवमुक्ता बहुविधं सान्त्वपूर्व्वं विवस्वता । सा तु संवरणारोहा कन्याऽहमिति भारत! । बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी । तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ! । मत्प्रसादाच्च ते राज्ञि! भवि-

ता दीप इत्युत । एवमुक्त्वा स भगवान् कुन्तिराजसुतां तदा । प्रकाशकर्त्ता तपन सम्बभूव तया सह । तत्र वीरः समभवत् कर्णः शस्त्रभृतां वरः । आमुक्तकवचः श्रीमान्देवगर्भः श्रियाऽन्वितः । सहजं कवचं बिभ्रत् कुण्डलोद्योतिताननः । अजायत सुतः कर्णः सर्व्वलोकेषु विश्रुतः" । भा०आ०प० । अरुणोऽनूरुरस्ति अरुणशब्दे दृश्या ।

**अरुणानुज** पु० अरुणस्यानुजः । गरुडे तस्य ततोऽनुजात-कथानूरुशब्दे दृश्या । [ रोह रणे हरिः" हरिव० ।

**अरुणावरज** पु० ६त० । गरुडे "अरुणावरज श्रीमानारु-

**अरुणित** त्रि० अरुणः क्रियते स्म अरुण+तत्करोत्यर्थे णिच्—कर्म्मणि क्त, तारकादि० इतच् वा । १रक्तवर्णीकृते २जातलोहितवर्णे च । "स्तनाङ्गरागारुणिताच्च कन्दुकात्" कुमा० ।

**अरुणोदक** न० अरुणमुदकं यस्य । १सरोवरभेदे । उदकस्य वा उदादेशे अरुणोदमप्यत्र । तच्च सरः मन्दरगिरिरूपविष्कम्भपर्व्वतस्थम् वि०पु० । २नदीभेदे स्त्री सा च "मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति । तेषां विशीर्य्यमाणानामति मधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति" इति भागवतोक्तस्वरूपा ।

**अरुणोदय** पु० अरुणस्यार्कस्य तत्किरणस्योदयो यत्र । "चतस्रो घटिका प्रातररुणोदय उच्यते" इत्युक्ते सूर्य्योदयात् प्राक् चतुर्दण्डात्मके काले ।

**अरुणोदयविद्धा** स्त्री अरुणोदयकाले विद्धा । अरुणोदयकाले दशम्या विद्धायामेकादश्याम् । "दशमीशेषसंयुक्ता यदि स्यादरुणोदये । वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम्" हेमा० भवि०पु० 'अरुणोदयविद्धा तु द्वादश्यां पारणा लाभेऽपि वैष्णवैरुपोष्या' ए०त० रघुनन्दन ।

**अरुणोदयसप्तमी** स्त्री अरुणोदयकाले पुण्यविशेषसाधनं सप्तमी । माघशुक्लसप्तम्याम् । "सूर्य्यग्रहेण तुल्या हि शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तस्यां स्नानं महाफलम् । माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । दद्यात् स्नानार्घदानाभ्यामायुरारोग्यसम्पदः । अरुणोदयवेलायां शुक्ला माघस्य सप्तमी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समेति" ति०त० भविष्य पु० ।

**अरुणोपल** पु० अरुण उपलः । (चुनीति) ख्याते पद्मरागे ।

**अरुन्तुद** त्रि० अरूंषि मर्म्माणि तुदति तुद—खश् मुम् च । मर्म्मपीड़के दुःखदायके "अरुन्तुदमिवालानमनिर्व्वाणस्य दन्तिनः" इति रघु "नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः" मनु० ।

**अरुन्धती** स्त्री न रुन्धती । १रोगमात्रावरोधिकायां लतायाम् २वशिष्ठपत्न्याम् संज्ञात्वादव्युत्पन्न "अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्" रघु "आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति" "साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती" इति च कुमा० । सा च कर्द्दमप्रजापतेरात्मजा सत्पत्नी भाग० तपसा सिद्धा मण्डलरूपेण सप्तर्षिस्थाने स्थिता । ३ तन्नामके नक्षत्रभेदे तत्स्थितिस्थानञ्च "प्रागुत्तरस्यैते सदोदयन्ते यथाक्रमा । पूर्व्वे भागे भगवान् मरीचिरपरे स्थितो वशिष्ठोऽस्मात् । तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च । पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्व्वाद्याः । तत्र वशिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी" वृ०स० । विवाहकाले सैव पत्न्यै पत्या दर्श्यते "अरुन्धतीञ्च रुद्धाहमस्मीति" गोभि० । "एवञ्च सप्तर्षिनिकटवर्त्तिनीं सूक्ष्मां तारामरुन्धतीं रुद्धाहमस्मीति मात्मनमेव पश्येत्" उ०त०रघु० । अरुन्धती यथा पत्यौ अनुरक्ता एवमेवं त्वं मयि इत्यभिप्रायेण तद्दर्शनम् । आसन्नमृत्यवश्च तां न पश्यन्ति यथोक्तम् उद्वते । "न पश्यति सप्तर्षीन् यस्तु देवीमरुन्धतीम्" ध्रुवमाकाशगङ्गां च ते वदन्ति गतायुषः" ४दक्षकन्याभेदे धर्म्मस्य पत्नीभेदे । "ददौ स दश धर्म्माय" इत्युपक्रम्य "तासां नामानि मे शृणु" इति प्रोक्ता । "अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती । सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भारत ! । धर्म्मपत्न्यो दश त्वेता इति" "पृथिवीविषयं सर्व्वमरुन्धत्यामजायत च" हरिव० । ५जिह्वायाञ्च "अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च । आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम्" इत्युक्त्वा तत्रारुन्धत्यादिशब्दानां पारिभाषिकार्थं दर्शितं यथा "अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते विष्णोः पदानि भ्रूमध्यं नेत्रे स्मो मातृमण्डलम्" काशीखण्ड० । [वशिष्ठे मुनौ

**अरुन्धतीजानि** पु० अरुन्धती जाया यस्य निङ् समा० ।

**अरुन्धतीदर्शनन्याय** पु० अरुन्धत्यादर्शनमिव दर्शनं यत्र तत् सूचको न्यायः । प्रथमस्थूलदर्शनेन सूक्ष्मदर्शनरूपे न्याये "यथाऽरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां तारामसुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति" शा०भा० ।

**अरुन्धतीनाथ** पु० ६त० । वशिष्ठे मुनौ तत्पतित्वादस्यास्य ।

अरुष त्रि० न रोषति क्रुध्यति रुष–क न०त० । १अक्रोधने । "युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः" यजु० २३.५ "असौ वा आदित्यो ब्रध्नोऽरुषः" इति श्रुति । विरोधे न०त० । २ रोचमाने । "श्वेत यद्यामरुष वर्हिता" ऋ० १,१,४, 'अरुषं रोचमानम्' भा० । ऋ–उषच्–उषन् । ३ गमनशीले अश्वादौ वेदे स्त्रियां ङीप् । "युक्ष्वा ह्यरुषी रथे" ऋ०१,१४,१२, अरुषी र्गमनशीला वडवाः" भा० । रुषा हिंसा न०ब० । ४हिंसारहिते "आगन्ति हयो अरुषस्य शेवम्" ऋ० १,७,५, "अरुषस्य हिंसारहितस्य" भा०। [स्त्री निघ०।

अरुष् त्रि०नास्ति रुट् यस्य । १अक्रोधे। गौ०ङीप्। २उषसि

अरुष्क पु० अरुर्मर्म स्थानं कायति पीडयति कै–क । मर्मस्थानेन व्रणकारकफलरसे (भेला) भल्लातकवृक्षे ।

अरुष्कर पु० अरुः करोति ट उप०स० सत्त्वम् । मर्मस्थाने व्रणकारकफलरसे १भल्लातके (भेला) २व्रणकारके त्रि० "गुल्मोदरार्शोऽरुष्करः" सुश्रु०। स्त्रियां ङीप् ।

अरुस् पु० ऋ–उसि । १अर्के, २रक्तखदिरे च । २मर्माणि न०। ३व्रणे, ४क्षते च पु०न०। "अरुर्हि मदजनस्य सम्" भा०। "अरुर्वै पुरुषोऽवच्छितः अमरुदैवैतत्करोति" शत०ब्रा०। "वहुरुजेन वदिन्वा यद्वा वा रुरुसा" अथ०५,५,४ । "अरुर्वै पुरुषस्यासीति" शत०ब्रा० उक्तो ई नेतो च । अरुस्+अभूततद्भावे च्वि सलोपः दीर्घः अरूकरोति ।

अरुहा स्त्री न किञ्चिन्मूलमाश्रित्य रोहति रुह+क । भूम्यामलक्याम् राजनि० । टाप्० लप् । आरुहीयम् तत्सन्निकृष्टदेशादौ त्रि० ।

अरूक्ष त्रि० विरोधे न०त० । स्निग्धे मसृणे, "दर्भे मयूखाष्वरूक्षतायै", शत०ब्रा० ।

अरूक्षित त्रि०न रूक्षितः विरोधे न०त०। स्निग्धे मसृणे, "अरूक्षितं रुह आ स्वे सदम्" ऋ०४,११,६, अरूक्षितं स्निग्धम्" भा० ।

अरूक्ष्ण त्रि० रूक्ष+मन् विरोधे न० त० । स्निग्धे । "यत्ते सामः परिवासम्–अरूक्ष्णस्तु ते" अथ०८,२,१६ ।

अरूप त्रि० नास्ति रूपमस्य । १रूपशून्ये २सांख्योक्ते प्रधाने वेदान्तोक्ते ३ब्रह्मणि च न० "अशब्दमस्पर्शमरूपमव्ययमिति" कठ०उ०। कुत्सितार्थे न०त०। ४कुत्सितरूपे च०।

अरूपहार्य त्रि० रूपेण न हार्यं वशीकार्यः अथ०स० । सौन्दर्यादिना अवशीकार्ये "अरूपहार्यं मदनस्य निग्रहात्" कुमा० ।

अरूष पु० ऋ–ऊषन् । १सर्पविशेषे २ सूर्य्ये च त्रि० कौ० ।

अरे अव्य० ऋ–ए । १दोषाह्वाने, २नीचसंबोधने "आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति" न वा अरे पत्युः कामाय पत्युः पतिः प्रियो भवति" शत० ब्रा० बहुशश्च पाठः । तत्र याज्ञवल्क्येन मैत्रेयीनामकपत्नीं प्रति सम्बोधनायोक्ते तस्याः स्त्रीत्वापेक्षया न्यूनत्वात् नीचसम्बोधनम् । ३अपकृतौ, ४असूयायाञ्च ।

अरेपस् त्रि० नास्ति रेपः पाप मिरुक्तोक्तं यस्य १निष्पापे "प्राप्ते रूपी पुराऽरेपाः" इति भाष्य २निर्मले च "अरेपसा तन्वा शाशदाना" ऋ०१,१२४,५, अरेपसाऽपापया निर्मलया वा" भा०।

अरेरे अव्य० अरे+वीप्सायां द्विरुक्तिः । नीचसम्बोधनादौ । २सक्रोधसम्बोधने च "अरेरे राधागर्भभारभूत । सूतापसद । किमेवमात्मसि" अरेरे वाचाट । इत्याद्यसह्यवक्रदुर्विदग्ध । शठो" इति च वेणीसंहारे ।

अरोक त्रि० रुच–दीप्तौ घञ् रोकः छिद्रं दीप्तिश्च न०ब० । १छिद्रशून्ये २दीप्तिशून्ये च । "विभाषा श्यावारोकाभ्याम्" पा०बहुव्रीहौ एतत्पूर्वकदन्तस्य दत । अरोकदत् अरोकदन्त । निविडदन्ते दतादेशे स्त्रियां ङीप् ।

अरोग त्रि० नास्ति रोगोऽस्य । रोगशून्ये "अरोगाः सर्व्वसिद्धार्थाश्चतुर्वर्षशतायुषः" मनु० । "एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः" मनु तस्य भावः ष्यञ् । आरोग्यम्। रोगाभावे न०"आयुरारोग्यविजयं देहि देवि नमोऽस्तु ते" दुर्गास्त०. "आरोग्यं विद्वत्सम्पत्तिर्गङ्गास्नानं फलमिति" पुरा० तल् अरोगता स्त्री त्व आरोग्यत्वम्" तत्रैव न० ।

अरोगण त्रि० रोगोऽस्त्यस्य वा०मत्वर्थे न न०त०। रोगशून्ये "तेषामसि त्वमुत्तममनाश्रावमरोगणम्" अथ०२,३,२ ।

अरोगिन् त्रि० न रोगी विरोधे न०त० । रोगशून्ये "यावज्जीवमरोगी स्यात्" पुरा० स्त्रियां ङीप् । "अरोगिणीं चारुमतीम्" स्मृतिः ।

अरोचक पु०न रोचयति प्रीणयति रुच+णिच्–ण्वुल् न०त०। रोगभेदे यत्र कस्मिन्नपि द्रव्ये भोजनादौ न प्रीतिस्तादृशे रोगे स च सुश्रुतोक्तः । 'दोषैः पृथक् सह च चित्तविपर्य्ययात् भक्तायनेषु हृदि चावतते प्रगाढम् । नान्ने रुचिर्भवति तं भिषजो विकारं भक्तोपघातमिह पञ्चविधं वदन्ति । हृच्छूलपीडनयुतं विरसाननत्वं वातात्मके भवति लिङ्गमरोचके तु । हृद्दाहमोषबहुता मुखतिक्तता च

मूर्च्छा सततं भवति पित्तकृते तथैव । कण्डूः गुरुत्वकफसंप्रसादतन्द्राः श्लेष्मात्मके मधुरमास्यमरोचके तु । सर्व्वात्मके पवनपित्तकफा बहूनि रूपाण्यथास्य हृदये समुदीरयन्ति । हर्षशोकभयविप्लुतचेतसस्तु चिन्ताकृते भवति सोऽप्यशुचिर्दर्शनाच्च” इति । “गुल्मान् श्लीहोदरं कासं श्वासं चकमरोचकम्” इति सुश्रुत । [शून्ये त्रि० ।

अरोदन न०अभावे न०त०। १रोदनाभावे । ब०। २क्रन्दन-

अरोधन न० अभावे न०त०। १रोधाभावे २आवरणाभावे ३प्रतिरोधके व्यापारे । न०ब० । ४तच्छून्ये त्रि० ।

अरोध्य त्रि० न रोध्यः । रोद्धुमशक्ये । [शून्ये त्रि० ।

अरोपण न०अभावे न०त०। १रोपणाभावे न०ब०। २रोप-

अरोष पु०अभावे न०त०। १क्रोधाभावे ।। न०ब० । २क्रोधशून्ये त्रि० ।

अरौद्र त्रि०न रौद्र विरोधे न०त०। १भीषणभिन्ने सौम्याकृतौ २ रागद्वेषादिशून्ये विष्णौ पु० । “अरौद्रः कुण्डली चक्री” विष्णुस० “कर्म रौद्र, रागश्च रौद्र, कोपश्च रौद्र, भय यस्य नास्ति अवाप्तसर्व्वकामत्वेन द्वेषरागादेरभावादित्यरौद्र ” भा० ।

अर्क तापे, स्तुतौ च चुरा०उभ०सक० सेट् । अर्कयति ते आर्चिकत् त । अर्कयामास अर्कित अर्कयितुम् ।

अर्क पु० अर्च–कर्म्मणि घञ् कुत्वम् । १सूर्य्ये, २इन्द्रे, ३ताम्रे, ४स्फटिके, ५विष्णौ, ६पण्डिते,(आकन्द,)इति ख्याते ७वृक्षे, (आरख) इति ख्याते ८क्वाथविशेषे च । ९अर्च्चनीये त्रि०। “आ सूर्य्यो न भानुमद्भिरर्कैः” ऋ० ६,४,६ “अर्कैः अर्च्चनीयैः” भा० “ब्रह्मादिभिः पूज्यमानैरर्च्चनीयत्वादर्कः” भा० १०ज्येष्ठे” पु० । मलगणया ११अर्काधिपे वारे १२सप्तमीतिथौ १३उत्तरफल्गुनीनक्षत्रे १४द्वादशसंख्यायाञ्च तत्र विष्णौ । “अर्को वाजसन शृङ्गी” वि०स० अर्कवृक्षे “अर्कः पलाश खदिर इति विष्णुध०। सूर्य्ये “अर्काद्विनिःसृत प्राची यद्यात्यपरदिक् शशी” सूर्य्यसि० “उपर्कादर्करोचिषाम्” माघ “स्व,९,” जगत्पूज्यमयुक्तमर्कः” माघः इन्द्रे अर्कशोदरशब्दे उदा०। अर्कस्यापत्यम् इञ् । आर्किः सूर्य्यपुत्रे यमादौ, यमुनायां,तपत्याञ्च स्त्री अपत्यात्मजशब्दे विवृतिः ।

अर्ककला स्त्री ६त० । शारदातिलके सूर्य्यस्य उपास्यत्वेनोक्ते द्वादशसंख्याके पीतवर्णे कादिडान्तवर्णभणिते कलाभेदे । ताश्च १“तपिनी २तापिनी ३धूम्रा ४मरीचि ५र्ज्वालिनी ६रुचिः । ७सुषुम्णा ८भोगदा ९विश्वा १०बोधिनी ११धारिणी १२क्षमा । काद्याश्च वसुदाः सौर्य्यो ठान्ता या द्वादशेरिताः” “वराभयकरा ध्येया श्वेतपीतारुणा क्रमात्” शार० ति० ।

अर्ककान्ता स्त्री अर्कोऽर्कबिम्ब कान्तोऽतिप्रियो यस्या कम-स । (हुडहुडिया) इति ख्याते १वृक्षे ६त०। २सूर्य्यप्रियायाम् ३संज्ञायां छायायाञ्च अपत्यप्रियाशब्दे विवृति ।

अर्कक्षेत्र न० ६त०, “कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः” ज्योतिषोक्ते सूर्य्यस्वामिके सिंहराशौ ।

अर्कचन्दन पु० अर्कस्य प्रिय चन्दन शाक०त० । रक्तचन्दने

अर्कज पु० अर्काज्जायते जन–ड ५त० । १यमादौ २तपत्यां ३यमुनायां च स्त्री ४अश्विनीकुमारयोः द्वि०व०। ५सुग्रीवे ६कर्णे च । अपत्यात्मजशब्दे विवृति ।

अर्कतनय पु० ६त० । राधासुते १कर्णे २यमादौ च । अपत्यात्मजशब्दे विवृति ।

अर्कदुग्ध न० अर्कस्य वृक्षस्य दुग्धमिव निर्य्यास । अर्कवृक्ष-निर्य्यासे श्वेतत्वेन दुग्धाकारे पदार्थे ।

अर्कनयन पु० अर्को नयनं यस्य । विराट्पुरुषे । “सूर्य्याचन्द्रमसावग्निर्यस्य नेत्राणि जज्ञिरे” पुरा० “अनन्तबाहुं शशिसूर्य्यनेत्रम्” गीता अर्क इव दुर्दर्श नयनमस्य । २दुर्दर्शलोचने त्रि०।

अर्कनामन् पु० अर्कं नामयति अनुकूलयति नम–णिच् कनि । रक्तार्कवृक्षे ।

अर्कपत्र पु० अर्के सूर्य्य इव तीक्ष्ण पत्र यस्य । १अर्कवृक्षे । अर्कपर्णोऽप्यत्र । २सुनन्दायाम् ३अर्कमूलायां स्त्री । ६त०। ४अर्कवृक्षस्य पत्रे न० “स कदाचिदर्कपत्राण्यभक्षयत् क्षुधार्त्त तैर्भक्षितैरर्कपत्रैः” भा०आ०प० “देवराजो मया दृष्टो वारिवारणमस्तके । खादन्नर्कपत्राणि” विद०सु० । “सप्त बदरपत्राणि सप्तार्कपत्राणि च शिरसि निधायेति, माघसप्तम्यां स्नाने क०त० रघु० ।

अर्कपर्ण त्रि० अर्क इव रक्तं पर्णमस्य । १मन्दारे । ६त० २अर्कवृक्षपत्रे न० । [कर्ण्णपा०।(आकन्द) २वृक्षभेदे ।

अर्कपादप पु० अर्कः अर्कवृक्ष इव तीक्ष्णः पादपः । १निम्बे ।

अर्कपुष्पी स्त्री अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः जातित्वात् ङीप् । २कटुम्भिनीवृक्षे । वा कप् । अत इत्त्वे अर्कपुष्पिकाप्यत्र ।

अर्कप्रिया स्त्री अर्कं प्रीणाति प्री–क । जवायाम् । ६त०। १सूर्य्यप्रियायां, २संज्ञादौ अपत्यप्रियाशब्दे विवृतिः ।

अर्कबन्धु पु० अर्कस्य बन्धुरिव । १गौतमे सूर्य्यवंश्ये बौद्धभेदे । तस्य तत्कुलोत्पन्नत्वात्तद्बन्धुत्वम् । अर्कस्य बन्धुरिव प्रकाशकत्वात् । २पद्मे । अर्कबान्धवोऽप्युभयत्र ।

अर्कभ न० अर्काक्रान्तं भं नक्षत्रं शा०त० । १सूर्य्याक्रान्ते नक्षत्रे हेम० । तत्स्वामिके २सिंहराशौ ३उत्तरफल्गुनीनक्षत्रे च ।

अर्कभक्ता स्त्री अर्कस्य भक्ता (हुड्हुडिया) इति ख्यातायां लतायाम् । तद्बिम्बसंपर्के एव हि तस्याः सौन्दर्य्यम् ।

अर्कमूल पु० अर्क इव सर्पाणां दुःसहं मूलं यस्याः । (ईश्वरमूल) इति ख्यातायां लतायाम् ।

अर्कलूष पु० अर्कस्य इव लूष उष्णः रसः यस्य । ऋषिभेदे विदा० अञ् । आर्कलूषः तदपत्ये पुंस्त्री० । स्त्रियां ङीप् ।

अर्कवल्लभ पु० अर्कस्य वल्लभः समानवर्णपुष्पत्वात् । रक्तपुष्पत्वेन अर्कतुल्यपुष्पे बन्धूकवृक्षे । श० । २पद्मे ।

अर्कविवाह पु० अर्कवृक्षस्य कन्यात्वेन प्रकल्पनेन विवाहः । तृतीयविवाहनिवारणार्थमर्कवृक्षस्य कन्यात्वकल्पनेन विहिते विवाहभेदे । "चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् । "आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे । शुभे दिने वा पूर्वाह्णे कुर्य्यादर्कविवाहकम्" काश्य० । "तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु । आर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानतः" शौनकः । तत्प्रकारस्तु विधानपारिजाते तृतीयविवाहप्रकरणे दृश्यः ।

अर्कवेध पु० अर्कस्य वृक्षस्येव वेधोऽत्र । तालीशपत्रे वृक्षे ।

अर्कव्रत न० अर्कस्याराधनार्थं व्रतम् । माघशुक्लसप्तम्यादौ कर्त्तव्ये अर्काराधनार्थे १व्रते । अर्कस्येव व्रतम् नियमः । "सहस्रगुणमुत्स्रष्टुमादत्ते हि रसान् रविः" इत्युक्तेर्यथा रविणा लोकहिताय रसस्य ग्रहणमेवं प्रजापालनार्थमेव राज्ञा प्रजाभ्यो यत् करस्य ग्रहणं क्रियते तादृशे "अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः । तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तदिति" मनूक्ते राज्ञः २करादानभेदे ।

अर्कसूनु पु० ६त० । १यमे २शनैश्चरे ३सुग्रीवे ४कर्णे ५[illegible] ६अश्विनीकुमारयोः द्वि०व० । ७यमुनायां तपत्याञ्च स्त्री

अर्कसोदर पु० अर्कस्य इन्द्रस्य सोदर इवोपकारकत्वात् । १ऐरावते हस्तिनि २अर्कतुल्ये द्रुमे च ।

अर्कहिता स्त्री ६त० । १अर्कभक्तायां (हुड्हुडिया) लतायाम् २सूर्य्यहितकरे त्रि० ।

अर्काश्मन् पु० अर्कस्य अश्मनः, अश्मा । सूर्य्यकान्तमणौ, स हि सूर्य्यरश्मिसंपर्कादुज्ज्वलति तत्तथात्वमर्कसन्निधित्वम् । अर्क इव रक्तः अश्मा । (चुनी) २अरुणोपले ।

अर्किन् त्रि० अर्च्यतेऽनेन मन्त्रेण अर्कोऽर्चनहेतुमन्त्रः सोऽस्यास्ति इनि । अर्चनसाधनमन्त्रयुक्ते । "इन्द्रमिदर्किणो बृहदिन्द्रमर्केभिरर्किणः" ऋ० १,७,१, 'अर्किणः अर्चनहेतुमन्त्रोपेताः' भा० "गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः" । ऋ० १,१०,१, अर्कोऽर्चनमस्त्यस्य इनि । २अर्चनयुक्ते त्रि० । "वन्दस्व मारुतं गणं त्वेषम् पनस्युमर्किणम्" ऋ० १,३८,१५ । अर्किणम् अर्चनोपेतम् भा० ।

अर्केन्दुसङ्गम पु० अर्क इन्दुश्च सङ्गच्छेते यत्र । अमावास्यायां तिथौ तद्दिने हि सूर्य्याचन्द्रमसोरेकराश्येकांशावच्छेदेन उपर्य्यधोभावेन स्थितिः ज्योतिषप्रसिद्धा 'सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः साऽमावास्येति" गोभिलेन तस्यास्तथाविधत्वकीर्त्तनात् तथात्वम् । [पद्मरागे च ।

अर्कोपल पु० अर्कस्यानुगतः उपलः । १सूर्य्यकान्तमणौ (चुनी)

अर्क्य त्रि० अर्च-कर्मणि यत् कुत्वम् । १अर्चनीये । अर्कस्यायम् यत् । आर्क्ये अर्कसम्बन्धिनि । "स एष वार्कोऽय एष तपति तस्यैतदन्नं क्यमेव चन्द्रमार्क्यम्" शत०ब्रा० ।

अर्गल स्त्रीन० अर्ज्ज-कलच् न्यङ्क्वा० कुत्वम् । १कपाटमध्यस्थेरोधके १काष्ठादिदण्डे, "बलस्य मेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती" का०प्र० । "पुरार्गलादीर्घभुजा बुभोज" रघु, "अथानपोढार्गलमप्यगारमिति" रघु । सप्तशतीस्तोत्रस्यादौ पाठ्ये २स्तोत्रविशेषे "अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् । जपेत् सप्तशतीं पश्चात्" मत्स्यसूक्तम् । ३कल्लोले, ४कपाटे च न० ५क्षुद्रार्गले स्त्री । गौरा० ङीप् स्वार्थे कन् । अर्गलिकाप्यत्रार्थे । ६विष्कम्भमात्रे रोधकमात्रे स्त्रीन० । "वार्य्यर्गलाभङ्ग इव प्रवृत्तः" रघु । "अनुगतनयमार्गामर्गलां दुर्नयस्य" माघ । [सूच्ये

अर्ग्वध पु० आरग्वध पृ० । आरग्वधे (सोंदालि)

अर्घ मूल्ये भ्वादि० पर० सक० सेट् । अर्घति आर्घीत् । आनर्घ । अर्घः । अर्घ्यः ।

अर्घ पु० अर्घ-घञ् । क्रेयवस्तुग्रहणार्थं देये रूप्यकरूपे रजतादिद्रव्यरूपे १मूल्ये । "कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः" "कुर्य्युरर्घं यथापण्यमिति" च मनुः अर्ह-करणे घञ् न्यङ्क्वादित्वात् कुत्वम् । २पूजोपचारे दूर्वाक्षतादौ । सामगैरस्य सकार क्लीबलिङ्गप्रयोगः अर्घः पुंलिङ्गोऽनियमकारश्च । अर्घाय देयम् यत् । अर्घ्यम् पूजार्थे देये जलादौ अर्घद्रव्याणि च "आपः क्षीरं

कुशाग्रञ्च दधि सर्पिः तण्डुलम्। यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः” काशीखण्डम्। “तमर्घ्यमर्घ्यादिकयादिपूरुषः” माघः “अर्घ्यमर्घ्यमिति वादिनं नृप सोऽनवेक्ष्य भरताग्रजो यतः” अर्घ्यातुपदमाशिषमिति” च रघुः। [पूज्यतमे महादेवे।

अर्घीश पु० अर्घोऽस्त्यस्य इनि देयत्वेन तेषु ईशः। सर्व्वदेवेषु

अर्घ्य त्रि० अर्घ्यते पूज्यते अर्घ-ण्यत्-ण्यन्ता० कुत्सम्-अर्घमर्हति अर्घ+यत् वा। १पूजनीये “तमर्घ्यमर्घ्यादिकयादिपूरुषः माघ”। अर्घाय देय यत्। २पूजार्थ देये जलादौ। “तामर्घ्यमर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः” कुमा०। “अनर्घ्यमर्घ्येण तमद्रिनाथ” कुमा०। अर्घं मूल्यमधिकमर्हति यत्। ३अरत्नकारतपोवनसमोद्भवे मधुनि न० तस्य बहुमूल्यत्वात्तथात्वम्।

अर्च पूजायाम् उभ० भ्वादि० सक० सेट्। अर्चति ते आर्चीत् आर्चिष्ट। आनर्च—र्चे “पितॄंश्चैवाष्टकास्वर्चेत्” मनुः। “एवं हि सर्वभूतानि ब्राह्मणोनित्यमर्चति” मनुः। “रजनुष्णोपहारेण छायामानर्च पादयोः” रघुः “वन्दितमार्चीद्वसुधाधिपानाम्” ‘समीहे मर्तुमानर्चे तेन पापाऽखिलं बलम्”। “आर्चीत् द्विजातीन् परमार्थविन्दान्” “प्रानर्च रम्यं जगदर्चनीयम्” “विप्रामर्चतया स्तुवन्” इति च भट्टिः अर्चिः अर्चक अर्चित अर्चितवान् अर्चितुम् अर्चित्वा।

अर्च पूजायां चुरा० उभ० सक० सेट्। अर्चयति ते आर्चिचत् त। अर्चयामास “दूरस्थमार्चयेदेनम् मनु’। “स्वर्गौकसामर्चितमर्चयित्वा” कुमा०।

अर्चक त्रि० अर्चति अर्च—ण्वुल्। पूजके “ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः’ मनु स्त्रियां टाप् अत इत्त्वम्।

अर्चत्रि त्रि० अर्च—भेदे बा० अत्रि। अर्चनीये। “अर्चत्रयो धुनयो न वीरा” ऋ० ६,६६,१०। “अर्चत्रयः अर्चनीयाः” भा०।

अर्चत्र्य त्रि० अर्च-भावे-अत्रि अर्चत्रिमर्चनमर्हति यत्। पूजनीये। “अर्चत्र्योमघवा नृभ्यः” ऋ०१,२४,१। “अर्चत्र्यः अर्चनीयः” भा०।

अर्चन न० अर्च-भावे ल्युट्। पूजने। “अरिष्टं नाशयेत् सर्वं पार्थिवमृदर्चनम् पुरा०। [“निरतः पुरा०।

अर्चना स्त्री पु० अर्च-युच्। पूजायाम्। “देवार्चनाभि

अर्चनीय त्रि० अर्च+अनीयर्। पूजनीये। “प्रानर्च रम्यं जगदर्चनीयम्” भट्टिः।

अर्चा स्त्री अर्च—आधारे अङ्। १प्रतिमायाम् “अभिरूप्येण चार्चाया देवः सान्निध्यमृच्छति” ति०त० पुरा०। “देवार्चामयजत् तथा ब्राह्मणानां विशेषतः” भा०त०। भावेऽङ्। २पूजायाम् “लोकः पश्यमानश्चतुर्भिर्धर्मैः ब्राह्मणं भूतमर्चया च दानेन चोज्ज्वया दयया च”। शत०ब्रा०।

अर्चि स्त्री अर्च—इन्। वह्न्यादिशिखायाम्। “यस्य त्यमो अर्चय प्रतिभद्रा अदृश्रत” ऋ०१,४८,१२, “तव ज्योतींष्यर्चयः” ऋ०८,४४,१७।

अर्चित त्रि० अर्च—क्त। १पूजिते “स्वर्गौकसामर्चितमर्चयित्वा” कुमा० २विष्णौ पु० “अर्चिष्मानर्चितः कुम्भः” विष्णु०। “सर्वलोकार्चितैश्च ब्रह्मादिभिरर्चितः” भा०।

अर्चिरादिमार्ग पु० अर्चिरादिभिस्तदभिमानिदेवैः उपलक्षितो मार्गः। देवयाने पथि उत्तरमार्गे। “तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहः, अह्न आपूर्य्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः” छा०उ०। “आतिवाहिकास्तल्लिङ्गात्” शा०सूत्रे तेषां तदभिमानिदेवतापरतेत्युक्तम् “अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदोजनाः” गीता।

अर्चिव(म)त् त्रि० अर्चिरस्त्यस्य मतुप् वेदे मस्य वः। दीप्तियुक्ते। “उद्यच्चलमर्चिवत्” ऋ०७,८,९१,२, “यत्ते पवित्रमर्चिवदग्ने” ऋ०९,६७,२४। लोके तु अर्चिमान्। स्त्रियां ङीप्।

अर्चिष्मत् पु० अर्चिर्विद्यतेऽस्य मतुप्। १सूर्य्ये, २वह्नौ ३उपदेवभेदे च “अर्चिष्मास्तुम्बुरुश्चैव भौरिव प्रदतांवरः। नेतारौ देवदेवानामेते हि तपसान्विता” हरिव० ४दीप्ते त्रि०। स्त्रियां ङीप्। सा च ५अग्निपुर्य्याम्। इन्द्रलोकसपक्षेत्र “एतस्मादक्षिणे भागे येन हस्ते तु पू शुभा। इमामर्चिष्मतीं पश्य वीतहोत्रपुरीं शुभाम्” काशीख० विवरणमग्निलोकयत्ने। ५विष्णौ पु०अर्चितमस्ते उदा०।

अर्चिस् न० अर्च—इसि। १वह्न्यादेः शिखायां “प्रदक्षिणार्चिर्व्याजेन” “प्रदक्षिणार्चिर्हविरग्निराददे” “आवीदासमनिर्वाणप्रदीपार्चिरिवोषसि” इति च रघुः २मयूखे ३वह्नौ च पु० “तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहः” छा० उ० “अग्निर्ज्योतिरहः शुक्ल” इति गीतावाक्यव्याख्या-

स्यात् अर्च्चिरत्न यष्टिः ४दीप्तिमात्रे न० "प्रथमादर्चिषामेतदनुद्गोर्ध्वमुरायुधम्" कुमा० ।

**अर्च्य** त्रि० अर्च–स्तुतौ ण्यत् न कुत्वम् चु० अर्च–यत् वा । "पूजनीये मानमर्च्यं जगदर्चनीयम्" भट्टि ।

**अर्ज** प्रतियत्ने भ्वादि० पर० सक० सेट् । अर्जति, आर्जीत् आनर्ज अर्जकः अर्जित अर्जितवान् अर्जित्वा उपार्ज्य अर्जन् । "अर्जकोऽद्ग्रयमाहारेत् । दाय० स्मृ० "न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्" मनुः । "आनर्जुर्नृभुजोऽस्त्राणि" भट्टि ।

**अर्ज्ज** संस्कारे चुरा० उभ० सक० सेट् । अर्ज्जयति ते आर्जिजत् त । "अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेत्" स्मृतिः "परस्वान्यर्जयन्नारीरन्यदीयाः पराक्रमन्" भट्टि । अर्ज्जयितुम् अर्ज्जयित्वा ।

**अर्ज्जक** पु० अर्ज्जयति रज्जुम् अर्ज्ज–ण्वुल् । (बावुइ) इति ख्याते वृक्षे, तत्त्वक्तन्तुना हि रज्जुर्निर्मीयते । अर्ज्जनकर्त्तरि त्रि० । "अर्ज्जकोऽद्ग्रयमाहरेत्" स्मृतिः ।

**अर्जन** न० अर्ज–ल्युट् । १सम्पादने स्वामित्वसम्पादके २व्यापारभेदे च । स्वामित्वहेतवश्च "सप्त वित्तागमाः धर्म्या दायोलाभः क्रयोजयः । विभागः सम्प्रयोगश्च सत्प्रतिग्रह एव च" इत्युक्ता "स्वामी रिक्थक्रयसंविभागाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः" गौ० । उक्ताश्च रिक्थादयः साधारणाः सर्ववर्णेषु । तत्राप्रतिबन्धोदायोरिक्थं यथा पित्रादिधने पुत्रादेः । अप्रतिबन्धोदायोविभागो यथा पत्नीप्रभृतेः । लब्धं प्रतिग्रहः ब्राह्मणस्य तदसाधारणं "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्ज्जयेदिति" श्रुत्या ब्राह्मणकर्त्तृकार्ज्जनस्य याजनादिकरणकत्वनियमनात् । क्षत्रियस्य विजितं विजयलब्धमसाधारणम् । निर्विष्टं भृतिः तच्च वैश्यस्य कृषिगोरक्षादिलब्धम् शूद्रस्य शुश्रूषा वेतनं चेति तयोरसाधारणम् । एवञ्च मनुना "ऋतानामभ्यसारव्यम्" इत्यादि यदुक्तं तत् सर्वं तेषामसाधारणं तदपि निर्विष्टशब्दाभिधेयम्" मिता० । शूद्रवत् वर्णसङ्करा इति स्मृतेः "शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" मनूक्तेश्च तेषां शूद्रधर्मातिदेशात्तथा । तच्चार्ज्जनं पुरुषार्थं न यज्ञार्थं तेन यद्यस्य वर्णस्योचितं तदतिरेकेणार्ज्जितेनापि धनेन क्रतुसिद्धिः पुरुषस्य परं नियमातिक्रमे दोषः इति जैमिनीये विभागसूत्रे स्थितम् । मिताक्षराकृता तस्य न्यायमर्थं एवं विवृतं । "यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वं तदा-नियमार्जितेनैव द्रव्येण क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः इति पूर्व्वपक्षे सिद्धान्ते तु अर्ज्जननियमस्य पुरुषार्थत्वात् तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति पुरुषस्यैव नियमातिक्रमाद्दोषः इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम् अन्यथा क्रतुसिद्ध्यभावात् । नचैतावता चौर्य्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्र तत्र स्वत्वप्रसिद्ध्यभावात् व्यवहारविसंवादाच्च" इति । एवञ्च प्रतिग्रहाद्युपायकं स्वत्वं लौकिकमेव अतएव "सप्त वित्तागमा धर्म्याः" इत्यनेन तेषां धर्म्महेतुत्वमात्रमुक्तं न तु भृतिप्रभृतीनां तत्रानुक्तानां स्वत्वाहेतुत्वमपि "अर्जयितृव्यापारोऽर्ज्जनमिति" दायभा० । "अर्जनं स्वत्वं नापादयतीति" मिता० । "कृषिमाद्यर्जनं वित्तम्" मनुः । "अर्थानामर्जने दुःखमिति" नीति० । अर्जधातोः प्रतियत्नार्थकतया विद्यमानपदार्थस्यैव स्वत्वसम्पादनार्थकत्वेन तस्य तथात्वम् ।

**अर्जुन** पु० अर्ज्ज–उनन् । स्वनामख्याते १वृक्षे, "सोऽकृष्णान्निःसृतः कृष्णः कर्षमाण उलूखलम् । यमलाभ्यां प्रवृद्धाभ्यामर्ज्जुनाभ्यां निवारितः । मध्यान्निष्क्रामतस्तयोः शिशुः कर्षन्नुलूखलम् । तत्तस्य कर्षतो बद्धं तिर्य्यग्गतमुलूखलम् । लग्नं ताभ्यां समूलाभ्यामर्ज्जुनाभ्यां चकर्ष सः । तावर्ज्जुनौ कृष्यमाणौ तेन बालेन रंहसा । समूलविटपौ भग्नौ स च मध्ये जहास वै" इति हरिवं० । "कदम्बसर्जार्ज्जुनकेतकीः" ऋतु० । २मध्यमपाण्डवे शुद्धचरितत्वात् मध्यमपाण्डवस्यार्ज्जुनत्वम् । "पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः सम । करोमि कर्म शुद्धञ्च तेन मामर्ज्जुनं विदुः" भा० वि० प० उत्तरं प्रति तस्य स्वनामव्युत्पत्तिकथनम् । स च पाण्डोः क्षेत्रे कुन्त्या शक्रेण जनितः "एवमुक्ता ततः शक्रमाजुहाव यशस्विनी अथाजगाम देवेन्द्रो जनयामास चार्ज्जुनम् । जातमात्रे कुमारे तु वागुवाचाशरीरिणी । महागम्भीरनिर्घोषा नभोनादयतीव ह । शृण्वतां सर्वभूतानां तेषां चाश्रमवासिनाम् । कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम् । कार्त्तवीर्य्यसमः कुन्ति ! शिवतुल्यपराक्रमः । एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति । अदित्या विष्णुना प्रीतिर्यथाऽभूदभिवर्द्धिता । तथाविष्णुसमः प्रीतिं वर्द्धयिष्यति तेऽर्ज्जुन" । भा० आ० प० । "पार्थं कर्णमधाय मार्गणगणान् यामर्ज्जुन सन्दधे" वेणी० ३हैहयाधिपे कार्त्तवीर्य्ये, "एतस्मिन्नेव काले तु कृतवीर्य्यसुतोबली ।

एभ्यात् रामायाभ्यर्थितो ददौ” रघु० “अग्लोपित्वं स्वामित्वं चादन्तस्य प्रयोजनम् यत्र स्येते न विद्येते तत्राग्लोपविकल्पनम्। तद्वत्वादन्त्यदीर्घस्य पुक् चेत्यङ्गापयत्वमि”कामधेनूक्तेः पुक्-दीर्घञ्च अर्थापयते। सम्+समर्थने समर्थयते समर्थनञ्च प्रमाणेन व्यवस्थापनम्। कु पीडने कदादेशः. कदर्थयते। अभि+आभिमुख्येन प्रार्थने अभ्यर्थनीयः। “अभ्यर्थनाभङ्गभयेन साधुः” कुमा०। प्रति+प्रतिकूलाचरणे प्रत्यर्थी। “प्रत्यर्थीभूतामपि तां समाधे” कुमा०।

अर्थ पु० अर्थ भावकर्मादौ यथायथम् अच्। १अभिधेये २शब्दस्य बोध्ये पदार्थे च “तद्दोषौ शब्दार्थावनलङ्कृती पुनः क्वापि” का०प्र० आलङ्कारिकमते स च अर्थस्त्रिविधः वाच्यो लक्ष्योव्यङ्ग्यश्चेति भेदात्। “अर्थोवाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः। वाच्योऽर्थोऽभिधया बोध्यो लक्ष्योलक्षणया मतः। व्यङ्ग्योव्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तय” सा०द०। ताश्च तत्तच्छब्दे वक्ष्यन्ते। अन्यमते “तात्पर्य्याख्या वृत्तिमाहुः पदार्थान्वयबोधने। तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे”। इति तात्पर्य्यप्रतिपाद्योऽप्यपरः अर्थभेदः। स च अभिहितान्वयशब्दे विवृतः। ३धने। तस्य सर्व्वैरर्थनीयत्वात्तथात्वम् “अजरामरवत् प्राज्ञोविद्यामर्थाञ्च चिन्तयेत्” “अर्थस्योपार्ज्जने क्लेशस्ततोऽपि परिरक्षणे” नीति०। सचार्थस्त्रिविधः शुक्लः शबलः कृष्णश्चेति भेदात् यथा “अथ स्वहास्त्रिविधस्त्रिविधोऽर्थो भवति। शुक्लः शबलोऽसितश्चेति। शुक्लेनार्थेन यदैहिकं करोति तद्देवमासादयति। यच्छबलेन तन्मानुष्यम्, यत्कृष्णेन तत्तिर्य्यक्त्वम्॥ स्ववृत्त्युपार्जितं सर्व्वं सर्व्वेषां शुक्लम्। अनन्तरवृत्त्युपात्तं शबलम्। अन्तरितवृत्त्युपात्तञ्च कृष्णम्। क्रमागतं प्रीतिदायं प्राप्तञ्च सह भार्य्यया। अविशेषेण सर्व्वेषां धनं शुक्लं प्रकीर्त्तितम्॥ उत्कोचशुल्कसम्प्राप्तमविक्रेयस्य विक्रये। कृतोपकारादाप्तञ्च शबलं समुदाहृतम्॥ पार्श्विकद्यूतचौर्य्यार्त्तं प्रतिरूपकसाहसैः। व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्॥ यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः। तथाविधमवाप्नोति स फलं प्रेत्य चेह च” विष्णु०सू०। ४प्रयोजने इष्टे। प्रयोजनञ्च इच्छाविषयः। तच्च गौणमुख्यभेदेन द्विविधम् तत्र अन्येच्छानधीनेच्छा जायते तत् मुख्यं यथा सुख दुःखाभावञ्च तयोरिच्छाया अन्येच्छानधीनत्वात्। साक्षात् परम्परया वा तत्साधनं तु गौणं तत्र सुखदुःखाभावेच्छयैव इच्छोदयात् गौणत्वम्। प्रयोजनञ्च यद्यपि नानाविधम् तथापि शास्त्रकारैः प्राधान्येन धर्म्मार्थकाममोक्षरूपाणि चत्वार्य्येवाङ्गीकृतानि तत्रैव सर्व्वप्रयोजनानामन्तर्भावात्। तएव चत्वारः पुरुषार्थाः पुरुषेणैष्यमाणत्वात्। सांख्यास्तु स्वर्गापवर्गात्मकं द्विविधं पुरुषार्थमाहुः पुरुषस्य प्रयोजनमुद्दिश्य प्रकृतेः प्रवर्त्तनात्। एवं चतुर्विधे द्विविधे वा पुरुषार्थे मतभेदेन स्थिते तेषु मध्ये मोक्षएव परमपुरुषार्थः “अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः” सा०सू०। “इह खलु धर्म्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षएव परमपुरुषार्थः” वे०प०। तु आत्यन्तिकनिवृत्तिरूपस्य मुख्यप्रयोजनस्य अन्येच्छानधीनेच्छाविषयत्वात् प्राधान्यम्। धर्म्मार्थकामास्तु तत्साधनानि तत्रापि धर्म्मोऽर्थसाधनम् अर्थः कामस्य साधनमित्यवान्तरभेदः “इक्ष्वाकूणां दुरापेऽर्थे तदधीना हि सिद्धयः” रघु। “ज्ञातार्थोज्ञातसम्बन्धः श्रोतुं श्रोता प्रवर्त्तते” इत्यत्रार्थपदेनाभिधेयप्रयोजनयोर्ग्रहणम् “कस्यार्थकामौ वद पीडयामि” “अप्यर्थकामौ तस्यास्तां धर्म्म एव मनीषिणः” रघु। ५निमित्ते “अतोऽर्थाच्च प्रमाद्यन्ति प्रमदासु विपश्चितः” मनुः अर्थात् हेतोः कुल्लू०। “अर्थोऽयमर्थान्तरलभ्य एव” कुमा०“अर्थान्तरं कारणान्तरमिति” मल्लि०। निमित्तस्य कारणत्वेऽप्यस्य तत्र निमित्तार्थेन “अर्थेन तु नित्यसमासो विशेष्यनिघ्नता चेति” वार्त्तिकोक्तेः नित्यचतुर्थीसमासः। द्विजार्थं पयः। द्विजार्था यवागूः। यूपार्थं दारु। भाष्यकृता तु यूपार्थं दारु इत्यादौ षष्ठीतत्पुरुषोक्तिरपि साधुः स्वरे विशेष इत्युक्तम् “अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः” गीता “मदर्थमपि कर्म्माणि कुर्व्वन्नवाप्स्यसि” गीता “मदर्थसन्देशमृणालमन्थरः” नैष०। “परलोकसहायार्थं सर्व्वभूतान्यपीडयन्” “तस्मात्कर्म्म सहायार्थं” इति च मनुः। कर्म्मणि—घञ्। ६विषये शब्दादौ। “इन्द्रियाणीन्द्रियार्थेभ्यः गीता” “इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः” क०उ०। ७गेयवस्तुनि “इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्” गौ० सू०। अत्रार्थः घटादिवस्तुमात्रम्। राध उपाये ८तन्त्रावापादौ अर्थचिन्तायाञ्च उदा० ९वस्तुस्वभावे यथार्थम्। १०निवर्त्तनीये मशकार्थो धूमः। ज्योतिषोक्ते ११लग्नावधिद्वितीयभवने १२प्रकारे। भावे घञ् १३अभिलाषे १४प्रार्थने च कर्म्मणि यत् १५अर्थ मोक्षे विष्णौ पु० “अर्थोऽनर्थो महाकोषः” वि० स० “सुखरूपतया सर्व्वैरर्थ्यत इत्यर्थः। भा० १६फले। अर्थेन साधुः अर्थ-

दनपेतो वा यत् अर्थ्यं । अर्थादनपेते अर्थसाधने च त्रि० । "अर्थ्यामर्थपतिर्वाचम्" रघुः । "वागीशं वाग्भिरर्थ्याभि" कुमा० ।

**अर्थकर** त्रि० अर्थं करोति कृ–हेत्वादौ ट । अर्थहेतु कर्मकारके स्त्रियां ङीप् । अर्थकरी दण्डनीत्यादिविद्या ।

**अर्थकृच्छ्र** न० अर्थविषये कृच्छ्रम् । अर्थस्य प्रयोजनस्य कृच्छ्रतायाम् कष्टसाध्यत्व एव तस्य तथात्वम् ।

**अर्थकृत्** त्रि० अर्थं करोति–कृ–क्विप् । अर्थकारके ।

**अर्थक्रम** पु० ६त० क्रमनिर्णयाय श्रुतशब्दक्रमातिक्रमेणाश्रयणीये प्रयोजनानुसारिक्रमे यथा पाठक्रममनादृत्याग्निहोत्रसाधनतया यवागूपाकः प्राक्क्रियते अग्निहोत्ररूपप्रयोजनादेः यवागूसाध्यत्वात्तथात्वम् यथोक्तं मीमा० यत्र प्रयोजनवशेन क्रमनिर्णयः स अर्थक्रम । यथा अग्निहोत्रं जुहोति यवागूं पचतीत्यग्निहोत्रहोमयवागूपाकयो । यवाग्वा वहोमसाधनत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । स चाय पाठक्रमाद्बलवान् । यथापाठमनुष्ठाने क्रमस्य प्रयोजनबाधेऽदृष्टार्थत्वं स्यात् । नहि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्ट प्रयोजनमस्ति येनायं क्रमबाधेन पाठक्रमस्तत्त्वादिद्रियेत" ।

**अर्थगत** त्रि० अर्थं गत । १अर्थनिष्ठे अर्थाश्रये अलङ्कारोक्ते २दोषभेदे पु० अर्थदोषशब्दे विवरणम् । गतोऽर्थोऽस्य आहिता० वा परनि० । २गतार्थे त्रि० ।

**अर्थगौरव** न० ६त० स्वल्पशब्दस्यापि अर्थस्य गौरवम् । "भारवेरर्थगौरवम्" उद्भट ।

**अर्थघ्न** त्रि० अर्थं हन्ति ताच्छील्यादौ ट स्त्रियां ङीप् । अर्थनाशके "व्याधिता वाऽधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा" मनुः ।

**अर्थचिन्ता** स्त्री अर्थाना तन्त्रावापादीना चिन्ता । राज्याङ्गतन्त्रावापादीनां चिन्तने । "मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावपादय·" सा० द० । अर्थचिन्तनमप्यत्र न० "मन्त्री स्वञ्चोभयञ्चापि तस्य तस्यार्थचिन्तने" इति । सा० द० अमात्यमतम् । [अर्थोजातोऽस्य । २जातधने त्रि० ।

**अर्थजात** न० अर्थानां जातम् ६त० । १अर्थसमूहे ।

**अर्थज्ञ** त्रि० अर्थं जानाति ज्ञा–क । प्रयोजनाभिज्ञे ।

**अर्थतस्** अव्य० अर्थ+तसिल् । १अर्थादित्यर्थे २अर्थानुसारेणेत्यर्थे ३वस्तुस्वभावादित्यर्थे च । "अर्थतोऽप्यहयामन्दागतोऽस्तमागतः" नै० सा० ।

**अर्थद** त्रि० अर्थान् धनानि ददाति दा–क । १धनदे धनदानेन तोषकेऽध्याप्ये २शिष्यभेदे पु० । "आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । आप्तः शक्तोऽर्थदः साधुः स्वाध्याप्या दश धर्मतः" इति मनु । ३कुबेरे पु० ।

**अर्थदूषण** न० अर्थानां दूषणं नाशनम् । क्रोधजव्यसनमध्ये अतिशयेनासत्कर्मणि विनियोगेन कष्टदायके धननाशनरूपे व्यसनभेदे । "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति "दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदेति च" मनु । "अर्थदूषणञ्च धनानामपहारः देयानामदानञ्चेति" म० त० रघुनन्दनः । [साधु" कु०

**अर्थना** स्त्री अर्थ–युच् । याचने । "अभ्यर्थना भङ्गभयेन

**अर्थपति** पु० अर्थानां पति ६त० । १नृपे, । "अर्थ्यामर्थपतिर्वाचम्" धनैश्वर्यस्यार्थपते सुतायाम्" "किञ्चिद्विहस्यार्थपतिं बभाषे" । "बलनिषूदनमर्थपतिञ्च तम्"इति च रघु । २कुबेरे च ।

**अर्थप्रकृति** स्त्री अर्थानां प्रयोजनानां प्रकृति कारणम् । १प्रयोजनहेतौ । "बीज बिन्दु पताका च प्रकरी कार्यमेव च । अर्थप्रकृतय पञ्च ज्ञात्वा योज्या यथाविधि" सा० द० उक्ते नाटकाङ्गे २कार्य्यबीजरूपपञ्चके च ।

**अर्थप्रयोग** पु० अर्थानां धनना प्रयोग नियोग । ऋणदानादिवृत्तौ १ऋणदानवाणिज्यादिरूपे धनवृद्ध्यर्थके व्यवहारे । अर्थानान्तन्त्रावापादय ६त० । २यथायथं तन्त्रावापादेर्विनियोगे च । "अर्थप्रयोगकुशल" इति अमात्यलक्षणम् ।

**अर्थप्राप्त** पु० अर्थत· वाचकशब्दाप्रयोगेऽपि तात्पर्य्यवशत· प्राप्त । वाचकशब्दानुच्चारणेऽपि तात्पर्य्यवशात् प्राप्ते "अर्थप्राप्त एवात्मज्ञानविधेरेव यज्ञोपवीतादिपरित्यागो न विधातव्यः" छ० उ० भा० ।

**अर्थबन्ध** पु० अर्थै· विषयैः शब्दादिभिर्बन्ध । १जीवस्य शब्दादिभिः श्रोत्रसम्बन्धरूपे बन्धे २धनकृतबन्धे च ।

**अर्थभावना** स्त्री अर्थनिष्ठा भावना भावयितृव्यापार उत्पादना । भट्टमतोक्तायामर्थनिष्ठायां यागसाधनिकायां स्वर्गाद्युत्पादनायां स्वर्गादीष्टं यागेन साधयेदित्येवंरूपायाम् । भावना च द्विधा शाब्दी आर्थी च विवरणं भावनाशब्दे ।

**अर्थमर्य्यादा** स्त्री अर्थस्य कारणस्य मर्यादा इतरसहकारेण कार्य्योत्पादनम् । सामन्तीयप्रधाने, ६सामन्तीयसमवधाने हि

कार्य्योत्पत्तिरर्थप्राप्तेति तदुत्पादस्यार्थमर्य्यादाधीनत्वम् ।

**अर्थमात्र** न० अर्थ एव मयूर० अवधारणार्थमात्रशब्देन नित्यस०। १अवधारितेऽर्थे। "भोजनाच्छादनाभ्यधिकं स्वसमभ्यर्थमात्रं न सम्भ्रियते" इति ह०भा०। अल्पार्थमात्रा शब्देन द्वैत०। २अल्पधनांशे स्त्री हस्वार्थे च मात्राशब्देन। द्वैत०। ३धनबाहुल्ये। कथं मयास्येयमर्थमात्राऽर्जव्या" महती धनमात्रेत्यर्थः।

**अर्थवत्** त्रि०अर्थोऽस्त्यस्य अवच्छित्व मतुप् मस्य वः। १अर्थयुक्ते २सार्थके "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" पा०। ३प्रयोजनयुक्ते ४फलयुक्ते च "अपसव्य उपेतस्य दाहिताग्न्याहुताथवत्। या०स्मृ०"विप्रस्त्रोतूसर्गशुद्ध्यर्थं मृदाद्यादेयमर्थवत्" मनु ५असन्नितधनवति त्रि०। सन्निहिते तु इति अर्थीत्येव। स च व्यवहारे वादिनि रूढ "ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्" या०स्मृ०। स्त्रियामुभयत ङीप्। ६पुरुषे पु० राजनि०। अर्थमर्हति अर्थेन तुल्यं क्रिया, अर्थ इव वा वति। ६अर्थार्हे ७अर्थतुल्यक्रियायाम् ८अर्थसदृशे चार्थे च अव्य०।

**अर्थवाद** पु० अर्थस्य लक्षणया स्तुत्यर्थस्य, निन्दार्थस्य वा वादः वद–करणे घञ्। १प्रशंसानीयगुणवाचके, २निन्दनीयदोषवाचके च शब्दविशेषे। भावे घञ्। ३तत्कथने। अभिधया गौण्या वा वृत्त्या भूतमर्थं वदन् स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिमाकाङ्क्षन्नर्थवादः" अर्थवादेन हि कश्चिद्विधिर्नक्षित्यवसीदन्तो विध्यर्थे शीघ्रं प्रवर्त्तयितुमारभ्यते। स च चतुर्विधः "स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवाद" गौ० सूत्रोक्तेः। तत्र स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यं यथा "सर्व्वस्य जिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्यादि"। अनिष्टसाधनताद्वारा विध्यर्थस्वर्गकं वाक्यम् निन्दा। यथा "एष वाव प्रथमोयज्ञानां यज्ज्योतिष्टोम य एतेनानिष्ट्वा अन्येन यजते स गर्त्ते पततीत्यादि"। पुरुषविशेषनिष्ठतया कदर्थं परकृतिः परक्रिया, यथा "वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेःप्राणाः पृषदाज्यमित्यभिदधतीत्यादि" ऐतिह्यसमाख्यातरितया कीर्त्तनं पुराकल्पः। एवमन्येऽपि अर्थवादा भाष्यकृता सामसंहिताभाष्ये माधवाचार्य्येण दर्शिता यथा 'हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परकृतिः पुराकल्पोव्यवधारणकल्पना" इति "तेन ह्यन्नं क्रियते" इति हेतुः "एतद्दधोदधित्वमिति" निर्वचनम्। "अमेध्या वै माषा" इति निन्दा "वायुर्वै क्षेपिष्ठेति" प्रशंसा "तद्व्यचिकित्सन् जुहवामोमाहौषामिति" संशयः "यजमानेन सम्मिता औदुम्बरी भवतीति" विधिः "माषानेव मह्यं पचत" इति परकृतिः "पुरा ब्राह्मणा अभैषु" इति पुराकल्पः। "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति" विशेषावधारणकल्पनेत्युदाहृतं च तत्रैव। लौगाक्षिणा तु त्रैविध्यमुक्तम् "अर्थवादश्च त्रिविधः गुणवादोऽनुवादोभूतार्थवादश्चेति तदुक्तम्॥ "गुणवादोविरोधे स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः"॥ गुणवादस्तु "यथा सिंहो माणवक" इत्यादौ माणवके सिंहाभेदस्य विरोधेन तद्गतद्रथाभेदोबोध्यते तेन समर्थत्वादिरूपं तद्वृत्तिगुणमनुवदति प्रतिपादयतीति गुणवादः अन्ये तु "यजमानः प्रस्तर" इत्यादौ प्रत्यक्षादिभिरवधारितेऽर्थे तमेवार्थमनुवदतीत्यनुवादः यथा "अग्निर्हिमस्य भेषजं, "भूमिरावपनं महत् सूर्य्यस्तापकर" इत्याद्यः। तद्धानादेतदुभयार्थकत्वाभावात् तथा चैतदुभयभिन्नं भूतं सिद्धार्थं वदतीति भूतार्थवाद इति। अयञ्चानेकविधः कश्चिदुक्तः, स्तुत्यर्थवादः फलार्थवादः सिद्धार्थवादः निन्दार्थवादः परकृतिः पुराकल्पः मन्त्रश्चेति"। तत्र स्तुत्यर्थवादो यथा 'वायुर्वै क्षेपिष्ठा देवता' इत्यादि॥ फलार्थवादो यथा "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेतेत्यादि"। "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यादि" च यद्यप्येतस्य परकृतावेव पर्य्यवसानं तथापि फलस्य विशेष्यतयाऽनभिधानात्ताद्रूप्येण पृथगुपन्यासः॥ सिद्धार्थवादो यथा। "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्॥ अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदमित्यादि"॥ निन्दार्थवादो यथा "असूर्य्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इत्यादि॥ परकृतिः परकृत्यभिधानं परक्रियोक्तिः। एवञ्च लौगाक्षिभास्करोक्तस्य" "विरोधेगुणवादः स्यादित्यादि कारिकोक्तस्य त्रैविध्यस्य मध्ये स्तुत्यर्थवादस्यैवावान्तरभेदेन तस्य सप्तविधत्वमिति भेदः। ४मन्यतात्पर्य्यावधारणार्थे लिङ्गषट्कान्तर्गते लिङ्गभेदे च। "उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम्। अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये इति वे०सा०यथा "उत तमादेशमप्राक्ष्यो" येनाश्रुतं श्रुतम्। इत्यादिनाऽद्वितीयवस्तुनः प्रशंसनम्" वा० उ० भा० उक्तम्।

**अर्थविज्ञान** न० ६त० धर्म्मूवाद्यष्टविधात्मबुद्धिगुणान्तर्गते बुद्धिभेदे हेम०।

**अर्थविद्** त्रि० अर्थं कार्य्यं वेत्ति विद–क्विप्। कार्य्याभिज्ञे

"विवक्षितामर्थविदस्तत्क्षणं प्रतिसंजहुताम्" माघ।

**अर्थविप्रकर्ष** पु० अर्थस्य अर्थबोधस्य विप्रकर्षः बोधनस्य विलम्बेनोत्पादनम्। पूर्वपूर्वमपेक्ष्य उत्तरोत्तरस्य विलम्बेनार्थबोधने "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" जै०सू०। तथाहि अनपेक्षरवरूपाया द्वितीयादिश्रुतेः अर्थप्रकाशनसामर्थ्य-रूपलिङ्गापेक्षया शीघ्रार्थबोधकत्वम् इति तस्याः सर्वत्र प्राबल्यम् एवं लिङ्गस्य वाक्याद्यपेक्षया शीघ्रार्थोपस्थापकतया प्रबलत्वम्। विवृतिः बलाबलाधिकरणशब्दे।

**अर्थव्ययज्ञ** त्रि० अर्थस्य धनस्य व्ययं तत्प्रकारं जानाति ज्ञा—क। किं धनं, कुत्र,कुतः, कियत्, कस्मै वा व्ययि-तव्यमिति विशेषाभिज्ञे।

**अर्थव्यापाश्रय** पु० अर्थस्य प्रयोजनस्य व्यपाश्रयः। १प्रयो-जनसम्बन्धे २अभिधेयाश्रये। ब०। ३सप्रयोजने त्रि०।

**अर्थशास्त्र** न० अर्थस्य भूमिधनादेः प्रापकं शास्त्रं शाक०त०। १नीतिशास्त्रे, अभिचारादिकर्मप्रतिपादके २शास्त्रे च। "अर्थशास्त्रात्तु बलवत् धर्मशास्त्रमिति स्थितिः" या०स्मृ० विज्ञानेश्वरमिताक्षरायाम् "यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषोनास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्म-शास्त्रं बलवदित्यभिप्रायः धर्मस्य च प्राधान्यं शास्त्रादौ दर्शितन्तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव। "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहु-श्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्। नाततायिवधे दोषोहन्तुर्भवति कश्चन। प्रकाशं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति" तथा "आततायिन मायान्तमपि वेदान्तगं रणे। जिघांसन्तं जिघांसीयान्न ते-न ब्रह्महा भवेत्" इत्याद्यर्थशास्त्रम्। "इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इत्यादि धर्मशास्त्रं तयोर्विरोधे धर्मशास्त्रं बल-वदिति युक्तमित्यन्यमतमुक्तम्। "हिरण्यभूमिलाभेभ्योमित्र-लब्धिर्वरा यतः। अतो यतेत तत् प्राप्तौ" इत्यर्थ-शास्त्रम्। "धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः" इति धर्मशास्त्रम्। तयोः क्वचिद्विषये विरोधो भवति यथा चतुष्पाद्व्यवहारे प्रवर्त्तमाने एकस्य जयेऽवधार्य्य-माणे धर्मानुसरणम् न मित्रलाभः। अन्यस्य तु जये मित्रलब्धिर्न धर्म-शास्त्रमनुसृतम्भवति तत्रार्थशास्त्रा-द्धर्मशास्त्रं बलवत् अतएव "धर्मार्थसन्निपाते अर्थग्राहिण एतदेवेति" प्रायश्चित्तस्य गुरुत्वन्दर्शितमापस्तम्बेन" इति।

**अर्थशौच** अर्थानां तदुपायानां शौचम् तदर्जने शुद्धिः। अन्यायेन धनोपार्ज्जनपरिहारेण अर्थार्ज्जनशुद्धौ "सर्व्वेषामेव शौचानामर्थशौचं परं स्मृतमिति" मनु।

**अर्थसंग्रह** पु० ६त०। धनसञ्चये।

**अर्थसंस्थान** न० अर्थानां धनानां संस्थानं स्थितिर्यस्मात् सम्+स्था—अपादाने ल्युट् वा। १धनोपार्ज्जनसाधन प्रतिपक्षादौ। २भावे ल्युट् ६त०। ३अर्थस्थितौ।

**अर्थसञ्चय** पु० अर्थानां धनानां सञ्चयः संग्रहः समुदायश्च। १धनसंग्रहे। "कुदेशमासाद्य कुतोऽर्थ-सञ्चयः" इति नीति०। २धनसमूहे च।

**अर्थसमाज** पु० अर्थानां कारणानां वा समाजः समूहः। १बहुविधार्थसमूहे २कारणसमूहे च। "अर्थसमाजग्रस्तत्वात् नीलघटत्वादिकम् न कस्यचित् कार्य्यतावच्छेदकमिति" गदा०। तथाहि घटत्वं दण्डादेः कार्य्यतावच्छेदकम्। नीलत्वन्तु नीलकपालस्येति भिन्नभिन्नकारणस्यैव तत्तत्कार्य्य-तावच्छेदकम् तथाच नीलघटत्वं न कस्याप्येकस्य कारणस्य कार्य्यतावच्छेदकम् नीलघटत्वस्य नाना कारणस्यैव कार्य्य-तावच्छेदकत्वात् एवञ्च तस्य कारणसमाजग्रस्तत्वात् न कस्यापि कार्य्यतावच्छेदकत्वम्। एवमन्यदप्युदाहार्य्यम्। ३धनसमूहे च।

**अर्थसमाहार** पु० ६त०। १धनसंग्रहे सम्यगुपायेनार्ज्जने ते च उपाया "सप्त वित्तागमा धर्म्या दायोलाभः क्रयोजयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रहएव चेति" इत्युक्ताः साधारणाः "ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः" गौ०उक्ताः "याजना-ध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्ज्जयेदिति" स्मृत्युक्ताश्च ब्राह्मणादेः यथायथम् असाधारणाः ज्ञेयाः। २धनसमूहे च।

**अर्थसम्बन्ध** पु० अर्थस्य धनस्य वाच्याद्यर्थस्य वा सम्बन्धः। १धनसम्बन्धे वाच्याद्यर्थसम्बन्धे। २ धनसम्बन्धप्रयोजकाश्च अपतितपुत्रत्वादयः शास्त्रीयाः क्रयादयश्च लौकिकाः।

**अर्थसिद्ध** अर्थात् अर्थाभ्ययविशेषात् सिद्धः। मन्त्रादिनाऽबोध-नेऽपि अन्वयबललभ्ये पदार्थे" यथा घटमानयेति वाक्ये घटस्य छिद्रेतरत्वमन्वयबललभ्यं न च तत्र शब्दप्रमाण्या-पेक्षा। तथा च शाब्दबोधे योग्यताज्ञानस्य हेतुतया छिद्रेत-रघटएव आनयनप्रयोजकतावधारणेन तत्रैव प्रवृत्तिर्न तरघटादौ एवमन्यत्रापि। अर्थः प्रयोजनं धनं वा सिद्धोऽस्य बहुव्री०। २सिद्धार्थे सिद्धप्रयोजने ३सत्सु सिद्धधने च त्रि०।

तत्त्वेन गृहाभावप्रमयोऽप्रमयोरं येनानिश्चितो गृहाभावो बहिर्भावे न हेतुः स्यात्। न च गृहाभावेन वा सत्त्वमपाक्रियते येन सत्त्वमेवानुपपद्यमानमात्मनः सत्तां बहिरवस्थापयेत् तदाहि चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं वा विरुध्यते, गृहसत्त्वं वा? न तावद्यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात्। देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयकतया विरोध इति चेन्न प्रमाणनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात्। नापि प्रमाणनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमात्रमपि प्रतिक्षेप्तुं, सांशयिकत्वं वापनेतुमर्हतीति युक्तं गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वस्य विरुद्धत्वात् प्रतिक्षिप्यते न तु सत्त्वमात्रं तस्य तत्रौदासीन्यात्। तस्मात् गृहाभावेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम्। एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया अविरोधापादनमर्थापत्तेर्विषय इति परास्तम् अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात्। उदाहरणान्तराण्यप्यर्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानीति" सां कौ०। व्याख्यातञ्चैतदस्माभिस्तट्टीकायां यथा "व्यापकस्य देशविशेषेऽस्थितावपि देशान्तरे सत्त्वमवगम्यते इत्याह व्यापकः सन्नित्यादि। सन् सत्त्वाश्रयः। व्यापकः सत्त्वव्यापकः, तथा च। सन् चैत्रो बहिरस्ति गृहेऽस्थितत्वात् स्वशरीरवदित्यनुमानादेवार्थापत्तिविषय-सिद्धिरिति भावः। सत्त्वाश्रयस्य सतः पक्षीकरणात् सत्त्वासत्त्वयोर्विरोधितया सत्त्वप्रतिरुद्धः कथं गृहेऽसत्त्वरूपो हेतुस्तिष्ठेत् तथाच स्वरूपासिद्धहेतुना कथं बहिःसत्त्वरूपसाध्यसिद्धिरिति आशङ्क्य समाधत्ते न च चैत्रस्येत्यादिना। गृहाभावः गृहासत्त्वम् बहिर्भावः बहिःसत्त्वम्। ननु गृहेऽसत्त्वस्य कथं सत्त्वाश्रयता सत्त्वासत्त्वयोर्विरोधित्वात्तथा चाश्रयासिद्धिरित्याशङ्क्य समाधत्ते न च गृहाभावेनेति गृहासत्त्वेनेत्यर्थः। गृहासत्त्वस्य गृहसत्त्वं प्रत्येव विरोधिता न तु सत्त्वसामान्यं प्रतीति समर्थयितुं विकल्पयति तदाहि चैत्रस्येति। ननु सत्त्वाश्रयसामान्यमाक्षिपत् देशसामान्यमेवाक्षिपति देशसामान्याक्षिप्ता च तेन तदन्तर्वर्त्तिनो गृहरूपदेशस्यापि समाक्षेपात् गृहस्यापि पाक्षिकसत्त्वलाभेन तेन सह गृहासत्त्वस्य विरोधित्वात् पुनः स्वरूपासिद्धिरित्याशङ्कते देशसामान्येनेति आक्षिप्तमाक्षेपेणेत्यादिकमाह सामान्यदेशाक्षेपेणैव विशेषदेशस्याप्याक्षेप इति भावः। परिहरति नेति। पाक्षिकतया पक्षे प्राप्ततया। सांशयिकेन संशयमापन्नेन। "सामान्यविषयं सत्ताग्राहक "गृहविषयं न नेति" संशयमापन्नेन गृहसत्त्वेन प्रतिक्षेपायोगात् तस्य दुर्बलतया प्रतिबन्धकत्वासम्भवित्वात्। प्रमाणनिश्चितस्य प्राबल्यिकस्य गृहासत्त्वस्य गृहसत्त्वं प्रत्येव प्रतिबन्धकत्वं न तु सत्त्वसामान्यं प्रतीति व्यवस्थापयन्नाह नापि प्रमाणेति। अस्य चैत्रस्य। प्रतिक्षिपन् प्रतिरुन्धन्। प्रतिक्षेप्तुं प्रतिरोद्धुमर्हतीत्यन्वेनान्वयः। सांशयिकत्वं संशयमापन्नत्वम्। एतस्य च सत्त्वमात्रस्येत्यादि। अपनेतुमपसारयितुम्। विषयविशेषे एव विरोधित्वमित्युपसंहरति युक्तमित्यादिना एतावता प्रबन्धेन व्यवस्थापितमर्थं निगमयन्नाह तस्मादिति। गृहासत्त्वप्रमाणं प्रत्यक्षं, सत्त्वसामान्यप्रमाणमनुमानमेतयोर्विषयविशेषे व्यवस्थापनेनाविरोधापादनम् अनामेयमनिश्चितार्थापत्तेः फलं तत् निरस्यति एतेनेति। अवच्छिन्नानवच्छिन्नेत्यर्थः परास्तमित्यपेक्षान्वयः। विरोधाभावे हेतुं वदन् निरसनहेतुं द्योतयति अवच्छिन्नेत्यादि गृहावच्छिन्नसत्त्वं प्रत्यक्षविषयः, गृहानवच्छिन्नसत्त्वमनुमानविषयः इत्येकविषयत्वाभावेन-विरोधाभावात् विरोधस्यैव तत्राप्रसक्तावात् अर्थापत्त्या किं समाधास्यते इति भावः"। २अर्थालङ्कारभेदे 'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते" सा० द०। 'मूषिकेण दण्डो भक्षित' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवति इत्येष न्यायो दण्डापूपिका। अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणे। "हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले। मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः'। "विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्। अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्"। "यदकीर्त्तितमर्थादापद्यते सार्थापत्तिः" इति सुश्रुतोक्ते ४तन्त्रयुक्तिभेदे च।

**अर्थिक** पु० अर्थयते इत्यर्थी याचकः कुत्सितार्थी कन्। निद्रागतनृपादेर्जागरणार्थं नियुक्ते स्तुतिपाठकादौ।

**अर्थित** त्रि० अर्थ—णौ कर्मणि क्त। १याचिते यस्य सकाशात् याच्यते च तस्मिन्। "अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ" रघु०। तस्याभिलाषायां कस्मै कर्मणि क्त। २याचमानकर्मणि ३पदार्थे यद्वस्तु कदाचित् समीपे याच्यते तस्मिन्। अर्थिनो याचकस्य भावः तल्। ४याच्ञायां स्त्री।

मोक्षश्च भवतस्त्वामीति"। सङ्क्षेपे प्रहत्ता यदुपरता च। अत्र सर्वत्र सप्तभङ्गिनयाख्यं न्यायमवतारयन्ति जैनाः "स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च। स्यादवक्तव्य स्यादस्ति चावक्तव्य स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्य इति"। तत्सर्वमनन्तवीर्यः प्रत्यपीपदत् "तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते॥ क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक्। युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः॥ आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते। अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः॥ समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यत इति"। स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः। यथोक्तम् "वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम्। स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः" इति॥ यदि पुनरेकान्तद्योतकः स्याच्छब्दोऽयं स्यात्तदा स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् अनेकान्तद्योतकत्वे तु स्यादस्ति कथञ्चिदस्तीति स्यात् स्यात्पदात् कथञ्चिदिति अयमर्थो लभ्यते इति नानर्थक्यम्। तदाह "स्याद्वादः सर्वथैकान्तत्यागात् किंवृत्तचिद्विधेः। सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृदिति"॥ यदि वस्त्वस्त्येकान्ततः सर्वथा सर्वत्र सर्वात्मनास्तीति न उपादित्साजिहासाभ्यां क्वचित् कदा केनचित् प्रवर्त्तेत निवर्त्तेत वा प्राप्तप्रापणीयत्वद्धेयहानानुपपत्तेश्च। अनेकान्तपक्षे तु कथञ्चित् केनचित् कस्यचित् हानोपादाने प्रेक्षावतामुपपद्येते। किञ्च वस्तुनः सत्त्वं स्वभाव असत्त्वं वेत्यादि प्रष्टव्य न तावदस्तित्वं वस्तुन स्वभाव इति सम्भवति घटोऽस्तीत्यनयो पर्यायतया युगपत्प्रयोगायोगात् नास्तीति प्रयोगविरोधाच्च एवमन्यत्रापि योज्यम्। यथोक्तम् "घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः। नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्त्वयोरित्यादि" तस्मादित्थं वक्तव्यं सदसत्सदसदनिर्वचनीयवादभेदेन प्रतिवादिनश्चतुर्विधाः पुनरप्यनिर्वचनीयमतेनाभिमिश्रितानि सदसदादिमतानीति त्रिविधा. तान् प्रति किं वस्त्वस्तीत्यादिपर्यनुयोगे कथञ्चिदस्तीत्यादिप्रतिवचनसम्भवेन ते वादिनः सर्वे निर्विण्णाः सन्तः तूष्णीमासत इति सम्पूर्णार्थविनिश्चायिनं स्याद्वादमङ्गीकुर्वन्तस्तत्र तत्र विजय इति सर्वमुपपन्नम्। यदवोचदाचार्यः स्याद्वादमञ्जर्याम्। "अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम्। एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः॥ न्यायानामेकनिष्ठानां प्रवृत्तौ श्रुतवर्त्मनि। सम्पूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यते" "अन्योन्यपक्षप्रतिपक्षभावाद्यथापरे मत्सरिणः प्रवादाः। नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथार्हत" इति॥ जिनदत्तसूरिणा जैन मतमित्थमुक्तम्। "बलभोगोपभोगानामुभयोर्दानलाभयोः। अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम्। हिंसा रत्यरती रागद्वेषौ रतिरतिस्मर। शोको मिथ्यात्वमेतेऽष्टादश दोषा न यस्य स। जिनो देवो गुरुः सम्यक् तत्त्वज्ञानोपदेशकः। ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्त्मनि। स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च। नित्यानित्यात्मकं सर्वं नव तत्त्वानि सप्त वा। जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च। बन्धो निर्जरणं मुक्तिरेषां व्याख्याधुनोच्यते। चेतनालक्षणो जीवः स्यादजीवस्तदन्यक। सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्य्यय। आस्रवः कर्मणां बन्धो निर्जरस्तद्वियोजनम्॥ अष्टकर्मक्षयान्मोक्षोऽथान्तर्भावश्च कैश्चन। पुण्यस्य संवरे पापस्यास्रवे क्रियते पुन॥ लब्धानन्तचतुष्कस्य लोकागूढस्य चात्मन। क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता सरजोहरणा भैक्ष्यभुजो लुञ्चितमूर्द्धजाः। श्वेताम्बराः क्षमाशीला निःसङ्गा जैनसाधव॥ लुञ्चिताः पिच्छिकाहस्ता पाणिपात्रा दिगम्बरा। ऊर्द्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः॥ भुङ्क्ते न केवल न स्त्री मोक्षमेति दिगम्बर। प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सहेति"॥

**अर्हन्त** पु० अर्ह+बा० झ। जैनदेवे अर्हति।

**अर्हन्ती** स्त्री अर्हत पूज्यस्य भाव ष्यञ् टस् ङीप् यलोप। पूज्यतायाम्—"श्रीमार्हन्तीमवर्णीगुरुत्वं" सि०कौ०।

**अर्हा** स्त्री चु० अर्ह—अङ्। पूजायाम्। युच् क्तिनश्च बाधक

**अर्हित** त्रि० अर्ह—क्त। पूजिते। "अभ्यर्हितञ्च" का०वा०

**अर्ह्य** त्रि० चु०अर्ह—कर्म्मणि यत्। १प्राप्तु योग्ये २स्तोतुं योग्ये च। चु० अर्ह—यत्। ३पूज्ये।

**अल** भूषणे, वारणे, भ्वा० उभ०सक० पर्य्याप्तौ अक० सेट्। अलति ते आलीत् आलिष्ट।

**अल** न० अल-अच्। १वृश्चिकपुच्छस्थे कण्टकाकारे पदार्थे। हेम०। २हरिताले रत्नमा०।

**अलक** पु० अलति भूषयति मुखम् अल—क्वुन्। १ललाटस्थे छिन्नाग्रे कुटिलकेशे, "अलकबालकलालनयाऽन्यया" माघ "ललाटिकाचन्दनधूसरालका" कुमा० "असृष्टालके

द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये॥ विन्यासभेदास्तु-न्येऽपि सन्त्येव बहवोऽत्र हि। विस्तरात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः”॥ एकाक्षरमुरजो यथा। “श्लोक-स्यैकस्य पादेषु लिखितेषु चतुर्ष्वपि। लिखेदङ्कक्रमेण स्यान्मुरजैकाक्षरावली”। मुरजप्रस्तारो यथा। “क्रमेणैकस्य पादेषु प्रस्तृतेषु चतुर्ष्वपि। तुर्यान् मुरजमार्गेण श्लोको-ऽप्युपजायते”। गोमूत्रिकाबन्धः। “गतिरूक्षाक्षरा यत्र मार्गे मूत्रस्य गोरिव। गोमूत्रिकेति तत् प्राहुः दुष्कर चित्रवेदिनाम्। स०क० तच्च नानाविधं दर्शितम्। “दुष्करत्वात् कठोरत्वात् दुर्बोधत्वादिना विधे। दिङ्-मात्रं दर्शितं चित्रं स्वयमूह्यं महात्मभिः” स०क०। “अनेकधा वृत्तवर्णविन्यासैः शिल्पकल्पना। तत्तत्प्रसिद्ध-वस्तूनां चित्रमित्यभिधीयते इति सामान्यत सर्ववस्त्वा-कारकल्पनया चित्रं भवतीत्युक्तम् अग्निपु०॥१६

१७ वाकोवाक्यम् “उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः। द्वयोर्वक्त्रोस्तदिच्छन्ति बहूनामपि सङ्गमे। ऋजूक्तिरथ वक्रोक्तिर्वैयात्योक्तिस्तथैव च। गूढप्रश्नोत्तरो-क्तिश्च तद्भिदा त्रिविधैव तु” वाकोवाक्यम् १७।

१८ प्रहेलिका। “प्रहेलिका चतुर्भेदा सापि चोढा च्युताक्षरा। दत्ताक्षरोभय मुष्टिर्विन्दुमत्यर्थवत्यपि। क्रीड़ागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमण्डले। परव्या-मोहने चापि सोपयोगा प्रहेलिका”। तत्र “च्युताक्षरा “पयोधरभराक्रान्ता सन्नमन्ती पदे पदे। पदमेकं न का याति, यदि हारेण वर्जिता”। अत्र हारेणेत्याकारच्युति दत्ताक्षरा यथा। “कान्तयानुगत कोऽयं पीनस्तन्वो मदोद्धत। मृगाणां दृष्टतो याति, शम्बरो रूढयौवन”। शवर इति वक्तव्ये मकारो दत्त। च्युतदत्ताक्षरा च्युतमन्यत् दत्तश्चान्यदक्षरं यत्र सा यथा ‘विदग्ध’ सरसो रागी नितम्बोपरि संस्थितः। तरुण्यालिङ्गितः कण्ठे कस्त कूजति को, विट। अत्र घट इति वक्तव्ये घकारस्य च्युतिः विकारस्य दानमिति तथात्वम्। विन्दु-मत्यादीनामुदाहरणानि स०क०द्रष्टव्यानि। प्रहेलिका १८।

१९ गूढम्। “क्रियाकारकसम्बन्धपदाभिप्रायवस्तुभिः। गोपितैः षड्विधं प्राहुर्गूढं गूढार्थवेदिभिः। ‘पाण्डवानां सभामध्ये दुर्योधन उपागतः। तस्मै गाञ्च हिरण्यञ्च सर्वा-ण्याभरणानि च”। अत्र क्रियापदम् गूढम्। योऽधन उपागतस्तस्मै गवादिकमदुरित्यर्थ। गूढम् १९

२० प्रश्नोत्तरम्। “यस्तु पर्यनुयोगस्य निर्भेदं क्रियते पदैः। विदग्धगोष्ठ्यां वाक्यैर्वा तं हि प्रश्नोत्तरं विदुः अत्र प्रश्नबहिष्प्रश्नबहिः स्त समाश्रये। जातिगोष्ठ्योत्तरा-भिख्यैः प्रश्नं तदपि षड्विधम्। प्रश्नोत्तरम् ॥२०

२१ आध्येयम् “यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्। तदध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते”। आध्येयम् २१

२२ श्रव्यम् “श्रव्यं शास्त्रेतिहासौ च काव्यं शास्त्रं तथैव च। काव्येतिहासः शास्त्रेतिहासस्तदपि षड्वि-धम्”। यथा रघुवंशादि। श्रव्यम् ॥२२

२३ प्रेक्ष्यम् “यदाङ्गिकैकनिर्वर्त्यमुज्झितं वाचिका-दिभिः। नर्त्तकैरभिनीयेत प्रेक्ष्यं तत् पिण्डितादिवत्। तत्रास्यं ताण्डवं चैव छलिकं शम्पया सह। हल्लीसकञ्च रासञ्च षट्प्रकारं प्रचक्षते”। शृङ्गाररसप्रधानत्वे लास्यं वीर-रसप्रधानत्वे ताण्डवं, शृङ्गारवीररसप्रधानत्वे छलिकमिति किन्नरविषय छलिकमेव शम्पा। “मण्डलेन च यत् स्त्रीणां नृत्य हल्लीसकं तु तत्। तन्नायको भवेदेको गोपस्त्रीणां हरिर्यथा। तदिदं हल्लीसकमेव तालबन्धविशेषयुक्तो रास। प्रेक्ष्यम् २३।

२४ अभिनय “अङ्गवाक्सत्त्वाहार्य्यां सामान्याश्चित्र इत्यमी। षड्धा अभिनयास्तद्वदभिनेयं वचो विदु”॥२४

“चत्वारो विंशतिश्चैता शब्दालङ्कारजातयः। शब्द-सन्दर्भमात्रेण हृदयं हर्तुमीशते” सर० कण्ठा०। एतेषामुदाहरणानि विस्तरभयात् न लिखितानि तत एवावगन्तव्यानि। अर्थालङ्कारास्तु मतभेदेन बहवः तथाहि तेषां समष्टि दण्डिना दर्शिता यथा। “स्वरूपाख्यान-मुपमा रूपकं दीपकावली। आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना। समासोऽतिशयोत्प्रेक्षा हेतु सूक्ष्मो लव क्रम। प्रेयोरसवदूर्जस्वि पर्यायोक्तं समाहितम्। उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता। विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने। सहोक्तिः परिवृत्त्याशीःसङ्कीर्णमथ भाविकम्। इति वाचामल-ङ्कारा दर्शिताः पूर्वसूरिभिः”। सरस्वतीकण्ठाभरणे-तु हेयाखेन तेषां समष्टिरभिहिता यथा “अलमर्थमल-ङ्कर्तुं यत् व्युत्पत्त्यादिवर्त्मना। ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया। जातिर्विभावना हेतुरहेतु सूक्ष्मसूत्तरम्। विरोधसम्भवान्योन्य परिवृत्तिर्निदर्शना। भेद समाहित भ्रान्तिर्वितर्को मीलित स्मृति। भावः प्रत्यक्षपूर्वाणि प्रमाणानि च जैमिने”। प्रत्यक्षानुमानोप-मानार्थापत्त्यभावरूपाणि षट् इति भट्टपिमतिः। एते

स्तु अर्थमात्रनिष्ठ'। "शब्देभ्योय' पदार्थेभ्य उपमादि- प्रतीयते विशिष्टोऽर्थ कवीना सा उभयालङ्क्रिया मता। उपमा रूपक सास्य' मययोक्तिरपह्नुति'। समाध्युक्ति' समासोक्तिरुत्प्रेक्षाऽप्रस्तुतस्तुति'। तत्तुल्ययोगितोल्लेखः ससन्दोक्ति समुच्चय। आक्षेपोऽर्थान्तरन्यासो विशेषोक्ति' परिष्कृति। दीपकक्रमपर्य्याया विषमस्त्वेषमाधिक संसृष्टिरिति निर्द्दिष्टास्त्वाद्युविंशतिर्मुधे" इत्युक्ता तेषा लक्षणानि सभेद' तत्रैव दर्शितानि चन्द्रालोकदर्पण कदादिभिश्च सामान्यतोऽगणयित्वा नानाविधा दर्शिता न संक्षेपतो गणिता'। अथालङ्काराः एकत्र संगृह्य सोदाहरणलक्षणा अकारादिक्रमेण तेषु केचित् दर्शिता अपि क्रमानुरोधात् सर्वएवात्र प्रदर्श्यन्ते।

१ अक्रमातिशयोक्ति "अक्रमातिशयोक्ति स्यात् सहत्वे हेतु कार्य्ययो" च०। "आलिङ्गन्ति सम देव। ज्यां पराश्च शरासन"।

२ अतद्गुण "सङ्गतानुगलम्नङ्गीकारमाहुरतद्गुणम्" च०। "चिरं रागिणि मच्चित्ते निहितापि न रज्यसि"।

३ अतिशयोक्ति १०५ पृष्ठे उक्तलक्षणोदाहरणा।

४ अत्यन्तातिशयोक्ति "अत्यन्तातिशयोक्तिस्तु कार्य्ये हेतुप्रसक्तिजा" च०। "यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका"। ऊर्मिका वलयोऽभवदित्यन्वय' अत्यन्तातिशयात्वम्।

५ अत्युक्ति "अत्युक्तिरद्भुताऽतथ्यशौर्य्यौदार्य्यादिवर्णनम्" च० "त्वयि दातरि राजेन्द्र' याचका कल्पशाखिन"। याचकानां राजतोधनलाभेन कल्पतरुतुल्यताकथनमौदार्य्यस्यात्युक्ति'।

६ अधिकम् १२५ पृष्ठे लक्षणोदाहरणभेदा उक्ता।

७ अनन्वय १४८ पृष्ठे उक्तलक्षणोदाहरण।

८ अनुकूलम् "अनुकूल प्रातिकूल्यमानुकूल्यानुबन्धि चेत्" च०। "कुपितासि यदि तन्वि। निधाय करजक्षतम्। बधान भुजपाशाभ्या कण्ठमस्य हठ तदा"।

९ अनुगुण "प्राक्सिद्ध स्वगुणोत्कर्षोऽनुगुणा परसन्निधे" च०। "नीलोत्पलानि दधते कटाक्षैरतिनीलताम्"।

१० अनुज्ञा "दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्" च०। "मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे। नर प्रत्युपकाराय विपत्तिमभिकाङ्क्षति"।

११ अनुमानम् "अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्" च०। "यत्र पतत्यबलाना दृष्टिर्निशिता पतन्ति तत्र शरा। तच्चापरोपितशरो धावत्यासां पुर स्मरो मन्ये"। स०क० विशेष उक्त। यथा "लिङ्गाद्यल्लिङ्गिनोज्ञानमनु- मानं तदुच्यते। पूर्ववच्छेषवच्चैव दृष्ट' सामान्यतश्च तत्। फलसामर्थ्यभेदेन द्विधैतत् भिद्यते पृथक्"। तेषु यत्र कारणं दृष्ट्वा कार्य्यमनुमीयते तत् पूर्ववत्। "अविरलविलोलजलदः कुटजार्ज्जुननीपसुरभिवनवात'। अयमायात' कालो हन्त हता पथिकगेहिन्य" अत्र वर्षर्त्तौ, कारणभूतात् कार्य्यं विरहिणीमरणमनुमीयते। यत्र कार्य्यं दृष्ट्वा कारणमनुमीयते तच्छेषवत्। "नामाग्रमिव्यक्तनूनं पतितोऽसि पादयोस्तस्या। कथमन्यथा ललाटे यावकातिलकपङ्क्तिरियम्"। अत्र कार्य्यभूतया यावकतिलकपङ्क्त्या कारण पादपतनमनुमीयते। यदुभयविधभिन्न' तत् सामान्यतो दृष्टम् "मत्ता मदान्धस्य शिखण्डियूनो- दृष्टे पुरस्तादचिरप्रभेव"। सेयं विद्युदिव दृष्टे प्रथमसुपलभ्यमाना कामन्दकी अविनाभावेन मालत्यागमन गमयतीति सामान्यतो दृष्टम्। फलसामर्थ्ययोरुदाहरणानि तत्र द्रष्टव्यानि।

१२ अन्योन्यम् "अन्योन्यं नाम यत्र स्यादुपकार परस्परम्" च०। "त्रियामा शशिना भाति शशी भाति त्रियामया"। स०क० भेद उक्त। "अन्योन्यस्योपकारोयस्तदन्योन्य त्रिधा च तत्। वाच्यं प्रतीयमान च तृतीयमुभयात्मकम्। अन्योन्यचूलिकान्योन्यभ्रान्तिरन्योन्यरूपता। अन्योन्यालङ्कृतावन्तस्त्रयमेतद्दिहेष्यते"। तत्र वाच्यम्। "कण्ठस्य तस्यास्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य। अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभाव। प्रतीयमानन्तु अत्रैवान्योन्यपदानुपादाने। अन्योन्यचूलिका अन्योन्यरूपपरिवृत्ति सा च व्यत्ययेन विनिमयेन च भवति। यथा "शोषणाधरलताकृतरागा वासितानम विशेषितवासा। वारुणी परगुणात्मगुणानां व्यत्यय विनिमयञ्च वितेने"। अत्र वारुण्या यदधररागोऽपहृत्य चक्षुषि निक्षिप्तस्तेन व्यत्यय। यच्च मुखामोदवासितया तया स्वामोदो विशेषितस्तेन विनिमय' तेन परिवृत्तिविनिमयाख्यामलङ्कारावलान्तर्भूतावितिद्रष्टव्यम्।

१३ अपह्नवातिशयोक्ति "रूपकातिशयोक्ति स्यात् निगीर्य्याध्यवसानत'। यदाऽपह्नुतिगर्भत्वम् सैव सापह्नवा मता।" च० "त्वत्सूक्तिषु सुधा राजन्। भ्रान्ता' पश्यन्ति ता विधौ"।

१४ अपह्नुति २४१ पृष्ठे उक्तलक्षणोदाहरणा। स०कण्ठा० अन्यथोक्तम्। "अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम्, औपम्यवत्यनौपम्या चेति सा द्विविधोच्यते" तत्र औपम्यवती यथा "न केतकीना विलसन्ति सूचयः प्रवा-

धिनो हन्त हसत्यय विधि । तद्विच्छित्तेर्यं न चकास्ति चञ्चला पुरःशरज्ज्योतिरिदं विजृम्भते" तत्र शीतकोऽपचीमा विधिहासत्व प्रतीयमानसाहश्येन तद्विच्छित्ताया शरज्ज्योतिषापह्नुतिः । अनौपम्या यथा "राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः । अवगच्छेयुराज्ञातमहो शीतानिलं वनम्" अत्र साहश्यमस्ति ।

१५ अप्रस्तुतप्रशंसा २६४ पृष्ठे उक्तलक्षणोदाहरणा ।

१६ अभाव । "असत्ता या पदार्थानामभाव सोऽभिधीयते । प्रागभावादिभेदेन स षड्विध इष्यते । स॰क॰ प्रागभाव॰ ध्वंसः अत्यन्ताभाव मिथ्यापदार्थाभाव इतरेतराभाव अभावाभावाश्च तत्र ध्वंसो यथा "धृतिरस्तमिता गतिश्च्युता विरत गेयमृतुर्निरुत्सव । गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे" । इतरेतराभावो यथा । "कर्णोत्पलं न चक्षुस्ते न चक्षुः श्रवणोत्पलम् । इति जानन्नपि जनो मन्यते नेत्रदीर्घताम्" अत्यन्ताभाव यथा "प्रसीद सद्यो मुञ्चेम चण्डि । मान मनोगतम् । इष्टमात्रेऽपि ते तत्र रोषः सकुसुमायते" । सामग्र्यभावो यथा । "मातृ-मीषु कथं वा स्यादस्य रूपस्य सम्भवः । न प्रभातरलज्योति-रुदेति वसुधातलात्" अन्योदाहरणानि तत्रैव द्रष्टव्यानि ।

१७ अभिदायिन "अभेदेनाभिदायेऽर्थेऽहेतोर्हेतुमता सह" । य॰ "लक्ष्मीविलासो भवत कटाक्षवीक्षण प्रभो" ।

१८ अर्थान्तरन्यास, २७१ पृष्ठे उक्तोदाहरणलक्षण ।

१९ अर्थापत्तिः, २७२ पृष्ठे उक्तलक्षणोदाहरणा । स॰कण्ठा॰ "प्रत्यक्षादिप्रतीतोऽर्थोयोऽन्यथा नोपपद्यते । अर्थान्तरञ्च गमयत्यर्थापत्तिं वदन्ति ताम् । सर्व्वप्रमाणपूर्व्वा सा देशमोऽनेकधश्च सा । प्रत्यक्षपूर्व्विकेत्यादिभेदं मोक्ता नि-गद्यते । प्रत्यक्षपूर्व्विका यथा "निम्नंतु यस्य मस्तीति मध्यं तव नितम्बिनि । अन्यथानुपपत्त्यैव पयोधरभरस्थिते" । अनुमापूर्व्विका यथा "कपोलपुलकेनास्याः सूचितो मदनज्वरः । मनो निरन्तराशक्तं सद्यःकथयति प्रिये" योऽयं कपोलपुलकेनानुमितो मदनज्वर स प्रिये मनसः निरन्तराशक्तिं विनानुपपद्यमानः अनुरागं कल्पयतीत्यनु-मानपूर्व्विकार्थापत्तिः एवमन्या उदाहार्य्या ।

२० अल्पम् "अल्पन्तु सूक्ष्मयादाधेयाद्यदाधारस्य सूक्ष्मता" । "मणिमालोर्म्मिका तेऽद्य करे जपवटायते" ।

२१ अवज्ञा "एकद्विषोन्नो न चेत् ख्यातामवज्ञालङ्कृतिश्च"सा न । "स्वल्पमेवाम्बु लभते पान्थ प्राप्यापि सागरम्" "मीलन्ति यदि पद्मानि का हानिरमृततद्युते" ।

२२ असङ्गति "विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गति १ । अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च या २ । अन्यत् कर्त्तुं प्रवृत्तौ च तद्विरुद्धकृतिश्च या ३" च॰ । क्रमेणोदा-हरणानि । "विष जलधरैः पीतं मूर्च्छिता पथिकाङ्गना" । "अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकृथा "२ । अपगतपारिजात यस्या नास्ति पारिजातो यत्र इति च । "गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्धारं पुराऽकरो ३ । गोत्रा पृथ्वी गोत्र पर्व्वतश्च ।

२३ असम्भव "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।" च॰ "कोवेद गोपशिशुक शैलमुत्पाटयिष्यति" ।

२४ आक्षेप "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् १ । निषेधाभासमाक्षेप बुधा केचन मन्यते २ । आक्षेपोऽन्यो-विधौ व्यक्ते निषेधे च तिरोहिते ३" । च॰ "चन्द्र । सन्दर्श-यात्मानमथवास्ति प्रियामुखम्" १ । "नाय दूति । तनो तापस्तस्याः कालानलोपम २" । "गच्छ गच्छसि चेत् कान्त । पन्थान सन्तु ते शिवा । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" । २

२५ आगम "यदाप्तवचन तद्धि ज्ञेयमागमलक्षणम् । उत्तमं मध्यमं चाथ जघन्य चेति तत् त्रिधा" । स॰क॰ तत्रो-त्तम विधिरूप निषेधरूपञ्च । विधिरूप यथा "दम दानं दया शिक्षे"रित्यादौ दाम्यत दत्त दयध्वं इति विधि । निषेधरूपं यथा "निवार्य्यतामालि किमप्ययं वटु पुनर्विवक्षुः स्फुरितोत्तराधर । न केवल यो महतोऽपभाषते शृणोति तस्मादपि य स पापभाक्" । यथाच महान्तो नापभाषितव्या इति वाक्यार्थमर्य्यादया निषेधरूप उप-देशः । तदेतदुभयमप्यवश्यानुष्ठेयत्वादुत्तमम् । मध्यम-मपि द्विधा निर्द्दिष्टवक्तृकमनिर्द्दिष्टवक्तृकञ्च तत्राद्य यथा "कल्याणी वत गाथेव लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नर वर्षशतादपि" अत्र जीवन्नर पश्यति भद्रमित्यर्थो निर्द्दिष्टवक्तृकतया निर्द्दिष्टः तत्र जीवनाय यतितव्यमिति रूपमाप्तवचनम् । "वने वसति पिशाचो पिचुमर्द्दे दिनपतिर्वटे वसः । विन्ध्याश्मनि पद्मे श्रीस्तिष्ठति गौरी मधूकतरौ" तदिदमनिर्द्दिष्टवक्तृकमनादिलोकप्रसिद्ध-पारम्पर्य्यमैतिह्यम् । अत्र सर्व्ववाक्यानां निषेधपर्य्यवसानात् अश्व न सेवेत, पिचुमर्द्द न निन्देत, वटं न छिन्द्यात्, पद्म मूर्द्ध्नि न बिभूयात्, मधूकं न पदा स्पृशेत्" इति नि-षेधपरत्वमप्यागम । जघन्यं द्वेधा काम्य निषिद्धं च । तत्र निषिद्धविषयविधिर्यथा "मद्यं वाच्ये मासावरवि-

भन्ति यूनः, परिणतानपीच्छामो दृष्ट्वा, परिणयविधान स्थितिरियम्। त्वयारब्धं जन्म क्षपयितुमकाण्डेन विधिना न नो गोत्रे पुत्रि! क्वचिदपि सतीलाञ्छनमभूत्" तदेतन्निषेधरूपम् निषिद्धविषयमाप्तवचनमसतीवचनरूपम्।

२६ आशीः "आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा"। दण्डी "पातु वः परमं ज्योतिरवाङ्मनसगोचरम्"।

२७ उत्तरम् "किञ्चिदाकूतसहितं यद्गूढोत्तरमुत्तरम्" च०। "यत्रासौ वेतसी पान्थ! तत्रासौ सुतरा सरित्"।

२८ उत्प्रेक्षा "सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना। उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे"। च० "धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्" "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" "रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद् ध्रुवम्"। "त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी" "मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः" "प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति"। दर्पणे तु अन्यथा विभज्य उदाहृतम् यथा "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः। जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि। तदष्टधापि प्रत्येकं भावाभावाभिमानतः। गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः। द्वात्रिंशद्विधतां यान्ति"। तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा॥ "ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति। सपताकः कनकमयो विजयस्तम्भः स्मरस्येव"॥ अत्र विजयस्तम्भस्य जातिवाचकत्वाज्जात्युत्प्रेक्षा॥ "ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः। गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव"॥ अत्र सप्रसवत्वं गुणः॥ "गङ्गाम्भसि सुरत्राण! तव निःस्वनः। स्नातीवारिवधूवर्गगर्भपातनपातकी"॥ अत्र स्नातीति क्रिया॥ "मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः"॥ अत्र चन्द्रस्यैकव्यक्तिवाचित्वाद्द्रव्यम्। एते भावाभिमाने च। अभावाभिमाने यथा॥ "कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ। अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ"॥ अत्रापश्यन्ताविति क्रियाया अभावः। एवमन्यत्। निमित्तस्य गुणक्रियारूपत्वे यथा गङ्गाम्भसीत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः। अपश्यन्ताविवेत्यादौ क्षामतागमनरूपं निमित्तं क्रिया, एवमन्यत्। प्रतीयमानोत्प्रेक्षा यथा॥ "तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं न दत्तमिति लज्जया"॥ अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा एवमन्यत्। अत्र वाच्योत्प्रेक्षायाः षोडश भेदेषु मध्ये विशेषमाह "तत्र वाच्याभिदा पुनः। विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः" तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोडशभेदास्तेषु जात्यादीनां त्रयाणां ये द्वादशभेदास्तेषां प्रत्येकं स्वरूपफलहेतुगतत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु "स्मरस्य विजयस्तम्भ" इति सप्रसवा इवेत्यादय जातिगुणरूपाः। फलोत्प्रेक्षा यथा॥ "रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः। विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्"॥ अत्राख्यातुमिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम्॥ हेतूत्प्रेक्षा यथा॥ "सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्। अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्"॥ अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्। "उक्तानुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः"। तेषु चत्वारिंशत्संख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादाने यथा पूर्वोदाहृते स्नातीवेत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा "चन्द्र इवापरः" इत्यत्र तथाविधसौन्दर्यातिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव तथाहि विश्लेषदुःखादिवेत्यत्र यन्निमित्तं बद्धमौनत्वम्, आख्यातुमिवेत्यत्र च भूप्रवेशस्तयोरनुपादाने असङ्गतमेव वाक्यं स्यात्। प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह "प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः"। यथोदाहृते तन्वङ्ग्याः स्तनयुग्मेनेत्यत्र लज्जयेवेति हेतूत्प्रेक्षितः। अस्यामपि निमित्तस्यानुपादानं न सम्भवति इवाद्यनुपादाने निमित्तस्य च कीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात्। स्वरूपोत्प्रेक्षाप्यत्र न भवति धर्मान्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् यथा॥ "अयं राजाऽपरः पाकशासन" इति। विशेषणाभावे च रूपकस्य, यथा "राजा पाकशासन" इति तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा। "उक्तानुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा"। ता उत्प्रेक्षाः। उक्तौ यथा॥ "ऊरुः कुरङ्गकदृश" इति॥ अनुक्तौ यथा

प्रभावत्वात्। "इह हि संप्रति दिगन्तमाच्छादयता तिमिरपटलेन। घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः। ततमिव तमालतरुभिः प्रसृतमिव नीलांशुकैर्भुवनम्"॥ अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयो व्याप्तत्वं नोपात्तं यथा वा॥ "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः"॥ अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः अञ्जनवर्षणस्य तु पातः, अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्वं धाराकर्षणाय संयोगश्च यथासंख्यम्। केचित्तु लेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनञ्च निमित्तम् एवं नभोऽपि वर्षणक्रियाकर्तृत्वेने त्याहुः। "अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं वहेत्" तत्र सापह्नवोत्प्रेक्षा यथा। "अनुच्छेन हृदयोद्गतपावकधूमकलुषाश्या। अप्राप्य मानसं विगलति लावण्यवारिपूर इव"। श्लेषहेतुगा यथा। उत्कोत्कर सङ्कटमुक्तिमध्याद्विनिर्गतः सारसलोचनायाः। जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद् गुणवत्त्वमाप"। अत्र गुणवत्त्वे श्लेषः कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षायां हेतुः। अत्र जानीमहे इत्युत्प्रेक्षावाचकम् एवम् "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः"। क्वचिदुपमोपक्रमोत्प्रेक्षा यथा। "पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराजीः। वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवालाभाः"। इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा पर्यवसाने तु जलधितीरे शैवालस्थितेः सम्भवात्तुपपत्ते संभावनोत्थानमित्युत्प्रेक्षा एवं विरहवर्णने। "केयूरायितमङ्गदैरित्यत्र" "विकासिनीलोत्पलमिव कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः" इत्यादौ च ज्ञेयम्। भ्रान्तिमदलङ्कारे "मुग्धा दुग्धधियेत्यादौ" भ्रान्तानां गवादीनां विषयस्य चन्द्रिकादेर्ज्ञानं नास्ति तदुपनिबन्धनस्य कविनैव कृतत्वात्। इह तु सम्भावनाकर्त्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः। सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः इह तूत्कटा संभाव्यभूतैका कोटिः। अतिशयोक्तौ विषयिणः प्रतीतस्य पर्यवसानादसत्यता प्रतीयते इह तु प्रतीतिकाल एवेति भेदः। "रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु। पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण" इत्यत्र तर्वादौ तिमिराक्रान्ततारञ्जनादि रूपेण सन्दिह्यत इति सन्देहालङ्कार इति केचिदाहुः। तत्र एकविषये समानबलतयानेककोटिस्फुरणस्य सन्देहत्वात् इह तु तर्वादिव्याप्ते प्रतिसम्बन्धिभेदव्यापनादेर्निगरणेन रञ्जनादेः स्फुरणञ्च। अन्ये त्वनिश्चयात्मकरूपविच्छित्त्याश्रयत्वेनैककोऽधिकोऽपि भिन्नोऽयं सन्देहप्रकार इति वदन्ति च तदप्ययुक्तं निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना तस्याश्च स्फुटतया सद्भावात् नु शब्देन चेवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता अलमुत्कटसन्देहप्रकारकल्पनया। "यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा। अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्" इत्यत्र मन्येशब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रम्" नापह्नवोत्प्रेक्षा।

२९ उदात्तम् "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" सा॰ द॰। "अधः कृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम्। ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृक्षिकरीकरोति"। "नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा। अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते"।

३० उपमा "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" सा॰ द॰। रूपकादिषु साम्यस्य व्यङ्ग्यत्वं व्यतिरेके च वैधर्म्यस्याप्युक्तिः उपमेयोपमायां वाक्यद्वयम् अनन्वये च एकस्यैव साम्योक्तिरित्यस्या भेदः। "सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च। उपमेयञ्चोपमानं भवेद्वाच्यम्" सा उपमा साधारणधर्मो द्वयोः सादृश्यहेतुर्गुणक्रियाप्रभृतिः मनोज्ञत्वादि, औपम्यवाचकमिवादि, उपमेयं मुखादि, उपमानं चन्द्रादि। "इव तुल्य। श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि। आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः"। यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा। एवं "तत्र तस्येव" इत्यनेन इवार्थे विहितस्य वतेरुपादाने। तुल्यादयस्तु "कमलेन तुल्यं मुखमित्यादौ" उपमेय एव। "कमलं मुखस्य तुल्य"मित्यादावुपमान एव "कमलं मुखञ्च तुल्ये"मित्यादावुभयत्रापि विश्राम्यन्तीति तत्सद्भावे आर्थी। एवं "तेन तुल्यं मुखादिना" तुल्यार्थे विहितस्य वतेरुपादाने। द्वे श्रौती आर्थी च। उदाहरणम् "सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ। हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले!॥" अत्र क्रमेण त्रिविधा श्रौती। "मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः। चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः"॥ "अत्र क्रमेण त्रिविधा आर्थी

धृतिरोधिना मम वियुक्तमिदं तमसा मनः। मनसिजेन सखे। प्रहरिष्यता धनुषि चूतशरश्च निवेशितः" । अत्र कस्यचित् मलन्तथामणयस्मृतिविरोधिना अन्धानेन मम मनो वियुक्तमित्यत्रइत्तत स्मरणम् न सदृशवस्तुदर्शनजन्यम् । चिन्ताजन्यम् यथा "पुरा यत्र स्रोत: पुलिनमधुना तत्र सरितां विपर्य्यासं यातो घनविरलभाव: क्षितिरुहाम् । बहो दृष्टं कालादपरमिव जात वनमिदं निवेश: शैलानां तदिदमिति बुद्धिं जनयति,, । अत्र प्रत्यक्षेषु स्रोतस्तरुनगादिषु चिन्ताजन्यत्वात् चिन्तोद्भूतं स्मरणम् व्यादिपदग्रहणात् परमयत्नादपि यथा "दर्शनसुखमनुभवत: साक्षादिव तन्मयेन हृदयेन । स्मृतिकारिणा त्वया मे पुनरपि चित्तीकृता कान्ता" । अत्र परप्रवलजन्यत्वात्तथात्वम् । प्रत्यभिज्ञान यथा ।"सर्पः पुरा परिचितो नियतं स एष सञ्जीवनश्च मनस: परिमोहनश्च"। अत्र य एव पूर्व्वानुभूतः स एवैष, इति प्रत्यभिज्ञा स्मरणम्। स्वप्नरूपं यथा । नागानन्दे "अद्य खलु स्वप्ने जानामि सैव प्रियतमा अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा" जीमूतवाहनेन विदूषकसमीपे स्वप्नस्य वर्णनम् । स्वप्नप्रत्यभिज्ञयो: पूर्वानुभूतसंस्कारजातत्वात् स्मरणत्वम् ।

१२१ स्वभावोक्तिः "नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्चेत्याख्या सालङ्कृतिर्मता"दण्डी "तुण्डैराताम्रकुटिलै: पक्षैर्हरितकोमलै:। त्रिवर्णराजिभि: कण्ठैरेते मञ्जुगिर: शुका "।"कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षण: । पारावत परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्"। "बध्नन् मन्दरोमाञ्चं कुर्व्वन् मनसि निर्वृतिम् । नेत्रे चामीलयन्नेव प्रियास्पर्श: प्रवर्त्तते"। "कण्ठेकालः करस्थेन कपालेनेन्दुशेखर ।जटाभि स्निग्धताम्राभिराविरासीद्वृषध्वज "। "जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् । शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्" । इय जातिरपि ।

१२२ हेतु "हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते १। हेतुहेतुमतोरैक्यवर्णनं हेतुरुच्यते२,,।"च०असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्,,१। "लक्ष्मीविलासोभवत: कटाक्षवेक्षण प्रभो २।

१२३ छेकापह्नुतिः "युक्त्या स एव पूर्णश्चेदुच्यते छेकापह्नुति:।" च० स एव धर्मेनिह्नव एव । "नेन्दुसोमो न निस्तर्कः सिन्धोरौर्व्वोऽयमुत्थित" । अन्येऽलङ्कारास्त्वेवान्तर्भूता: । देह भूषणानि च विरहादीनि तानि च मात्स्यादष्टौ "चिरसंमकुटं हारं कुण्डलं चाङ्गदं तथा ।कङ्कणं वलयञ्चैव मेखलेनस्वा वरम्,, ।वरं प्रधानं तेन अप्रधानानि पादकटकादीन्यपि । तत्र भूषणद्रव्याणि "पद्मरागश्च वज्रश्च गोमेदो विजयस्तथा । मुक्ता वैदूर्य्यनीलानि तथा मरकतादय: । सुवर्णेनापि घटना सर्वेषामुपलभ्यते। प्रधानभूषणेष्वेवमप्रधाने न नियम:। प्रधानभूषण प्राय शिरसोऽत्र विधीयते,, । भद्र० "सुखदा मणय: शुक्ला दु:खदा दोषशालिन:" युक्ति क० नवालङ्कारधारणे विहितनक्षत्रादि यथा "रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु । गुरुशुक्रबुधाहेषु वस्त्रालङ्कारधारणम्" ज्योति० ममापवाद: "उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मतौ । अनिष्टेष्वपि निर्द्दिष्टं वस्त्रालङ्कारधारणम्"। ६नायकयोरङ्गजादिभावभेदेषु ते च यथा "यौवने सत्वजास्तासामष्टाविंशतिसंख्यका । अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजा: ।शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता ।औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजा: । लीला विलासो विच्छित्तिर्व्विब्बोक किलकिञ्चितम्। मोट्टायित कुट्टमित विभ्रमो ललित मद । विकृत तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्। हसितं चकितं केलिरित्यष्टादशसंख्यका: । स्वभावजाश्च भावाद्यादश पुंसां भवन्त्यपि" । पूर्व्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति किन्तु सर्व्वेऽप्यमी नायिकाश्रिता एव विच्छित्ति विशेष पुष्णन्ति" सा०द० उक्ता । एषां लक्षणानि तत्तच्छब्दे वक्ष्यन्ते । ७अन्तगुरौ चतुष्कले"॥ऽरत्नाकारे गणभेदे च । [समर्थे घनादौ ।

**अलङ्कुमारि** त्रि० अलङ्कुमार्य्यै तद्वरणाय । कुमारीभरण-

**अलङ्कृत** त्रि० अलम्+कृ—कर्म्मणि क्त । भूषिते मण्डिते। "अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्" सा०द० "सत्कृतालङ्कृतां कन्यां योददाति स कूकुद " इत्यमर ।

**अलङ्कृति** स्त्री अलम्+कृ—भावे क्तिन् । १भूषणे करणे क्तिन् । २भूषणसाधने अलङ्कारशास्त्रोक्ते ३उपमाद्यलङ्कारे च "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" काव्य०प्र० "यो विद्वान् मन्यते काव्यं शब्दार्थावनलङ्कृती । असौ न मन्यते कस्मादनुष्णमनलङ्कृती" चन्द्रा० ।

**अलङ्क्रिया** स्त्री अलम्+कृ—भावे श । भूषायाम् ।

**अलङ्गामिन्** त्रि० अलं पर्य्याप्तं गच्छति णिनि स्त्रियांङीप् । गमनसमर्थे रिपु प्रति गन्तरि ।

**अलङ्घनीय** त्रि० न लङ्घनीय । अनतिक्रमणीये । "तदलमितरा माऽस्मै भेदं विन्ध्यावगाढता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि" माघ. ।

अलङ्घ्य त्रि० न लङ्घ्यः । अनतिक्रमणीये । "लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः" माघः ।

अलजी स्त्री अलं पर्याप्तं यथा तथा जायते जन—ड गौरा० ङीप् । सुश्रुतोक्ते सन्धिगतरोगभेदे यथा । "पूयालसं सोपनाहः स्रावा पर्वणिकालजी । क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव" । तल्लक्षणं तत्रैव "जाता सन्धौ शुक्लकृष्णेऽलजी स्यादर्शाञ्चैवास्यापिता पूर्वलिङ्गैः" इति ।

अलज्जा स्त्री न लज्जा विरोधे न० त० । १भावो अभावे न०त० । २लज्जाभावे । न०ब० । ३लज्जाशून्ये त्रि० ।

अलञ्जुर पु० अलं सामर्थ्यं जृणाति जृ—अच् पृ० उत् । मधिले अखिञ्जरे बलुजलाधारे(जाला)स्वयजये पात्रे । [धनादौ ।

अलञ्जीविक त्रि० अलं जीविकायै ४त० । जीविकापर्याप्ते

अलञ्जुष त्रि० अलं जुष्यते कर्मणि क्त० । भक्षणपर्याप्ते मांसादौ । "अथ तन्तूतस्य परिदन्दति तदलञ्जुषम्" शत०ब्रा० "मांसं हि जीवाय भक्षणायालं पर्याप्तं भवति" भा० ।

अलति पु० अल—वा अतिच् । गीतिमातृकायाम् स्वरसाधनार्थं षारिगामादिस्वरभेदे तदुपक्रमेणैव हि गीते प्रारम्भात्तेषां गीतिमातृकात्वम् ।

अलन्धन त्रि० अलं प्रभूतं धनमस्य अच् । पर्याप्तधने धनाढ्ये । "निरादिष्टधनश्चेत्तु प्रतिभूःस्यादलन्धनः" मनुः ।

अलन्तराम् अव्य० अलम्+अतिशये तरप् आम् । अत्यर्थं पर्याप्त्यादावर्थे । "इरोजायभुजामिष्टमिदं कर्तुमलन्तराम्" माघः । एवं तमप् आम् । अलन्तमाम् तत्रैवार्थे अव्य० ।

अलन्धूम पु० अलमत्यर्थो धूमः । धूमसमूहे जटाध० । [शौचरः ।

अलब्ध त्रि० न लब्धः । प्राप्तभिन्ने "अलब्धस्य प्राप्त्युपायो योग" ।

अलभ्य त्रि० न लभ्यः । अप्राप्ये । "रोगे चालभ्ययोगे च क्षीणस्ते पुत्रकेऽपि च । यद्ददाति प्रतिदृष्टं पर्वतापि न दुष्यति" कालमा० मरी० "अलभ्ययोगे प्रसरप्राप्तस्यस्थलनिमित्ते अयौचान्तदिवसे पूर्वत्व मलमासे" शु०त०रघु० ।

अलम् अव्य० अल—बा० अम् १भूषणे "अलयितीमकसक्ते यं प्रत्रय इव श्रियम्" अस्य उपपदसमा अलङ्कृत्य "अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते" मनुः । २सामर्थ्ये शक्तौ "विनाप्यमदलमृभूष्णुरिज्यायै तपस "सुत "कथा हि खलु मामामामलमन्त्रयसे यत" इति च माघः "वरेप पमितं लोकामल दग्धुं हि तत्तप" कुमा० ३पर्याप्तौ ४संपूर्णतायां ५मात्रर्थे "प्रतिभूःस्यादलन्धनः" मनु' अलममत्यस्य धनम् अच् बहुधनद्रुव्यर्थः कुल्लू० । ६वारणे, "अलं पिवादेन यथा श्रुतं त्वया" कुमा० "अलं विवादेन यशोविधीयताम्" महाना० ८निषेधे "आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत्" माघ० ९निरर्थकत्वे १०अत्यर्थे ११अवधारणे १२अत्यर्थे च गणर० । "विजयायेत्यलमभ्ययान्मुनिर्माम्" किरा० "अलं भूयः" भट्टि० । अस वा ए० अरम् । तत्रार्थे अरङ्कृतयज्वे उदा० ।

अलम्पशु पु० अलं यज्ञे निरर्थं पशु । "अमपसो यधौ "अलम्पशोरपयोष" काव्या० १८,१,४, पशुर्येभ्यः तनू यो नाम पशुमविन्दते सोऽलम्पशुरप्याः" कर्क० ।

अलम्पुरुषीण पु० अलं समर्थं पुरुषाय "अपपश्चेत्यादिना" पा० खार्थे ख । युद्धादिसमर्थे प्रतियोद्धादौ पुरुषे ।

अलम्बुद्धि स्त्री अलम् अर्थं बाधितविषयत्वात् पर्याप्ता वा बुद्धिः । मिथ्याबुद्धौ, पर्याप्तबुद्धौ च । "पश्यन्नपि नालम्बुद्धिमवाप" किरा० १२,२८, श्लोक०व्या० मल्लि० ।

अलम्बुष पु० अलं बुष्णाति बुष—क पृ०मस्य म । १वमने अर्दने । २भङ्गसे रावणसन्निधराक्षसे ३घटोत्कचहते राक्षसभेदे च "अलम्बुषं तथा युद्धे विचरन्तमभीतवत् । हैडम्बि प्रययौ तूर्णम्" इत्युपक्रम्य "रिद्धे विद्ध त्वामिगनन्द वै सदा ऋष्यश्लम्बुषं पक्वफलम्बुषं यथा" भा०द्रो०प० । अलम्बुषनामानौ च द्वौ राक्षसौ कुरुक्षेत्रयुद्धे समागतौ अयमेको घटोत्कचेन निहतः भी०प० अपरोपि निहतः इत्यविरोधः । ४अप्सरोभेदे तच्छब्दे विवृतिः । ५सुपर्णीर्याम् मेदि० ६लज्जालु लतायाम् ७अप्सरामपेयायां हस्तजहरेखायाञ्च स्त्री राज० । तस्याः फलम् अण् लुप् तत्फले न० । "कृष्ण्लम्बुषं पक्वमलम्बुषं यथा" भा०द्रो०प० ।

अलम्भूष्णु त्रि० अलम्+सामर्थ्ये भू ग्स्नु । "समर्थे" "विनाप्यमदलम्भूष्णुरिज्यायै तपसः सुतः" माघः ।

अलय पु० न लयः विरोधे न०त० । १लयविरोधिनि उद्भवे । "शक्रादिष्वपि लोकेषु श्रूयमाणौ लयालयौ" रामा० अभावे न०त० । २विनाशाभावे । नास्ति लयोयस्याः ३अवस्थानशून्ये भ्रमणशीले "स्वालयमालयमति कालिमालया" माघ. "बलेे लयम कश्चिदयस्थानं नास्ति यस्याः" मल्लि० ४विनाशशून्ये च त्रि० ।

अलम्बुसा स्त्री० ब०व० । देशभेदे ।

अलर्क पु० अलमर्कतेऽर्च्यते वा अर्क—घञ् अर्च—घञ् वा पृष० । १श्वेतार्कवृक्षे २क्षिप्तकुक्कुरे ३क्रिमिभेदे च स च भा०शा०प० दर्शितः यथा "अथ क्रिमिः स्वं प्रभेदोमांसपोषितशोणितः । दारुणो दारुणस्पर्शः कर्णसाभ्यासमागतः । स तस्योरु-

षष्ठमगतान्यलग्नरन्ध्रे ष्वशुभयुतोमरणाय शीतरश्मिः । भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो-वा" । पापयुतचन्द्रारिष्टम् । "द्यूनचतुरस्त्रसंस्थे पाप-द्वयमध्यगे शशिनि जातः । विलयं प्रयाति नियतं देवैरपि रक्षितोबालः" । पापमध्यगचन्द्रारिष्टम् । "क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्युसंस्थैर्वा । भवति विपत्तिरवश्यं जन्माधिपतेर्मतञ्चैतत्" । क्षीणचन्द्रारिष्टम् । "नागदगो१ सिद्ध२४ आती२२ पु८ वना१ श्वि४ नग्नि २२ धृति१८ मेधा २० । समाग्नि२१ दिक्१० चैत्यजा द्यये तत्तुल्याब्दैर्विधौ व्यसुः" । मेषादौनां तिथ्यंश-विशेषस्थचन्द्रारिष्टम् । "भौमे विलग्ने शुभदैरदृष्टे षष्ठे-ऽष्टमे वार्कसुतेन युक्ते । सद्य पितुं हन्ति यदेन्दुकेन्द्रे स्मरे यमारौ न शुभेक्षितौ च" । तिथिभौमारिष्टम् । "कर्कटधामनि सौम्यः षष्ठाष्टमराशिगोविलग्नर्क्षात् । चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्टयेन मारयति" । बुधारिष्टम् । "वृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिः । वर्षैस्त्रिभिर्भार्गवदृष्टियोगोलोकान्तरं प्रापयति प्रसूतम्" वृहस्पतिरिष्टम् । "रविशशिभवने शुक्रोद्वादशरिपुरन्ध्र-गोऽशुभैः सर्वैः । दृष्टः करोति मरणं षड्भिर्वर्षैः किमित्र विचित्रम्" । शुक्रारिष्टम् । "मारयति षोडशाहात् शनैश्चरः पापवीक्षितोलग्ने । संयुक्तोमासेन वर्षाच्च हस्तु मारयति" । तिथिशनिरिष्टम् । "राहुश्चतुष्टयस्थोमर-णाय वीक्षितोभवति पापैः । वर्षैर्दशभिः षोड़शभिः केचिदाचार्याः । षट्त्रिंशत्त्रिकोदयतत्स्थितिर्जीवितं हरति राहुः । पापैर्निरीक्ष्यमाणः षड्भिर्मासैर्वित्तं वर्षैः" । राहुरिष्टम् । "केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तु । रौद्रे सर्पसहृक्षे मार्यैः सम्भवते चाशु" । केतुरिष्टम् । "लग्ने ये द्रेक्काणा निगडाहिविहङ्गमपाप-परसंज्ञाः । मरणाय भवन्ति क्रूरयुताः सपतिदृष्टाः" । द्रेक्काणरिष्टम् । "मीनकर्कटयोरन्त्यौ वृश्चिकस्याद्यमध्यमौ । चत्वार एते द्रेक्काणा निगडाख्यास्ते । तुलामध्यान्त-सिंहाद्य कुम्भाद्याः पक्षिणः स्मृताः । वृषाद्यमकराद्यन्त्या द्रेक्काणा पाशधारिणः" । लग्नाधिपजन्मपती षष्ठाष्टमरिपु-फगौ प्रसवकाले । अस्तमितौ मरणकरौ राशिप्रमितैर्वत्-सरैः । जन्मपतिर्जन्मराश्यधिपः । लग्नाधिपजन्माधिपरिष्टम् "सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपगतैर्दृष्टाः । मासेन मृत्यु-दास्ते यदि न शुभैस्तत्र सन्दृष्टाः" । सौम्यग्रहरिष्टम् । "एकः पापोऽष्टमगः शत्रुगृहे शत्रुवीक्षितोवर्षात् । मार-यति नरं प्रसूतं सुधारसोयेन पीतोऽपि" । पापग्रहारिष्टम् । "होरायां सप्तमे सौरिर्हिबुकस्थश्च भास्करः । अस्मिन् योगे तु योजातः सोऽल्पायुर्भवति प्रिये । रन्ध्रपष्ठगते जीवे चतुर्थगते शशी । द्वादशस्थोयदा भानुर्वर्षमेकं न जीवति । "प्रतिपद्युत्तराषाढा भवत्यामेव कृत्तिका । पूर्व्वाभाद्रपदाष्ट-म्यामेकादश्याञ्च रोहिणी । द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा । एभिर्जातो न जीवेत यदि शक्र-समोभवेत्" । एवमन्येऽपि अल्पायुर्योगा आकरे दृश्याः । मनुना तु "अनभ्यासेन वेदानामाचारस्य तु वर्ज्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इति अन्न-दोषादेरपि अल्पायुर्हेतुतोक्ता । अन्नदोषश्च अभक्ष्यभक्षणादि तच्चाभक्ष्यशब्दे उक्तम् आचारश्च आचारशब्दे वक्ष्यते ।

**अल्पाल्प** त्रि० अल्पप्रकारः अतिशयेन वा अल्पः अल्प+प्रकारादौ द्विरुक्तिः । अत्यन्ताल्पे पादादौ "कथं चाल्पाल्पकं तस्य धर्म्मस्यार्द्धंक्षयो भवेत्" ति०त० स्मृ० ।

**अल्पिका** स्त्री अल्पा प्रशस्तेन कन् । १हृस्वपर्ण्यौम् । अल्पार्थे कन् २अल्पमात्रायाम् ।

**अल्पित** त्रि० अल्पं क्रियते स्म अल्प+करणार्थे णिच्–कर्म्म-णि क्त । अल्पीकृते "क्षमा न चक्रेऽल्पितकल्पपादपः" नै० ।

**अल्पिष्ठ** त्रि० अतिशयेन अल्पः इष्ठन् । अतिशयितात्ल्पे ।

**अल्पीयस्** त्रि० अतिशयेन अल्प ईयसुन् स्त्रियां ङीप् । अतिशयितात्ल्पे ।

**अल्ला** स्त्री अल्यते इत्यल् क्विप् अले भूषायै लाति गृह्णाति ला–क उ०त० । १मातरि । अलतीति अल् पचाद्यच् अलं लाति अल्लामपि गृह्णाति जानाति वा ला–क । २सर्व्वमायायां सर्व्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्व्ववेदे अल्लोपनिषदि अल्लाख्यत्वादिभ्रान्ते प्रसिद्धा ।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां, दहौ, भक्षणे, वधे, सामर्थ्ये, अवगमे, करणे, दहनोत्पादने च यथायथं सक० अक० च भ्वादि० सेट् पर० । अवति आवीत् । आव । अव्यात् । अविता । अवित । अवतु । अविष्ट । "अ-श्रद्धयोगिरिसुता शशिभृतः प्रियतमा" उद्भ० । "अरि-ष्टसदयादवत" भक्तोदय । "प्रविष्टोभिनभाविशु" । य० २२,२९, तत्र तर्पणे "न मामवति सद्वीपा रत्नसूरपि मेदिनी" रघुः । रक्षणे "यदाविथ सखीयतो यदाविथ" ऋ० १,१२१,५, "आविथ रक्षसि अध्यत तपयसि" भा० गतौ च व्याप्तौ "बर्हिः सदताविता" ७,५९,६, "अविता

प्रागच्छत्" भा०। भवगणे च "प्रोषदश्वो न यवसेऽविष्यन् यदा"। ७,२,२, "अविष्यन् भक्षयिष्यन्" "भा० टप्यविष्यन्नसेषु तिष्ठति' १,४८,२, "अविष्यन् भक्षयिष्यन्" भा० एवमन्यार्थेपूदाहार्यम्।

**अव** अव्य० अव–अच्। १निश्चये, २व्याप्तौ, ३अनादरे, ४ईषदर्थे ५आलम्बने, ६शुद्धौ, ७परिभवे, ८नियोगे, ९निम्नतायां च। अयं चादिः प्रादिश्च "अव स्नानावलम्बशुद्धीषदर्थव्याप्ति पराभवातियोगेषु" गण०र०। ज्ञाने अवगतोऽर्थः। अवज्ञाया-मवजानाति। आलम्बने आलम्ब्य यष्टिं गच्छति शुद्धौ अवदातम्। ईषदर्थे अवहन्ति अल्पं हन्ति, व्याप्तौ अव-कीर्णं। परिभवे अवहन्ति। अतियोगे अवघात इत्युदा-हृतम्। अनादरे "अवजानासि मां यस्मात्" रघु अव-मान। व्याप्तौ अवकाश' अवस्था व्याप्तौ न सर्वतः प्रवेश इति तस्य व्याप्त्यर्थकता। अवगाहते। निश्चये अवस्यति अवसाय अवधारयति। निम्नतायाम् अवनमति अवतरति अवक्षिपति अवाचीनः इत्यादि। ईषदर्थस्य बोधकत्व। प्रोहीनवहन्ति अवघातस्य वितुषीकरणार्थं एकदेशमात्रे भाव न तु सर्वावयवे इति ईषदर्थद्योत-कता पराभवे गतूत अवहन्ति पराभवतीत्यर्थः नियोगे अवक्लृप्ति "एनेषां नियोगे" सा० अनियोगोऽनवक्लृप्ति सि०कौ अवकल्पते। अस्य धातो लोम घगाह। "अवा-दय क्रुष्टाद्यर्थे तृतीयया" वा० उक्ते क्रोशार्थेऽपि अव-क्रुष्ट कोकिलया अवकोकिल।

**अवकट** अव+स्वार्थे कटच्। १अवगन्त्रार्थे अतिशयिताधरे तत्र स्वार्थे कन् तत्रैव। [पु०।

**अवकम्पित** अव+कम्प कर्त्तरि–क्त। १विचलिते २मुद्रभेदे

**अवकर** पु० अव+कॄ–अप्। १उत्कूरे "सोमानवकरगर्त्ताः" मा०ब्रा० "अवकर उत्करेति" भा०। २सम्मार्ज्जन्यादिनिक्षि-प्तधूल्यादौ। "अवकरशोधनेन" ५,१२४, मनुव्या० कुल्लू०।

**अवकर्षण** न० अव+कृष–ल्युट्। बलपूर्व्वकाकर्षणे स्थाना-न्तरनयनार्थं बलेनाकर्षणे।

**अवकलित** त्रि० अव+कल–क्त। १दृष्टे २ज्ञाते ३गृहीते च

**अवका** स्त्री अव–पतृणे कर्मणि क्वुन् क्षिपका० न इत्त्वम्। शैवाले "तदत्र करोत्यवकामुपदधाति अवकाभि मच्छा-दयति आपोवा वा अवका" शत०ब्रा० 'अरत्निमात्रेऽ-पादा दक्षिणेनावकाभूपरिष्टाश्च" कात्या० १७,४,२८ "अवकासु शैवालेषु कर्क०। "मण्डूकावकावेतसशाखावेणी ब्रह्मावकर्षति' का० १,२,१०,।

**अवकाश** पु० अव+काश–घञ्। अवस्थितियोग्यतासम्पादके काले, देशे च। तत्र कालिकोऽवकाश क्रियान्तरस्थितियो-ग्यतासम्पादक स चावसर इत्यप्युच्यते, "तस्यावकाशे रवि-सक्लृप्तम्" इति भट्टि। द्रव्यान्तरस्थितिप्रवेशयोग्यता-सम्पादको दैशिक स चावकाश इत्येव 'अवकाशं किलो-दन्वानिति" रघु।

**अवकीर्ण** त्रि० अव+कॄ–क्त। १व्याप्ते "चतुष्कपुष्पप्रकारावकीर्णं कुमा०। २चूर्णिते ३ध्वस्ते च" भावे क्त। ४"अवकीर्णत्वे, ब्रह्मचर्य्यव्रतभङ्गे। अवकीर्णनिमित्तं तु ब्रह्महत्या-व्रतमाचरेत्"। याज्ञ०।

**अवकीर्णिन्** पु० अवकीर्णमनेन इष्टा० इनि। ध्वस्तव्रते ब्रह्मचारिणीयद्व्रतस्य स्त्रीसङ्गमादिवर्जन तस्य भङ्गे-ऽवकीर्णिना। "अवकीर्णी तु काणेन गर्दभेन चतुष्पथे। पाकयज्ञविधानेन नैर्ऋतं निशि याजयेत्" याज्ञ० "कुशी-लवोऽवकीर्णी च वृषलीपतिरेव च" मनु अवकीर्णि-लक्षणञ्च–"कामतोरेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः "अवकीर्णी भवेद्-गत्वा ब्रह्मचारी तु योषितम्। गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति' या० स्मृ० स्त्रियं विनाऽपि रेतस त्यागे व्रतलोपः "ब्रह्मचारी चेत् स्त्रियमुपेयात् अरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्वपेत् तत्र जुहुयात् कामाय स्वाहा कामकामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहेति एतदेव रेतस प्रयत्नोत्सर्गे' इति वशिष्ठोक्तेः तेन कामतोरेतस उत्सर्गेऽपि अवकीर्णित्वम्। अकामतस्तु नावकीर्णित्वं किन्तु प्रायश्चित्तान्तरं यथोक्तं मनुना 'स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्क-मर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्"।

**अवकुञ्चन** न० अव+कुञ्च–ल्युट्। १आकुञ्चने आकुञ्चनञ्च यत् स्वेषामवयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भ-कसंयोगोत्पादकं वक्राद्यवयवकोटिस्थोत्पादकं च कर्म यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्म्मेति प्रत्यय, तादृशं कर्म्म" वै०सू०उ०। करणे ल्युट् "अतऊर्द्ध्वं सर्वभेदनाभवन्ति उपक्रम्य" "तोदनभेदनस्तम्भन-स्वप्नावकुञ्चनाङ्कुशिका भवन्तीति" सुश्रुतोक्ते २रोगभेदे च।

**अवकीर्णिव्रतम्** अवकीर्णिनो व्रतम् प्रायश्चित्तम्। "अथातो-ऽवकीर्णि प्रायश्चित्त व्याख्यास्यामः ब्रह्मचारी यदा वकीर्य्येत स चतुर्थकालमब्दं भैक्ष्यं चरेदेव पूतो भवतीति"

यातातपोक्ते "एतस्मिन्नेव संप्राप्ते वसित्वा गर्द्दभाजिनम् । सप्तगृहांश्चरेत् भैक्ष्यं स्वकर्म्म परिकीर्त्तयन् । तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकम् । उपस्पृशंस्त्रिषवणमेनसः स विशुध्यति" मनूक्ते अवकीर्णिव्रतमुपक्रम्य "तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात् ओङ्कारपूर्व्विकाभिः । संवत्सरं वा नक्तं भैक्ष्यं चरेत् चतुर्थकाले मितभुग्गायत्रीं वत्सरान्तगा जपेदिति" शङ्खलिखितोक्ते च "अवकीर्णिनिमित्तन्तु ब्रह्महत्याव्रतञ्चरेत् । खरचर्म्मवासा षण्मासांस्तथा मुच्येत किल्विषात्" अङ्गिरसोक्ते च व्रतभेदे । एतस्य विषयभेदः प्रायश्चित्तविवेकतोऽवसेयः ।

**अवकुटार** त्रि० अव+स्वार्थे अतिशये वा कुटारच् अवनतनिम्नादौ १अवनत्यार्थे २वैरूप्ये न० ।

**अवकृष्ट** त्रि० अव+कृष-क्त । १दूरीकृते २अपसारिते, ३वहिष्कारिते च । अवकृष्टं गृहावकरादेरवकर्षणमस्त्यस्य अर्श० अच् । ४गृहावकरमार्जके दासभेदे पु० । "पणोदेयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् । षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः" मनुः । "अवकृष्टस्य गृहादिसमार्जकोटकादिवाहादेः कर्म्मकरस्य कुल्लू०" ।

**अवकृष्य** त्रि० अव+कृष कर्म्मणि क्यप् । १आकर्षणीये २दूरीकार्य्ये अव+कृष ल्यप् । ३आकृष्येत्यर्थे अव्य० ।

**अवक्लृप्ति** स्त्री अव+क्लृप-क्तिन् । सम्भावनायाम् "अनवक्लृप्त्यामर्षयोः" पा० "अनवक्लृप्तिरसम्भावना" सि० कौ० "क्व भोक्ष्यसे अनवक्लृप्तावेव" सि०कौ० ।

**अवकेशिन्** त्रि० अवच्युतं कं सुखं यस्मात् प्रा०ब० अवकं फलशून्यतामीषितं शीलमस्य अवक+ईष-णिनि । १अफले वृक्षे । अवरमाः केशा विद्यन्ते अस्य इनि । २अल्पकेशयुक्ते । [लया क्रुष्टे ।

**अवकोकिल** त्रि० अवक्रुष्टः कोकिलया प्रा० स० । कोकि-

**अवक्तव्य** त्रि० न वक्तव्य । १वक्तुमनर्हे अश्लीलादौ वाक्ये २निषिद्धवचने ३मिथ्याभूते च ।

**अवक्त्र** त्रि० नास्ति वक्त्रं यत्र । सुश्रुतोक्ते योषापातादिनिःसारणमुखशून्ये व्रणादौ "अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि । गेलवर्त्तगुदाध्यासनाड्योऽवक्त्राः प्रयोजिता" ।

**अवक्र** त्रि० विरोधे न०त० । वक्रताविरोधिनि सारल्ययुक्ते ।

**अवक्षिन्** त्रि० अव+क्षप णिनि ह० । अवकर्षणशीले "अवक्षिणं वृषभं यथा जुरम्" ऋ०८,१,२, "अवक्षिणमवकर्षणशीलम्" भा० ।

**अवक्रन्द** त्रि० अव+क्रन्द कर्त्तरि अच् । १नीचैः क्रन्दनशीले "क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा" य०२२७। भावे घञ् । नीचैः २क्रन्दने पु० । भावे ल्युट् अवक्रन्दनमप्यत्र न० ।

**अवक्रम** पु० अव+क्रम-भावे घञ् । अवक्रमणे निम्नगतौ ।

**अवक्रय** पु० अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री-अच् । आहार्य्यस्य प्रतिरूपत्वेन देये १मूल्ये २भाटके च भाटकस्य गृहवस्त्रादिवस्तुनः एतावत् उपभोगे धनं आहार्य्यमिति समयेन परायत्तीकरणम् करणेऽच् । ३तत् साधने द्रव्ये शुल्कादिस्थाने वणिग्भिर्न्नृपाय देये (माशुल) ४करे च ।

**अवक्रान्ति** स्त्री अव+क्रम-क्तिन् । निम्नक्रमणे अधोगमने ।

**अवक्रुष्ट** त्रि० अव+क्रुश-कर्म्मणि क्त । कृताक्रोशे यमुद्दिश्य क्रोशः कृतस्तस्मिन् । "अवक्रुष्टः कोकिलया" सि०कौ० ।

**अवक्लिन्न** त्रि० अव+क्लिद-क्त । पाकादधस्तात् १क्लिन्ने (पचा) १फलादौ जलादिना २अत्यन्तार्द्रे च । पूर्व्वं पक्वं ततोऽवक्लिन्नं राज० पूर्व्वनि० । अवक्लिन्नपक्वम् ।

**अवक्लेद** पु० अव+क्लिद-भावे घञ् । पाकोत्तरं क्लेदे (पचाइयोया) क्लेदश्च जलविशेषसंयोगेन वस्तुनो नाशजनकावयवसंयोगशैथिल्यसम्पादको व्यापारः ।

**अवक्षय** पु० अव+क्षि-भावे अच् । वृद्ध्युत्तरं नाशोन्मुखावस्थायां भावविकारभेदे ।

**अवक्षयण** न० अव+क्षि-णिच्-भावे ल्युट् । अवक्षय साधने व्यापारभेदे । "ब्राह्मणा उन्मुखावक्षयणमकृत" शत०ब्रा० । [यस्यावक्षेपः कृतस्तस्मिन् ।

**अवक्षिप्त** त्रि० अव+क्षिप-कर्म्मणि क्त । कृतावक्षेपे वस्तुनि

**अवक्षीण** त्रि० अव+क्षि-क्त । १अवक्षयप्राप्ते विनाशोन्मुखे पदार्थे । भावे क्त । २अवक्षये न० ।

**अवक्षुत** त्रि० अव+क्षु-क्त । उपरि कृतक्षुते । यस्योपरि क्षुतं कृतं तस्मिन् । "द्विपदस्तं गवाघ्रातं पतितान्नमवक्षुतम्" मनुः ।

**अवक्षेपण** अव+क्षिप-भावे ल्युट् । अधःसंयोगानुकूले क्रियाभेदे । "मुषलमवक्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगरूपादसमवायिकारणात् हस्ते क्रिया जायते ततोऽवक्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् हस्तसंयुक्तमुषलेऽप्यवक्षेपणं कर्म्म युगपदेव जायते" वै०सू०उ० एवं ज्ञेयम् । "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि" वैसू० "उत्क्षेपणं तथाऽवक्षेपणमाकुञ्चनं तथा । प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" भाषा० । भावे घञ् । अवक्षेपोऽप्यत्रार्थे । करणे ल्युट् ङीप् । २वलायामोषधौ स्त्री ।

**अवखात** न० निम्नः खातः । गभीरगर्त्ते ।

करणे घञ् । २घरट्टे (याँता) पेषणयन्त्रभेदे । भावे घञ् । ३चालने घट्टनाक्रियायाम् भावे ल्युट् । अवघट्टनं तत्रैवार्थे न० । "प्रदेशस्य वक्त्रयोऽवघट्टनादयोऽपि व्यथा" सुश्रुत० । युच् । तत्रैवार्थे स्त्री ।

**अवघट्टित** त्रि० अव+घट्ट–कर्म्मणि क्त । चालिते ।

**अवघर्षण** न० अव+घृष–ल्युट् । अधःस्थापयित्वा १घर्षणे सर्वतो २ घर्षणे "दुन्धिबात् व्रणवर्त्मावघर्षणम्" सुश्रुत ३मार्जने च "जलावघर्षणम् पात्रावघर्षणम्" स्मृतिः "शुद्धिरेतेषां गोवालैश्चावघर्षणात्" या० स्मृ० ।

**अवघात** पु० अव+हन–घञ् । १अवहनने तण्डुलादेर्नितुषी-करणव्यापारे । अवघातश्च व्रीहिसंस्कारार्थः व्यापारभेदः तदकरणे यथाविधिः "व्रीहीन् प्रोक्षति व्रीहीनवहन्ति" इत्यादौ प्रोक्षणादिजन्यः । कालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते प्रोक्षिता व्रीहय एवावघाताय कल्प्यन्ते" कुसु० तथाचावघातजन्यः संस्कारः व्रीहिनिष्ठ इति मीमांसकाः । नैयायिकास्तु "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिषु" कुसु० उक्तेः पुरुषएव संस्कारोऽदृष्टविशेषो जन्यत इत्याहुः अवघातश्च भर्जितेऽपि सत्येव तदीयवितुषीकरणरूपपरिष्कारहेतुः २हननमात्रे ३ताडन-मात्रे च "कर्णावघातैरपि ताड्यमाना दूरीकृताकरि-वरेण" "अधरे दन्तदन्तावघाते" सा०द० ।

**अवघातिन्** त्रि० अव+हन–णिनि । अवघातके स्त्रियां ङीप् ।

**अवघुष्ट** त्रि० अव+घुष–क्त । घोषणया प्रचारिते ।

**अवघूर्णन** न० अव+घूर्ण–भ्रमणे भावे ल्युट् । सर्वतोभ्रमणे ।

**अवघोटित** अव+घुट–परिवर्त्ते क्त । सर्वतोवेष्टिते सम-न्तात् परिवृते । यथा "विविक्ता मायादवघोटितया सम-गरमनुप्राप्य" भा०व०प० । [युच् । अवघोषणाप्यत्र स्त्री ।

**अवघोषण** न० अव+घुष–भावे ल्युट् । सर्वजनज्ञानार्थघोषणे

**अवघ्राण** न० अव+घ्रा–भावे ल्युट् । आघ्राणे "पितृपितृ-यज्ञवद्धोममभ्येति प्राणसमाघ्राणात्" का० २०५,११ "अवघ्रा-णमितरेषु" का०२२,१०,४ । इदञ्च भोजनानुकल्पतया शिष्ट-सम्मतम् । अतएव भाद्रपदभोजनस्याशक्यतया उपवास-दिने तदवघ्राणमात्रम् विहितम् "आघ्राय पितृवीक्षित-मिति" स्मृतेरुपाचरणम् ।

**अवचक्षण** त्रि० अव+चक्ष–ल्यु । निन्दितार्थस्यानकर्त्तरि "कुत्साभीक्ष्ण्ययोरर्थे एतस्य तिङ परत्वे अनुदात्तत्वम् ।

**अवचन** न० न वचनं कुत्सायां न०त० १निन्दायाम् । अभावे न०त० । २ कथनाभावे "भक्तो चावचनात्" कात्या० । २०,७,२१, "अवचनेऽग्निष्टोमः" । कात्या० २२,१,२ । न०ब० । ३वचनशून्ये त्रि० "शकुन्तला साध्वसादवचना तिष्ठति" । शकु० ।

**अवचनीय** त्रि० वक्तुमनर्हः वच–अर्हार्थे अनीयर् न०त० । १वक्तुमनर्हे अश्लीलादौ शब्दे "वादेष्ववचनीयेषु तदेव द्विगुण भवेत्" मनुः १वचनीयं निन्द्यम् न०त० । २निन्द्यभिन्ने त्रि०

**अवचय** पु० अव+चि–अच् । पुष्पफलाद्यादाने । "ततः प्रवि-शतः कुसुमावचयमभिनयन्त्यौ सख्यौ" शकु० ।

**अवचाय** पु० अव+चि "हस्तादाने चेरस्तेये" पा० अचोऽपवादको घञ् । हस्तेन पुष्पफलाद्यादाने । "अविरतकुसुमा-वचायखेदा" माघः । अव+चि–णमुल् अवचायम् । अभी-क्ष्णमवचित्येत्यर्थे अव्य० ।

**अवचारण** त्रि० अव–चर–णिच्–ल्युट् । १प्रचारणे सुश्रुतोक्ते २चारणाख्यविधौ च "विशेषक्रियावचारणाञ्च" "सेनापि चरणं जातीः शोधणं सावचारणम्" "शुक्रदोषक्षयकर यथासमवचारणम्" सुश्रुतः ।

**अवचूड**(ल) पु० अवनता चूडाग्रं यस्य वा कोपः । १ध्वजा-धोवद्धे वस्त्रे । "पिच्छावचूडकलनामिवोरः" "पिच्छाव-चूडमनुमायवधाम जगृहुः" इति च माघः "अश्लोभ्य ड्राव-चूडाख्यौ मूर्द्धाधोऽस्यचूडयोरिति" हला० उक्ते २ध्वजा-धोलम्बिते चामरादौ च ।

**अवचूर्णन** न० सुश्रुतोक्ते १व्रणरोगभेदे । "तत्र व्रणस्य षष्टिरु-पक्रमा भवन्ति" इत्युपक्रम्य "सर्पिस्तैलं रसक्रियावचूर्णन-व्रणधूपनम्" इत्युक्त्वा "तेषु कषायो वर्त्तिः कल्कः सर्पि-स्तैलं रसक्रियावचूर्णनमिति शोधनरोपणानीति" । अव+चूर्ण–भावे ल्युट् । २पेषणे । चूर्णैरध्वंसते अवचूर्ण-यति अव+चूर्ण+अवध्वंसार्थे णिच्–भावे ल्युट् । ३चूर्णनेनावध्वंसे ।

**अवचूर्णित** त्रि० अव+चूर्ण–पेषे कर्म्मणि क्त । १पिष्टे । अवचूर्णयतेर्नामधातोः क्त २चूर्णेन नावध्वस्ते ।

**अवचूल** न० अवचूडवत् विग्रहः । ध्वजाधःस्थे १चामरादौ ध्वजाधारे "दिवसकरधारणस्थावचूलचामरकलाप इव" काद० । [चामरे त्रिका०

**अवचूलक** न० अवचूलमिव इवार्थे कन् संज्ञायां वा कन् ।

**अवच्छिन्न** त्रि० अव+छिद–क्त । अवच्छेदः विशेषणोपा-धिना विशेषकरणम् । उपाध्यादिना विशेषिते अव-च्छेदकतानिरूपिते च "प्रतियोग्यसमानाधिकरणयत्-समानाधिकरणात्यन्ताभावप्रतियोगिताच्छेदकावच्छिन्नं" यत्र

गौरीरूपा स्यात् मातङ्गी कल्किरूपिणी । स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम् । स्वयं च भगवान् कृष्णः कालीरूपोऽभवद् व्रजे” । भागवते १स्क० तु प्राधान्यतः चान्येऽप्यवतारा उक्ताः यथा “लीलावतारानुरतो देवतिर्य्यङ्नरादिषु” इत्युपक्रम्य । “जगृहे पौरुषं रूपं भगवान् महदादिभिः । सम्भूतं षोड़शकलमादौ लोकसिसृक्षया । यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः । नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः । यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः । तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्ज्जितम् । पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् । सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् । एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः । स एव प्रथमं देवः कौमारं सर्गमाश्रितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्१ । द्वितीयन्तु भवायास्य रसातलगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः२ । तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः । तन्त्रं सात्वतमाचष्ट नैष्कर्म्म्यं कर्म्मणां यतः३ । तुर्य्ये धर्म्मकलासर्गे नरनारायणावृषी । भूत्वात्मोपशमोपेतमकरोद् दुश्चरं तपः ४ । पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्५ । षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया । आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्६ । ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम्७ । अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः । दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनमस्कृतम्८ । ऋषिभिर्य्याचितो भेजे नवमं पार्थिवं वपुः । दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः९ । रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे । नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्१० । सुरासुराणामुदधिं मथ्नतां मन्दराचलम् । दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ११ । धान्वन्तरं द्वादशमं त्रयोदशममेव च१२ । अपाययत् सुरानन्यान्मोहिन्या मोहयन् स्त्रिया १३ । चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्ज्जितम् । ददार करजैरूरावेरकां कटकृद्यथा१४ । पञ्चदशं वामनकं कृत्वागादध्वरं बलेः । पदत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम् १५ । अवतारे षोड़शमे पश्यन् ब्रह्मद्रुहो नृपान् । त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् १६ । ततः सप्तदशे जातः सत्यवत्यां पराशरात् । चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः १७ । नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया । समुद्रनिग्रहादीनि चक्रे वीर्य्याण्यतःपरम् १८ । एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी । रामकृष्णाविति भुवो भगवानहरद्भरम् १९ । २० । ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् । बुद्धो नाम्नाजिनसुतः कीकटेषु भविष्यति२१ । अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु । जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः २२ । अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः । यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः । ऋषयो मनवो देवा मनुपुत्त्रा महौजसः । कलाः सर्व्वे हरेरेव सप्रजापतयः स्मृताः । एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । इन्द्रारिव्याकुलं लोकं मृड़यन्ति युगे युगे” । “कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः । नाम्ना केन विधानेन पूज्यते तदिहोच्यताम्” । इति प्रश्ने । “कृतं त्रेता द्वापरञ्च कलिरित्येषु केशवः । नानावर्णाभिधाकारो नानैव विधिनेज्यते” । कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः । कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलुम् । मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः । यजन्ति तपसा देवं शमेन च दमेन च । हंसः सुपर्णो वैकुण्ठो धर्म्मो योगेश्वरोऽमलः । ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते । त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः । हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः । तं तदा मनुजा देवं सर्व्वदेवमयं हरिम् । यजन्ति विद्यया त्रय्या धर्म्मिष्ठा ब्रह्मवादिनः । विष्णुर्यज्ञः पृश्निगर्भः सर्व्वदेव उरुक्रमः । वृषाकपिर्जयन्तश्च उरुगाय इतीर्य्यते । द्वापरे भगवान् श्यामः पीतवासा निजायुधः । श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः । तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् । यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप । नमस्ते वासुदेवाय नमः सङ्कर्षणाय च । प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः । नारायणाय ऋषये पुरुषाय महात्मने । विश्वेश्वराय विश्वाय सर्व्वभूतात्मने नमः । इति द्वापर उर्व्वीश स्तुवन्ति जगदीश्वरम् । नाना तन्त्रविधानेन कलावपि यथा शृणु । कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् । यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः । ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ भा० ११ स्कन्ध० । अन्यत्र अवतारभेदस्तत्रैवोक्तः “हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः । विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा

भवतीति" चिन्तामणिः। अवच्छेदकता हि स्वरूपसम्बन्धविशेषः अनतिरिक्तवृत्तित्वं वा तन्निरूपितत्वमवच्छिन्नत्वं यथा दण्डादीनां घटकारणतावच्छेदकं दण्डत्वादिकं तस्य तदतिरिक्तदेशेऽवृत्तित्वात् एवं घटादीनामत्यन्ताभाव-प्रतियोगितायाः तदतिरिक्तदेशेऽवृत्तित्वात् घटत्वादिक-मवच्छेदकम् अत प्रतियोगितायां घटाद्यवच्छिन्नत्वम्। परिमाणादौ च अवच्छिन्नत्वमियत्ताकरणम् यथा द्रोणाव-च्छिन्नो व्रीहिः द्रोणपरिमाणेन कृतपरिच्छेदो व्रीहिरित्यर्थः। सीमाकरणमप्यवच्छेदः। घटावच्छिन्न आकाशः घटाकाश कर्णशष्कुल्यवच्छिन्न आकाशः श्रोत्रमित्यादि। एवमन्तः-करणावच्छिन्नं चैतन्यं जीव इति वेदान्तिनः।

**अवच्छिन्नवाद** पु॰ अवच्छिन्नतया अन्तःकरणावच्छिन्नतया जीवस्य वादो व्यवस्थापनम्। वेदान्तिमतप्रसिद्धे चैतन्यस्य अन्तःकरणावच्छिन्नतया व्यवस्थापके मतभेदे। तथा हि तेषां मतद्वैधम् केचित् अन्तःकरणे प्रतिबिम्बितं चैतन्यं जीव इति प्रतिपेदिरे केचित्तु तदवच्छिन्नं चैतन्यं जीव इति। तत्र नीरूपस्य चैतन्यस्यान्तःकरणे प्रतिबिम्बासम्भवेन प्रति-बिम्बस्य च मिथ्यात्वेन जीवस्य सत्यत्वानुपपत्तेः बन्ध-मोक्षयोः सामानाधिकरण्याभावापत्तेः प्रतिबिम्बवादं दूषयित्वाऽवच्छिन्नवादं समर्थयाञ्चक्रिरे। यथा च नैयायि-कादीनामेकस्यापि नभसः कर्णशष्कुल्यादिभेदेन उपाधि-कृत नानात्वं न वस्तुकृतमेवमेकस्यापि चैतन्यस्यान्तःकरणो-पाधिभेदेनावच्छिन्नतया नानात्वं तेन "तद्गुणसार-त्वात्" शा॰सू॰ "घटसंवृत आकाशे नीयमाने यथा घटे। घटो नीयेत नाकाशस्तद्वज्जीवो नभोपमः" इत्युक्तेश्च जीवस्य न स्वत इहलोकपरलोकगामित्वमपि तु बुद्धिरूपाधि-भेदेन तथा व्यवहारः अतो न बन्धमोक्षव्यवस्थानुपपत्तिः यस्मिन्नुपाधौ अज्ञानाधीना संसारप्रवृत्तिस्तस्य जीवभावा-त्मकतया बन्धः, यत्र च तन्निवृत्तिः न तत्र तथा, किन्तु मोक्षः। विस्तरस्त्वाकरे।

**अवच्छुरित** न॰। अव+छुर–भावे क्त। १अट्टहासे–स्वार्थे कन् तत्रैव। कर्मणि क्त। २मिश्रिते त्रि॰।

**अवच्छेद** पु॰ अव+छिद–भावे घञ्। १छेदने २सीमाकरणे ३विशेषकरणे ४अवधारणे "शब्दार्थानामवच्छेदे विशेषस्मृति-हेतवः" वाक्य प॰। ५इयत्ताकरणे ६व्याप्तौ च। अवच्छिद्यते-ऽनेन करणे घञ्। इयत्ताकरणसाधने ७एकदेशे अवय-वादौ। य कश्चित् पदार्थः कस्मिंश्चिदाधारे एकदेशे तिष्ठति तत्रैव प्रदेशान्तरे नैव तिष्ठतीति स अव्याप्यवृत्तिः तस्याव्याप्यवृत्तितायाः निरूपकोऽवयवादिः। यथा वृक्षे अग्रदेशे कपिसंयोगः मूलदेशे तदभावः अतः कपि-संयोग अव्याप्यवृत्तिः तादृशाव्याप्यवृत्तितायाः नियाम-कश्च मूलादिप्रदेशः सत्रावच्छेदशब्देनाभिधीयते। तादृशा-वच्छेदश्च द्विविधः देशः कालश्च। तत्र देशस्तूक्तः काल-विशेषे तदभावात् काल एव तत्राव्याप्यवृत्तितायां नियामकः। यथा आत्मनि जाग्रदादौ ज्ञानं सुषुप्तौ तदभावः। देशरूपस्तूक्तः। अवच्छेदावच्छेदेन साध्यसिद्धौ सामा-नाधिकरण्यसिद्धिः प्रतिबन्धिका इति शिरोमणिः। अव-च्छेदः यावन्तः साध्यसिद्धौ प्रदेशास्तावतामेवावच्छेदेन साध्यसम्बन्धव्यापकत्वेनेति तदर्थः।

**अवच्छेदक** त्रि॰ अवच्छिनत्ति अव+छिद–ण्वुल्। १छेदके २इयत्ताकारके ३सीमाकारके ४अवधारके ५अव्याप्यवृत्ति-तानिरूपके च। अवच्छिन्नशब्दे विवृतिः। "प्रतियोगिताव-च्छेदकावच्छिन्नमिति" चिन्तामणिः। अवच्छेदकत्वं च अव-च्छेदके इव तदवच्छेदकेऽपि स्वीक्रियते यथा वह्निमान् पर्वत इति बुद्धौ वह्न्यभाववान् पर्वत इति निश्चयः प्रतिबन्धकः तत्र प्रतिबन्धकतावच्छेदकं निश्चयत्वमिव तत्तद्विषयताऽपि तद-वच्छेदिका तथा च वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वत-त्वावच्छिन्नविशेष्यताशालिज्ञानत्वावच्छिन्नं प्रति वह्नित्वाव-च्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतासामानाधि-करण्यप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चय-त्वेन प्रतिबन्धकत्वे निश्चयत्वस्येव तत्तद्विषयतायाः अपि तत्प्रतिबन्धकतावच्छेदकत्वं तथा तादृशज्ञानत्वस्येव तत्तद्विष-यतायाः अपि प्रतिबन्धतावच्छेदकत्वम्। इयांस्तु भेदः अनुल्ले-ख्यमानजाते स्वरूपतोऽवच्छेदकत्वं न तदवच्छेदकतायाः अव-च्छेदकमस्ति तेन घटवत्तत्वमिति बुद्धौ घटत्वनिष्ठप्रका-रतावच्छेदकतायाः नान्यदवच्छेदकम् तथा च यथा घटनिष्ठ-प्रकारतायाः अवच्छेदकम् घटत्वम् एव घटत्वनिष्ठप्रका-रतायाः नान्यदवच्छेदकमतस्तस्य निरवच्छिन्नावच्छेदकता अनु-ल्लिख्यमानेत्युक्तेरुल्लिख्यमानजातेर्न स्वरूपतोऽवच्छेदकत्वं तेन घटत्ववान् देश इत्यादौ घटत्वप्रकारतायाः अवच्छे-दकमस्तीति। अयमाशय विशेषः धर्म्यंशे भासमानः धर्मः विशेष्यतावच्छेदकः प्रकारांशे भासमानः प्रकारतावच्छेदक एव सर्वत्र। किन्तु प्रतियोग्यंशे भासमानधर्मस्य न प्रतियो-गितावच्छेदकत्वमपि तु अतिप्रसङ्गाद्यनापादकस्यैव धर्मस्य तथात्वं यथा कम्बुग्रीवादिमान्नास्ति इत्याद्यभावबुद्धौ घटत्वस्यैव प्रतियोगितावच्छेदकत्वम् "सम्भवति लघौ

धर्मे गुरौ तदभावात्" दीधित्युक्तेः अवच्छेदकत्व विषयतावच्छेदकत्ववत् गुरुधर्मस्यापि स्वीकृतमाकरे ।

**अवच्छेदकत्वनिरुक्ति** स्त्री रघुनाथशिरोमणिकृते अवच्छेदकतापदार्थनिर्णायके अनुमानखण्डान्तर्गते ग्रन्थभेदे ।

**अवच्छेद्य** त्रि० अव+छिद्–ण्यत् । १छेदनार्हे २व्यवधार्य्ये विशेषणीये ३अवच्छेदार्हे च पदार्थे यथा दण्डत्वेनावच्छेद्या घटादिकारणता घटत्वेनावच्छेद्या घटप्रतियोगिता ।

**अवजय** पु० अव+जि–अच् । पराजये "येनेन्द्रलोकावजयाय दृप्तः" रघुः ।

**अवज्ञा** स्त्री अव+ज्ञा–अङ् । अनादरे । "आत्मन्यवज्ञां शिथिलीचकार" रघुः । "गत्यर्थमन्यतेर्द्वे चेष्टायनयो" कुम्भ० । "अविज्ञावद्धेय परितपति नोत्सैरपि बुधम्" उद्भटः ।

**अवज्ञात** त्रि० अव+ज्ञा क्त ।१ अनादृते २ तिरस्कृते ३कृतावमाने च

**अवज्ञान** न० अव+ज्ञा–भावे ल्युट् । १अवमाने २तिरस्कारे ३अनादरे "ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः" रघुः

**अवज्ञेय** त्रि० अव+ज्ञा-कर्म्मणि यत् । १अनादरणीये २तिरस्कार्य्ये "विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन" या०स्मृ० ।

**अवट** पु० अव+अटन् । १गर्त्ते, २कूपे । "रजसा गतसत्त्वानामेष धर्म्मः सनातनः । अवटे ये निधीयन्ते" रामा० । "भूतौदनो निवेद्यश्च स्वल्पापस्मारिणोऽवटे" सुश्रु० "अवटेष्ववनयति" शत०ब्रा० । ३देहस्थनिम्नस्थाने कण्ठमूलादौ च "अवटश्चैवमेतानि स्थानान्यत्र शरीरके" या०स्मृ० "शरीरे यः अवटः कश्चिन्निम्नोदेशः कण्ठमूलकक्षादि"मिता० ४ऐन्द्रजालिकजीविकावति च गर्गा० यञ् आवट्य । अवटभवे त्रि० । [आधारे ल्युट् । नरकभेदे नरकशब्दे विवृतिः ।

**अवटनिरोधन** पु० अवटे गर्त्ते निरुध्यतेऽत्र अव+नि+रुध

**अवटि** स्त्री अव+अटि । ।गर्त्ते २कूपे च या ङीप् अवटीत्यपि ।

**अवटीट** त्रि० अवनता नासिका प्रा०स० नतार्थे नासाया टीटच्देश अर्श आदित्यादच् । (खाँदा) नतनासिके जने ।

**अवटु** पु० अव+टीक–मितद्र्वा०डु । १गर्त्ते, २वृक्षभेदे, ३कूपे च । ४ग्रीवापश्चाद्भागे, ५घोटाया उन्नतभागे च स्त्री ४देहस्थे निम्नदेशे "अवटुश्चैवमेतानि स्थानान्यत्र शरीरके" इति या०स्मृ० पाठान्तरम् "अवटावथ कृन्तेच्च मन्यच्छेदेनमर्येश्वरम्" सुश्रु० । न०स० ५ वटुभिन्ने पु० ।

**अवटुज** पु० अवटौ जायते जन–ड ७त०। शिर स्थपश्चत्केशे घाटास्थकेशे "रागवानवटुजेष्ववलग्य" माघ ।

**अवटोदा** स्त्री न०त० अवटस्य कूपस्योदकमिव उदकमस्या उदादेशः । भारतवर्षीये नदीभेदे ।

**अवडङ्क** पु० अवगतो डङ्कः शब्दो यस्मात् । दृष्टस्थाने जटा० ।

**अवडीन** न० अव+डी–भावे क्त । अवरोहणरूपे पक्षिगतिभेदे ।

**अवत** पु० अव–अतच् भेदे पृ० टस्य त । अवटरूपे कूपादौ निरु० "सिक्तमवतम्" ऋ०१,१३०,२ "अवतमवटमिति" भा० "अवते न कोशम्" ऋ०४,१७,१६ ।

**अवतंस** पुंन० अव+तनस–घञ् । १कर्णपूरे, २शिरोभूषाभेदे च । "कर्णार्पितसशिरीषबन्धनाब्जदलम्" "स्वशाद्वलक्षोभचलावतंसा" "गण्डा नाभिरुप्रसवावतंसा" इति च कुमा० ।

**अवतंसित** त्रि० अव+तनस–क्त । भूषिते "समदनमवतंसितेऽधिकर्णम्" माघः । वा अल्लोपे वतंसितोऽप्यत्र ।

**अवतमस** न० अवततं व्याप्तं तमः प्रा०स०अच् समा० । व्याप्तान्धकारे । "अवतमसभिदायै भास्वताभ्युद्गतेन" माघः ।

**अवतरण** अव+तॄ–भावे ल्युट् । तीरादिप्रदेशात् १जलाद्यवगाहाद्यर्थमवरोहणे । २अन्यरूपेण प्रादुर्भावे "अंशावतरणम्" भा०आ०प० । वसुमात्रस्य स्वस्थानात् ३अवरोहणे (नामा) "कन्यावतरणे चैव ज्वरोदोषे प्रवर्त्तते । स्त्रीणामपप्रजातानां कन्यावतरणे च यः" सुश्रु० । अवतीर्य्यतेऽत्र येन करणे ल्युट् । नद्यादेः सोपानादौ ४तीर्थे ।

**अवतरणी** स्त्री अवतरति ग्रन्थोऽनया अवतॄ करणे ल्युट् । ग्रन्थप्रस्तावार्थं प्रथमसमुपोद्घातरूपायां सङ्गतौ (आभाष) इत्याख्याया २परिपाट्याञ्च स्वार्थे कन् अवतरणिकाऽप्यत्र ।

**अवतान** पु० अव+तन–घञ् कर्म्मणि घञ् । १ सन्ताने २अधोमुखे ३लताप्रताने च "लताप्रतानैरवततामवतानशतैस्तया" रामा० ।

**अवतार** पु० अव+तॄ करणे घञ् । १तीर्थे, (पुष्करिण्यादेः सोपानपद्धतौ) "रुद्धे गजेन सरितः सरुषाऽवतारे" माघः । भावे घञ् । २प्रादुर्भावे "नयावतारं कमलादिवोत्पलम्" मा भूत् परीवादनवावतारः" इति च रघु. ३देवानामशावेशावयेन प्रादुर्भावे च । "अवताराह्यसंख्येयाः" इत्युक्तेः तेषां बहुत्वेऽपि प्राधान्याद्दशैव विष्णोरवतारा शास्त्रप्रसिद्धा यथा "मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बुद्धः कल्की च ते दश" पुरा०मुण्डमालायां तु प्रकृतेरेव एते अवतारा उक्ता "प्रकृतिर्विष्णुरूपा च पुरुषश्च महेश्वरः । एव प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश । कृष्णरूपा कालिका स्यात् रामरूपा च तारिणी । बगला कूर्म्ममूर्त्तिः स्यात् मीनो धूमावती भवेत् । छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव भैरवी । सुन्दरी जामदग्न्यः स्यात् वामनो भुवनेश्वरी । कमला

राजकर्णांशजमम्। एवमन्ये मनुष्येन्द्रा बहवोऽन्या दिवौकसाम्। अजिरे वसुदेवस्य कुले कुलविवर्द्धनाः। गणस्त्वप्सरसां यो वै मया राजन् प्रकीर्त्तितः। तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च। तानि षोडश देवीनां सहस्राणि नराधिप। बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः। श्रियास्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले। भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः। द्रौपदी त्वथ सञ्जज्ञे शचीभागादनिन्दिता। द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता। नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी। पद्मायताक्षी सुश्रोणी असितायतमूर्द्धजा। सर्वलक्षणसम्पन्ना वैदूर्य्यमणिसन्निभा। पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः। सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते। कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा। इति देवासुराणां ते गन्धर्व्वाप्सरसां तथा। अंशावतरणं राजन् राक्षसानाञ्च कीर्त्तितम्। ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः। महात्मानो यदूनाञ्च ये जाता विपुले कुले" इति। भा॰व॰प॰ रामावतारकथने। "न स देवासुरैः शक्यो युद्धे जेतुं विभावसो!। विहितं तत्र यत् कार्य्यमभितस्तस्य निग्रहे। तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः। विष्णुः प्रहरतां श्रेष्ठः स तत् कर्म करिष्यति। पितामहस्ततस्तेषां सन्निधौ शक्रमब्रवीत्। सर्व्वैर्देवगणैः सार्द्धं सम्भव त्वं महीतले। विष्णोः सहायानृक्षीषु वानरीषु च सर्व्वशः। जनयध्वं सुतान् वीरान् कामरूपबलान्वितान्। ततो भागानुभागेन देवगन्धर्व्वदानवाः। अवतर्त्तुं महीं सर्व्वे मन्त्रयामासुरञ्जसा। तेषां समक्षं गन्धर्व्वीं दुन्दुभीं नाम नामतः। शशास वरदो देवो गच्छ कार्य्यार्थसिद्धये। पितामहवचः श्रुत्वा गन्धर्व्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जा समभवत्तदा। शक्रप्रभृतयश्चैव सर्व्वे ते सुरसत्तमाः। वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान्। तेऽन्ववर्त्तन् पितॄन् सर्व्वे यशसा च बलेन च। भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः। वज्रसंहननाः सर्व्वे सर्व्वे चातिबलास्तथा। कामवीर्य्यबलाश्चैव सर्व्वे युद्धविशारदाः। नागायुतसमप्राणा वायुवेगसमा जवे। यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः" इति। एवमन्येऽवताराः पुराणादौ ज्ञेयाः।

अवतरत्यनेन क्रमेण करणे घञ्। येन क्रमेणाविर्भूतस्तस्मिन् "[illegible] । भवताऽवतारम्। भवता भवतापभीतोऽहम्" महार॰।

**अवतारण** न॰ अव+तॄ–णिच्–ल्युट्। भूतादीनामावेशनेन १प्रादुर्भावने, (भूतनामान) २अवरोपणे, ३वस्त्रप्रान्ते च करणे ल्युट् ङीप्। अवतारणमपि।

**अवतारित** त्रि॰ अव+तॄ-णिच्-क्त। "अवरोपिते "धत्तार्थाय विधवे सभुजादवतारिता" रघु॰।

**अवतीर्ण** त्रि॰ अव+तॄ–कर्त्तरि क्त। १कृतावगाहने २कृतावरोहणे "कौबेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः" माघ॰ ३अन्यरूपेण प्रादुर्भावे च "तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः" भा॰व॰प॰।

**अवतूलन** न॰ तूलेनावतूलयति तूलेन ग्रथ्याद्यमवमृद्नाति अव+तूल+अवमर्दनार्थे णिच्–भावे ल्युट्। तूलेन तृणाद्यावमर्द्दने। [स्त्रियाम्।

**अवतोका** स्त्री अवपतितं तोकमस्याः प्रा॰ब॰। स्रवद्गर्भायां

**अवत्त** त्रि॰ अव+दो–खण्डने कर्म्मणि क्त। खण्डिते "यत् पयोरवत्तं भवति यत् हृदयस्याग्रेऽवद्यति" शत॰ब्रा॰।

**अवत्तिन्** त्रि॰ अवत्तमनेन इष्टा॰ इनि। कृतखण्डने जने "त्रिविधायजमानावत्तरवत्तिनः पञ्चावत्तिनश्चेति" कात्या॰श्रौ॰

**अवत्सार** पु॰ ऋषिभेदे तस्य "अवत्सारस्य शृण्वाम" इति ऋ॰५,४४,१०, उक्तः।

**अवदंश** पु॰ अवदश्यते पानरुच्यर्थम् अव+दन्श–कर्म्मणि घञ्। मद्यपानादिप्रोत्साहनसाधने भ्रष्टचर्वणद्रव्ये "अवदंशमानय पाययेदग्रस्त्वावदंशम्" सुश्रु॰।

**अवदरण** न॰ अव+दृ–भावे ल्युट्। विदारे "कुक्षयोरवदरणम्" "वेदनाप्रादुर्भावोऽवदरणम्" इति च सुश्रु॰।

**अवदाघ** पु॰ अव+दह भावे घञ् न्यङ्क्वा॰ कुत्वं च। निदाघे।

**अवदात** पु॰ अव+दै–क्त। १शुभ्रे, २पीते च वर्णे। ३तद्वति ४विशुद्धे "अभ्यर्थितुं जनमि च न कृतमवदातम्" कादं॰। ५मनोज्ञे च त्रि॰।

**अवदान** न॰ अव+दो–ल्युट्। १खण्डने, २पराक्रमे ३अतिक्रमे ४शुद्धिकरणे, च अवद्यति रोगमनेन करणे ल्युट्। ५वीरणमूले न॰।

**अवदारक** त्रि॰ अवदारयति अव+दृ–णिच्–ण्वुल्। १विदारके खण्डशविभागकारके। २खनित्रे पु॰।

**अवदारण** न॰ अव+दृ–णिच्–भावे ल्युट्। १विदारणे खण्डशविभाजने। करणे ल्युट्। २खनित्रे। [विभाजिते।

**अवदारित** त्रि॰ अव+दृ–णिच् कर्म्मणि क्त। विदारिते

**अवदाह** न॰ अवदाहितोदाहो येन प्रा॰ब॰। वीरणमूले तस्य शयने हि तापनिवर्त्तित्वे प्रसिद्धा

अव+दह–भावे घञ्। २ज्वरादिहेतुके दाहे।

**अवदाहेष्ट** न० अवदाहे ज्वरादिहेतुके देहतापे तन्निवारणाय इष्टम्। वीरणमूले उशीरे (वेणार मूल)।

**अवदाहेष्टकापथ** न० अवदाहे तन्निवारणाय इष्टकापथं सोपानमिव। वीरणमूले (खस्खस्)।

**अवदीर्ण** त्रि० अव+दॄ–क्त। १द्रवीभूते २विभक्ते च।

**अवदोह** पु० अवदुह्यते अव+दुह–कर्म्मणि घञ्। १दुग्धे त्रिका०। भावे घञ्। २दोहने आकर्षणपूर्ब्बकान्तःस्थित द्रवद्रव्यनिःसारणरूपे व्यापारे।

**अवद्य** त्रि० वद–यत् न०त०। १अधमे, २पापिनि, ३निन्द्ये, ४दोषे ५कथनायोग्ये च। "निरवद्यविद्योद्द्योतेन द्योतित." दायभा०। "अघमूलोऽनवद्योऽस्ति" भट्टिः।

**अवद्योतन** न० अव+द्युत–णिच्–भावे ल्युट्। प्रकाशने।

**अवधातव्य** न० अव+धा–भावे–तव्य। १अवधाने "तदत्र देवेनावधातव्यम्" प्रबोधच०। कर्म्मणि तव्य। २अवधेये त्रि०

**अवधान** न० अव+धा–ल्युट्। मनोयोगविशेषे, यद्वशात् विषयान्तरतो मनोनिवर्त्तते। "अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने" कुमा०। "सावधानावधारय" त०

**अवधार** पु० अव+धृ–णिच्–भावे अच्। निश्चये तदभावाप्रकारकत्वे सति तत्प्रकारके ज्ञाने "तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चय" इति भाषा०। "सर्व्वत्र यदवधारेणोच्यते स एकान्त" सुश्रु०।

**अवधारण** न० अव+धृ–णिच्–ल्युट्। १इयत्तापरिच्छेदे, अयमित्थमेवेति विषयपरिच्छेदके २निश्चये च। संख्यादिना ३इयत्ताकरणे "यावदवधारणे" पा०। ४अन्यतोव्यावर्त्तने च।

**अवधारणीय** त्रि० अव+धृ–णिच्–कर्म्मणि अनीयर्। ईदृक्तया निश्चेतुं योग्ये। "विष्णोरिवास्यानवधारणीयम्" रघु।

**अवधारित** त्रि० अव+धृ–णिच्–क्त। यस्य सङ्ख्यारूपादिना निश्चय कृत १तस्मिन् अन्यतः कृतव्यावृत्तियुते २पदार्थे च।

**अवधार्य्य** त्रि० अव+धृ–णिच्–कर्म्मणि यत्। निश्चेतुं शक्ये इदमित्थमेवेति १निर्णये अव+धृ–णिच्–ल्यप्। २निश्चित्येत्यर्थे अव्य०।

**अवधि** पु० अव+धा–कि। १सीमायां, २काले "सर्वे निदाघावधिना विमृष्टा" रघुः। "निदाघावधिना निदाघकालेन" मल्लि०। ३चित्ताभिनिवेशे च। अपादाने कि। ४अपादाने। "सैवान्तरक्रियापेक्षमवधित्वं पृथक् तयो." भर्तृ० आधारे कि। ५विले गर्त्ते। सीमा च द्विविधा पूर्व्वा परा च तत्र "प्रभातमवधिं कृत्वा यावद्दस्तमयमित्यादौ" पूर्व्वा "सञ्चारोरतिमन्दिरामवधीत्यादौ परा" प्रकारान्तरेण सा त्रिविधा कालकृता देशकृता बुद्धिकल्पिता च। पूर्व्वोक्ते दैशिकी। "मासावधि विमोचान्तमित्यादौ" पूर्व्वा "मासकालं समारभ्य जपेन्मोक्षावधि प्रिये" इत्यादौ परा कालिकी "सखीकर्णावधि व्याहृतमित्यादौ बुद्धिकल्पिता"। अवधित्वञ्च स्वाभिधेयापेक्षया विभागाश्रयत्वम्। तच्च पञ्चम्याऽपि बोध्यते नद्यागमित्यादौ गमस्य नद्यपेक्षविभागाश्रयत्वात् तथात्वम्। एवं मासात् पूर्व्वं घट इत्यादौ मासतो-विभागाश्रयत्वात् घटादेस्तदवधिकत्वम् तत्र अयमस्मात् पूर्व्वकालवर्त्ती इत्यादौ कालिकम् अयमस्मात् पर्व्वदेश वर्त्तीत्यादौ दैशिकं "माथुरा पाटलिपुत्रेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितम्। "स्वाभिधेयापेक्षोऽवधिनियमोव्ययस्येति सि०कौ० "सञ्चारोरतिमन्दिरावधि सखीकर्णावधि व्याहृत हास्यञ्चाधरपल्लवावधि महामानोऽपि मौनावधि। चेतः कान्तसमीहितावधि पदन्यासावधि प्रेक्षितं सर्वं सावधि नावधिस्तु गतया प्रेम्णः परं केवलमित्यादौ दैशिक बुद्धिकल्पितावधित्वम् "सरयामावधिदां सरस्वतीम्" कुमा० इत्यत्र कालिकं "जनपदतदवध्यो" पा० इत्यत्र दैशिकम्।

**अवधिमत्** त्रि० अवधिरस्त्यस्य मतुप्। अवधिविशिष्टे अवधिमत्त्वमेव पञ्चम्यर्थ इति नव्यनैयायिकाः तेन तस्य स्वरूपसम्बन्धेन इतरपदार्थेऽन्वय अवधित्वस्य पञ्चम्यर्थत्व स्वीकारे तु निरूपकतासम्बन्धेनान्यपदार्थेऽन्वयस्य वक्तव्यतया नञ्समभिव्याहारे च तेनैव सम्बन्धेनाभावान्वयस्याभ्युपगम्यत्वेन निरूपकतासंसर्गस्य वृत्त्यनियामकतया तत्सम्बन्धस्य प्रतियोगितानवच्छेदकतयाऽनन्वय वृत्तिनियामकसम्बन्धस्यैव तथात्वात्। अवधिमत्त्वस्य तदर्थत्वे तु तस्य स्वरूपसम्बन्धेनान्वयात् नञ्समभिव्याहारे अन्वयसम्भव स्वरूपसम्बन्धस्य वृत्तिनियामकतया तस्य प्रतियोगितावच्छेदकत्वसंभवेन बाधकाभावात् "अतएव व्युत्पत्तिवादे गदाधरेण अवधिमत्त्वमवधिमत्त्वं, वा पञ्चम्या अर्थ इति प्रथमपक्षेऽस्वरससूचनाय तदन्ते निवेश कृत। "उत्तरादिभ्य एनप् स्यादवध्यवधिमतो सामीप्ये" सि०कौ०।

**अवधीयमान** त्रि० अव+धा कर्म्मणि शानच्। यस्मिन् विषये चित्ताभिनिवेशः क्रियते तस्मिन् विषये।

**अवधीर** अवज्ञायाम् अद०चुरा० उभय०सक०सेट्। अवधीरयति ते अवावधीरत् त। अवेत्यस्योपसर्गत्वे अवादिधीरत् त। अवधीरित अवधीरी "रघौ, कथा यस्य क्षमावधी-

राजमर्षीजसम्। एवमन्ये मनुष्येन्द्रा बहवोऽस्मा दितौ प्रसाम्। अरिष्टे महदेवस्य पुत्रे कुत्सविवर्द्धना। तथ्य स्वसरमा यो वै मया राजन् प्रकीर्त्तित। तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च। तानि षोडश देवीनां सहस्राणि नराधिप। बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः। श्रियास्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले। भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः। द्रौपदी त्वथ सञ्जज्ञे शचीभागादनिन्दिता। द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता। नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी। पद्मायताक्षी सुश्रोणी असितायतमूर्द्धजा। सर्वलक्षणसम्पन्ना वैदूर्य्यमणिसन्निभा। पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः। सिद्धिर्धृतिश्च ये देव्यौ पञ्चानामातरौ तु ते। कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा। इति देवासुराणां ते गन्धर्व्वाप्सरसां तथा। अंशावतरणं राजन् राक्षसानाञ्च कीर्त्तितम्। ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः। महात्मानो यदूनाञ्च ये जाता विपुले कुले" इति। भा०व०प० रामावतारकथने। "न स देवासुरैः शक्यो युद्धे जेतुं विभावसो। विहितं तत्र यत् कार्य्यमभितस्तस्य निग्रहे। तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः। विष्णुः प्रहरतां श्रेष्ठ स तत् कर्म करिष्यति। पितामहस्ततस्तेषां सन्निधौ शक्रमब्रवीत्। सर्वैर्दैवगणैः सार्द्धं सम्भव त्वं महीतले। विष्णोः सहायान् ऋक्षीषु वानरीषु च सर्वशः। जनयध्वं सुतान् वीरान् कामरूपबलान्वितान्। ततो भागानुभागेन देवगन्धर्वदानवाः। अवतर्त्तुं महीं सर्वे मन्त्रयामासुरञ्जसा। तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः। शशास वरदो देवो गच्छ कार्य्यार्थसिद्धये। पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जा समभवत्तदा। शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः। वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान्। तेऽन्ववर्त्तन् पितॄन् सर्वे यशसा च बलेन च। भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः। वज्रसंहननाः सर्वे सर्वे चातिबलास्तथा। कामवीर्य्यबलाश्चैव सर्वे युद्धविशारदाः। नागायुतसमप्राणा वायुवेगसमा जवे। यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः" इति। एवमन्येऽवताराः पुराणादौ ज्ञेयाः।

अवतरत्यनेन करणे घञ्। येन रूपेणाविर्भूतस्तस्मिन् ४रूपे "मत्स्यादिभिरवतारैरवतारवता वताऽवता वसुधाम्। परमेश्वर! परिपाल्यो भवता भवतापभीतोऽहम्" शङ्कर।

**अवतारण** न० अव+तॄ–णिच्–ल्युट्। भूतादीनामावेशनेन १प्रादुर्भावने, (भूतनामान) २अवरोपणे, ३प्रवर्त्तनाशने च करणे ल्युट् स्त्री। अवतारणलक्षण।

**अवतारित** त्रि० अव+तॄ-णिच् क्त। "अवरोपिते "कथामार्गाय विधये समुद्भाववतारिता" रघु।

**अवतीर्ण** त्रि० अव+तॄ–कर्त्तरि क्त। १जलावगाहने २जलावरोहणे "कौवेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः" भावः ३अन्यरूपेण प्रादुर्भावे च "तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः" भा०व०प०।

**अवतूलन** न० तूलेरवनुन्मार्ति तूलेन तूलापनयनमनुकृति अव+तूल+मत्वनुधार्थे णिच्–भावे ल्युट्। तूलेन तूलापायनकृते। [कियाम्।

**अवतोका** स्त्री अवपतितं तोकमस्याः प्रा०ब०। अवतृणगर्भायां

**अवत्त** त्रि० अव+दो–खण्डने कर्मणि क्त। खण्डिते "तत् पयोरवत्तं भवति यत् हृदयस्याग्रेऽवद्यति" शत०ब्रा०।

**अवत्तिन्** त्रि० अवत्तमनेन इष्टा० इनि। खण्डखण्डने अवे "विविधावत्तमाणावदानवत्तिनः पञ्चावत्तिनश्चेति"काल०श्रौ०

**अवत्सार** पु० ऋषिभेदे यद्वि "अवत्सारस्य शृणवाम" इति ऋ०५,४४,१०, एतत्।

**अवदंश** पु० अवदश्यते पानरुच्यर्थम् अव+दन्श–कर्मणि घञ्। मद्यपानादिप्रीतुवाञ्छसाधने भक्ष्यवैशद्र्ये "अवदंशमवायवेद्रगारमलुद्यामवदंशम्" सुश्रु०।

**अवदरण** न०अव+दॄ–भावे ल्युट्। विदारे "हृदयवोवदरणम्" "वेदनाप्रादुर्भावोऽवदरणम्" इति च सुश्रु०।

**अवदाघ** पु०अव+दह भावे घञ् न्यङ्क्वा० कुत्व च। निदाघे।

**अवदात** पु०अव+दै–क्त। १शुभ्रे, २पीते च वर्णे। ३तद्वति ४निर्मले "अस्मिन्निन् जन्मनि च न हृतमवदातम्" काद०। ५मनोज्ञे च त्रि०।

**अवदान** न० अव+दो–ल्युट्। १खण्डने, २पराक्रमे ३अतिक्रमे ४शुद्धिकरणे, च अवद्यति शोधनमनेन करणे ल्युट्। ५वीरकर्म्मणि न०।

**अवदारक** त्रि० अवदारयति अव+दॄ–णिच्–ण्वुल्। १विदारके अवयवविभागकारके। २खनित्रे पु०।

**अवदारण** न०अव+दॄ–णिच्–भावे ल्युट्। १विदारणे अवयवविभाजने। करणे ल्युट्। २खनित्रे। [विभाजिते।

**अवदारित** त्रि० अव+दॄ–णिच् कर्मणि क्त। विदारिते

**अवदाह** न० अवसादितो दाहो येन प्रा०ब०। वीरणमूले तस्य सेवने हि तापनिवृत्तिर्भवति प्रसिद्धा

अव+दह–भावे घञ्। २अरादिदेशके दाहे।

**अवदाहेष्ट** न० अवदाहे ज्वरादिदेशके देहतापे तन्निवारणाय इष्टम्। वीरणमूले उशीरे (वेणार मूल)।

**अवदाहेष्टकापथ** न० अवदाहे तन्निवारणाय इष्टकापथं सोपानमिव। वीरणमूले (खस्खस्)।

**अवदीर्ण** त्रि० अव+दॄ–क्त। १द्रवीभूते २विभक्ते च।

**अवदोह** पु० अवदुह्यते अव+दुह–कर्म्मणि घञ्। १दुग्धे त्रिका०। भावे घञ्। २दोहने आकर्षणपूर्व्वकान्तःस्थित द्रवद्रव्यनिःसारणरूपे व्यापारे।

**अवद्य** त्रि० वद–यत् न०त०। १अधमे, २पापिनि, ३निन्द्ये, ४दोषे ५कथनायोग्ये च। "निरवद्यविद्योद्योतेन द्योतितः" दायभा०। "कच्चिन्मृगीणामनघा प्रसूतिः"... "अस्यमूल्योऽनवद्योऽसि" भट्टिः।

**अवद्योतन** न० अव+द्युत–णिच्–भावे ल्युट्। प्रकाशने।

**अवधातव्य** न० अव+धा–भावे–तव्य। १अवधाने "तदत्र देवेनावधातव्यम्" प्रबोधच०। कर्म्मणि तव्य। २अवधेये त्रि०

**अवधान** न० अव+धा–ल्युट्। मनोयोगविशेषे, यद्वशात् विषयान्तरतो मनोनिवर्त्तते। "अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने" कुमा०। "सावधानावधारय" त०

**अवधार** पु० अव+धृ–णिच्–भावे अच्। निश्चये तदभावाप्रकारत्वे सति तत्प्रकारके ज्ञाने "तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चय" इति भाषा०। "सर्व्वत्र यदवधारेणोच्यते स एकान्तः" सुश्रु०।

**अवधारण** न० अव+धृ–णिच्–ल्युट्। १इयत्तापरिच्छेदे, अयमित्थमेवेति विषयपरिच्छेदके २निश्चये च। संख्यादिना ३इयत्ताकरणे "यावदवधारणे" पा०। ४अन्यतोव्यावर्त्तने च।

**अवधारणीय** त्रि० अव+धृ–णिच्–कर्म्मणि अनीयर्। ईदृक्तया निश्चेतुं योग्ये। "विष्णोरिवास्यानवधारणीयम्" रघु।

**अवधारित** त्रि० अव+धृ–णिच्–क्त। यस्य संख्यारूपादिना निश्चयः कृतः १तस्मिन् अन्यतः कृतव्यावृत्तियुते २पदार्थे च।

**अवधार्य्य** त्रि० अव+धृ–णिच्–कर्म्मणि यत्। निश्चेतुं शक्ये इदमित्थमेवेति १निर्णेये अव+धृ–णिच्–ल्यप्। २निश्चित्येत्यर्थे अव्य०।

**अवधि** पु० अव+धा–कि। १सीमायां, २काले "सर्वे निदाघावधिना विमृष्टाः" रघुः। "निदाघावधिना निदाघकालेन" मल्लि०। ३चित्ताभिनिवेशे च। अपादाने कि। ४अपादाने। 'भेदान्तरक्रियापेक्षमवधित्वं पृथक् तयोः' भर्तृ०। आधारे कि। ५विले गर्त्ते। सीमा च द्विविधा पूर्व्वा परा च तत्र "प्रथाक्रमवधिं कृत्वा यावद्वस्त्र चतुष्टयमित्यादौ" पूर्व्वा "सञ्चारोरतिमन्दिरावधीत्यादौ परा" प्रकारान्तरेण सा त्रिविधा कालकृता देशकृता बुद्धिकल्पिता च। पूर्व्वोक्ते दैशिकी। "मासावधि विमोक्षान्तमित्यादौ" पूर्व्वा "मासकालं समारभ्य जपेन्मोक्षावधि प्रिये" इत्यादौ परा कालिकी "सखीकर्णावधि व्याहृतमित्यादौ बुद्धिकल्पिता"। अवधित्वञ्च स्वाभिधेयापेक्षया विभागाश्रयत्वम्। तच्च पञ्चम्याऽपि बोध्यते नद्याःवनमित्यादौ वनस्य नद्यपेक्षविभागाश्रयत्वात् तथात्वम्। एवं मासात् पूर्व्वं घट इत्यादौ मासतो विभागाश्रयत्वात् घटादेस्तदवधिकत्वम् तत्र अयमस्मात् पूर्व्वकालवर्त्ती इत्यादौ कालिकम् अयमस्मात् पर्व्वदेशवर्त्तीत्यादौ दैशिक "माथुरा पाटलिपुत्रेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितम्। "स्वाभिधेयापेक्षोऽवधिनियमोऽव्ययस्येति सि०कौ० "सञ्चारोरतिमन्दिरावधि सखीकर्णावधि व्याहृत हासश्चाधरपल्लवावधि महामानोऽपि मौनावधि। चेतः कान्तसमीहितावधि पदन्यासावधि प्रेङ्खितं सर्वं सावधि नावधिस्तु गडयां प्रेम्णः परं केवलमित्यादौ दैशिक बुद्धि कल्पितावधित्वम् "आरथापावधिर्दां सरस्वतीम्" कुमा० इत्यत्र कालिकं "जनपदतदवध्योः" पा० इत्यत्र दैशिकम्।

**अवधिमत्** त्रि० अवधिरस्त्यस्य मतुप्। अवधिविशिष्टे अवधिमत्त्वमेव पञ्चम्यर्थ इति नव्यनैयायिकाः तेन तस्य स्वरूपसम्बन्धेन इतरपदार्थेऽन्वय अवधित्वस्य पञ्चम्यर्थत्व स्वीकारे तु निरूपकतासम्बन्धेनान्यपदार्थेऽन्वयस्य वक्तव्यतया नञ्समभिव्याहारे च तेन सम्बन्धेनाभावान्वयस्याभ्युपगम्यत्वेन निरूपकतासंसर्गस्य वृत्त्यनियामकतया तत्सम्बन्धस्य प्रतियोगितानवच्छेदकतयानन्वय वृत्तिनियामकसम्बन्धस्यैव तथात्वात्। अवधिमत्त्वस्य तदर्थत्वे तु तस्य स्वरूपसम्बन्धेनान्वयात् नञ्समभिव्याहारे अन्वयसम्भव स्वरूपसम्बन्धस्य वृत्तिनियामकतया तस्य प्रतियोगितावच्छेदकत्वसंभवेन बाधकाभावात् "अतएव व्युत्पत्तिवादे गदाधरेण अवधित्वमवधिमत्त्व वा पञ्चम्या अर्थ इति प्रथमपक्षेऽस्वरस सूचनाय तस्यान्ते निवेश कृतः। "उत्तरादिभ्य एनप् स्यादवध्यवधिमतो सामीप्ये" सि०कौ०।

**अवधीयमान** त्रि० अव+धा कर्म्मणि शानच्। यस्मिन् विषये चित्ताभिनिवेशः क्रियते तस्मिन् विषये।

**अवधीर** अवज्ञायाम् अद०चुरा० उभय०सक०सेट्। अवधीरयति ते अवावधीरत् त। अमेत्यस्योपसर्गत्वे अवादिधीरत् त। अवधीरितः अवधीरी "रवैः कथा यस्य सुधावधी-

महामतिरजायत । भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृत । शरभो नाम यस्तेषां दैतेयानां महासुर । पौरवो नाम राजर्षि स बभूव नरोत्तम । शुक्रयस्तु महावीर्य्य श्रीमान् राजन्महासुर । सुपार्श्व इति विख्यात क्षितौ जज्ञे महीपति । क्रथस्तु राजन् ! राजर्षि क्षितौ जज्ञे महासुर । पार्व्वतेय इति ख्यात काञ्चनाचलसन्निभ । द्वितीय शलभस्तेषामसुराणां बभूव ह । प्रह्लादो नाम बाह्लीक स बभूव नराधिप । चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः । चन्द्रवर्म्मेति विख्यातः काम्बोजानां नराधिपः । अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गव । ऋषिको नाम राजर्षिर्बभूव नृपसत्तम । मृतपा इति विख्यातो य आसीदसुरोत्तम । पश्चिमानूपक विद्धि तं नृप नृपसत्तम । गविष्ठस्तु महातेजा य प्रख्यातो महासुर । द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृप । मयूर इति विख्यात श्रीमान् यस्तु महासुरः । स विश्व इति विख्यातो बभूव पृथिवीपति । सुपर्ण इति विख्यातस्तस्मादवरजस्तु य । कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः । चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः । शुनको नाम राजर्षि स बभूव नराधिप । विनाशनस्तु चन्द्रस्य य आख्यातो महासुर । जानकिर्नाम विख्यात सोऽभवन्मनुजाधिप । दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभ । काशिराज स विख्यात पृथिव्यां पृथिवीपते । । ग्रहन्तु सुषुवे यन्तु सिंहिकार्केन्दुमर्द्दनम् । स क्राथ इति विख्यातो बभूव मनुजाधिप । अनायुषस्तु पुत्त्राणां चतुर्णां प्रवरोऽसुर । विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृत । द्वितीयो विक्षराद्यस्तु नराधिप ! महासुर । पांशुराष्ट्राधिप इति विख्यात सोऽभवन्नृप । बलीन इति विख्यातो यस्त्वासीदसुरोत्तम । पौण्ड्रमात्स्यक इत्येव बभूव स नराधिपः । वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः । मणिमान्नाम राजर्षि स बभूव नराधिप । क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुर । दण्ड इत्यभिविख्यात स आसीन्नृपति क्षितौ । क्रोधवर्द्धन इत्येव यस्त्वन्य परिकीर्त्तित । दण्डधार इति ख्यात सोऽभवन्मनुजर्षभ । कालेयानान्तु ये पुत्त्रास्तेषामष्टौ नराधिपा । जज्ञिरे राजशार्द्दूल । शार्द्दूलसमविक्रमा । मगधेषु जयत्सेनस्तेषामासीत्स पार्थिव । अष्टानाम्प्रवरस्तेषां कालेयानां महासुर । द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपम । अपराजित इत्येवं स बभूव नराधिप । तृतीयस्तु महातेजा महामायो महासुरः । निषादाधिपतिर्जज्ञे भुवि भीमपराक्रम । तेषामन्यतमो यस्तु चतुर्थ परिकीर्त्तित । श्रेणिमानिति विख्यात क्षितौ राजर्षिसत्तमः । पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुर । महौजा इति विख्यातो बभूवेह परन्तप । षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः । अभीरुरिति विख्यात क्षितौ राजर्षिसत्तम । समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात् । विश्रुत सागरान्तायां क्षितौ धर्म्मार्थतत्त्ववित् । बृहन्नामाष्टमस्तेषां कालेयानां नराधिप । । बभूव राजा धर्म्मात्मा सर्व्वभूतहिते रत । कुक्षिस्तु राजन् ! विख्यातो दानवानां महाबल । पार्व्वतीय इति ख्यात काञ्चनाचलसन्निभ । क्रथनश्च महावीर्य्य श्रीमान्राजन्महासुर । सूर्य्याक्ष इति विख्यात क्षितौ जज्ञे महीपतिः । असुराणान्तु य सूर्य्यः श्रीमांश्चैव महासुर । दरदो नाम बाह्लीको वरः सर्व्वमहीक्षिताम् । गण क्रोधवशो नाम यस्ते राजन् ! प्रकीर्त्तित । तत सञ्जज्ञिरे वीराः क्षिताविह नराधिपा । मद्रकः कर्णवेष्टश्च सिद्धार्थ कीटकस्तथा । सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः । क्रथो विचित्र सुरथ श्रीमान्नीलश्च भूमिप । चीरवासाश्च कौरव्य । भूमिपालश्च नामतः । दन्तवक्त्रश्च नामासीद्दुर्जयश्चैव दानवः । रुक्मी च नृपशार्द्दूलो राजा च जनमेजयः । आषाढो वायुवेगश्च भूरितेजास्तथैव च । एकलव्य सुमित्रश्च वाटधानोऽथ गोमुखः । कारुषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च । श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च । क्षेमोऽग्रतीर्थ्य कुहर कलिङ्गेषु नराधिप । मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुत । गणात् क्रोधवशादेव राजपूगोऽभवत् क्षितौ । जात पुरा महाभागो महाकीर्त्तिर्महाबलः । कालनेमिरिति ख्यातो दानवानां महाबल । स कंस इति विख्यात उग्रसेनसुतो बली । यस्त्वासी देवको नाम देवराजसमद्युति । स गन्धर्व्वपतिर्मुख्य क्षितौ जज्ञे नराधिप । बृहस्पतेर्बृहत्कीर्त्तेर्देवर्षेर्विद्धि भारत । । अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् । धन्विनां नृपशार्द्दूल । य स सर्व्वास्त्रविदुत्तम । महाकीर्त्तिर्महातेजा स जज्ञे मनुजेश्वर । । धनुर्व्वेदे च वेदे च य त वेदविदो विदु । वरिष्ठं चित्रकर्म्माणं द्रोणं स्वकुलवर्द्धनम् । महादेवान्तकाभ्याञ्च कामात् क्रोधाच्च भारत । । एकत्वमुपपन्नानां जज्ञे शूर परन्तप । अश्वत्थामा महावीर्य्य शत्रुपक्षक्षयावह । वीर कमलपत्राक्षः क्षितावा-

कोसलाधिप !। जज्ञिरे वसवस्त्वष्टौ गङ्गायां शान्तनोः सुताः। वसिष्ठस्य च शापेन नियोगाद्वासवस्य च। तेषामवरजो भीष्मः कुरूणामभयङ्करः। मतिमान् वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः। जामदग्न्येन रामेण सर्वास्त्रविदुषा वरः। योऽयुध्यत महातेजा भार्गवेण महात्मना। यस्तु राजन्! कृपो नाम ब्रह्मर्षिरभवत् क्षितौ। रुद्राणान्तु गणाद्विद्धि सम्भूतमतिपौरुषम्। शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः। द्वापरं विद्धि तं राजन्! सम्भूतमरिमर्द्दनम्। सात्यकिः सत्यसन्धस्तु योऽसौ वृष्णिकुलोद्वहः। पक्षात् स जज्ञे मरुतां देवानामरिमर्द्दन!। द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात्। मानुषे नृप! लोकेऽस्मिन् सर्वशस्त्रभृतां वरः। ततश्च कृतवर्म्माणं विद्धि राजन्! जनाधिपम्। तमप्रतिमकर्म्माणं क्षत्रियर्षभसत्तमम्। मरुतान्तु गणाद्विद्धि सञ्जातमरिमर्द्दनम्। विराटं नाम राजानं परराष्ट्रप्रतापनम्। अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः। स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्द्धनः। धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः। दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिप!। मातुर्दोषादृषेः कोपादन्ध एव व्यजायत। तस्यैवावरजो भ्राता महासत्त्वो महाबलः। स पाण्डुरिति विख्यातः सत्यधर्म्मरतः शुचिः। अत्रेस्तु सुमहाभाग! पुत्रं पुत्रवतां वरम्। विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम्। कलेरंशस्तु सञ्जज्ञे भुवि दुर्य्योधनो नृप!। दुर्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः। जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः। यः सर्वां घातयामास पृथिवीं पृथिवीपते!। उद्दीपितं येन वैरं भूतान्तकरणं महत्। पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह। शतं दुःशासनादीनां सर्व्वेषां क्रूरकर्म्मणाम्। दुर्मुखो दुःसहश्चैव ये चान्ये नानुकीर्त्तिताः। दुर्य्योधनसहायास्ते पौलस्त्या भरतर्षभ!। वैश्यापुत्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः" इति। "धर्म्मस्यांशन्तु राजानं विद्धि राजन्! युधिष्ठिरम्। भीमसेनन्तु वातस्य देवराजस्य चार्ज्जुनम्। अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि। नकुलः सहदेवश्च सर्व्वभूतमनोहरौ। यस्तु वर्च्चा इति ख्यातः सोमपुत्रः प्रतापवान्। सोऽभिमन्युर्बृहत्कीर्त्तिरर्ज्जुनस्य सुतोऽभवत्। यस्यावतरणे राजन्! सुरान् सोमोऽब्रवीदिदम्। नाहं दद्यां प्रियं पुत्रं मम प्राणैर्गरीयसम्। समयः क्रियतामेष न शक्यमतिवर्त्तितुम्। सुरकार्य्यं हि नः कार्य्यमसुराणां क्षितौ वधः। तत्र यास्यत्ययं वर्च्चा न च स्थास्यति वै चिरम्। ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा। सोऽर्ज्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान्। तस्यायं भविता पुत्रो बालो भुवि महारथः। ततः षोडश वर्षाणि स्थास्यत्यमरसत्तमाः!। अस्य षोडशवर्षस्य स सङ्ग्रामो भविष्यति। यत्रांशा वः करिष्यन्ति कर्म्म वीरनिसूदनम्। नरनारायणाभ्यां तु स सङ्ग्रामो विनाकृतः। चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः। विमुखाञ्छात्रवान् सर्व्वान् कारयिष्यति मे सुतः। बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति। महारथानां वीराणां कदनञ्च करिष्यति। सर्व्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति। दिनार्द्धेन महाबाहुः प्रेतराजपुरं प्रति। ततो महारथैर्व्वीरैः समेत्य बहुशो रणे। दिनक्षये महाबाहुर्मया भूयः समेष्यते। एकं वंशकरं पुत्रं वीरं वै जनयिष्यति। प्रनष्टं भारतं वंशं स भूयो धारयिष्यति। एतत् सोमवचः श्रुत्वा तथाऽस्त्विति दिवौकसः। प्रत्यूचुः सहिताः सर्व्वे ताराधिपमपूजयन्। एवं ते कथितं राजंस्तव जन्म पितुः पितुः। अग्नेर्भागन्तु तं विद्धि धृष्टद्युम्नं महारथम्। शिखण्डिनमथो राजन्! स्त्रीपूर्व्वं विद्धि राक्षसम्। द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ!। विश्वान्देवगणान् विद्धि सञ्जातान् भरतर्षभ!। प्रतिविन्ध्यः सुतसोमः श्रुतकीर्त्तिस्तथाऽपरः। नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान्। शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्"। सूर्य्यस्य कर्णरूपेणावतारः यथा "प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा। अजीजनत् सुतं चास्यां सर्वशस्त्रभृतां वरम्। सकुण्डलं सकवचं देवगर्भश्रियान्वितम्। दिवाकरसमं दीप्त्या चारुसर्व्वाङ्गभूषितम्। निगूहमाना जातं वै बन्धुपक्षभयात्तदा। उत्ससर्ज्ज जले कुन्ती तं कुमारं यशस्विनम्। तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः। राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा"। "पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ। ततो वैकर्त्तनः कर्णः कर्म्मणा तेन सोऽभवत्। आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः। स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः। स तु सूतकुले वीरो ववृधे राजसत्तम!। कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम्। दुर्य्योधनस्य सचिवं मित्रं शत्रुविनाशनम्। दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम्"। "यस्तु नारायणो नाम देवदेवः सनातनः। तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान्। शेषस्यांशश्च नागस्य बलदेवो महाबलः। सनत्कुमारं प्रद्युम्नं विद्धि-

भट्टारेयः अवमर्थे अच् । अवमतमाषिके (बांदा) ।

**अवम** त्रि० अव+अमच् । १रक्षके २पितृगणभेदे पु० "अव-मैस्त ऊर्वैं काव्यैस्ते पितृभिर्भक्षितस्य मधुमतोनाराशंसस्य" ता०ब्रा० "त्रिविधाः पितरः अवमा ऊर्वाः काव्याश्चेति अनुसवनं नाराशंसदेवताः । हे सोम ! अवमैः रक्षकैः एतत्संज्ञैः पितृभिः" भा० । अपादानेऽमच् । ३पापे ४गर्हिते ५कुत्सिते च त्रि० । अवोभवः अवमाऽवमः "अवोऽ-वमोर्वोपमेति" सा० अन्त्यलोपः । ६अधमे त्रि० "अवम-मानवनानमवमां पुरीम्" रघुः । "या त ऊतिरवमा या परमा" ऋ०६,२५,१, "उतावमस्य पुरुहूत बोधि" ऋ०६, २१,५ "सकलानां सावनानां चान्द्राणां चान्तरमवमानीत्याहुः सावनदिनेभ्यश्चान्द्राहा यावन्तोऽधिकास्ते दिनक्षयाख्या" इति च प्रमिताक्षरोक्ते ७दिनक्षये न० । तदानयनप्रकारश्च सि०शि० "यथाद्यमासैनितसावनेन ०,२८,१० लिंगवृत्ताः क्षयदिनैस्तु चान्द्रे । रुद्राग्निकोमाश्विरसैः ६२,५४,३२ नवाङ्ग, स्यात् सावनोऽतश्च युगेऽनुपातात्" । युगे चान्द्राणां सावनानां च यदन्तरं तान्यवमानि । तत्र एकस्मिन् मासे चान्द्रसावनान्तरं कदिनात्मकं गृह्णीतम् । तत्र दिवसः मूल्यम् अष्टाविंशतिर्घटिकाः दश पानीयपलानि ०,२८,१० इत्येकस्मिन् चान्द्रमासे लिंगसिद्धात्मके कदिनात्मकमवमखण्डम् । यद्यनेन ०,२८,१०, दिनैश्च दिनानि चान्द्राणि लभ्यन्ते तदा सपूर्णैमैकेनावमेन कियन्तीति त्रैराशिकेन लब्धैः रुद्राग्निकोमाश्विरसैः ६२,५४,३२ एक क्षयाहो भवति स च सावन एवं कल्पेऽपि अनुपातात् । "सावनान्यवमानि सुधान्द्रेभ्य-श्चाधिकानि चेत् । सावनेभ्यस्तु चान्द्राणि तत्क्षेप तद्यथा-क्षया" इति सि०शि० । कल्पेऽवममानानि दर्शित तत्रैव । "दिनक्षयास्तत्र सहस्रनिघ्नाः खवायशराणाम्बाक्षिवेदुदस्रा" २५,०८२५५,०००० । अन्तर तदवचन्द्रचक्रस्य यद्भवेत् स विधुमाससंचय । चन्द्रचक्रदिवसैक्यमूनितं चन्द्रमासभदिनैर्दिनक्षया" "अथ चन्द्रचक्रदिनैक्यो चन्द्रमासभदिनैक्योन वर्जितो क्षयाहाः सु । अत यासमा । चन्द्रभगणा रविभगणैक्यनासान्द्रमासा स्युः अतो विपर्यया चान्द्रमासोना-चन्द्रभगणा रविभगणा भवन्ति तैरूना भभमा सावना दिवसा भवन्ति । चान्द्राहाः क्षयाहा भवन्ति" प्रमिता० । "तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तत्क्षयमय दिनम्" ज्योति० त०

**अवमत** त्रि० अव+मन–क्त । १अवज्ञाते २तिरस्कृते च ।

**अवमताङ्कुश** पु० अवमतोऽङ्कुशस्तत्प्रहारो येन । दुर्दान्ते गजे ।

**अवमति** स्त्री अव–मन भावे क्तिन् । १अवज्ञायाम् २अनादरे ३तिरस्कारे च । [मा तिथिः" ज्योतिषोक्ते दिनक्षये ।

**अवमतिथि** स्त्री कर्म० । "सुतिथिस्तिथिपयो यारे एकस्मिन्

**अवमदिन** न० कर्म० । "तिथ्यन्तद्वयमेको दिनवारो यत्र तत्क्षयमवमदिनम्" ज्योतिषोक्ते दिनक्षये ।

**अवमन्तव्य** त्रि० अव+मन–तव्य । १अवज्ञेये २अनादर्त्तव्ये–"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः" मनुः ।

**अवमन्तृ** त्रि० अव+मन–तृच् स्त्रियां ङीप् । १अवज्ञातरि २तिरस्कर्त्तरि च ।

**अवमन्थ** पु० अवमथ्नाति अव+मन्थ–अच् । सुश्रुतोक्ते पाणीस्थे उपद्रवरूपे १रोगभेदे "अतऊर्द्ध्वं नामलिङ्गैर्वक्ष्ये पाकानुपद्रवान् । उत्पाटकश्चोत्पुटकः श्यावः कण्डुमतो ऽवमन्थः । अवमन्थ सकण्डूको ग्रन्थिको जम्बुकाश्च ते" । "प्रलेपनमिदं दद्यादवसिध्यावमन्थके" सुश्रु० । तत्रोक्ते शूक-दोषनिमित्ते २व्याधिभेदे च यथा "विकृतविधिकृतानामन्न महत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते तद्यथा सर्षिका अष्ठीलिका ग्रथितं कुम्भीका अलजी कदिन पुष्करपिडका अवमन्थ" इत्युपक्रम्य । "दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः । सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत्" तत्रैव लक्षित । "अवमन्थे मते पाक भिन्ने तैल विधीयते" सुश्रु० । ३अवमन्थनकारके त्रि०

**अवमर्द्द** पु० अव+मृद–घञ् । १पीडने । "स्व तमानाद्य रणावमर्द्दम्" रामा०२राज्याङ्गभेदे "अवमर्द्द प्रतीघात तथा चैव बलीयसाम्" इति भा० शा० राजधर्मे ।

**अवमर्ष** पु० अव+मृष–घञ् । १आलोचनायाम्, "मुख प्रति-मुख गर्भोऽवमर्ष उपसंहृति । इति पञ्चास्य भेदाः स्युः" इत्युपक्रम्य "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च सोऽवमर्ष" इति लक्ष० सा०द० लक्षिते २नाटकस्य सन्ध्यङ्गभेदे च । विमर्ष इति पाठान्तरम् ।

**अवमान** पु० अव+मन–भावे घञ् । १अवज्ञायाम् २अनादरे च "अवमानस्य चाकाङ्क्षेदमृतस्येव सर्वदा" मनुः ।

**अवमानना** स्त्री अव+चुरा० मन–युच् । अवमानकरणे "तत्त्व-ज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना" सा०द० । भावे ल्युट् । अवमाननं तत्रैव न० निर्वेद स्वावमाननम्" हेमच० ।

**अवमानित** त्रि० अव+चुरा० मन–क्त । १कृतापमाने २कृतानादरे च विप्रलब्धा तु सा ज्ञेया नितान्तमवमा-निता" सा०द० ।

मनु॰ । ५मदगन्धादिशाद्ये न॰ । [वकावनम्बा" कुमा॰ ।

**अवनम्** त्रि॰ अव+नम–र । अतिशयनम्रे "पर्य्याप्तपुष्पस्त-

**अवनय** पु॰ अव+नी–भावे अच् । १अधःपातने २निपातने ।

**अवनयन** न॰ अव+नी–ल्युट् । अवस्थापने । "अवनयना-वस्तरणे चावटवत्" कात्या॰ ८।५।२४ । "गर्त्तेषु प्रोच्चण मेघोदकसेचनम्" वेददी॰ तेन २तदर्थेऽपि ।

**अवनाट** त्रि॰ अवनता नासिका प्रा॰ ब॰ नतार्थे नासिकाया नाटादेश अर्थं व्याप्नुत् । (खादा) अवनतनासिके जने ।

**अवनाय** पु॰ अव+नी "अवोदोर्निय" पा॰ अचोऽभावक घञ् । १अधोनयने अध प्रापणे । [नतौ ।

**अवनाम** पु॰ अव+नम–घञ् । अवनतौ अधोभूत्वा स्तताया

**अवनि** (नी) स्त्री अव–अनि । भूमौ । "सुसाधितायामवनौ" इति स्मृ॰सि॰ । वा ङीप् अवनीत्यपि । "दीनदयालुतया-ऽवनिपाल" "सुसमृद्धवनी हृयाऽवनी सुवनी समवदत् पिकापि का इति च नैष॰ । करणे अनि । २अङ्गुलीषु व॰व॰ निरु॰ । अव प्रीणने कर्त्तरि अनि । ३नद्यां निरु॰ "सं य स्तुभोऽवनय॰ न यन्ति समुद्रं सवतोरोध-चक्रा" ऋ॰ १,१९०,७ । दीर्घान्तः ४लायमाणलतायां राजनि॰ ।

**अवनिक्त** त्रि॰ अव+निज–क्त । १क्षालिते २शोधिते च ।

**अवनि(नी)नाथ** पु॰ ६त॰ । नृपे भूपतौ अवनी(नि) नायकादयोऽप्यत्र ।

**अवनि(नी)पति** ६त॰ । नृपे अवनिस्वाम्यादयोऽप्यत्र । "पतिर-वनीपतीनां तैश्चकाशे चतुर्भिः" रघु ।

**अव(नि)नीपाल** ६त॰ । नृपे "इत्यमत्तं विलपन्तमसञ्च-द्दीनदयालुतयावनिपाल नैष॰ । "कतिचिदवनिपाल शर्वरी शर्वकल्प" रघु ।

**अवनीश** पु॰ ६त॰ । भूपतौ भूमीश्वरे अवनीश्वरादयोऽप्यत्र ।

**अवनेजन** न॰ अव+निज–ल्युट् ।प्रक्षालने "न कुर्य्याद्गुरु पुत्रस्य पादयोश्चावनेजनम्" मनु॰ । श्राद्धे पिण्डदानार्थं मास्तृतकुशस्य जलेन सेकरूपे २संस्कारभेदे च । "दक्षि-णस्थितमागपकुशमूलमध्यापेषु मातादिभ्यस्तदुत्तर मध्य-स्थितमागपकुशमूलमध्यापेषु पितादिभ्यस्तदुत्तरं स्थित मागपकुशमूलमध्यापेषु मातामहादिभ्यः प्राक्तुलेना वनेजनं कर्त्तव्यम्" कृत्यप्रदीपः । रघुनन्दनेन मात्स्य॰ वचोनाक्त इति भेदः ।

**अवन्ति** पु॰ अव–झि । मालवदेशे । स च बृ॰स॰ कूर्म्मचक्रविभागे "अथ दक्षिणेन लङ्केत्युपक्रम्य "आक-रवणावन्तिकदशपुरनोमर्द्दा" इति उक्तं दक्षिणदेशस्थं । तत्र शिप्रा नदी महाकालनामा शिवमूर्त्तिविशेष उज्ज-यिनी राजधानी । तत्पुरीपरत्वे स्त्री वा ङीप् । "अवन्तिनाथोऽयमुदग्रबाहुरित्युपक्रम्य "असौ महा-कालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः" । "अनेन यूना सह पार्थिवेन शिप्रातरङ्गानिलकम्पि-तासु विहर्त्तुम् ? च रघौ तथावर्ण्णितम् । ज्योतिर्वि॰ विक्रमवृपवर्णने "यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी । समाश्रिता मापय-पवर्गदायिनी श्रीविक्रमार्कोऽवनिपो जयत्यपि" तस्मिन् सदा विक्रममेदिनीशे विराजमाने समवन्तिकायाम् । सर्व्वप्रजामङ्गलसौख्यसम्पद्बभूव सर्व्वत्र च वेदकर्म्म" । तथाच अवन्ती उज्जयिनी च नामान्तरं यथोक्तं सि॰शि॰ । "यथोज्जयिन्या कुचतुर्थभागे प्राच्यां दिशि स्याद्यम कोटिरेव । ततश्च पश्चान्न भवेदवन्ती लङ्कैव तस्याः ककुभि प्रतीच्याम्" । इयञ्च लङ्कास्थानात् भूचतुर्थांशे मेरु पर्य्यन्तगतरेखायां समसूत्रस्थाने स्थिता यथोक्तं तत्रैव । "निरक्षदेशात् क्षितिषोडशांशे भवेदवन्ती गणितेन यस्मात् । तदन्तरं षोडशसंगुणं स्याद्भूमानमस्मात् बहु किं तदुक्तम्" । इंलण्डीयमानचित्रवेदिनस्तु सम सूत्रस्थानात् किञ्चिदन्तरपश्चिमस्थेति वर्णयन्ति । इयञ्च मोक्षपुरी "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिका" । पुरा॰ । भा॰ उ॰प॰जम्बुखण्डविभागे जनपदगणनायाम् "कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तय" इति उक्तेरस्य जन-पदवाचितया इदन्तत्वान्न ततो भवादौ अण् । आवन्त्य तद्भवादौ त्रि॰ । बहुषु च तद्राजनि अणस्य लुक् । अवन्तय तद्देशवासिषु ब॰व॰ । तद्देशनृपे च । स्वार्थे कन् अवन्तीनगर्य्याम् "काशीकाञ्ची अवन्तिका" पुरा॰ ।

**अवन्तीपुर** न॰ अवन्तिः पूः अच् समा॰ । अवन्तिनगरे उज्जयिन्याम् । [अवन्तिस्थे ब्राह्मणे ।

**अव(न्ति)न्तीब्रह्म** पु॰ अवन्तिषु ब्रह्मा अच् समा॰ ।

**अव(न्ति)न्तीसोम** पु॰ अवन्तिषु सोम इव । काञ्जिके ।

**अवपन्न** त्रि॰ अव+पद–क्त । १पतिते २सम्पन्ने च "केशकी-टावपन्नञ्च पदा स्पृष्टञ्च कामतः" मनुः । "अवपन्नं संसर्गदूषितम्" कुल्लू॰ । "केशकीटावपन्नं च क्षुतं स्पृष्टं तथैव च" स्मार्त्तो॰ अवपन्नं सम्पन्नकम् प्री॰त॰रघु॰ ।

**अवपाक** पु॰ अव+अपकर्षे पच–घञ् । १अपटुपाके । कर्म्मणि

ष्वपि प्रत्ययवर्णं प्रत्यक्षेण दृश्येत न चैवं नियतं दृश्यते । प्रत्येकं परिसमाप्तौ चावयविनः कार्य्येणाधिकारात्तस्य चैकत्वात् शृङ्गेणापि स्तनकार्य्यं कुर्य्यात् उरसा च पृष्ठकार्य्यं, न चैवं दृश्यते । प्रागुत्पत्तेश्च कार्य्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिश्च नाम क्रिया सा सकर्तृकैव भवितुमर्हति गत्यादिवत् । क्रिया च नाम स्यादकर्त्तृका चेति विप्रतिषिध्येत । घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका किन्त्वन्यकर्तृकेति कल्प्या स्यात् तथा कपालादीनामप्युत्पत्तिरुच्यमानान्यकर्तृकैव कल्प्येत तथा च सति घट उत्पद्यते इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात् न च लोके घट उत्पद्यत इत्युक्ते कुलालादय उत्पद्यमानाः प्रतीयन्ते उत्पन्नताप्रतीतेश्च । अथ स्वकारणसत्ता सम्बन्ध एवोत्पत्तिरात्मलाभश्च कार्य्यस्येति चेत् कथमलब्धात्मकं सम्बध्येतेति वक्तव्यं, सतोर्हि द्वयोः सम्बन्धः सम्भवति न सदसतोरसतोर्वा । अभावस्य च निरुपाख्यत्वात् प्रागुत्पत्तेरिति मर्य्यादाकरणमनुपपन्नम् । सतां हि लोके क्षेत्रगृहादीनां मर्य्यादा दृष्टा नाभावस्य । न हि बन्ध्यापुत्रो राजा बभूव प्राक् पूर्णवर्म्मणोऽभिषेकादित्येवं जातीयकेन मर्य्यादाकरणेन निरुपाख्यो बन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते । यदि च बन्ध्यापुत्रः कारकव्यापारादूर्द्ध्वमभविष्यत् तत इदमप्युपापत्स्यत कार्य्याभावोऽपि कारकव्यापारादूर्द्ध्वं भविष्यतीति । वयन्तु पश्यामो बन्ध्यापुत्रस्य कार्य्याभावस्य चाभावत्वाविशेषात् यथा बन्ध्यापुत्रः कारकव्यापारादूर्द्ध्वं न भविष्यति एवं कार्य्याभावोऽपि कारकव्यापारादूर्द्ध्वं न भविष्यतीति । नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत, यथैव हि प्राक् सिद्धत्वात् कारणस्य स्वरूपसिद्धये न कश्चिद्व्याप्रियते एवं प्राक्सिद्धत्वात् तदनन्यत्वाच्च कार्य्यस्वरूपसिद्धयेऽपि न कश्चिद्व्याप्रियेत व्याप्रियते च, अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्य्यस्येति । नैष दोषः यतः कार्य्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते । कार्य्याकारोऽपि कारणस्यात्मभूत एव अनात्मभूतस्यानारभ्यत्वादित्यभाणि । न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति न हि देवदत्तः सङ्कोचितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति, स एवेति प्रत्यभिज्ञानात् । यथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति, मम पिता मम माता मम भ्रातेति प्रत्यभिज्ञानात् । जन्मोच्छेदानन्तरितत्वात्तत्र युक्तं नान्यत्रेति चेन्न क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानामङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा तेषामेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा । तत्रेदृग्जन्मोच्छेदान्तरितत्वेन चेदसतः सत्त्वापत्तिः सतश्चासत्त्वापत्तिः तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः । तथा बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः पित्रादिव्यवहारलोपप्रसङ्गश्च । एतेन क्षणभङ्गवादः प्रतिवदितव्यः । यस्य पुनः प्रागुत्पत्तेरसत् कार्य्यं तस्य निर्विषयः कारकव्यापारः स्यात् अभावस्य विषयत्वानुपपत्तेः आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रवृत्तिवत् । समवायिकारणे व्यापारः कारकव्यापारः स्यादिति चेन्न अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्मातिशयः कार्य्यमिति चेन्न अतस्तर्हि सत्कार्य्यापत्तिः । तस्मात् क्षीरादीन्येव दध्यादिद्रव्यादिभावेनावतिष्ठमानानि कार्य्याख्यां लभन्त इति न कारणादन्यत्कार्य्यं वर्षशतेनापि शक्यं कल्पयितुम् । तथा च मूलकारणमेवान्त्यात्कार्य्यात् तेन तेन कार्य्याकारेण नटवत् सर्व्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः कार्य्यस्य प्रागुत्पत्तेः सत्त्वमनन्यत्वञ्च कारणादवगम्यते । शब्दान्तराच्चैतदवगम्यते । पूर्व्वसूत्रे असद्व्यपदेशिनः शब्दस्योदाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरं "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादि । "तद्धैक आहुरसदेवेदमग्र आसीदिति" चासत्पक्षमुपक्षिप्य "कथमसतः सज्जायेत?" इत्याक्षिप्य "सदेव सोम्येदमग्र आसीत्" इत्यवधारयति । तत्रेदंशब्दवाच्यस्य कार्य्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात् सत्त्वानन्यत्वे प्रसिद्ध्यतः यदि तु प्रागुत्पत्तेरसत्कार्य्यं स्यात् पश्चाच्चोत्पद्यमानं कारणे समवेयात् तदन्यत्कारणात् स्यात् तत्र "येनाश्रुतं श्रुतं भवतीय प्रतिज्ञा पीड्येत सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते" भा० । "पटवच्च" शा०सू० । यथा च संवेष्टितः पटो न व्यक्तं गृह्यते किं पटः किम्वान्यद्द्रव्यमिति स एव प्रसारितो यत् संवेष्टितं द्रव्यं स पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते यथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते स एव प्रसारणसमयेऽपि विशिष्टायामविस्तारो गृह्यते न संवेष्टितरूपादन्यो भिन्नः पटः इति । एवं तन्त्वादिकारणावस्थं पटादि

प्रतियोग्युपरक्तस्य तस्य तथात्वकल्पनन्तु प्रतियोग्यवच्छेदकाद्य-ऽसम्भवात् उत्पत्तेः प्राक् प्रतियोगिनोऽसत्त्वेन तेन सह प्रागभावस्य सम्बन्धस्यानौचित्यात् इत्यनागतावस्थापन्नकार्य्यात्मकत्वमुपादानस्य युक्तम् तस्मात् पटः न तन्तुभ्यो भिन्न इत्युपेयमिति भावः । संयोगाप्राप्त्यभावादिति । संयोगश्च अप्राप्तिः विभागश्च तयोरभावात् । तथा च संयोगाभावः विभागाभावश्च पृथक् अभेदसाधकः यथा पटस्तन्तुभ्यो न भिद्यते तत्संयोगानाश्रयत्वात् यद्यतो भिद्यते तयोः संयोगोऽस्ति यथा घटपटयोः । न च गुणेषु व्यभिचारः शङ्क्यते तत्र तन्त्वभेदस्येष्टत्वात् द्रव्यत्वे सतीति हेतोर्विशेषणे च व्यभिचाराभावाच्च । अप्राप्तिर्वेति विभागश्चेत्यर्थः तथा च संयोगानाश्रयत्वस्येव विभागानाश्रयत्वस्यापि अभेदसाधकत्वमिति भावः । गुरुत्वान्तरकार्य्याग्रहणादिति । अयमाशयः । अवयवतन्तुपरिमाणेनेव तद्गुरुत्वेन सापेक्षयाधिकं महत्परिमाणमिव गुरुत्वम् जन्यते, गुरुत्वञ्च पतन इव स्वाश्रितद्रव्यादवनतिविशेषे हेतुरिति नैयायिकादिभिरभ्युपगम्यते । तत्र यदि पटस्तन्तुभ्यो भिद्येत तदा तदाश्रितगुरुत्वविशेषेण स्वाश्रितद्रव्यादवनतिविशेषोऽत्र गृह्येत यथा एकपलिकस्वर्णापेक्षया द्विपलिकस्वर्णस्य, तथा च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरप्रयुक्तस्वाश्रितद्रव्याद्यवनतिविशेषग्रहणायोग्यत्वात् गुरुत्वान्तरयुक्तस्वर्णादिवत् तुल्यगुरुत्वयुक्तपदार्थे व्यभिचारवारणाय ग्रहणायोग्यत्वादित्युक्तं तस्य च पृथक् द्रव्यादवनतिविशेषेऽवनत्यन्तरस्य ग्रहणसम्भवात् तन्तुपटयोश्च न तथासम्भव इति अभिन्नत्वमित्यत्र विचारः । तन्तुगुरुत्वस्य कार्य्यं स्वाश्रितद्रव्यादवनतिविशेषस्तस्मात् कार्य्यान्तरम् अवनत्यन्तरं न दृश्यते न गृह्यते इत्यर्थः । अमीतानि व्यतिरेकव्याप्तियुक्तानि यथा च तत्र तत्र व्यतिरेकव्याप्तिज्ञापकपदं तत्र तत्र दर्शितं प्राक् । पट इति बुद्धिविषयः व्यपदेशभाजश्चेति शेषः । फलितमाह न तन्तुभ्योऽर्थान्तरमिति । अभेदसाधकहेतोः सत्प्रतिपक्षितत्वमाशङ्कते सामग्रीत्यादि । क्रिया उत्पादनक्रिया, निरोधः प्रध्वंसनयोर्बुद्धिः तथा च कार्य्यकारणयोरभेदे कार्य्यस्य कारणात्मकत्वेन सतः उत्पत्तिविनाशबुद्धिः कथं स्यात् इति भावः । व्यपदेशः व्यवहारः अर्थक्रिया प्रयोजनोत्पादकं क्रियाव्यवस्था प्रावरणादिकार्य्यनियमः तेषां भेदः पृथक् प्रत्ययः । तथा च कार्य्यकारणयोरभेदे तन्तुषु पट इति कथं भेदव्यपदेशः ? कथं वा प्रयोजनान्तरजनकता, ? प्रयोजनान्तरनियमश्च स्यादित्यर्थः । इत्यञ्चात्र प्रयोगः पटस्तन्तुभ्यो भिद्यते तत्कार्य्यत्वेन, तत्र सत्त्वेन वा प्रतीयमानत्वात्, तन्तुषु पट इति व्यपदेशप्रयोजकसंज्ञाभेदात्, विभिन्नार्थसाधकत्वात् कार्य्यभेदवत्त्वाच्च । इति पञ्चभिर्हेतुभिः सत्प्रतिपक्षितोऽभेदसाधकहेतुर्नाभेदसाधनायालमित्याशङ्कार्थः । समाधत्ते नैकान्तिकमिति । ऐकान्तिकं वास्तवमित्यर्थः तथा च तत्र तत्राशास्तवएव भेदव्यवहारो न वास्तवाभेदप्रतिहन्तीति भावः । एवञ्च बुद्धिमात्रस्य, व्यवहारमात्रस्य वा वास्तविकत्वप्रयोजकत्वे इदं रजतमिति बोधात् व्यवहाराच्च शुक्तिरजतस्यापि वास्तवत्वापत्तिः तथा अर्थक्रियाक्रियाव्यवस्थाभेदयोश्च न भेदसाधकत्वम् एकस्यैव वह्न्यादेः प्रकाशनपाचनादिरूपनानाकार्य्याणां, विष्टीनां व्यस्तानां मार्गदर्शनादिकार्य्यस्य समस्तानां तु शिबिकावाहनादिविभिन्नकार्य्यस्य च सम्पादनस्य दृष्टत्वात् तत्र तत्र हेतोर्व्यभिचारात् तयोर्भेदसाधकतेति न सत्प्रतिपक्षितत्वमभेदसाधकहेतोरिति भावः । तदेव क्रमश उपपादयति एकस्मिन्नपीति । प्रध्वंसन्ते नश्यन्ति । कूर्म्मेत इत्यनुषक्तः अस्मिन् पक्षे च कूर्मे इत्यर्थे सार्व्वविभक्तिकः सप्तम्यास्तसिल् । यथाहेति भगवद्गीतायामितिशेषः । असतोऽसत्त्वाश्रयस्य, भावः उत्पत्तिः सतः सत्त्वाश्रयस्य न अभावः असत्त्वम् सदसतोरैकत्र समावेशाभावादिति शेषः । व्यापादयति व्यतिरेकव्याप्त्या साधयति तथा च प्रावरणादिक्रियाभेदः कारणभेदं विना अनुपपन्न इति व्यापकः प्रावरणादिप्रयोजनभेदाभावः निवर्त्तमानः व्याप्यं कारणभेदाभावं निवर्त्तयन् कार्य्यस्य कारणाद्भेदम् साधयतीत्यर्थः । इति यन्मत तदनूद्य नञा दूषयित्वा तत्र हेतुप्रदर्शनाय व्यभिचारं दर्शयति एकस्यापीति तथा च कार्य्यभेदाभावः न कारणभेदाभावव्यापकः एकस्मिन् वह्न्यादौ नानाकार्य्यदर्शनात् तथा च भेदसाधकहेतुर्व्यभिचारीति भावः । एवम् भेदसाधकहेतुषु दूषितेषु इदानीं आविर्भावादेः सदसत्त्वे विकल्पेन दूषयितुं पृच्छते स्यादेतदित्यादि । कृतमित्यव्ययम् अलमर्थकं कारणव्यापारेणेति तृतीयान्ते नान्वयि तथा च कारणव्यापारसाध्यं नास्ति तस्य सतएव सिद्धत्वादित्यर्थः । क्रियन्ते उत्पाद्यन्ते पटरूपेण व्यवस्थाप्यन्ते इत्यपि बोध्यम् । यदि उभयपादिनोस्तुल्यदोषत्वं न तद्दूष्यमित्याशयेन प्रतिबन्दिरूपदूषणदानायाह अथासदुत्पद्यत इत्यादि । उत्पत्तिः

**अवरवर्णज** पु० अवरवर्णः सन् जायते जन–ड । शूद्रे "स्वा तु दृष्टिनिपातेन सर्वेणावरवर्णजः" "ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्" इति च मनुः ।

**अवरव्रत** पु० अवरं अत्यन्तश्रेष्ठं व्रतमस्य । १सूर्ये २अर्कवृक्षे च । अवरम् अधमं व्रतमस्य । ३हीनव्रते त्रि० ।

**अवरशैल** पु० अवरः पश्चाद्वर्त्ती शैलः । अस्ताचले ।

**अवरस्तात्** अव्य० अवर+प्रथमाद्यर्थे अस्ताति । प्रथमा पञ्चमीसप्तमीष्वस्तेरवरपश्चाद्यर्थे । अवरस्तात् रमणीयम्, आगतः वसति वा । [अत्यन्तनिर्जने ।

**अवरहस** न० अवततं रहः अच् समा० । अवतते रहसि

**अवरार्द्ध** न० कर्म० । अपरभागे "शस्तुकर्म पितॄणाम-परार्द्धं देवानाम्" इति । "अपरार्द्धस्य परार्द्धस्य परि-व्हृत्" शत०ब्रा० २देहस्य पश्चाद्भागे च।

**अवरार्द्ध्य** त्रि० अवरार्द्धे भवः यत् । शेषभागभवे । न परत्वेन ध्यायते ऋध–णिच्–कर्मणि यत् । न्यूने । "नावरार्द्ध्यं ततः कुर्यात् मूर्द्धपातमिति स्थितिः" छन्दो० परि० । "अवरार्द्ध्य न्यूनम्" श०त०रघु० "दृषणशावरार्द्ध्या दक्षिणा" श्रा० त०।

**अवरीण** त्रि० अव+रिङ–क्त । तिरस्कृते । [न्ताले ।

**अवरीयस्** त्रि० न वरीयान् न०त० स्त्रियां ङीप् । अत्य-

**अवरुग्ण** त्रि० अव+रुज–क्त । १भग्ने २रोगान्विते च ।

**अवरुद्ध** त्रि० अव+रुध–क्त । १प्रतिरुद्धे अन्यैरसंलक्षिते २गुप्ते च "अस्ति कश्चिद्राजस्तुतुरवरुद्धचरन्" दशकु० इतर गमननिषेधेन रक्षितायां ३स्त्रियां स्त्री । (राखनी) ।

**अवरुद्धि** स्त्री अव+रुध भावे क्तिन् । १अवरोधने २अतिरोधे "इन्द्रियाणां वीर्याणाञ्चावरुद्धौ" श्रुतिः ।

**अवरूढ** त्रि० अव+रुह–क्त । १कृतावरोहणे उच्चस्थानात् निम्नगते । २उत्पाटिते वृक्षादौ च ।

**अवरोचक** अवरोचयति रुचिहीनं करोति अव+रुच–णिच्–ण्वुल् । अवरोचके रोगभेदे "स कृच्छ्राच्छिन्नुस्तत्र काम-श्वासावरोचक" सुश्रु० ।

**अवरोध** पु० अव+रुध–भावे घञ् । १निरोधे "फेनाय-मानं स्रोतोऽवरोधः" सुश्रु० बलादि० मतुप् वा ठनो बाधक इनि अवरोधवान् अवरोधी अवरोधयुक्ते त्रि० । कर्म्मणि घञ् । राजान्तःपुरस्थायां २योषिति, ३राज दारेषु च । "तत्र कृष्णावरोधानां भर्त्तृषु व्यक्तचिन्तनम् । "कलत्रवन्तमात्मानमवरोधे महत्यपि" रघु आधारे घञ् । ४राजान्तःपुरे । "पश्चादवरोधे प्रतयोमदीयैः" इति रघु । "निम्ने विनीतैरवरोधदक्षैः" कुमा० । "विस्रस्तवस्त्रमवरो-धवधूपपात" माघ । ल्युट् । अवरोधन निरोधे न० ।

**अवरोधक** त्रि० अव+रुध–ण्वुल् । १प्रतिरोधके २आवरके च । "सुधन्वा वीर्यवान् राजा मिथिलामवरोधकः" रामा० आर्षत्वात् कर्म्मणि न षष्ठी ।

**अवरोधायन** न० ६त० । अन्तःपुरे ।

**अवरोधिक** पु० अवरोधे तद्रक्षणादौ नियुक्तः ठन् । राजा-न्तःपुररक्षणार्थं नियुक्ते १वामनादौ । अवरोधः स्थानं निवासत्वेनास्त्यस्य ठन् । २अपान्तःपुरस्थायां स्त्रियां स्त्री । "ययुस्तुरङ्गाधिरुहोऽवरोधिकाः" माघः ।

**अवरोधिन्** त्रि० अवरुणद्धि अव+रुध–णिनि स्त्रियां ङीप् । १रोधके २आवरके च ।

**अवरोपण** न० अव+रुह–णिच्–प ल्युट् । उत्पाटने ।

**अवरोपित** त्रि० अव+रुह–णिच् पः क्त । उत्पाटिते ।

**अवरोह** पु० अव+रुह–घञ् । १अवतरणे, (नामा) ऊर्द्ध्व-देशान्निम्नदेशगमने । कर्त्तरि संज्ञायां च । तरोर्मूला-दग्रपर्य्यन्तमारूढायां २गुडूच्यादिलतायाम् । ३अपादाने घञ् । चन्द्रादिलोके स्वर्गे, ततो हि भोगावसाने सर्व्वेऽवतरन्ति । तत्र देहिनां चन्द्रलोकादवरोह-प्रकारस्तावदुक्तः शा० सूत्रे तद्भाष्ये च यथा "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च" शा० सू० । "इष्टादिकारिणां धूमादिवर्त्मना चन्द्रमण्डलमारूढानां ततः प्रत्यवरोह आम्नायते "तस्मिन् यावत्सम्पातमुषित्वा-ऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेत" मित्यारभ्य यावत् "रम-णीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणा श्वा-दियोनिमिति" । तत्रेदं विचार्य्यते किं निरनुशया भुक्तकृत्स्न कर्म्माणोऽवरोहन्ति? आहोस्वित् सानुशयाः? इति। किं तावत् प्राप्तं निरनुशया इति । कुतः ? यावत्सम्पातमिति विशेष-णात् । सम्पातशब्देनात्र कर्म्माशय उच्यते सम्पतत्यनेना-स्माल्लोकादमुं लोकं फलभोगायेति । यावत्सम्पातमुषि-त्वेति च कृत्स्नस्य तस्य तत्रैव भुक्ततां दर्शयति । "तेषां यदा तत्पर्य्यवैतीति" च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादे-तत् यावदस्मिन् लोके उपभोक्तव्यं कर्म्म तावदुपभुङ्क्ते इति कल्पयिष्यामीति नैवं कल्पयितुं शक्यते यत् किञ्चेत्यन्यत्र परामर्शात् । "प्राप्यान्तं कर्म्मणस्तस्य यत् किञ्चेह करोत्य-यम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे" इति इयमपरा श्रुतिर्यत्किञ्चेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्म्मणस्तत्र क्षयितां दर्शयति । अपि च प्रायणमनारब्ध-

शक्यं वक्तुम् ऐकान्तिकफलत्वविरोधात्। नहि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणोऽनुच्छेदः सम्भाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति। "कदाचित् सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते" इत्येवंजातीयका। यदि च कृत्स्नमारब्धफलं कर्म कस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमात् धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। न च धर्माधर्मयोः स्वरूपफलसाधनतादि समधिगमे शास्त्रादतिरिक्तं कारणं शक्यं सम्भावयितुम्। न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं सम्भवतीत्यव्यापिकापीयं प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यं यथा हि प्रदीपः समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मम्, एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणोऽवृत्तिमुद्भावयति न दुर्बलस्येति। तस्मात् श्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः। शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने सम्भ्रमः सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात् स्थितमेतदनुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्तीति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयानेऽध्वन्युपात्तयोरवरोहे सङ्कीर्तनात् यथेतशब्दाच्च यथागतमिति प्रतीयते। रात्र्याद्यसङ्कीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते" भा०। अनतिदूरे च तत्रैव "साभाव्यापत्तिरुपपत्तेः" ब्र०सू०। "इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन् यावत्सम्पातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् अथावरोहप्रकारः परीक्ष्यते तत्रेयमवरोहश्रुतिर्भवति "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा प्रवर्षतीति"। तत्र संशयः किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते किं वाऽऽकाशादिसाम्यमिति? तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति कुतः? एवं हि श्रुतिर्भवति इतरथा लक्षणा स्यात् श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा, तथा च वायुर्भूत्वा धूमो भवतीत्येवमादीन्यक्षराणि तत्स्वरूपोपपत्तावेवाञ्जसानि कल्पन्ते तस्मादाकाशादिस्वरूपप्रतिपत्तिरित्येवं प्राप्ते ब्रूमः आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति ततो वायोर्वशमेति ततो धूमादिभिः सम्पृच्यत इति तदेतदुच्यते यथेतमाकाशमाकाशाद्वायुमित्यादिना। कुतः एतत्? उपपत्तेः एवं ह्युपपद्यते। नह्यन्यस्यान्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते। विभुत्वाच्चाकाशेन नित्यसम्बद्धत्वात् तत्सादृश्यापत्तेरन्यस्तत्सम्बन्धो घटेत। श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते" भा०। "नातिचिरेण विशेषात्" ब्र०सू० "तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः किं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति? उताल्पमल्पमिति? तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते इदमाह नातिचिरेणेति। अल्पमल्पकालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति। कुत एतत्? विशेषदर्शनात्। तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि "अतो वै खलु दुर्निष्प्रपतरम्" इति। तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः दुर्निष्प्रपतरं दुर्निष्क्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः। तदत्र दुःखं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति। सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासम्भवात्। तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति" भा०। "अन्याधिष्ठिते पूर्ववदभिलापात्" सू० "तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते "इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इति। तत्र संशयः किमस्मिन्नवधौ स्थावरजात्यापन्ना स्थावरसुखदुःखभाजोऽनुशयिनो भवन्ति? आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु संश्लेषमात्रं गच्छन्तीति? किं तावत् प्राप्तं स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति। कुतः एतत्? जनेर्मुख्यार्थत्वोपपत्तेः स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः। तस्मात् मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म श्वादिजन्मवत्। यथा श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वेति

दिशब्दानामनित्यत्वं केन धार्य्यते? प्रसिद्धं हि लोके देवदत्तस्य पुत्रे उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियते इति। तस्माद्विरोध एव इति चेन्न गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात्। न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽपि आकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम्। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादाभ्यां विग्रहवत्त्वाद्यवगमादवगन्तव्यः। स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत्। ततश्च यो यस्तत्तत्स्थानमधितिष्ठति स स इन्द्रादिशब्दैरभिधीयते इति न दोषो भवति। न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणत्वाभिप्रायेणोच्यते कथन्तर्हि? स्थितिवाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिरतः प्रभव इत्युच्यते" भा०। "ज्योतिषि भावाच्च" सू०। "यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बंभ्रमज्जगदवभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च। न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण, चेतनतया अर्थित्वादिना वा योगोऽवगन्तुं शक्यते मृदादिवदचेतनत्वावगमात्। एतेनाग्न्यादयो व्याख्याताः। स्यादेतत् मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति नेत्युच्यते। न तावल्लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति प्रत्यक्षादिभ्य एव ह्यव्यभिचरितविषयेभ्यः प्रमाणेभ्यः प्रसिद्ध एवार्थो लोकात् प्रसिद्ध इत्युच्यते न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति। इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलतामाकाङ्क्षते। अर्थवादा अपि विधिनैकवाक्यत्वात् स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते। मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्थाः न कस्यचिदर्थस्य प्रमाणमित्याचक्षते। तस्मादभावो देवादीनामधिकारस्य" भा०। "भावन्तु बादरायणोऽस्ति हि" सू०। तुशब्दः पूर्वपक्षं व्यावर्त्तयति। बादरायणस्त्वाचार्य्यो भावमधिकारस्य देवानामपि मन्यते। यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रासु असम्भवोऽधिकारस्य तथाप्यस्ति शुद्धायां ब्रह्मविद्यायां सम्भवः अर्थित्वसामर्थ्याद्यप्रतिषेधापेक्षित्वादधिकारस्य। न च क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोद्येत। मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति तत्र यो न्यायः सोऽत्रापि भविष्यति। ब्रह्मविद्याञ्च प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकं "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" तथर्षीणामिति "ते होचुर्हन्त तमात्मानमन्विच्छामो यमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति" "इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणामित्यादि" च। स्मार्त्तमपि च गन्धर्व्वयाज्ञवल्क्यसंवादादि। यदप्युक्तं ज्योतिषि भावाच्चेति अत्र ब्रूमः। ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाः चेतनावन्तमैश्वर्य्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति मन्त्रार्थवादेषु तथा व्यवहारात्। अस्ति ह्यैश्वर्य्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टञ्च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्। तथाहि श्रूयते सुब्रह्मण्यार्थवादे "मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहारेति"। स्मर्य्यते च "आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम च" इति। मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते "मृदब्रवीत्" "आपोऽब्रुवन्" इत्यादिदर्शनात्। ज्योतिरादिभूतधातोरादित्यादिष्वप्यचेतनत्वमभ्युपगम्यते चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम्। यदप्युक्तम् मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति। अत्र ब्रूमः प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा। तथाहि अन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते। अत्राह विषम उपन्यासः तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते अत्र पुनर्विध्युद्देशैकवाक्यभावे स्तुत्यर्थेऽर्थवादेन पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसाययितुम्। न हि महावाक्ये प्रत्यायके इवान्तरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति यथा "न सुरां पिबेदिति नञ्वति वाक्ये पदत्रयसम्बन्धात् सुरापाणप्रतिषेध एवैकोऽर्थो गम्यते, न पुनः सुरां पिबेदिति पदद्वयसम्बन्धात् सुरापाणविधिरपीति। अत्रोच्यते। विषम उपन्यासः युक्तं यत् सुरापाणप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणं" विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन विधिस्तावकत्वं प्रतिपद्यन्ते।

इन्द्रनिष्ठविशिष्टजनकः तत्सङ्कल्पजनकत्वे सति तदुद्देशेन क्रियमाणत्वात् ब्राह्मणायदानवदिति वाच्यम् अप्रयोजकत्वात् तदर्थत्वेन क्रियमाणत्वस्योपाधित्वाच्च इन्द्रायस्वाहेत्यत्र न तादर्थ्ये चतुर्थी किन्तु स्वाहादिपद-योग उपपदविभक्तिरेव अन्यथा मम स्वस्ति स्वाहास्वधेत्यादिस्थलवैयर्थ्यात् मैवं चतुर्थ्यन्तपदस्य देवतात्वे मानाभावात् चतुर्थीं विनापि इन्द्रो देवतेति व्यवहारदर्शनात् अग्नये कव्यवाहनायेत्यादौ देवताद्वय प्रसङ्गाच्च "इन्द्र वरुणाय" इत्यर्थवादस्य "इन्द्रस्तुपावीत" इत्यादिविधिसमभिव्याहारेण एकवाक्यतयोपास्यत्वात् देवस्त्वं सविता मध्वानक्त्वित्यत्र देवमुद्दिश्य त्यक्ते सवितार्नां देवतात्वेन व्यवहारात् अग्नय इति पदेन नियमतस्त्यागस्य श्रुतिबोधितत्वेन तथात्यागस्य फलहेतुत्वात्। नच बीजाक्षराणां देवतात्वात् तत्रैव शिवादिपदशक्तिरिति वाच्यम् बीजाक्षराणाञ्चतुर्थ्यन्तत्वानियमात् तदप्रतीतावपि प्रकाशितशिवेत्यादिमुद्दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां व्यवहार। बीजाक्षराणां हविस्त्यागित्वेनानुद्देश्यत्वात् शिवस्य प्रतिमन्त्रं बीजाक्षराणां नानात्वादननुगमेन तत्तत्पदशक्तिकल्पनागौरवाच्च नच मूर्त्तिभेदेन शिवशरीराणामननुगतत्वेन तथापि न शक्तिरिति वाच्यम्-आत्यादिना भिन्नशरीरेषु चैतन्यवत्वविशिष्टजातेरदृष्टविशेषोपस्कीतत्वस्य चानुगतत्वात् अदृष्टशून्यस्य चेश्वरस्य न देवतात्वम्। ईशानस्य तद्भिन्न एव"।

**अविघ्न** न० विघ्न कार्य्यप्रतिबन्धकम् अभावे न०त०। १विघ्नाभावे "अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम्" रघु० "अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव" भा०व०प० न०ब० २विघ्नशून्ये त्रि० "अविघ्नं गच्छ पन्थानम्" रामा०। अर्थाभावे अव्ययी० ३विघ्नाभावे अव्य०।

**अविचक्षण** त्रि० विरोधे न०त०। विचक्षणभिन्ने मन्दे अपटौ

**अविचार** पु० विचार अभावे न०त०। १विचाराभावे "अविचारेण कर्त्तव्यम्" स्मृति न०ब०। २विचारशून्ये "अविचारपरे देशे न प्रकाशति जीवति" हितो०। चर्य्यां चारो यत्र। ३अविचारयोग्ये देशे न विगतचारो दूतो यस्य न०ब०। ४चारयुक्ते त्रि०। [विवेकाभावेनाकृते।

**अविचारित** त्रि० न विचारितः। इदं कर्त्तव्यं न वेति

**अविचाल्य** त्रि०न विचाल्यः अन्यथा कार्य्यः। अन्यथाकार्य्यभिन्ने स्थिरैकरूपे। "अविचाल्यमेतदुक्तं तथ्यञ्च यथातथ." भा०व०प०।

**अविचेतन** विशेषेण चेतना विचेतना प्रा०स० न०ब०। विशेषतोज्ञानशून्ये १सज्ञारहिते २नष्टचैतन्ये। "यद्वाग्यदन्त्यविचेतनानि" ऋ०८,१००,१०।

**अविच्छिन्न** त्रि० न०त०। सन्तते। अविच्छिन्न तैलधारा।

**अविच्छेद** पु० न विच्छेद अभावे न०त०। १विच्छेदाभावे सन्ततौ न०ब०। २विच्छेदशून्ये सन्तते। विच्छेदो नाम एकजातीयद्रव्यगुणादेः सामान्यजातीयेन व्यवधानम्।

**अविज्ञात** त्रि० न०त०। १विशेषेणाज्ञाते "अविज्ञातं तु यत् क्रीतं क्रेता वा यदि वा कृतः" नाविज्ञाते जलाशये" इति च स्मृति अर्थनिश्चयशून्ये त्रि० २यदधीतमविज्ञातं निगदेनैव पठ्यते" इति वेदान्तु०।

**अविज्ञातृ** पु० विज्ञाता जीवस्तद्भिन्नस्तथा०। १परमेश्वरे जीवेन हि आत्मनि कर्त्तृत्वाभिमानेन ज्ञातृत्वं कल्पितमिति तद्वासनया च तेन उपलक्ष्यते ईश्वरस्तु ततो विलक्षण। "अविज्ञाता सहस्राम्शु" विष्णुस० २तत्तद्विषयज्ञातृभिन्ने त्रि० स्त्रियां ङीप्।

**अविज्ञेय** त्रि० न०त०। १अज्ञेये २इदन्तया विज्ञातुमशक्ये परमेश्वरे पु० स हि प्रमाणान्तरावेद्यतया स्थूलदृष्ट्या न विज्ञेयः।

**अविडीन** न० न विडीनम्। पक्षिणामाभिमुख्येन गमने

**अवित** त्रि० अव–क्त। रक्षिते पालिते च।

**अवितथ** न० वितथं मिथ्या विरोधे न०त०। सत्ये वचनादौ "तदवितथमवादीर्यन्मम त्वं प्रियेति" माघ "स ब्राह्मणोत्यवितथं ब्रह्मणा श्रवणावुभौ" मनु २तद्वति त्रि०। "अवितथा वितथा सखि! मा गिरः" माघ।

**अवितर्क्य** न०तर्कयितुमशक्य। तर्कयितुमशक्ये १श्रौतार्थे। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इत्युक्तेः विपरीततर्केणाबाध्यः श्रौतार्थः। २तर्कमात्रेणाविज्ञेये च।

**अवितारिन्** त्रि० वितारो विगमोऽस्त्यस्य न०त० स्त्रियां ङीप्। अनपायिनि "सुमेधामवितारिणीम्"। ऋ०२८,५,६,। "अवितारिणीम् वितारं विगमनमपायं अनपायिनीम्" भा०।

**अवितृ** त्रि०अव–तृच् स्त्रियां ङीप्। रक्षितरि "सखीयतामविता बोधि सखा" ऋ०४,१७,१८, स नो बोध्यविता" ऋ०७,६९,२।

**अवित्त** त्रि० न०त०। १अविख्याते। न०ब०। २धनशून्ये त्रि०

**अवित्ति** स्त्री विद–क्तिन् अभावे न०त०। लाभाभावे

"अहमवित्त्यान्यामष्टपि" छा० उ० । "अविद्याऽलाभेन" भा० । २लाभाभावे च । न०ब० । ३लाभशून्ये ४ज्ञानशून्ये च त्रि० अव्ययी० । ५ज्ञानाभावे ६लाभाभावे च अव्य०

**अवित्यज** पु० न विशेषेण त्यज्यते रसायनादिषु त्यज—कर्मणि घा०क न० त० । पारदे राजनि० ।

**अविथुर** त्रि० व्यथ—उरच् कित् तेन संप्रसारणम् भेदे न यस्य च न०त० । अवियुक्ते । "अमानता अविथुरा सजोषिणः" ऋ० १,८७,१। "अविथुरा वियुक्ता सङ्घीभूता इति भा० लोके तु अविधुर इत्येव ।

**अविथ्या** स्त्री अवये हिता अवि+थ्यन् । अजाहितायां यूथौ

**अविदुग्ध** न० ६त० । मेषीदुग्धे ।

**अविदित** त्रि०न विदितः । १अज्ञाते । २परमेश्वरे पु० "अन्यत्र विदितादन्यत्राविदितादन्यत्र कृताकृतादिति" श्रुतिः ।

**अविदाहिन्** त्रि० न विदाही न० त० । १असन्तापके २अदाहके च ।

**अविदूर** न०न०त० । १समीपे अनतिदूरे २तद्वर्त्तिनि त्रि० ।

**अविदूस** न० अवेर्दुग्धम् अवि+दुग्धे दूसच् न षत्वम् । मेषीदुग्धे ।

**अविद्धकर्णी** स्त्री न विद्ध अच्छिद्र पर्णरूप कर्णोऽस्याः । पाठालतायाम् ।

**अविद्या** स्त्री न विद्या विरोधे न०त० । विद्याविरोधिनि १अज्ञाने २ज्ञानाभावे च । अविद्या च न्यायमते ज्ञानाभावः । साङ्ख्यादिमते ज्ञानप्रागभावापरपर्य्यायज्ञानानगतावस्था सा च पञ्चभेदा "अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः" इति पुरा० पञ्च पर्व्वाणि च "अविद्याऽस्मितारागद्वेषाभिनिवेशाः" इति पात० सूत्रोक्तानि । तत्र "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" पात० सू० । व्याख्यातञ्च तद्वृत्तौ यथा अविद्या "अतस्मिन् तद्बुद्धिरित्यर्थः अमरा देवा इत्यनित्येषु नित्यत्वभ्रान्त्या देवत्वार्थं कर्म कृत्वा बध्यन्ते, एवमशुचौ स्त्रीकाये शुचित्वभ्रान्त्या बध्यन्ते तदुक्तं भगवता व्यासेन "स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि । कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुरिति 'स्थानम् [illegible] मातु रुदरं स्थानं, शुक्रशोणितं बीजम्, अन्नपरिणामरसादिरुपष्टम्भः स्वेदाद्यैर्मलानां स्रवणं निष्यन्दः । निधनं मरणम् । तेन हि श्रोत्रियकायोऽप्यत्यन्ताशुचिर्भवति आधेयशौचत्वं स्नानानुलेपनादिना शुचित्वापादनम् । तथा परिणामदुःखे भोगे सुखत्वभ्रान्तिः अनात्मनि पुत्रादावात्मख्यातिः अविद्या तत्त्वविद्याविरोधिनीत्यर्थः । यद्यपि शुक्तिरूप्याद्यविद्याः सन्ति तथापि पञ्चविधैवाविद्या बन्धमूलमितिभावः" इयमविद्याऽदृष्टत्वेन नैयायिकैरङ्गीकृता "इयमेवा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता" कुसु० "यस्य यस्य सहकारिशक्तिः कारणम् एषा सहकारिरूपा माया असमत्वात् सर्व्वकार्य्यापेक्षणीयत्वात् दुरुन्नेयत्वसादृश्यात् मायापदेऽदृष्टे लक्षणा । मूलत्वात् प्रकृतिः सैव, तत्त्वज्ञानप्रतिबध्यत्वात् सैवाविद्या उदिता उक्ता" हरिदासः । क्षणिकविज्ञानवादिनस्तु "अभिन्नोऽपि हि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इत्युक्तदिशा क्षणिकविज्ञानमेवैकं तत्त्वं बाह्यं वस्तु नास्ति तथाहि बाह्यपदार्थाभावेऽपि मिथ्याज्ञानरूपयाऽविद्यया सर्वं वस्तु कल्पितमित्याहुः । तदेतत् शास्त्रे निराकृतम् । यथा "नाविद्यातोऽप्यवस्तुना बन्धायोगात्" सू० "अविद्यातोऽपि न साक्षाद्बन्धयोगः अद्वैतवादिनां "तेषामविद्याया अवस्तुत्वेन तया बन्धायोगात् न हि स्वाप्नरज्ज्वा बन्धनं दृष्टम् । अथ "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" इति "बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया । स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी" इतिचोक्तेः बन्धोऽप्यवास्तव इति वाच्यम् विज्ञानाद्वैतश्रवणोत्तरं बन्धनिवृत्तये योगाभ्यासविरोधात् बन्धमिथ्यात्वश्रवणेन बन्धनिवृत्त्या सिद्धत्वनिश्चयात् तदर्थं यत्नायाससाध्ययोगाद्यनुष्ठानासम्भवात्" भा० "वस्तुत्वे सिद्धान्तहानिः" सू० "यदि चाविद्याया वस्तुत्वं स्वीक्रियते तदा स्वाभ्युपगतस्याविद्याद्वैतस्य हानिः" भा० । "विजातीयाद्वैतापत्तिश्च" सू० । "किञ्चाविद्याया वस्तुत्वे क्षणिकविज्ञानसन्तानाद्विजातीयम् द्वैतं प्रसज्येत तच्च भवतामनिष्टम् । सन्तानान्तःपातिव्यक्तीनामानन्त्यात् सजातीयद्वैतमिष्यत एव तैरित्याशयेन विजातीयेति । नन्वविद्याया अपि ज्ञानविशेषत्वाद्विद्यया कथं विजातीयद्वैतमिति चेन्न ज्ञानरूपाविद्याया बन्धोत्तरकालीनतया वासनारूपाविद्याया एव तैर्बन्धहेतुत्वाभ्युपगमात् । वासना तु ज्ञानाद्विजातीयेतिभावः" भा० । "नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी" इत्युक्तिमतस्तस्याशङ्कते 'विरुद्धोभयरूपा चेत्' सू० "विरुद्धं यदुभयं सदसच्च तदात्मिका वा तत्रैवाविद्या प्रकृत्या अतो न तया पारमार्थिकाद्वैतक्षतिः इति चेदित्यर्थः । प्रकाशाप्रकाशरूपसदसत्त्वयोः स्वमतसिद्धयोर्विरोधो नास्तीति

स्फुरणाय विरुद्धेतिपदम्" भा० दूषयति । "न तादृक्-पदार्थाप्रतीतेः" सू० । विरुद्धधर्म्मवत्पदार्थस्याविवेरित्यर्थः । अपि चाविद्यायाः ज्ञानादेव दुःखयोगाख्यबन्धच्छेदत्वे ज्ञानेन विद्योदयानन्तरं प्रारब्धभोगानुपपत्तिः बन्धपर्य्यायस्य दुःखभोगस्य कारणनाशात् । अस्मदादिमते तु नायं दोषः संयोगद्वारैवाविद्याकर्म्मादीनां बन्धहेतुत्वात् जन्मारब्धः संयोगः प्रारब्धसमाप्तिं विना न नश्यति" भा० । पुनः शङ्कते । "न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" सू० "वैशेषिकाद्यास्तिकवन्न वयं षट्षोडशाद्यादिनियत पदार्थवादिनः । अतोऽप्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा पदार्थोऽविद्यात्वेनाभ्युपेयमिति भाव" भा०। परिहरति । "अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम्" सू० । "पदार्थनियमोमास्तु तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राभ्युपगमो न सम्भवति । अन्यथा बालकाद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः । स्मृत्यादिकमप्यविषये स्फुटं नास्ति युक्तिविरोधेन च सन्दिग्धश्रुतेरर्थान्तरसिद्धिरिति भाव "भा० । एवं क्षणिकविज्ञानवादिन अनेन वेदान्तिमतकल्पिताविद्याऽपि प्रकृतिरेवेति तत्रैव व्यवस्थापितम् । यथा "पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम्"सू० ॥ "अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्येकस्मिन्नविद्यादौ यत्र क्वचिन्नित्ये द्वारे परम्परायाः पर्य्यवसानं भविष्यति पुरुषस्यापारिणामित्वात् । अतो यत्र पर्य्यवसानं सैव नित्या प्रकृतिः । प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः" भा०॥ नन्वेवं च्याविद्या स्थानीय प्रकृतेर्नित्यत्वानुपपत्तेस्तस्या उत्पत्तिश्रुतेर्ज्ञाननाश्यत्वाच्चेत्याशयेन मूलसमाधानमाह । "समानः प्रकृतेर्द्वयोः" सू० । "वस्तुतस्तु प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोरावयोः समानः पक्षः । एतदुक्तं भवति यथा प्रकृतेरुत्पत्तिः श्रूयते एवमविद्याया अपि । "अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः" इत्यादिवाक्यैः । अत एकस्या अवश्यं गौण्युत्पत्तिर्वक्तव्या । तत्र च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा गौण्युत्पत्तिर्युक्ता । "संयोगलक्षणोत्पत्तिः कथ्यते कर्म्मजानयोरिति" कौर्म्मवाक्ये प्रकृतिपुरुषयोर्गौणोत्पत्तिश्रवणात् । अविद्यायास्तु कापि गौणोत्पत्त्यश्रवणात् । तथा अनादितावाक्यानि तु प्रवाहरूपेणैव चावमाद्यनादिवाक्यवद्व्याख्येयानीति । अविद्या च मिथ्याज्ञानरूपा बुद्धिधर्म्म इति योगे स्थितमतो न नित्यत्वहानिः । अथ वा द्वयोः प्रकृतिपुरुषयोः समान एव न्यायः इत्यर्थः । "यतः प्रधानपुरुषौ यतश्चैतच्चराचरम् । कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु" इत्यादिवाक्यैः पुरुषस्याप्युत्पत्तिश्रवणादिति भावः । तथा च पुरुषस्येव प्रकृतेरपि गौण्येवोत्पत्तिः नित्यत्वश्रवणात्तदपि समानमिति । तस्मात् प्रकृतिरेवोपादानं जगतः प्रकृतिधर्म्मश्चाविद्या जगन्निमित्तकारणं तथा पुरुषोऽपीति सिद्धम् । यत् तु । "अविद्यामाहुरव्यक्तं सर्गप्रलयधर्म्मिणम्" सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम्" इति मोक्षधर्म्मे प्रकृतिपुरुषयोरविद्याविद्येति वचनं तत् तदुभयविषयतयोपचरितमेव । परिणामित्वेन हि पुरुषापेक्षया प्रकृतिरसतीति तस्या अविद्याविषयत्वमुक्तम् । एवमेव तस्मिन् प्रकरणे स्वस्वकारणापेक्षया भूतान्त कार्य्यजातमविद्येत्युक्तं स्वस्वापेक्षया च स्वस्वकारणं विद्येति । पुरुषस्य परिणामरूपं जगदुपादानत्वं तु प्रकृत्युपाधिकमेव कर्त्तृत्वादिवच्छ्रुतिस्मृत्योरुपासार्थमेवानूद्यते । अन्यथा "अस्थूलमनण्वह्रस्वमित्यादि"श्रुतिविरोधापत्तेरिति मन्तव्यम् । मायाशब्देन च प्रकृतिरेवोच्यते "मायां तु प्रकृतिं विद्यादिति" श्रुतौ "तस्मान्मायी सृजते विश्वमेतत्" "तस्मिंश्चान्यो मायया सन्निरुद्ध "इति पूर्व्वप्रक्रान्तमायायाः प्रकृतिस्वरूपतावचनात् । "सत्त्वं रजस्तम इति प्राकृत तु गुणत्रयम् । एतन्मयी च प्रकृतिर्माया या वैष्णवी स्मृता" ॥ "लोहितश्वेतकृष्णेति तस्यास्ताश्चबहुप्रजाः" इत्यादिस्मृतिभ्यश्च । न तु ज्ञाननाश्याविद्या मायाशब्दार्थो नित्यतानुपपत्तेः । किञ्चाविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वे च तदाधारतया प्रकृतिसिद्धिः पुरुषस्य निर्गुणत्वादिश्च । अथ द्रव्यगुणकर्म्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न तादृक्पदार्थाप्रतीतेरुक्तत्वादिति" भा० । वेदान्तिनस्तु ज्ञानविरोधि अज्ञानापरपर्य्याय पदार्थान्तरमविद्येति स्वीचक्रुः तच्च विस्तरेण अज्ञानशब्दे ८२ पृष्ठे दर्शितम् । इयञ्चाविद्या मूलाविद्यातूलाविद्याभेदेन द्विविधा । तत्र हिरण्यगर्भोपाधिर्मूलाविद्या तूलाविद्याश्च प्रतिजीवभेदं नाना मायाशब्देनाभिधीयन्ते । "मायोपाधिरयं जीवः अविद्योपाधिरीश्वर" इत्युक्तेः "इन्द्रोमायाभिः पुरुरूपईयते" इतिश्रुतेश्च तथात्वम् । मायानान्तु मूलाविद्याकार्य्यत्वात् अविद्याशब्दवाच्यताऽपि । अतएव चाविद्यिको जीव इति तत्तत्स्थाने भाष्यकारादिभिरुक्तम् । अस्मान्न करणरूपाविद्योपाधौ तत्त्वज्ञाने समुत्पन्ने तदीयैवाऽविद्या निवर्त्तते नान्यस्य इत्येकमुक्तौ न सर्वमुक्ति-

च्छि पुरुषस्य दोषमावहति क्रतोर्योपरितरिष्यति" शा०भौ०। इति सांख्या मन्यन्ते मीमांसका वेदान्तिनश्च वैधहिंसाया अनर्थहेतुत्वनिराकृतं तच्च शा०सूत्रे तद्भाष्ये च प्रपञ्चोनोक्तम् तच्च ४४२ पृष्ठे उदाहृतम्।

**अविशेष** पु० विशेषोभेदकधर्म्म अभावे न०त०। १भेदकधर्म्माभावे "वायुमब्दादविशेषविशेषाभ्याम्" शा०सू०। २अभेदे ऐक्ये च। न०ब०। ३विशेषशून्ये तुल्ये त्रि० सांख्यादिमतसिद्धेषु शान्तघोरत्वमूढत्वरूपविशेषशून्येषु स्थूलभूतोपादानेषु ४सूक्ष्मभूतेषु। तानि च तन्मात्राणि यज्जातीयेषु शान्तादिविशेषत्रयं न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानामविशेषाणि। "तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणादिभ्यः। अस्यायमर्थः तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्म्मधर्म्मिभेदाद् द्रव्याणामपि तन्मात्रता स्मृता। ते च पदार्थाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्या एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अतोऽविशेषिणोऽविशेषसंज्ञिता इति शान्तं सुखात्मकं, घोरं दुःखात्मकं, मूढं मोहात्मकम्। तन्मात्राणि च देवादिमात्रभोग्यत्वेन केवल सुखात्मकान्येव सुखाधिक्यादिति" सां०प्र०भा०। तन्मात्राण्यविशेषाः" सां०का० तत्त्वकौ० च प्रमाणं तन्मात्रशब्दे दर्शयिष्यते। नित्ययोगे इनि। अविशेषीत्यपि तन्मात्रे।

**अविशेषज्ञ** त्रि० विशेषं न जानाति ज्ञा—क अस्म०त०। विशेषानभिज्ञे भेदकधर्म्मानभिज्ञे।

**अविशेषित** त्रि० न विशेषितं भेदकधर्म्मेण। यस्य इतरस्मात् विशेषणेन व्यावर्त्तनं कृतं तस्मिन् पदार्थे। [२अक्लिष्टे च

**अविश्रान्त** त्रि० वि+श्रम—क्त न०त०। १विरामरहिते २अक्लान्ते

**अविश्रम्भणीय** त्रि० वि+श्रम्भ—अनीयर् न०त०। विश्वासकरणायोग्ये। [नेदविश्रम्भणीयं विश्वसेन्नातिविश्वसेत्" हितो०।

**अविश्वस्त** त्रि० न०त०। विश्वासयोग्यताहीने "न विश्व-

**अविश्वास** पु० अभावे न०त०। १विश्वासाभावे न०ब०। २विश्वासानाधारे ३विश्वासायोग्ये पदार्थे च। [कारके।

**अविश्वासिन्** त्रि० न विश्वसिति वि+श्वस क्रियां णिनि। विश्वासा-

**अविश्लिष्ट** त्रि० विरोधे न०त०। विश्लिष्टभिन्ने सङ्गते।

**अविष** पु० अव—टिषच्। १समुद्रे, २नृपे च। टित्त्वात् ङीप्। ३नद्यां स्त्री। ४रक्षकमात्रे त्रि०। नास्ति विषं यत्र। ५विषशून्ये त्रि०। "अपकोपधीरविषा वनानि" ऋ०६,२६,५, "अविषा विषरहिता निरलभाणि वा वनानि" भा०। विश्रायाम् अतिविषयाम् (आतइच्) स्त्री टाप्।

**अविषक्त** त्रि० न०त०। असंलग्ने।

**अविषम** त्रि० विरोधे न०त०। १विषमभिन्ने समे (जोड़) २सुगमे ३सुगमे च। [४विषमयशून्ये त्रि०।

**अविषय** पु० न०त०। १अगोचरे २अप्रतिपाद्ये। न०ब०।

**अविषह्य** त्रि० न विशेषेण सह्यः न०त०। १सोढुमशक्ये २इतरैरनभिभवनीये "अविषह्यविक्रमः, ३परिच्छेत्तुमशक्ये च "सीमायामविषह्यायाम् स्वयं राजैव धर्म्मवित्" मनुः।

**अविष्टम्भ** पु० अभावे न०त०। १आलम्बाभावे। न०ब०। २आलम्बनशून्ये त्रि०।

**अविष्ठ** त्रि० अतिशयेन अविता अवितृ+इष्ठन् तृचोलोपः। अतिशयेन रक्षके। "यो अविष्ठो नृमणतिमविष्ठ" ऋ०७।२८।५ "अविष्ठः अतिशयेन रक्षिता" भा०।

**अविष्या** स्त्री अव—गतौ इष्णुन् अविर्गतिरिच्छति क्यच्—भावे अ। गमनेच्छायाम्। "अविष्यामनुमत स्वविष्टः" ऋ०२,३८,३, "अविष्यां गमनेच्छाम्" भा०।

**अविस्** न० अव—भावे इसुन्। १रक्षणे २गतौ च।

**अविसंवाद** पु० विसंवाद प्रमाणानुसरणाभावः विरोधे न०त०। १प्रमाणानुसरणे २याथार्थ्यविषयकत्वे।

**अविसंवादिन्** त्रि० विरोधे न०त०। प्रमाणान्तराहसंवादिनि १यथार्थविषयके २सफले पदार्थे च।

**अविसोढ** न० अवेर्दुग्धम् अवि+सोढच् न सलम्। १मेषीदुग्धे। न विशोढं। २असोढे त्रि०।

**अविस्थल** न० भारतोक्ते ग्रामभेदे। "अविस्थलं वृकस्थलं माकन्दीं वारणावतम्। अवसानञ्च गोविन्द। किञ्चिदेकञ्च पञ्चमम्" भा०उ०प०।

**अविस्पष्ट** न० विस्पष्टं श्रुतमात्रेणार्थावबोधकं तद्भिन्नं अवणायोग्यञ्च। वि+स्पश—क्त न०त०। अस्पष्टवाक्ये।

**अविस्मरण** न० अभावे न०त०। १विस्मरणाभावे स्मरणे विस्मरणञ्चानुभूतपदार्थस्य कालरोगादि प्रयोज्यः स्मरणाभावः स च अनुभूतविषयेषूद्भूतसंस्कारस्यापि प्रणिधानादिकारणान्तराभावात् अनुद्बुद्धतया स्मृतिरूपकार्य्याजनने, रोगादिना नाशने च भवति। तदभावः अविस्मरणं तत्र च प्रणिधानादिसहकृतसंस्कारस्य स्मरणजनकता रोगाद्यनभिभवनीयता च। यथाह गौ०सू०। "प्रणिधाननिबन्धादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्"। "प्रणिधानं चिन्त-

२द्राक्षायां स्त्री। बीजानाधायके त्रि० "अबीजमपि चेत् क्षेत्रं केवलं स्थण्डिलं भवेत्" मनुः। अभावार्थे न०त०। अङ्कुरोत्पादनायासमर्थे तन्दुलयवादौ ३बीजे च। "अबीजविक्रयी चैव बीजोत्कृष्टं तथैव च" मनुः। "अबीजप्ररोहासमर्थमिति" कुल्लू०। बीजं शुक्रं न०ब०। शुक्ररहिते ४क्लीबे न०। "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां स क्लीब इति कथ्यते" इत्युक्तेस्तस्य तथात्वम्। "उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम्" इति मनुः। ५कारणशून्ये त्रि० ६योगोक्ते निर्बीजे चित्तवृत्तिपरिणामनिरोधे पु०।

**अवीत** न० अनुमानभेदे तच्च दर्शितं सां०कौ० "तत्र प्रथमं तावद्द्विविधं वीतमवीतञ्च अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम् व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्" व्याख्यातञ्च तदर्थाभि. यथा "वीतं विशेषेण इतं प्रवृत्तमन्वितम् अन्वयव्याप्तिहेतुकमित्यर्थः यद्वा विशेषेण इतं ज्ञातं प्रसिद्धसाध्यव्याप्तिकमित्यर्थः तद्भिन्नमवीतम् व्यतिरेकव्याप्तिहेतुकम् अप्रसिद्धसाध्यव्याप्तिकं वेत्यर्थः व्यतिरेकमुखेन तदसत्त्वे तदसत्त्वरूपव्यतिरेकद्वारा साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिद्वारेत्यर्थः। निषेधकं यो यः पृथिवीभेदवान् स गन्धाभाववान् इति व्यतिरेकप्रदर्शनेन व्यापकस्य गन्धाभावस्य पृथिव्यां निवृत्त्या पृथिवीभेदरूपस्य गन्धाभावव्याप्यस्य निवारकम्। तथा च पृथिवी पृथिवीतरभिन्ना गन्धवत्त्वादित्यनुमानमवीतम्"।

**अवीर** त्रि० वीरः पुत्रादिर्नास्ति यस्य। १पुत्रादिशून्ये। न०त० २वीर्यवर्जिते त्रि०। "पतिपुत्रवती नारी वीरा प्रोक्ता मनीषिभिः" इति परिभाषिता स्त्री वीरा न०त०। ३पतिपुत्ररहितायां स्त्रियां स्त्री। "अजातपुत्रा विधवा साऽवीरा परिकीर्त्तितेति" स्मृतिः। "मा त्वा वयं सहसावन्नवीराः" ऋ०७,४,६,। "अवीराः पुत्रादिरहिता" भा०। "अवीरायाश्च योषितः" स्मृतिः।

**अवृक** त्रि० वृ—कक् वृकः आवरकं न०ब०। आवरकशून्ये "ज्योतींषि कृण्वन्नवृकाणि" ऋ०१,५५,६, "वृकेणावरकेण रहितानि" भा०।

**अवृत्ति** स्त्री वृत्तिर्जीवनोपायः अभावे न०त०। १जीविकाभावे "आददीताममेवास्मादवृत्तावेकरात्रिकम्" "अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि" "अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत्" इति च मनुः। नास्ति वृत्तिः स्थितिरस्य। २अविद्यमाने। "साध्याभाववदवृत्तित्वम्" साध्यवदन्यावृत्तित्वम्" इति च अनुचिन्ता०। न०ब०। जीविकाशून्ये त्रि०

**अवृद्धिक** न० नास्ति वृद्धिः यत्र कप्। ऋणादौ वृद्धिः लाभरूपा (सुद) तद्रहिते १मूलधने। तत्र स्मृतौ दर्शितं यथा "ऋणं पैतामहं पैत्रं प्रतिभाव्यागतं सुत। समं दद्यात् तत्सुतौ च न दाप्याविति निश्चयः"। "समं अवृद्धिकम्" "ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम्। पैतामहं समं देयमदेयं तत्सुतस्य च" या०स्मृ०। "समं यावत् गृहीतं तावद्देयं न वृद्धिः" मिता०। "गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते। नष्टो देयो विनष्टश्च दैवराजकृतादृते" या०स्मृ०।

**अवृध** त्रि० न वर्द्धते वृध—क। १वृद्धिशून्ये। अनभूतवयर्थे वृध—क न०त०। अवर्द्धके। "पर्नीरस्मद्वा अवृधा अवद्यात्" ऋ०७,७,२, "अवृधान् स्तुतिभिरग्निमवर्द्धयतः" भा०।

**अवृष्टि** स्त्री अभावे न०त०। १वर्षणाभावे "अथ यदाऽवृष्टिर्भवति बलीयानेव तर्ह्यबलीयस आदत्ते ब्रह्मणो ह्यापः"। शत०ब्रा०। न०ब०। वृष्टिशून्ये मेघे पु०।

**अवृहत्** त्रि० विरोधे न०त०। वृहद्भिन्ने क्षुद्रे स्त्रियां ङीप्

**अवेक्षक** त्रि० अव+ईक्ष—ण्वुल्। १दर्शके २पर्यालोचके ३आयव्ययादिषु अध्यक्षे च।

**अवेक्षण** न० अव+ईक्ष—ल्युट्। १दर्शने, २प्रतिजागरणे, ३अवधाने च "वर्णाश्रमावेक्षणजागरूकः" रघु "भूतानामनुरचना त्वया विघ्नमवेक्षणम्" सा०द० "पितृमन्त्रानुहरणे आत्मावमे ह्यवेक्षणे" आ०त०स्मृ०

**अवेक्षणीय** त्रि० अव+ईक्ष—अनीयर्। १दर्शनीये। "तपस्विसामान्यमवेक्षणीया" रघु। २आलोचनीये च।

**अवेक्षा** स्त्री अव+ईक्ष—भावे अ। अवेक्षणशब्दार्थे।

**अवेक्षित** त्रि० अव+ईक्ष कर्म्मणि—क्त। १दृष्टे २पर्यालोचिते च।

**अवेक्षितृ** त्रि० अव+ईक्ष—तृच् स्त्रियां ङीप्। अवेक्षकशब्दार्थे।

**अवेक्ष्य** त्रि० अव+ईक्ष—कर्म्मणि ण्यत्। १पर्यालोच्ये २दृश्ये च ल्यप्। ३दृष्ट्वेत्यर्थे ४पर्यालोच्येत्यर्थे च अव्य०।

**अवेदनाज्ञ** त्रि० वेदनां न जानाति ज्ञा—क अव० समा०। वेदनानभिज्ञे "अवेदनाज्ञं कुलिशक्षतानाम्" कुमा०।

**अवेदि** स्त्री वेदिर्वेदनम् अभावे न०त०। ज्ञानाभावे "न वेदवेदिर्भवतो विनष्टिः" उ०ष०। परिष्कृतभूमिशून्ये त्रि०

**अवेद्य** त्रि० न वेद्यः ज्ञेयः। १अज्ञेये। विद—लाभे ण्यत्। २अलभ्ये ३अविवाह्यस्त्रियां स्त्री "व्यभिचारेण वर्णानामवेद्यावेदनेन च" मनुः। ४गोवत्से पु० मत्स्य०।

**अवेल** त्रि० नास्ति वेला सीमा यत्र । १सीमारहिते निर्मर्य्यादे २अपलापे पु० ३पूर्णगुवाके स्त्री मेदि० । अभावार्थे न०त०।४अनुचितकाले स्त्री ।न०त०।५समयशून्ये त्रि० ।

**अवेष्ट** त्रि० अव+यज–क्त । नाशिते "अवेष्टाददन्दशूकाः" श०१०,१०,"अवपूर्व्वोयजतिर्नाशार्थः" वेददी० "अवेष्टा इति चौदावधर्माविध्यति" कात्या०१५,५,२२ ।

**अवैध** त्रि० विधित आगतम् अण् वैधं न०त० । १विधितः अप्राप्ते २निषिद्धे च। "अवैधं पञ्चमं कुर्व्वन् राज्ञो दण्डेन शुध्यति" स्मृतिः ।

**अवैधव्य** न० विधवाया भावः ष्यञ् वैधव्यं पतिहीनत्वम् अभावे न०त० । पतिशून्यत्वाभावे सपतिकत्वे । "अवैधव्यप्रदं स्त्रीणाम्" कालिकापुरा० "अवैधव्यं भवेत्तस्याः सप्तजन्मसु निश्चितम्" पुरा० ।

**अवैमत्य** न० वैमत्यं विरुद्धमतता अभावे न०त० । १मतद्वैधाभावे ऐकमत्ये ।न०ब० । २तच्छून्ये ।

**अवैयात्य** न०वैयात्यं धार्ष्ट्यं निर्लज्जता अभावे न०त०। धार्ष्ट्याभावे १सलज्जत्वे न०ब०। २तच्छून्ये लज्जावति त्रि० ।

**अवैर** न०अभावे न०त०। १विरोधाभावे न०ब०। २विरोधशून्ये त्रि० ।

**अवैराग्य** न०वैराग्यं विषयवितृष्णा अभावे न०त० । १विषयतृष्णायाम् २शास्त्रोक्ते धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्यरूपाष्टविधप्रकृतिधर्म्मभेदे च ।

**अवैलक्षण्य** न० विलक्षणस्य भावः ष्यञ् वैलक्षण्यं भेदकधर्म्मः अभावे न०त० । १भेदकधर्म्माभावे अभेदे । न०ब० । २तच्छून्ये अभिन्ने त्रि० ।

**अवोक्षण** न० अव+उक्ष–भावे ल्युट् । तिरश्चा पाणिना सेचने "उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम् ।न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्" स्मृति ।

**अवोद** पु० अव+उन्द–भावे घञ् नि०नलोपः । १अवक्लेदने तत अस्त्यर्थे अर्श० अच् । क्लिन्ने २आर्द्रे त्रि० जटा० ।

**अवोदेव** अव्य० देवानामवस्तात् अव्ययी० । देवानामवरस्मिन् देशादौ "अवोदेवमुपरिमर्त्यं कृधि" ऋ० ७,१९,१२ ।

**अवोष** पु० अव+उष–कर्म्मणि क । उष्णाने। अपूपा० हितार्थे अयवौ । अवोषीयम् अवोष्यं तद्धिते वस्तुनि त्रि० ।

**अव्द** पु० अब्दवत् । जलधरे । [पक्षादयोऽप्यत्र ।

**अव्दप** पु० अब्दपवत् वर्णाधिपे अब्दपशब्दे विवृतिः । अव्द-

**अव्य** त्रि० अविभवम् अवि+दिगा० यत् । मेषभवे लोमादौ "तिरः पवित्रं विवारमव्यम्" ऋ०९,१०९,१६, ।

**अव्यक्त** पु० वि+अञ्ज–क्त न०त० । १विष्णौ,२कामे,३शिवे, सांख्यमते सर्व्वकारणे,४प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तथात्वम्, वेदान्तमते नामरूपाभ्यामव्याकृते ५अज्ञाने ६सूक्ष्मशरीरे ७सुषुप्त्यवस्थायां च सत्त्वमहत्तिगिरिसैर्ज्जोतिरुत्पादिभिर्वर्ज्जिते निराकारे परब्रह्मणि न० । ८अस्फुटे वस्तुमात्रे त्रि० । "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" सा०का० । हेतुमत्त्वादिभिर्व्यक्तधर्म्मैर्विरहितमव्यक्तम् । "अव्यक्तं त्रिगुणाल्लिङ्गात्" सा०सू० । "तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्"सा०का०। "महत्तत्त्वं सुखदुःखमोहात्मकद्रव्योपादानं सुखदुःखमोहात्मकत्वे सति कार्य्यत्वात् तथाभूतघटादिवत् । महदादिकं सोपहितत्रिगुणात्मकोपादानं कार्य्यत्वात् घटवत् इत्यव्यक्तानुमानम् दर्शितम्" सा०प्र०भा० । "बुद्धेरिवाव्यक्तमुदाहरन्ति" रघु । वेदान्तिभिः नामरूपाभ्यामव्याकृतमज्ञानमेव मूलकारणतया अव्यक्ततया च स्वीकृतं तत्रैव प्रकृतिशब्दार्थे सर्व्वेषामन्तर्भावात् "अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।। अव्यक्तनिधनान्येव तत्र का परिदेवनेति" गीतोक्तेरपि तत्रैव तात्पर्य्यम् तद्द्वारैव ब्रह्मणः जगज्जन्मादिहेतुत्वम् "व्यक्तकारणमव्यक्तं नित्यं सदसदात्मकम्" मनूक्तावपि तद् प्रधानमेवाव्यक्तशब्देनाभिधीयते तस्य च प्रवाहरूपेणावस्थितत्वात् नित्यत्वम् "महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" श्रुतौ तु अव्यक्तशब्देन सूक्ष्मशरीरमिति शा०सूत्रे भाष्ये च व्यवस्थापितम् यथा "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" सू०। "आनुमानिकमपि अनुमाननिरूपितं प्रधानमप्येकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते "महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति तत्र य एव यन्नामानो यत्क्रमकाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायन्ते तत्राव्यक्तमिति स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवात् स्मृतिप्रसिद्धं प्रधानमभिधीयते अतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नं तदेव जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेन्नैतदेवम् नह्येतत् काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् नह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशमत्र प्रत्यभिज्ञायते। शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते स च शब्दो न व्यक्तमव्यक्तमिति

मनस्याचम्य शुध्यति" इति च देवल०। "मानुषास्थि वसाविष्ठामार्त्तवं मूत्ररेतसी। मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्। स्नात्वा प्रमृज्य लेपादीनाचम्य स शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्ज्जनात्" देव०। "चैत्यवृक्षचितिर्यूपश्चण्डालः सोमविक्रयी। एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलोजलमाविशेत्"। परा०। "अपपर्युषितकर्मे तद्धारकशवानि संस्पृश्य देवीराप इत्यभिमन्त्रितैर्जलैः स्नातः पूतोभवत्यजीर्णवान्ते श्मश्रुकर्मणि परदिवामैथुने च" हारीतः "अथ सावर्णिकं व्याख्यास्यामः 'चण्डालशवयानकतद्धारकरजस्वलासूतिकाः संस्पृश्याऽनुदितेऽस्तमिते स्पन्दिता चाश्रुस्पन्दिताभिसन्दने कर्णक्रोशने विस्फूरणे यूपसंस्पर्शने" इत्युपक्रम्य "सचेलं स्नात्वा पुनर्मानो जपेत्" कश्य०। "श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं यूपं चितिं चितिकाष्ठं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृशं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलमाशा अम्भोऽवगाह्योत्तीर्य्याग्निमुपस्पृशेत्" व्यास० "शुना घ्रातावलीढस्य नखैर्विलिखितस्य वा। अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपधूननम्" शाता०। "अशुचिं संस्पृशेद्यस्तु एकएव स दुष्यति। तं स्पृष्ट्वान्यो न दुष्येत्तु सर्वद्रव्येष्वयं विधिः" दक्षा०। "यस्य स्पर्शे आचमनमात्रं सोऽल्पाशुचिः" हेमा०। "श्वराहखरानुष्ट्रान् वृकगोमायुवानरान्। काककुक्कुटकंश्चैव स्पृष्ट्वा स्नानं समाचरेत्" संव०। "भासवानरमार्जारखरोष्ट्राणां शुनां तथा। शूकराणाममेध्यस्य स्पर्शे स्नानं सचेलकम्" व्यास "चण्डालं कुक्कुटं काकं श्वान्यगावविनाशकान्। चितियूपश्मशानानि विड्वराहखराशुचीन्। अवकीर्णिनमन्त्यं च स्पृष्ट्वा स्नानं विधीयते" हारी० "अभोज्यसूतिकाषण्डमार्जाराखुश्वकुक्कुटान्। पतितापविद्धचाण्डालमृतहारांश्च धर्मवित्। संस्पृश्य शुध्यति स्नानात्" मार्क०पु०। "बौद्धान् पाशुपतान् जैनान् लोकायतिककापिलान्। विकर्मस्थान् द्विजः स्पृष्ट्वा सचेलोजलमाविशेत्। कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः" षट्त्रि०। "शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत्" ब्रह्मा० पुरा० "शूद्रोच्छिष्टं द्विजः स्पृष्ट्वा उच्छिष्टं शूद्रमेव च। शुचिरप्यशनार्हस्तु सचेलं स्नानमाचरेत्" छाग० "स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत्" संव० "रजकश्चर्म्मकश्चैव मात्यध्वजोपजीविनौ। निर्णेजकः शौण्डिकश्च नटः शैलूषकस्तथा। मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा। चक्री ध्वजी वध्यघाती" इत्युपक्रम्य "एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु। तोयेन क्षालनं कृत्वा आचान्ताः प्रयता मताः" शाता०। "ऊर्द्धं नाभेः करौ मुक्त्वा यदङ्गं स्पृशते खगः। स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति" ज०त०। "नीलीं नीलीविकारं च मानुषास्थीन्यपि द्विज०। चण्डालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेत्" संव० "स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः" स्कन्द०पु० "अष्टम्यां च चतुर्द्दश्यां दिवा पर्वणि मैथुनम्। कृत्वा सचेलं स्नात्वा च वारुणीभिश्च मार्जयेत्" शाट्यायनि। "रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" अङ्गि० "रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात्" मनुः "शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" अङ्गि०। "रोगेण यद्रजः स्त्रीणामत्यर्थं तु प्रवर्त्तते। अशुच्योनैव तास्तेन येन वैकारिकं हि तत्" मनु० "अकाले यद्भवेत् स्त्रीणाम् रक्तमाहुर्मनीषिणः। काले तु तद्रजः प्रोक्तं तत्कालतश्च साऽशुचि" छाग०। एवमन्यान्यपि तद्बोधकान्यनुसन्धेयानि। शुचित्वकालजीविनः कर्माधिकारित्वेन शुद्धेः कर्त्तृविशेषणतया कर्माङ्गत्वमशुद्धेश्च तदधिकारित्वाभावः एवं तयोः कर्त्तृविशेषणतया कर्माधिकाराङ्गत्वे निरूपिते। इदानीं द्रव्याणामपि कर्माङ्गतया द्रव्यगतशुद्ध्यशुद्धी निरूप्येते तत्र कालरूपद्रव्यस्याशुद्धि ९६पृष्ठे अकालशब्दे उक्तप्राया। पर्युदस्तकालानां तु कर्मानङ्गत्वेऽपि नाशुद्धत्वम्। "रात्रौ श्राद्धं न कुर्वीत" "आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु" इत्यादौ तत्तत्कर्मणां तदितरकाले कर्त्तव्यतामात्रं बोध्यते न तु तेषामशुद्धत्वमपि तेन सन्ध्यावन्दनादेः सन्ध्यारात्र्योः कर्त्तव्यताविधायकं "पश्चिमां तु समासीनोयावत्तारकदर्शनमित्यादि" "दिवोदितं यत् कर्मेत्युक्त्वा शर्वर्याः प्रथमे यामे तत् कुर्वीताविचारयन्नित्यादि" च वाक्यं सार्थकम्। अपरद्रव्यगते शुद्ध्यशुद्धी तावदिदानीं निरूप्येते। तत्रादौ द्रव्यशुद्ध्यशुद्धिसम्पादकं द्रव्यादिकमुच्यते। "शारीरैर्मलैः सुराभिर्मद्यैर्यदुपहतं तदत्यन्तोपहतम्। अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत्, मणिमयमश्ममयमब्जं च सप्तरात्रं महीनिखननेन शुध्येत् दन्ता-

वेणुजः । पश्चाच्च वारिणा प्रोक्ष्य शुचीन्येवमदाहरेत् । तोयाभावे परस्पर्शे भूमौ सम्वेशनेऽपि च । कुशिकाया च रिक्तागोदहनं चापदि स्मृतम्” देवलः । आमान्नपरिशोधने विशेषमाह हारीतः । “तस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षालने कुर्य्यात् । ‘पयसां दर्भां मीतानामवहननमपनये, ब्रीहियवगोधूमानां घर्षणादवमेवाद्यं विविधधान्यानां कण्डनविकृतवनप्रक्षालनैः फलीकृतानां घर्षणप्रक्षालनेन पर्य्यग्निकरणं शाकमूलफलानां मूलानामवहननप्रक्षालनैः इक्षुकाण्डानां, स्वविधिविधानात् अग्रहविषां अपचमेव स्नेहाना पुनः पाकक्रतक्रमणानां गुरुत्वादिभिः स्पृष्टानां भूमौ तत्रकालानामादित्यदर्शनाच्छौचम् । हारी० “गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः । दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च” शाता० । दुष्टाभिधस्वपतिततिर्य्यग्भोज्यस्पर्शोपहतानामिमदुष्टौ “शयनयानासनानि परिहार्य्याण्युक्ते मन्त्रे असंस्कृतायां भूमौ न्यस्तानां स्थानां प्रक्षालनं न दोषोपहतानामभ्युक्षणम् एषं शुद्रसमिधां महतां काष्ठानामुपघाते प्रक्षाल्यावशोषणं दारुमयानामुच्छिष्टसमन्वारब्धानामनुलेपनम् उच्छिष्टलेपोपहतानामेव तक्षणं मूत्रपुरीषशोणितरेतःप्रभृतिभिरुत्सर्गः मृण्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवज्वालनम् उच्छिष्टलेपोपहतानां पुनर्दहनं मूत्रपुरीषशोणितरेतःप्रभृतिभिरुत्सर्गः” बौधा० । शौचं वहुलरोम्णां तु मारुतार्केन्दुरश्मिभिः । रेतःस्पृष्टं शवस्पृष्टमाविकं नैव शुध्यति” अङ्गिराः । अथाशुद्ध्यपवाद । नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । प्रस्रवे तु शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ” मनु “वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने। स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ”शाता०“श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्। क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः”मनु ‘तथा मांसं श्वचण्डालक्रव्यादादिनिपातितम्, याज्ञ० । शुचीति शेषः । “मक्षिकाश्च मृगा धन्याः पातितं तु खगैः फलम् । बालैरनुपरिक्रान्तं स्त्रीभिराचरितञ्च यत्। प्रचारितञ्च यत् पण्यं ये दोषाः स्त्रीमुखेषु च । मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते । क्षितिस्थाश्चैव या आपो गवां तृप्तिकराश्च याः ”। वशि०“रश्मिरग्नी रजश्छाया गौरश्वो वसुधाऽनिलः । विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवणे शुचिः । कारुहस्तः शुचिः पण्यं भैक्षञ्च योषिन्मुखं तथा” याज्ञ० । “आत्मशय्यासनं वस्त्रं जाया पात्रं कमण्डलुः । शुचीन्यात्मन एतानि परेषामशुचीनि तु” बौधा० । “स्वा भार्य्या शिशुर्वस्त्रं स्वमुपवीतं कमण्डलुः । आत्मनः कथितं शुद्धं न तु शुद्धं परस्य तु” शङ्ख । “आत्मशय्यासनं वस्त्रं मेध्यं चाऽमलदूषितम् । ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः । आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरम् । न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा । गौरश्वोऽविप्रुषश्छाया मक्षिका यत्र च मलः । अजोहस्ती रथो छत्रं रश्मयश्चन्द्रसूर्य्ययोः । भूमिरग्निरजो वायुरापोदधि घृतं पयः । सर्व्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः” यमः ।“शुचिरग्निः शुचिर्वायुः पवित्रा वै वहिश्चराः। आपश्च शुचयो नित्यं पन्थाः सञ्चरणाच्छुचिः। आपः शुद्धा भूमिगता शुचिर्नारी पतिव्रता । शुचिर्धर्म्मपरो राजा संतुष्टो ब्राह्मणः शुचिः ” यम. । “रजोभूर्वायुरग्निश्च मार्ज्जारश्च सदा शुचिः ” विष्णुः “शुद्धं नदीगतं तोयं सर्व्व एव तथाऽऽकराः । शुद्धं प्रसारितं पण्यम् शुद्धमश्वाजयोर्मुखम् । मुखवर्ज्जं च गौ शुद्धा मार्ज्जारश्चङ्क्रमे शुचिः” शङ्ख० । “अदूष्या सन्तता धारा वातोद्धूताश्च रेणवः । स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन । मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः ” परा० । आकराः शोमपात्रं च शाखा यज्ञ प्रयस्यते” उश० शुचय इति शेषः । “अदूष्या सन्तता धारा वातोद्धूताश्च रेणव । आकराः शुचयः सर्व्वे वर्जयित्वा सुराकरम्”बौधा०“रेणव शुचयः सर्व्वे वायुना समुदीरिताः । अन्यत्र रासभाजाविश्वसमूहनिवाससाम्” पैठी०“गवाश्वरथमागानां पथस्तारेणवः सदा । प्रमयस्ता समूहन्या श्वाविराममवासवाम्” उश० “अपि नोच्छिष्टदोषोऽस्ति मधुनो न च सर्पिषः । न फलानां न चेक्षूणां नाकराणां न योषिताम्” शाता० । “शुचि पूतं स्वयं शुद्धं पवित्रं चेति केवलम् । मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत्”।तथा “भवं चाग्निमेवं चापि शुचीति द्रव्यमुच्यते। शोधितं तु यदाम्येन तत्पूतमभिधीयते । स्वयमेव हि यद्द्रव्यं केवलं धन्यतां गतम्। स्थावरं जङ्गमं चापि स्वयं शुद्धमिति स्मृतम् । अन्यद्रव्ये रदूष्यं च स्वयमन्यानि शोधयेत् । हव्यकव्येषु पूज्यं च पवित्रमिति स्मृतम्। यच सर्व्वाणि धान्यानि हव्यान्याभरणानि च। सवर्ण्यभवप्रजातीनि शुचीन्येतानि केवलम् । वर्जिते निषिद्धे द्रव्ये शुचित्वं न वर्त्तते । तन्निषेधेह

अशौचमध्येऽपि जातकर्म षष्ठीपूजे कर्त्तव्ये । पुत्रजन्मनिमित्तकं वृद्धिश्राद्धं नाड़ीच्छेदात् पूर्व्वम् अशौचान्ते वा कर्त्तव्यम् । पुत्रकन्याजनने स्त्रीणां स्वजात्युक्तदशाहादिपरं लौकिककर्म्माधिकारः । पुत्रजनने तु वैदिककर्म्माधिकारो विंशतिरात्रोत्तरं स्नानात्, कन्याजनने तु मासोत्तरं स्नानात् ब्राह्मण्याः । शूद्रायास्तूभयत्रैव मासोत्तरं स्नानात् शुद्धिः । एतत् सर्व्वं पुत्रकन्ययोर्विद्यमानत्वे बोध्यम् । जननाशौचकालोत्तरं षण्मासाभ्यन्तरमजातदन्तमरणे पित्रोरेकाहः । एवं निर्गुणसोदरस्य, सपिण्डानान्तु सद्यः । षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे पित्रोस्त्र्यहः सपिण्डानामेकाहः षण्मासोपरि द्विवर्षपर्य्यन्तं पित्रोस्त्र्यहः । सपिण्डानामकृतचूड़े मृते एकाहः कृतचूड़े त्र्यहः । द्विवर्षोपरि सर्व्वेषामनुपनीतस्य मरणे मासत्रयाधिकषड्वर्षं यावत् त्र्यहः । षड्वर्षोपनीतस्य तदानीमपि दशाहः । मासत्रयाधिकषड्वर्षोपरि सर्व्वेषां दशाहः । शूद्राणां तु षण्मासोपरि द्विवर्षाभ्यन्तरे पञ्चाहः । अत्रापि कृतचूड़स्य द्वादशाहः । द्विवर्षोपरि षड्वर्षाभ्यन्तरे द्वादशाहः । अत्रापि वंशात् कृतोद्वाहेऽपि मासः । षड्वर्षोपरि मासः । अत्र मासत्रयपरिगणना सावनेन "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" इति सूर्य्यसिद्धान्तात् । अथासपिण्डाशौचं गुरु मातामहमरणे त्रिरात्रं भगिनीमातुलानीमातुलपितृष्वसृमातृष्वसृगुर्व्वङ्गनामातामहीमरणे पक्षिणी । श्वश्रूश्वशुरयोर्भिन्नग्रामस्थयोर्मरणेऽहोरात्रम् । आचार्य्यपत्नीपुत्रयोरुपाध्यायस्य मातृवैमात्रेयस्य श्यालकस्य सहाध्यायिनः शिष्यस्य च मरणेऽहोरात्रं मातृष्वस्रीयपितृष्वस्रीयमातुलपुत्रभागिनेयमरणे पक्षिणी । पितामहभगिनीपुत्रपितामहीभ्रातृतद्भगिनीपुत्ररूपपितृबान्धवत्रयमरणे पक्षिणी । मातामहभगिनीपुत्रमातामहीभगिनीपुत्रमातामहीभ्रातृपुत्ररूपमातृबान्धवत्रयमरणेऽहोरात्रम् । एकग्रामवासिनोऽसवर्णमरणेऽहोरात्रम्, औरसव्यतिरिक्तपुत्रजननमरणयोः परपूर्व्वभार्य्याप्रसवमरणयोश्च त्रिरात्रम् । सजातीयपुरुषान्तरसंसर्गितस्त्रीभार्य्यामरणे त्रिरात्रम् । मातृष्वसृपितृष्वसृमातुलभगिनीपुत्राणां स्वगृहस्थितानामाचार्य्यस्य च मरणे त्रिरात्रम् । श्वश्रूश्वशुरयोः सन्निधिमरणे त्रिरात्रं श्वश्रूश्वशुरयोरेकग्रामस्थितयोर्मरणे पक्षिणी । प्रथममन्येनोढ़ा तेनैव जनितपुत्रा पुत्रसहितैवान्यमाश्रिता पश्चात्तेनापि जनितपुत्रा तयोः पुत्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्रपितुश्च त्रिरात्रं तत्सपिण्डानामेकरात्रं तथाविधपुत्रयोः परस्परप्रसवमरणयोर्भ्रातृजात्युक्तमशौचम् । दौहित्रमरणे पक्षिणी । पितृमातृमरणे ऊढ़ानां कन्यानां त्रिरात्रम् । यदि मातृष्वसृप्रभृतीनां दहनवहने करोति तदा त्रिरात्रम् । मातामहादीनां त्रिरात्राभ्यन्तरमरणश्रवणे तच्छेषेण शुद्धिः । तत्तत्कालोत्तरश्रवणे तु नाशौचं किन्त्वाचारात् स्नानम् । अथ मृत्युविशेषाशौचम् । शास्त्राननुमतबुद्धिपूर्व्वकात्मघातिनो नाशौचादि । शास्त्रानुमत्याऽनशनादिमृतस्य प्रमादादनशनाग्निशृङ्गिजलोच्चदेशप्रपतनसंग्रामवृक्षदंष्ट्रिनखिव्यालविषचाण्डालचौरहतस्य त्रिरात्रम् । वृक्षादिभिः स्त्रिया च क्रीड़ां कुर्व्वतः प्रमादहतस्यापि नाशौचादि । नागविप्रप्रतिकारित्वेन उद्यतस्य मरणोद्देशेन मृतस्य विद्युद्धतस्य च चौर्य्यादिदोषेण राज्ञा हतस्य च कलहं कृत्वा चाण्डालाद्यैरधमैर्हतस्य च व्याधिजनकौषधस्य विषस्य वह्नेश्च दातुर्मरणे पापयुक्तमायान्वितस्य च नित्यं परापकारिणश्च क्रोधात् स्वयं प्रायोपविषवह्निशस्त्रोद्बन्धनजलगिरिवृक्षप्रपातैर्मृतस्य चर्म्मकांस्यकारादिनिषिद्धशिल्पिप्रादेश मनुष्यवधस्याज्ञाधिकारिणश्च कण्ठदेशोत्पन्नभगरोगस्य पुंश्चल्याद्यगम्यपुंसकस्य च ब्राह्मणविषयापराधकरणान्निहतस्य च बुद्धिपूर्व्वकब्राह्मणहतस्य च महापातकिनश्च एवंविधपतितानां न दाहादिकार्य्यम् । तत्कृत्वा तप्तकृच्छ्रद्वयं कुर्य्यात् । म्लेच्छतस्करादिभिर्युद्धे स्वाम्यर्थं हतस्य विप्रादेर्दाहादिकमस्त्येव । कृतप्रायश्चित्तस्य गलत्कुष्ठिनोऽन दाहादिकं कार्य्यं शस्त्रेणाभिमुखहतस्य सद्यः शौचं दाहादि च । गवार्थे ब्राह्मणार्थे वा दण्डेन युद्धहतस्याहोरात्रमशौचम् । नृपतिरहितयुद्धे लगुडादिहतस्य पराङ्मुखहतस्य त्रिरात्रम् । गोविप्रपालनेऽभिमुखपराङ्मुखत्वाभ्यां हतस्य सद्यस्त्रिरात्रे । गर्भपातेतरमृते षण्मासादूर्द्ध्वं मरणे सम्पूर्णं, गर्भपाते त्र्यहादूर्द्ध्वं च मृतकाशौचम् । शुद्धि०त० । एतत्प्रमाणानि तत्रैवानुसन्धेयानि । "मातृवर्णसमाः" इत्युक्तेर्मूर्द्धावसिक्ताम्बष्ठादीनामनुलोमजानां मातृवर्णानुसारेणाशौचम् प्रतिलोमजानां तु "शूद्रेण तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः" इत्युक्तेः शूद्रतुल्याशौचमिति रघुनन्दनादयः । आचारस्तु मातृतुल्यतया दृश्यते अतएव चण्डालादीनां दशाहाशौचाचारः । देवतामन्त्रादिदातुर्मरणे त्रिरात्रम् । वेदाङ्गादि शास्त्राध्यापकस्य तथाविधशिष्यस्य च मरणे एकाहः 'दृष्टीतो देवता मन्त्रः सावित्रीग्रहणं कृतम् । यस्मात्तस्य त्रिरात्रं स्यात् ब्रह्मविद्या यतोऽधीयतः" इति "उपनीयाध्यापकीयस्मिन्नपि-

मशौचम् । "अथ ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचम् यावत्तेषाम्" विष्णुः एतत् ज्ञानतः, अज्ञाने तु "अनर्दशाहे भुञ्जानः मृतके सूतकेऽपि वा तस्याशौचं भवेत्तावद्यावदन्नं प्रजल्पथ" अङ्गिरसोक्तश्चेयम् "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते" इति च । उभयत्र जननमरणयोः दशाहानीत्यशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य सम्बन्धिजनकर्त्तृकं भोक्तव्यम् । चतुर्थ्यां न पुनर्दोषः "सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्" इति तेनैवोक्तत्वात् अयञ्च निषेधोदातृभोक्त्रोरन्यतरेण जननमरणे ज्ञाते सति द्रष्टव्यः । "उभाभ्यामपरिज्ञाते सूतके नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेदिति षट्त्रिंशन्मतदर्शनात् । तथा विवाहादिषु सूतकोत्पत्तौ प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । "विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्त्तितः" इति बृहस्पतिस्मरणात् तथाऽपरोऽपि विशेषः षट्त्रिंशन्मते दर्शितः । "विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः । भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्व्वे ते शुचयः स्मृताः" मि० सि० इति । तथाऽशौचिपरिग्रहेऽपि केषु चित्द्रव्येषु दोषाभावः । यथाह मरीचिः । "लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च । तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्व्वेषु नाशौचं मृतसूतके" इति । शाकमत्र जातम् । अपक्वन्तण्डुलादि । स्वयंग्रह इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयात् न तद्धस्तात् । एतदप्यापद्विषयं सत्प्रदत्तविषयञ्च । "असत्प्रदत्तानामन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रन्तु पयः पिबेदिति" अङ्गिरःस्मरणात् । अत्र पक्वशब्दोऽभक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे त्वङ्गिरसा विशेषउक्तः । "अशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणाञ्च न तद्भवेदिति" । तदशौचवद्द्रव्यस्य गृहमेधिन एव न पुनस्तद्गृहमध्यगतानां भार्यादीनां तद्द्रव्याणाञ्च भवेदित्यर्थः । एवमेवातिक्रान्ताशौचेऽपि । "संसर्गाद्यस्य चाशौचं यस्यातिक्रान्तकालता । तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित्" षट्त्रिं० मि० सि० । कर्म्मविशेषे कर्म्मारम्भे च तत्तत्कर्म्मणि अशौचाभावः यथोक्तम् । "कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः" प्रचेतसा । लघुविष्णुना च "व्रतयज्ञविवाहेषु श्राद्धे होमार्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया" वरणमिति ऋत्विक्परम् तेषाञ्च मधुपर्कग्रहणोत्तरमशौचाभावः । "गृहीतमधुपर्कास्तु यजमानात्तु ऋत्विजः । पश्चादशौचं पतितं न भवेदिति निश्चयः" ब्रह्मपुरा० उक्तेः । एतन्मूलकमेव त्रिंशच्छ्लोक्यां तत्तत्कार्य्येषु अशौचाभाववचनम् यथा "तत्तत्कार्य्येषु सत्रिव्रतिब्रह्मचारिदीक्षितर्त्विक्सदस्यप्रवासन्यप्यनेकश्रुतिपठनभिषक्कारुशिल्पिराजराज्ञाम् । सम्प्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठातीर्थोद्यात्राजपपरिणयनाद्युत्सवेष्वेतदेव" "तीर्थेति अकस्मिकतीर्थप्राप्तौ तदङ्गं श्राद्धमशौचे कर्त्तव्यम् "विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्म्मणि । न तत्र सूतकं तद्वत् कर्म्म यज्ञादि कारयेत्" पैठी० उक्तेः यात्रा रथयात्रादि । जपः पुरश्चरणादि संकल्पितजोतपाठादिश्च । अतो संकल्पेन गृहीतक्रमादिः "गृहीतनियमस्यापि न स्यादन्यस्य कस्यचिदिति" आह्निके "वरं प्राणान् परित्यज्य छेदयेद्वा शिरोऽपि वा असमभ्यर्च्य भोक्तव्यं भगवन्तं त्रिलोचनम्" इत्युक्तनियमवतो देवपूजायामधिकारः । कृतनियमविषया "शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः । श्रौतकर्म्माणि कुर्व्वीत स्नात शुद्धिमवाप्नुयात्" यमोक्तिः "जपो देवार्च्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्" ब्रह्माण्डे च । "अथ सूतकिनः पूजा वक्ष्याम्यागमचोदिताम् । स्नात्वा निर्व्वर्त्य नित्यञ्च मानस्या क्रियया हि वै । बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्" नारदा । मानसजपे तु अकृतनियमस्यापि अशुचेरप्यधिकारः "अशुचिर्वा शुचिर्वापि गच्छन् तिष्ठन् तथा स्वपन् । मन्त्रैकशरणो विद्वान् मनसैव समभ्यसेत्" रामार्च्चनचन्द्रिकोक्तेः । "मानसमप्युपांशु" वचनं तु पठनपाठनाविषयम् । तारादिविषये तु अकृतनियमस्याप्यधिकारः "तारायाश्चैव काल्याश्च त्रिपुराया विशेषतः । जनने मरणे चैव न त्यजेयुः प्रार्च्चनम्" इति तन्त्रोक्तेः । अथाशौचे नियमाः नि० सि० याज्ञवल्क्यः "इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः । आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् । प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः" । "प्रवेशनादिक

कर्म प्रेतस्य सपिण्डानामपि" नि० सि०। "क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ" या० दशाद्योऽह्नि । यथाशुद्धितत्त्वे पैजवाप "शमीमालभन्ते 'शमी मे पापं शमयत्विति'" अश्मानमालभन्ते "अश्मेव स्थिरोभूयासमिति' अग्निम् "अग्निर्नः शर्म यच्छत्विति" अथोगित्यनन्तरा गामजमुपस्पृशन्त क्रीत्वा लब्ध्वावान्यगेहादेकान्नमलवणमेकरात्रं दिवा-भोक्तव्यं 'त्रिरात्रं च कर्म्मोपरमणम्" क्रीताद्यशनमुपवासाशक्तस्य । आश्वलायनस्तु "नैतस्यां रात्र्यामन्नं पचेरन्नि-रात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं चेत्याह महागुरुषु"। अयमपि रत्नाकरे आपस्तम्ब "भार्य्या परमगुरुसंस्थाया चा-कालभोजनानि कुर्य्यीरन्" यदा मृति परदिने तावत्कालमित्यर्थः । वृहस्पति "अधःशय्यासना दीना मलिना भोगवर्जिताः । अक्षारलवणान्ना स्युर्भक्रीताशनास्तथा" अक्षारलवणपदेऽक्षारलवणपदार्थं उक्त । भोगोऽभ्यङ्गताम्बूलादिः "तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनञ्च यत् । तेन चाप्यायते जन्तुर्य्यश्चाश्नन्ति स्वबान्धवाः मार्क०पुरा० वाक्यन्तु अन्त्यदिनविषयम् "अशौचान्ते तिलकल्कैः स्नाता गृहं प्रविशेयुरिति विष्णूक्तेः सपिण्डानामस्थिसञ्चयनादूर्द्धं भोगोऽप्युक्त विष्णु०पु० । "शय्यासनोपभोगस्तु सपिण्डानामपीष्यते अस्थिसञ्चयनादूर्द्धं संयोगस्तु न योषिताम्" तिलान् ददत पानीय दीपं ददत जापत । ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतेषु दुर्लभम्" भारतम् । भोजनं च दिवैव । दिवा चैव च भोक्तव्यममांसं मनुजर्षभेत्युक्तेः प्रागुक्तपैजवापोक्तेश्च । "क्रीत्वा लब्ध्वा वा दिवाश्नीयुः" पारस्करोक्तेश्च अशौचमध्ये यत्नेन भोजयेन्न स्वगोत्रजान्" आदि पुरा० ज्ञातिभिः सह भोजनञ्च तृतीयादिदिनपरम् । प्रथमेऽह्नि तृतीये च सप्तमे दशमे तथा । ज्ञातिभिः सह भोक्तव्यमिति" मरीच्युक्तेः । "मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ" मनु । लवणक्षीरमाषान्नापूपमांसानि पायसम् । यज्ज्ञेदाहुतान्नेषु भाषद्वात्मरैर्विना' देवजानीयकारि० "मनुस्म मांसानि न भक्षयेयुरा प्रदानात्" गौत० "अधस्तारे त्रिरात्रमनश्नन्त आसीरन्" वसिष्ठ अशौचे पीठादिनिषेधात् अधःकाले उपवेशार्थं काष्ठस्तरः कार्य्यः "पाणिषु मृण्मयेषु पर्णपुटेषु वा ऽश्नीरन्" हारीतः । "उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य चैव हि" मरीचि । अन्त्यदिने विशेष "यस्य यस्य तु पर्व्वस्य भवेत् स्नात् पश्चिमं त्वहः । स तत्र स्नेहशुद्धिं च वस्त्रशुद्धिं करोत्वपि । ग्रामाद्बहिस्ततोगत्वा प्रेतस्पृष्टे तु वाससी । अन्त्यानामाश्रितानां च त्यक्त्वा स्नान करोत्वथ" ब्राह्मम् अत्र तिलकल्कादिस्नानं प्रागुक्तम् अशौचान्तेषु सर्व्वदिनेषु वर्ज्जनीयधर्म्मानाह गरुड़ "दानं प्रतिग्रहो होमः स्वाध्याय पितृकर्म च । प्रेतपिण्डक्रिया वर्ज्जमशौचे विनिवर्त्तते" अत्र विशेषो मिताक्षरायाम् "अशुचित्वेन सकलश्रौतस्मार्त्तकर्म्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञानार्थं माह । "वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदनात्" या० । वितानोऽग्नीनां विस्तारः तत्र भवा वैताना त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते । प्रतिदिनमुपास्यत इत्युपासनो गृह्योऽग्निस्तत्र भवा औपासना सायम्प्रातर्होमक्रिया उच्यन्ते । ता वैतानोपासना वैदिक्यः क्रियाः कार्य्याः कथं वैदिकत्वमिति चेत् श्रुतिचोदनात् । तथाहि । "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादि श्रुतिभिरग्निहोत्रादीनां चोदना सदैव । तथा "अहरहः स्वाहां कुर्य्यादन्नाऽभावे केनचिदा काष्टादिति" श्रुत्यौपासनहोमोऽपि चोद्यते । अत्र च श्रौतत्वविशेषणोपादानात् स्मार्त्तक्रियायां दानादौ नाभ्यनुज्ञानमवगम्यते । अतएव व्याघ्रपादेनोक्तम् । "स्मार्त्त कर्म्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्म्मणि तत्काल स्नातः शुद्धिमवाप्नुयादिति" । श्रौतानाञ्च कार्य्यताभिधानान्नित्यनैमित्तिकानां करणम् । यथाह पैठीनसिः । "नित्यानि निवर्त्तेरन् वैतानवर्ज्जं शालाग्नौ चैव" इति । नित्यानि निवर्त्तेरन् इत्यविशेषेणावश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां वैतानवर्ज्जमित्यग्नित्रयसाध्यानवश्यकानामपर्य्युदासः । शालाग्नौ चैव इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्य्युदास उक्तः । अतश्च अशौच भाव्येव । काम्यानां पुनः शौचाभावादननुष्ठानम् । मनुनाप्यनेनैवाभिप्रायेणोक्तम् । "प्रत्यूहेन्नाग्निषु क्रियाः" इति । अग्निषु क्रिया न प्रत्यूहेदित्यग्निसाध्यानामवश्यमहायमादीनामनिवृत्ति । अत एव संवर्त्तः । "होमन्तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा । पञ्चयज्ञविधानन्तु न कुर्य्यात् मृत्युजन्मनोरिति" । वैश्वदेवस्य अग्निसाध्यत्वेऽपि वचनान्निवृत्तिः "विप्रो दशाहमासीत वैश्वदेवविवर्ज्जित' इति तेनैवोक्तत्वात् । "सूतके कर्म्मणान्त्याग सन्ध्यादीनां विधीयत "इतियद्यपि सन्ध्यायामिवृत्ति श्रूयते तथाप्यञ्जलिप्रक्षेपादिकार्य्यम् । "सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिण कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यादिति" पैठीनसिस्मरणात् । यद्यपि वैतानोपासना कार्य्या इति सामान्येनोक्तं तथाप्यन्येन कारयितव्यम् । "अन्य एतानि कुर्य्युरिति" पैठीनसिस्मर-

पात्। बृहस्पतिनाप्युक्तम्। "सूतके मृतके चैव अशक्तौ श्राद्धभोजने। प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्" इति। तथा आर्त्तत्वेऽपि पिण्डपितृयज्ञश्रावणीकर्मान्वष्टक्यादिकम् नित्यो होम कार्य्य एव। "सूतके तु सगोत्रस्य आर्त्तकर्म कथम्भवेत्। पिण्डयज्ञं चरुं होममसगोत्रेण कारयेदिति" जातूकर्ण्यस्मरणात्। यद्यपि श्राद्धे कर्मण्यकर्त्तृत्वन्तथापि स्वद्रव्यत्यागात्मकप्रधानं स्वयं कुर्य्यात् तस्यानन्यनिष्पाद्यत्वात्। अतएवोक्तम्। "श्रौते कर्मणि तत्कालं स्नात शुद्धिमवाप्नुयादिति"। यत्पुन "दानप्रतिग्रहौ होम स्वाध्यायश्च निवर्त्तते" इति होमप्रतिषेधः। स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः" इत्यन्तेन। संध्यादावशौचापवादमाहापरार्के पुलस्त्य "संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत् सूतके वापि त्यजन् गच्छेदधो द्विजः। सूतके मृतके चैव सन्ध्याकर्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः"। यत्तु चन्द्रिकायां जाबाल "सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियेति" यच्च संवर्त्त "सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते" यच्च विष्णु० पुरा० "सर्वकालमुपास्या तु सन्ध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति तत् सम्पूर्णसन्ध्यापरम् "अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जितेति" शुद्धिदीपे च्यवनोक्तेः पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह "सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्यं ध्यायन्नमस्कुर्यात्" प्रयोगपारिजाते भरद्वाजोऽपि "सूतके मृतके कुर्य्यात् प्राणायाममनन्त्रकम्। तथा मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत्। गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत्। मार्ज्जनं तु न वा कार्य्यमुपस्थानं न चैव हि" एवं मिताक्षरापारिजातादौ अशौचे सन्ध्याकरणभेदस्योक्तेः गौडानां तदनाचरणमनाचार एव तस्य श्रौतत्वेन स्मृत्या बाधानुचितत्वादिति द्रष्टव्यम्। "ग्रहणादावशौचापवादमाह व्याघ्रः "आर्त्तकर्मपरित्यागो राहोरन्यत्र सूतके इति" शङ्खे "सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" प्रयोगपारिजाते "बृहस्पतिः "कन्याविवाहसंक्रान्तौ सूतकं न कदाचन"। महागुरुनिपातवर्षमध्ये कर्मविशेषेऽशौचम्। "स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम्। प्रथमाब्दे न कुर्वीत महागुरुनिपातने" हेमा० स्मृतिः। महागुरवश्च माता पिता भर्त्ता च अतिगुरुपदेनोक्ता। "प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्र्यं यावत्पूर्णो न वत्सर" देवी पु० अग्नितर्पणं जपहोमादि, न त्वाधानं तस्य प्रथमाब्देऽपि विधानात् यथा "पितुः सपिण्डीकरणं वार्षिकं मृतवासरे। आधानाद्युपसंप्राप्तावेतत् प्रागपि वत्सरात्" हेमा० उश०। अग्नितर्पणमित्यत्र अन्यतर्पणमिति शुद्धितत्त्वे पाठः। आधानादीत्यादिपदेन आवश्यकवृद्धिनिमित्तनित्यकर्मणोर्ग्रहणम्। श्राद्धकौमुद्यां देवी पु० "महातीर्थस्य गमनमुपवासव्रतानि च। संवत्सरे न कुर्वीत महागुरुनिपातने" एतदेकवाक्यतया प्रागुक्तवचने स्नानपदं काम्यतीर्थादिस्नानपरम् महादानसाहचर्य्यात् स्वाध्यायपदमपि काम्यवेदपारायणपरम् "तथैव काम्यं यत् कर्म वत्सरात् प्रथमादृते" लघुहा० वचनैकवाक्यत्वात् "महागुरुनिपाते तु काम्यं किञ्चित् न चाचरेत्। आर्त्विज्यं ब्रह्मचर्य्यं च श्राद्धं दैवयुतञ्च यत्" कालि० पु० "सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्वणभुग्भवेत्। वृद्धीष्टापूर्त्तयोग्यश्च गृहस्थश्च सदा भवेत्" मत्स्य पु०। वृद्धीत्यनेन वृद्धिनिमित्तकसपिण्डनाभावे नाधिकारीत्यर्थः गृहस्थश्च सदा भवेदित्यनेन गृहस्थोचितनित्यपञ्चयज्ञेष्वधिकारः। अतएव पितृमरणाशौचोत्तरमेव वैश्वदेवश्राद्धं विहितम्। एवं वृद्धिश्राद्धाभावे वर्षपर्य्यन्तं तत्तत्कर्मण्यशौचमिति स्थिते "प्रेतकर्माण्यनिवर्त्त्य चरेन्नाभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेदिति" ज्योतिषवाक्यं शुभदमित्युक्त्या शुभार्थत्वलाभात्कर्त्तव्यताबोधकं प्राशस्त्यमात्रपरमेव। एतच्चाशौचं वर्षमध्ये आवश्यकवृद्ध्यर्थसपिण्डनाभावएव। "अर्वाक् संवत्सरात् वृद्धौ पूर्णे संवत्सरेऽपि वा" इत्यादि स्मृत्यनुसारेण आवश्यकवृद्धिनिमित्तसपिण्डनापकर्षे तु काम्यादिकर्मकरणयोग्यता। अत्र विशेषमाह लौगाक्षिः। "अन्येषां प्रेतकर्माणि महागुरुनिपातने। कुर्य्यात् संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत्" प्रेतकर्म दाहाद्येकादशाहान्तं तस्याशौचान्तरस्याप्रतिबन्धकत्वात् "आद्यं श्राद्धमशुद्धोऽपि कुर्य्यादेकादशेऽहनीति निर्ण० सि० धृतस्मृते। तेन एकं सपिण्डनं वार्षिकादि च। एवं देवी० पु० वचनेऽपि पैत्र्यपदं पार्वणसपिण्डनवार्षिकपरम्। अत्रापवाद माधवीये कात्या० "पत्न्याः पुत्रस्य तत्पुत्रभ्रातॄणां तत्तनयेषु च। स्नुषायास्तु पितुश्च संघातमरणं यदि। अर्वागब्दात्पितृपूर्वं सपिण्डनमाचरेत्" लौगा० "पत्नीपुत्रस्नुषा पौत्रो भ्राता तत्पुत्रकास्तथा। पितरौ च यद्येकस्मिन् म्रियेरन् वासरे तदा। आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम्" इदम् एकदिनमरणविषयमेव "महागुरुनिपाते तु प्रेतकार्य्यं यथाविधि। कुर्य्यात् संवत्-

**अश्मभाल** न० अश्मेव भाजयति चूर्णितं करोति। भज-णिच् अण् उप० स० अस्य बालम्। द्रव्यचूर्णकारके (हामामदिस्ते) इति ख्याते लौहपात्रभेदे शब्दचन्द्रिका।

**अश्मभिद्** पु० अश्मानमुद्भिद्य जायते। पाषाणभेदके वृक्षे। क्विप्, अश्मभिदः। अण् अश्मभेदः। ण्वुल्। अश्मभेदकोऽप्यत्र पु०।

**अश्मयोनि** पु० अश्मा योनिरस्य। मरकतमणौ।

**अश्मर** त्रि० अश्म-मत्वर्थीय र। प्रस्तरसंबन्धिनि।

**अश्मरथ** पु० अश्मेव दुर्भेदो रथोऽस्य। ऋषिभेदे गर्गा० यञ्। आश्मरथ्यः। "अभिव्यक्तेरित्याश्मरथ्य" शा० सू०

**अश्मरी** स्त्री अश्मानं राति रा-क गौरा० ङीष्। मूत्रकृच्छ्र रोगे स हि मूत्रद्वारं प्रस्तरमिव कठिनमांसं रोधयति इति तस्य तथात्वम्। तन्निदानादि सुश्रुते उक्तं यथा। "अथातोऽश्मरीणां निदानं व्याख्यास्यामः॥ चतस्रोऽश्मर्यो भवन्ति श्लेष्माधिष्ठानास्तद्यथा श्लेष्मणा वातेन पित्तेन शुक्रेण चेति॥ तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसम्पृक्तोऽनुप्रविश्य बस्तिम्, अश्मरीं जनयति तासां पूर्वरूपाणि बस्तिपीडारोचकौ मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रज्वरावसादौ बस्तगन्धित्वं मूत्रस्येति॥ यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम्। पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः॥ अथ जातासु नाभिबस्तिसेवनीमेहनेष्वन्यतमे मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदप्रकाशमनाविलं ससिकतं विसृजति धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति॥ तत्र श्लेष्माश्मरी श्लेष्मलमधममभ्यवहरतोऽत्यर्थमुपचितः परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव बस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति तां श्लैष्मिकीमिति विद्यात्॥ पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघातादुष्यते चूष्यते दह्यते पच्यत इव बस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति तां पैत्तिकीमिति विद्यात्॥ वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य बस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघातात्तीव्रा वेदना भवति तथार्त्तः पीड्यमानो दन्तान् खादति नाभिं पीडयति मेढ्रं मृद्नाति पायुं स्पृशति विशर्द्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति। अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत् कण्टकाचिता भवति तां वातिकीमिति विद्यात्। प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीत-स्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति। तेषामेवाल्पबस्तिकायत्वादनुपचितमांसत्वाच्च बस्तेः सुखग्रहणाहरणा भवन्ति॥ महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनाभिघातादतिमैथुनाद्वा शुक्रं चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीडितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते तां शुक्राश्मरीमिति विद्यात्॥ भवन्ति चात्र॥ शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम्॥ अश्मर्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना॥ पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः। सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते॥ हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः। तृष्णोर्ध्वगोऽनिलः कार्श्यं दौर्बल्यं पाण्डुगात्रता॥ अरोचकाविपाकौ तु शर्करायां भवन्ति च। मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान्॥ दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्। पाण्डुत्वमुष्णवातञ्च तृष्णा हृत्पीडनं वमिम्॥ नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम्। एकद्वारस्तनुत्वक्को मध्ये बस्तिरधोमुखः॥ अलाबुरिव रूपेण सिरास्नायुपरिग्रहः। बस्तिर्बस्तिशिरश्चैव पौरुषं वृषणौ गुदम्॥ एकसम्बन्धिनो ह्येते गुदास्थिविवराश्रिताः। मूत्राशयो मलाधारः प्राणायतनमुत्तमम्॥ पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः॥ तर्पयन्ति सदा मूत्रं सरितः सागरं यथा॥ सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः। नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥ जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते। आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः॥ घटो यथा तथा विद्धि बस्तिर्मूत्रेण पूर्यते। एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा॥ मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्। अम्बु स्वच्छमपि यथा निषिक्तास्नु नवे घटे॥ कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा। संहन्यते यथा दिव्या मारुतोऽग्निश्च वैद्युतः॥ तद्वच्चास्य बस्तिस्थमूष्मा संहन्ति सानिलः। आवृते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते॥ विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि॥ मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च। मूत्रदोषाश्च ये केचिद्बस्तावेव भवन्ति हि" सुश्रु०। 'अश्मरी' अप-

"यत्रास्तु सिकताशर्करान्वितम्" सुश्रु० । अश्मव महा मामजलाश्मरीरोग । "उन्मादस्तम्दोषो राजयक्ष्मा श्वासोमधुमेहो भगन्दरः । उदरोऽश्मरीत्यष्टौ महा-रोगाः" सुश्रु० नार० ।

**अश्मरीघ्न** पु० अश्मरीं मूत्रकृच्छ्रं हन्ति हन-ट । वरुणवृक्षे

**अश्मरीहर** पु० अश्मरीं हरति हृ-ट । (द्विधाम) देवधान्ये।

**अश्मवत्** त्रि० अश्मास्त्यत्र मतुप् । पाषाणभूयिष्ठे देशे स्त्रियां ङीप् । तथाविधभूमिगुणाश्च । "तत्राश्मवती स्थिरा गुर्व्वी-श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया गुणभूयिष्ठा । स्निग्धा शीतलासन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाम्बुगुणभूयिष्ठा नानावर्णा लघ्वश्मवती प्रविरलाल्प पाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा इति" सुश्रुत ।

**अश्मसार** पु०न० अश्मन सार इव । लौहे । "फलाग्रदिग्ध-दर्भाश्मसारचूर्णकवारिणा" सुश्रु० । "प्राणा च त्वमेवाश्मसारकठिना गच्छन्ति गच्छन्त्वमी" सा०द० । ६त० । तत्तुल्यकठिने त्रि० ।

**अश्महन्मन्** न० हन्यतेऽनेन हन-मनिन् हन्म आयुधम् अश्मनिर्म्मितं हन्म । लौहनिर्मिते आयुधे "अग्नि-तप्तेभिर्युवमश्महन्मभि" ऋ० ७,१०४,५ ।

**अश्मादि** पु० ईत० । चतुरर्थ्यां पाणिन्युक्तरप्रत्ययनिमित्ते शब्दगणे स च गणः अश्मन्, यूष, ऊष, मीन, नद, दर्भ, वृन्द, गुद, खण्ड, नग, शिखा, कोट, पाम, कन्द, कान्द, कुल, गह्व, गुड, कुण्डल, पीन, गुह ।

**अश्माम्न** न० अश्मकारकमम्लं । (पाथुरे) अश्मरीरोगे ।

**अश्मीर** पु०न० अश्मास्त्यस्य ईरन् । (पाथुरे) अश्मरीरोगे ।

**अश्मोत्थ** न० अश्मन उत्तिष्ठति उद्+स्था-क ५त०। शिला-जतुनि राजनि० ।

**अश्र** न०अश्नुते नेत्रम् अश-रक्। नेत्रजले "सखीभिरश्रोत्तर-मीक्षितामिमाम्" कुमा० "नेत्राभ्यामश्रुतृत्सृजन्" रामा० । सुप्रा० अस्त्यर्थे इनि न मतुप् । अश्री अश्र-युक्ते त्रि० स्त्रियां ङीप् ।

**अश्रद्धा** स्त्री अभावे न०त० । १श्रद्धाभावे विरोधे न०त० । श्रद्धाविरोधिनि २चित्तवृत्तिभेदे । "कामः सङ्कल्पोविचि-कित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" श्रुतिः "अश्रद्धया च यद्दत्तं तत्तामसमुदाहृतम्" गीता । न०ब० । ३श्रद्धाशून्ये त्रि० । [शून्ये त्रि० ।

**अश्रद्धेय** त्रि० न०त० । श्रद्धानर्हे अविश्वसनीये । १श्रम-

**अश्रम** पु० अभावे न०त० । १श्रमाभावे अनायासे न०ब० ।

**अश्रवण** न० अभावे न०त० । १श्रवणाभावे न०ब०। २श्रवण-शून्ये त्रि०३श्रोत्रेन्द्रियशून्ये बधिरे त्रि० ४सर्पे पु० ।

**अश्राद्धभोजिन्** त्रि० श्राद्धं न भुङ्क्ते भुज-णिनि असमर्थ स०। यति भोजने श्राद्धमेव योभुङ्क्ते तस्मिन् । "अश्राद्ध भोजीत्यत्र यति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति न नियम तथात्वे मृतलोपः स्यात्" दुर्गसिंहः प्रा०त० ।

**अश्रान्त** त्रि० श्रम-कर्त्तरि क्त न०त० । श्रान्तभिन्ने १श्रमशून्ये २अविरते ३क्रियाविशेषणत्वे न०। "अश्रान्तश्रुतिपाठपूत-रसनाविर्भूतभूरिस्तवेति नैष० । भावे क्त न०त० । ४अविश्रामे न० ।

**अश्रि (श्री)** स्त्री अश्यते संकम्यतेऽनया अश-क्रि उणा० क्रि । १गृहादे कोणे। अश्रीयते सघातार्थम् आ+श्री-"खटि श्रीहनिभ्या क्रुश्च"उणा०इन् स च डित्।२खङ्गादेरग्रभागे उभयत्र वा ङीप । "हलस्य फलं कलिश कुशिकतामीव-श्यन्तं" कुमा० वाजपेययूप प्रकृत्य ।"स वा अष्टाश्रिर्भवति तस्मादष्टाश्रिर्भवति" शत०ब्रा० । चतुःपूर्व्वादस्मात् अच् समा० चतुरस्र । "क्लृप्तोपचारां चतुरस्रवेदीम्" कुमा० योगविभागात् अन्यस्मादप्यच् । तेन त्र्यस्र षडस्रमित्यादि "आयतायतचतुरस्र त्र्यस्रा मण्डलिनस्तथा" शल्यलक्षणे सुश्रुत० "ब्रह्मान्तस्त्र्यश्रपूर्व्वाश्च नानाश्राश्च पृथक् पृथक्" लीला०। समासान्तविधेरनित्यत्वात् क्वचिन्नाच् । 'तिरश्चि' इन्ति चतुरश्रिरुग्र ऋ० १,१५२,२। [क्षप्] शोभाशून्ये।

**अश्री(क)** नास्ति श्रीर्यस्य नदीत्वाभावात् न कप् तेन वा

**अश्रीर** त्रि० न श्री अश्री अस्त्यर्थे र। १कुत्सितश्रीके "अश्रीर इव जामाता" ऋ० ८,२,२० । "अश्रीर गुणं क्षीणं कुत्सित" भा०। २अमङ्गले च। "तत् चिदश्रीरम्" ऋ० ६,२८,६ । "अश्रीरममङ्गलम्" भा०।

**अश्रु** न० अश्नुते व्याप्नोति नेत्रमदर्शनाय अश-क्रुन् । नेत्र-जले "पपात भूमौ सह सैनिकाश्रुभिः" दूरयाश्रु कैकेयी शोकोष्णै पार्थिवाश्रुभिः" "तमश्रु नेत्रावरणं प्रमृज्य" इति च रघु' । "स्नेहाश्रु दूषिका स्वेद" मनु ।

**अश्रुत** त्रि० न०त० । १श्रुतभिन्ने अश्रवणविषयीभूते "येनाश्रुतं श्रुतं भवति येनामतं मतं भवति"छा०उ० श्रूयते श्रुतं शास्त्र तज्ज्ञानं न०ब०। २शास्त्रज्ञानशून्ये मूर्खे"भाम' विद्या-भ्यासबलात् च अभेताश्रुतोऽपि सन्" दा०भा० स्मृतिः ।

**अश्रुति** स्त्री अभावे न०त०। १श्रवणाभावे न०ब० । २श्रवण शून्ये त्रि० "अश्रुतिमेव तदर्थं गमयति" शत०ब्रा ।

**अश्रुपात** पु० ६त० । नेत्रजलपाते क्रन्दने। "न चाश्रुपातः

पिण्डो वा कार्य्यं श्राद्धादिकं शु०त० कृचित्" ब्रह्मपुरा०।

अश्रुमुख त्रि० अश्रुपूर्णं मुखं यस्य। नेत्रजलयुतमुखे स्त्रियां ङीप्। "पतिघ्नामाश्रुमुखी लघुकर्णी च क्रोशतु" अथ०११,११,७। [स्त्रियां ङीप् नेत्रजलयुक्ते।

अश्रुशालिन् त्रि० अश्रुणा शलते शल–णिनि ३त०।

अश्रेयस् त्रि० न श्रेयान्। हीनतरे। "अश्रेयान् श्रेयसीं जाति गच्छत्या सप्तमाद्युगात्" मनु। स्त्रियां ङीप्।

अश्रौत त्रि० श्रुतौ विहितं विरोधे न०त०। श्रुतिविहितविरुद्धे निषिद्धे नास्तिकाचारादौ। २वेदविहितभिन्ने स्मृतिमात्रविहिते च।

अश्लाघा स्त्री अभावे न०त०। विकत्थनाभावे १आत्मगर्वाभावे न०ब०। विकत्थनशून्ये गर्वशून्ये २विनीते त्रि०। [च।

अश्लिष्ट त्रि० न०त०। १असङ्गते २असम्बन्धे ३श्लेषशून्ये काव्ये

अश्लीक त्रि० नास्ति श्रीरस्य कप् रस्य लः। श्रीप्रतिकूले श्रीनाशके। "अश्लीकमेतत् साधूनां यत्र जुह्वत्यमी हविः" मनुः।

अश्लील न० श्रियं लाति गृह्णाति ला-क रस्य लः, श्री+सिध्मादित्वात् लच् वा न०त०। १लज्जादिव्यञ्जके वाक्ये २ग्राम्यभाषायाम्। "भास्कराशोकमश्लील परिवादांश्च वर्ज्जयेत्" या०स्मृ० ३काव्यदोषभेदे न० तच्च त्रिविधं यथा "दुःश्रवं त्रिविधाश्लीलानुचितार्थाप्रयुक्तता" सा०द० अश्लीलत्वं व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्त्रिधा यथा "दृप्तारिविजये राजन्! साधनं सुमहत्तव" "प्रससार शनैर्वायुः"। "विनाशे तन्वि! ते सदा"। "अत्र साधनवायुविनाशशब्दा अश्लीलवाचकाः" सा०द०। तत्र साधनशब्दस्य शिश्नस्यापि वाचकतया व्रीडायाः, वायुशब्दस्यापानवायुवाचकतया जुगुप्सायाः, विनाशशब्दस्य मरणवाचकतयाऽमङ्गलस्य च द्योतकता। यथाक्रमं च प्रकृते सेनापवनविरहबोधकतायै प्रयुक्ता अपि ते अश्लीलव्यञ्जकत्वाद् दुष्टाः। ४निन्दाव्यञ्जके वाक्ये च "यमश्लीला वा वदतीति" ता०ब्रा० "अश्लीला निन्दारूपा वाक्" भा० न श्रियं लाति ला—क। ५अश्रीके त्रि०। "यदेनमश्लीलं वाग् वदति" ता०ब्रा० "अश्लीलमश्रीकरम्" भा०।

अश्लेषा स्त्री न श्लिष्यति यत्रोत्पन्नेन शिशुना श्लिष–घञ् न० त०। सप्तविंशतिधा विभक्तराशिचक्रस्य नवमे भागे तत्प्रथम जातस्य पित्रोःपित्रादिभिरापत्त्याव दर्शनाभावस्याश्लेषणाभिमतत्वे वक्ष्यमाणस्य सूचकतया तथात्वं बोध्यम्। तत्स्वरूपादि निरूपणाय सर्व्वताराणां स्वरूपं, सङ्ख्याविशेषं, योगताराश्च प्रसङ्गादत्राभिधीयन्ते यथाह श्रीपतिः। "१तुरगमुखसदृक्षं २योनिरूपं ३क्षुराभं ४शकटनिभमथैणस्योत्तमाङ्गेन ५तुल्यम्। ६मणि ७गृह ८शर ९चक्राभानि १०शालोपमं च ११शयनसदृशमन्यच्चात्र १२पर्य्यङ्करूपम्। १३हस्ताकारसजत्रमौक्तिकसम१४ चान्यत् १५प्रवालोपमं स्यात् विष्णुं तोरणवत् १६स्थित १७बलिनिभं स्यात् कुण्डलाभं १८परम्। क्रुध्यत्केशरिविक्रमेण सदृश १९शय्यासमान २०परम् चान्यद्दन्तिविलासवत् २१स्थितमत (अभिजित्) शृङ्गाटकव्यक्ति च। २२त्रिविक्रमाभञ्च २३मृदङ्गरूप २४वृत्तं ततोऽन्यद्यमलद्वयाभम् २५। २६पर्य्यङ्कतुल्यं २७मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम्" अत्राङ्कानुसारेणाश्व्यादीनां रूपाणि ज्ञेयानि। "वह्नित्रि ऋत्विषुगुणेन्दु कृताग्निभूतबाणाग्निनेत्रशरभूकुनगाग्निरामाः। रुद्राब्धिरामगुणवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशोभतारा"। यथा त्रितारास्विनी भरणी च। षट्तारा कृत्तिका। पञ्चतारा रोहिणी। त्रितारा मृगशिरा। एकतारा आर्द्रा, चतुस्तारा पुनर्वसु त्रितारा पुष्या, पञ्चतारा अश्लेषा मघा च त्रितारा पूर्व्वफल्गुनी द्वितारा उत्तरफल्गुनी पञ्चतारा हस्ता, एकतारा चित्रा, स्वातिश्च सप्ततारा विशाखा, त्रितारा अनुराधा ज्येष्ठा च। एकादशतारा मूला, चतुस्तारा पूर्व्वाषाढा त्रितारा उत्तराषाढा, श्रवणा चतुस्तारा धनिष्ठा शततारा शतभिषा। द्वितारा पूर्व्वभाद्रपदा उत्तरभाद्रपदा च द्वात्रिंशत्तारा रेवती" एषां योगतारा सूर्य्यसि०। "फाल्गुन्योर्भाद्रपदयोस्तथैवाषाढयोर्द्वयोः। विशाखाश्विनसौम्यानां योगतारोत्तरा" स्मृता एषामुक्तनक्षत्राणां प्रत्येकं स्वतारासु मुख्या उत्तरा उत्तरदिक्स्था तारा योगतारा। "पश्चिमोत्तरतारा या द्वितीया पश्चिमे स्थिता। हस्तस्य योगतारा सा श्रविष्ठायाश्च पश्चिमा" सू०सि०। हस्तनक्षत्रं पञ्चतारात्मकं हस्तपञ्चाङ्गुलिसन्निवेशाकारं ततो नैर्ऋत्यदिगवस्थिता पश्चिमावस्थिततारायाः उत्तरदिगाश्रिततारायाः द्वितीया पूर्व्वोक्तातिरिक्ता पश्चिमे वायव्याश्रिते स्थिता सा हस्तस्य योगतारा ज्ञेया, उत्तरतारावच्चा पश्चिमाश्रिता तारा हस्तस्य योगतारा" धनिष्ठायास्तारासु या पश्चिमदिक्स्था सा तस्या योगतारा इति च रङ्गना०। "ज्येष्ठाश्रवणमैत्राणां बार्हस्पत्यस्य मध्यमा। भरण्याग्नेयपित्र्याणां रेवत्याश्चैव दक्षिणा" सू०सि० "ज्येष्ठाश्रवणानुराधाणां पुष्यस्य च प्रत्येकं तारात्रयात्मकत्वात् मध्यमतारा योग-

द्भ्रमोत्पत्तिस्थानसंख्यासाम्यात् २सप्तसंख्यायाम् "काष्ठतुल्यवपुर्धृष्टो मिथ्याचारश्च निर्भयः । द्वादशाङ्गुलमेढ्रश्च दरिद्रस्तु हयो मतः" इत्युक्तलक्षणपुरुषभेदे "पद्मिनी शशके तुष्टा हये तुष्टा च हस्तिनीति" रस० । अत्र प्रसङ्गात् अश्वानामङ्गविभागविशेषसंज्ञालक्षणादिकमुच्यते जयदत्तकृताश्वशास्त्रात् साराशः "अतिप्रविष्टा जिह्वा तु तस्याः स्थूना भवेदध । ऊर्द्ध्वं तालु भवेत्तस्मात्ततोऽप्यं दन्तपोठकम् । ततोदन्ताः समुद्दिष्टा ऊर्द्ध्वं दन्ता भवन्त्यधः । चिबुकं चाधरे भागे तेषां प्रोक्तं विचक्षणैः । चिबुकस्योपरिष्टात्तु अधरोष्ठः प्रकीर्त्तितः । चिबुकात्पार्श्वभागे तु हनुर्नामाभिधीयते । सृक्कद्वयं विजानीयात् वक्त्रपार्श्वे मतं बुधः । उत्तरोष्ठं प्रयाणाख्यं तदूर्द्ध्वं प्रोथ उच्यते नासाच्छिद्रे तथा पार्श्वे प्रोथस्यैव व्यवस्थिते । नासाच्छिद्राचिमध्ये तु घोणाख्या समुदाहृता । घोणापार्श्वगतौ गण्डौ चोरिके च ततःपरम् । नेत्रयोरुत्तरे भागे अश्रुपात उदाहृत । कर्णान्ते चैव नेत्रान्तमपाङ्गं ब्रुवते बुधा । कनीनिकाख्यो विज्ञेयो यश्च नासासमीपग । सितासितौ च तन्मध्ये नेत्रयोर्मण्डलं हि तत् । प्रच्छादनं भवेद्वर्त्म चाक्षिकूटमतः परम् । तस्मादूर्द्ध्वं भ्रुवोर्लेखा ललाटं च तदुत्तरम् । ऊर्द्ध्वं ललाटदेशात्तु केशान्तं च तत अव । तत शिरो विजानीयात् स्यादूर्द्ध्वगतं बुधः । शिरःपार्श्वगतौ कर्णौ तयोर्मूलं सकुन्तलम् । अपाङ्गादूर्द्ध्वमङ्गुले चैव शङ्खं विद्याद्विचक्षणः । शङ्खकर्णान्तरे चैव कटाक्षं समुदाहृतम् । शिरोमर्म्म शिरश्चैव कर्णस्याध षडङ्गुले । घण्टाबन्धसमीपस्थो निगालः परिकीर्त्तितः । अधस्तले निगालस्य गलमाहुर्मनीषिणः । तत कण्ठं विजानीयादधोभागे मतं बुध । ग्रीवा लोमाश्रिता तु तस्याश्चोपरि केशरः । ग्रीवास्कन्धान्तरे चैव बाहु प्राहुर्मनीषिणः । बाहुस्योपरि यस्तु स्यात्ककासं ककुदं च तत् । तत पृष्ठं विजानीयादासनं पृष्ठमध्यगम् । आसने ककुदश्चैव निबन्धः परिकीर्त्तितः । स्यातामसादधोबाहू तयोर्वाह्यमङ्गुले । मन्दिरं पश्चिमोभागः कलापी जानुनोऽग्रिम । जानुनश्चाधरे भागे जङ्घा विद्याद्विचक्षणः । जङ्घापार्श्वे कला विद्यात् सध्य चैनिकसंज्ञकम् । अधतः पालिकस्तु स्यात् पश्चात्कूर्च उदाहृतः । किणस्तत्रैव मध्यस्थोऽह्यधोभागे च कुष्टकौ । खुरसन्धिं ततोविद्यादधोभागे तस खुरम् । खुरस्य पार्श्वे पार्ष्णिः स्यादग्रभागे नखो भवेत् । खुरस्याधस्तलं चैव मण्डुकी तलमध्यगा । खुरमाश्च विजानीयात् चीरकाख्यं विचक्षणः । हृदयात्परतः कुक्षी पार्श्वतश्च विभागतः । जठरं पार्श्वमध्यस्थं तस्य नाभिश्च मध्यतः । रोमराजीं ततो विद्यान्मूत्रकोशमतःपरम् । आ कच्याः पश्चिमे भागे पुटौ स्फिचौ च कीर्त्तितौ । पुच्छमूलं च वाहाना भाषते पुच्छमूलतः । तस्याधः कीर्त्तितः पायु सीवनी च ततः परम् । मुष्कौ च कटिसन्धिं च ततोविद्यात्परं बुध । अधस्तात्कटिसन्धेस्तु ऊरुसन्धिरुदाहृतः । सक्थिनी फलसन्धेस्तु ऊरू पादाभिधायके । ततः स्थूरं विजानीयात्तस्याधोमन्दिरं भवेत् । किणं चैव ततो विद्यान्मन्दिराख्ये समस्थितम् । ततः परं विजानीयात् कालकूर्चं च कुष्टिकम् । खुरान्तस्तं मण्डूकं ततो विद्याद्विचक्षण । अग्रे जङ्घाद्वयं चैव वक्षो ग्रीवाशिरोमुखम् । पूर्वकायः समुद्दिष्टः पृष्ठदेशस्तु मध्यमः । आ कटेः पश्चिमे भागे खुरान्तश्चापरं स्मृतम्" ।

तेषां लक्षणानि "अशुभैर्लक्षणैर्युक्ता हया न प्रतिपोषिताः । अतो लक्षणमेवादौ तेषां वक्ष्यामि देहजम् । ओष्ठयोः सृक्कणोश्चैव जिह्वाया दशनेषु च । वक्त्रे तालुनि नासाया गण्डयोर्नेत्रयोस्तथा । ललाटे मस्तके चैव केशे कर्णपुटे तथा । ग्रीवायां केशरे चापि स्कन्धे वक्षसि बाहुके । जङ्घाया जानुनोश्चाथ कूर्चे पादे तथैव च । पार्श्वयो पृष्ठभागे च कुक्षौ कच्यां समालभौ । मेहने मुष्कयोश्चापि तथा चैवोरुकद्वये । आवर्त्ते च खुरे पुच्छे गतौ वर्णे स्वरे तथा । महादोषे त्यजेत्ताश्च छायाया गन्धसत्त्वयो । प्रमाणस्यैव वाहानां लक्षणं यत्प्रतिष्ठितम् । शुभाशुभविवेकाय तद्विद्याद्विमान्भिषक् । शालिहोत्रादिभि सम्यक् त्रिकालज्ञानकोविदैः । आताम्रौ पूजितावोष्ठौ वलिहीनौ मृदुत्वचौ । सुप्रोथोत्तरसस्यं च विपरीतं विवर्जयेत् । सृक्कणोर्ह्रस्वता शस्ता जिह्वाया रक्तता तथा । अतश्चान्यत्तु दोषाय न त्वदीर्घा च सा शुभा । घना स्निग्धा सुबद्धा च समा दन्ताः सुशोभनाः । षट्संख्ये अधरे शस्ते तेषु व्यञ्जनसंभव । आयतं तुङ्गघोणं च निर्मांसं प्रियदर्शनम् । सुबद्धं पूजितं वक्त्रं विपरीतं विगर्हितम् । तालु रक्तं प्रशस्तं च सुपुटे चैव नासिके । नातितनू समौ गण्डौ वाहाना कीर्त्तितौ शुभौ । अत्यन्तनिर्गते चैव सुमग्ने नैव चाविले । प्रशस्ते वाजिनां नेत्रे मध्वाभे मत्ततारके । स्निग्धायते विशाले च श्रेष्ठे मधुनिभाच्छिणी । कनकप्रतिमकाशे शस्ते वाहस्य लोचने । सावर्त्त च विशालं च ज्वलितं चैव वाजिनः । ललाटं पूजितं प्राहुर्मुनयः शास्त्र-

देशभेदजाश्वलक्षणम् "अश्वानां जन्मदेशास्तु प्रवक्ष्याम्यनुपूर्वशः । उत्तमानां च मध्यानां हीनानां चैव संमतान् । उत्तमास्त्वधिकाः प्रोक्तास्तथा पारसिकाश्च ये । कोङ्कणाश्चैव ये वाहा ह्यचला ये च कीर्त्तिता । छटीजाताश्च कीराश्च तुरुष्का माण्डवाश्च ये । पार्वता सैन्धवा मध्या स्तथा सारस्वता हयाः । संभवा वाट्टजाश्चैव जटादेशोद्भवाश्च ये । अधमाश्चैव वाहं ये च प्रागुदक्षिणोद्भवाः । उच्चदीर्घाश्चितग्रीवाश्चलकर्णा महाहयाः । महाकाया महोरस्का निश्वासाढ्येऽधिका मता । अत्यन्तविनतं येषां निर्म्मांसं च मुखं भवेत् । पीनेन कटिदेशेन हयवराश्च भवन्ति ते । अध्वन्याश्च महासारा संग्रामे चैव पूजिताः । अपि यत्नहताङ्गश्च नैव मुञ्चति सादिनम् । पारसीकोऽधिकस्तस्मात् कोङ्कणाः किञ्चिदूनकाः । स्थूलाः स्थूलशरीराश्च प्रस्थाने दीर्घपृष्ठकाः । कोङ्कणदेशजातानां मध्यमानां च वाजिनाम् । नाधिकैः कठिनं वक्त्रं बाहुल्येन विनिर्द्दिशेत् । छटन्तदेहतोऽप्यस्य समभावेन मध्यम । कच्छजातः स्तब्धहृष्ट किञ्चित्स्थूलो महाजवः । अतिस्थूलोऽतितीक्ष्णश्च ह्रस्वग्रीवोरुकस्तथा । तुरुष्कः कीर्त्तितो वाजी स्थूलवक्त्रस्तथैव च । कोङ्कणाकारदेहस्तु भवेन्माण्डविको हय । शान्त्या चैव प्रमाणेन केवलं नैव तत्समः । सिन्धुदेशोद्भवो वाजी हृष्टजघनकोरकः । आननं चापि दीर्घं च तस्य पृष्ठं प्रकीर्त्तितम् । शान्त्या चैव जवेनापि रणशूरस्त्वयं मत । सादिभर्त्तृकृत्या यातिताजिकादधिकस्तथा । परिमण्डलदेहास्तु तीक्ष्णकर्णास्तथा हयाः । छटदेशोद्भवा हृष्टास्तथा सारस्वताश्च ये । लम्बकर्णा जटश्चैव आरट्टः परिकीर्त्तित । कम्बल शिष्टजातश्च सदा प्रवालरोमक । वर्त्तुलाश्चापि तुरुकाश्च टङ्कणाः परिकीर्त्तिताः । दाक्षिणात्यो भवेत्कुण्ठो योऽधमः सर्ववाजिनाम् । जवहीना महादुष्टा पूर्वदेशसमुद्भवाः । वाजिवद्ध्यजानां च वेद विद्याद्विचक्षण" ।

अथाश्वानां विप्रादिजाति "साम्येन जायते जातिर्जातिरूपेण वाहयेत् । साम प्रदानं दण्डं च त्रिविधं विनियोजयेत् । साधी शुभ्रोदयाशुच विप्र स परिकीर्त्तित । शूरश्च हठमन्युश्च क्षत्रियस्तुरगः स्मृतः । पापिनः कलरूपाश्च दुष्टा वैश्याः प्रकीर्त्तिताः । विद्धया त्रिमार्यैव शूद्रास्तथा उदाहृता । ब्राह्मणान् भक्तिदानेन साम्ना चैव तु क्षत्रियान् । वैश्यान् दण्डेन यत्नेन शूद्रान् दण्डेन वाहयेत्" ।

अथ भद्राद्यादि हेमा० प० ख० । "युद्धेऽध्वनि तथाग्नौ च श्रम भीतिं न गच्छति । योऽपि भजति शीघ्रं च येन केनचिदाशितः । धृतिं गच्छति सर्वत्र भद्रजातिस्तुरङ्गमः । मन्दस्तो लक्षणैर्युक्तः किञ्चित्त्वेन विगर्हितः । शीघ्रं भक्षयाति शिक्षां च क्षिप्रं च प्रतिमुञ्चति १ । रात्रौ शयिति न तथाऽप्युपविष्टस्तुरङ्गमः । तुरङ्गमायां क्रोधीन वाजी चेष्टांकुरेव च । धावौ स्मरस्तत पश्चाद्गीतलतमपगच्छति । न केनापि प्रकारेण चिरं पाययते तु य । एवंविधस्तु विज्ञेयो मन्दजातिस्तुरङ्गम २ । ईर्ष्यो भीतस्तथा लाली तथा सर्वत्र शङ्कितः । प्रसार्य्य गात्रं स्वपति दिवा वा यदि वा निशि । सततं जातनिद्रोऽन्यान् बाधते च तुरङ्गमान् । न च वेत्ति प्रकारांश्च जानि शीघ्रं न गच्छति । न च तुष्टिं समाप्नोति मृगजातिस्तुरङ्गम ३ । मिश्रैर्गुणैः स्वाभित्राण्यलक्षणैः बहुधा गुणैः ४ । भद्र मन्दो मृगश्चैव यो जातिरेषा तु वाजिनाम् । मिश्रो मिश्राधिको ज्ञेयो गुणदोषैः समाप्त" । वर्णभेदेन अन्या अपि संज्ञाः शालिहोत्रे दर्शिता विस्तरभयान्नोक्तास्तत एवावसेयाः ।

बृहत्संहितायां लक्षणादि समासेनोक्तम् "दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः सूक्ष्मत्वक्केशवालश्च शफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः । जङ्घाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो वाजी सर्वाङ्गशुभ्रो भवति नरपतेः शत्रुनाशाय नित्यम् । अश्रुपातहनुगण्डहृद्गलप्रोथशङ्खकटिवस्तिजानुनि । मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणेषु चाशुभाः । ये प्रपाणगलकर्णसंस्थिता पृष्ठमध्यनयनोपरि स्थिताः । ओष्ठसक्थिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभनाः । तेषां प्रपाण एको ललाटकेशेषु च ध्रुवावर्त्तः । रन्ध्रोपरन्ध्रमूर्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ । षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः कषायैर्द्विवर्षः सन्दंशैर्मध्यमान्त्यैः पतितसमुदितैस्त्र्यब्दपञ्चाब्दिकोऽश्वः । सन्दंशानुक्रमेण त्रिकपरिगणिता कालिका पीतशुक्ला काचा माक्षीकशङ्खाऽवटचलनमतो दन्तपातं च विद्धि" । अश्नाति सर्वम् अच्—कन् । २ अग्निविशेषे । अश्नुते व्याप्नोति । ३ व्यापके त्रि० अश्वपर्शुशब्दे उदाहरणम् । "पिण्डोरश्वस्य वाजिनम्" ताण्ड्या० । ५ यदुवंश्यचित्रकस्य पुत्रभेदेऽश्वाश्वपतशब्दे विवृति । गोत्रापत्ये अश्वा० फञ् । आश्वायनः तद्गोत्रापत्ये पुंस्त्री० । चतुरर्थ्यां कुमुदा० ठक् । आश्विक वाजिसन्निकृष्टदेशादौ त्रि० । अश्वेन

वहति पर्या० तनु अश्विकः अश्वेन चारिणि त्रि० स्त्रियां ङीप् । कस्यायमश्वः अज्ञाते क । अज्ञात-स्वामिके अश्वे । कुत्सितोऽश्वः क । अश्वक । कुत्सितेऽश्वे अश्व इव संज्ञायां कन् अश्वसदृशसंज्ञावति पु० । अश्व इव प्रतिकृतौ कन् । अश्वप्रतिकृतौ । अश्वानां समूहः ठञ् वञ् अश्वीयम् अश्वाश्च घोटकसमूहे न० । एत-दृगन्त पादस्य वङ्गीर्षी इत्यादि० गान्त्यलोपः अश्वस्य पादाइव पादावस्य अश्वपाद इत्येव । जातित्वेऽपि अजा० स्त्रियां टाप् । अश्वा अश्वजातिस्त्रियाम् "अश्वे इव विजिते हासमाने" ऋ० २,२२,१, ।

**अश्वकन्दा** स्त्री अश्वस्य मेढ्रमिव कन्दोमूलमस्याः । अश्व-गन्धायामर्थे । वा कप् अश्वकन्दिकाप्यत्र ।

**अश्वकर्ण** पु० अश्वस्य कर्ण इव पत्रमस्य । १स्वनामख्याते शाल वृक्षे । "पूतिकाश्वकर्णागुरूणि कालेयकस्के, सुश्रु० स्वार्थे कन् । अश्वकर्णकोऽप्यत्र । ६त० । २अश्वस्य कर्णे ।

**अश्वखरज** पु० अश्वश्च खरी च, अश्वा च खरश्च वा ताभ्यां जायते पुंवद्भावः । वेसरे घोटकभेदे । खराश्वजोऽप्यत्र ।

**अश्वखुर** पु० अश्वस्य खुरमिवाकृतिरस्य । (नखीति)ख्याते १गन्धद्रव्ये । २अपराजितायाम् स्त्री ।

**अश्वङ्गिनी** स्त्री अश्वस्य स्कं तत् सदृशाकारोऽस्त्यस्य इनि ङीप् । अश्विनीनक्षत्रे तस्या ग्रीवस्तुल्या तुरगग्रीवा कारतावा अश्विनीशब्दे ४८० पृष्ठे उक्तत्वात्तथात्वम् ।

**अश्वक्रन्द** पु० देवसेनापतिभेदे "अश्वक्रन्देन वीरेण रेणुकेन च पञ्चिराट्" भा०आ०प०अमृताहरणे देवगरुडयुद्धवर्णने ।

**अश्वगन्धा** स्त्री अश्वस्य गन्ध एकदेशोमेढ्रमिव मूलमस्याः । वराहकर्ण्यपरपर्याये स्वनामख्याते क्षुद्रवृक्षभेदे । "गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया । वराहकर्णी वरदा वरो-दा कुष्ठगन्धिनी । अश्वगन्धानिलश्लेष्मश्वित्रशोथक्षयापहा । बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला" भा०प्र० उक्तेः हयादिकगन्धान्तनामिका हयनामिका च "यथा-श्वगन्धावध्रादि सिद्धेशोद्वर्त्तनम् हितम्" । "शतावर्य्यश्व-गन्धाभ्यां वायसे रक्तजीवनी" इति च सुश्रु० ।

**अश्वगन्धातैल** न०चक्रदत्तोक्ते तैलभेदे यथा "भल्लातकट्फली-फलदाडिमफलकल्कसाधितं कुरुते । लिङ्गं मर्दनविधिना-कटुतैलं वाजिलिङ्गाभम् ॥ कनकरसमर्दितयवचूर्णितहयगन्धा-मूलबिल्वपर्युषितम् । माहिषमिव नवनीतं गजनीले कमलसमे ॥ गोमयगात्रोद्वर्त्तितं पूर्वं पश्चादनेन संलिप्तम् । भवति तुरगलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयि-तम् । अश्वगन्धावरोकुष्ठमांसीसिंहीफलान्वितम् । चतु-र्गुणेन दुग्धेन तिलतैलं विपाचयेत् । स्तनलिङ्गकर्ण-पालिवर्द्धनं म्रक्षणादिदम्" ।

**अश्वगोयुग** न० अश्व+द्वित्वे गोयुगच् । अश्वयुग्मे ।

**अश्वगोष्ठ** न० अश्वानां स्थानं पशूनामस्थात् स्थानार्थे गोष्ठच् । अश्वस्थाने वाजिशालायाम् विवरणमश्वशालाशब्दे ।

**अश्वग्रीव** पु०अश्वस्य ग्रीवेव ग्रीवाऽस्य । दानवभेदे "चत्वारिंश-द्दनोः पुत्राः" इत्युपक्रम्य । "अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबल" भा०आ०प० । स एवांशावतारे रोचमान न्र्पतिरभूत् यथोक्तं तत्रैव । "अश्वग्रीव इति ख्यात-स्तस्यवान् यो महासुरः । रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः" । २विष्णोरवतारभेदे हयग्रीवे अश्वशिरः-शब्दे विवृतिः । यदुवंश्यचित्रकस्य पुत्रभेदे अश्ववाह-शब्दे विवृतिः ।

**अश्वघ्न** पु० अश्वं हन्ति अमनुष्यकर्त्तृकत्वात् हन–टक् उप० स० । करवीरे तस्य अश्वमारकतया तथात्वम् ।

**अश्वचक्र** न० ६त० । १अश्वसमूहे २अश्वाकारे नरपतिजय चर्य्योक्ते चक्रभेदे विवरणम् चक्रशब्दे । जाम्बवतीतनयेन कृष्णात्मजेन हते ३शम्बरदैत्यसेनापतिभेदे पु० "हत्तोऽहरत्वा-यतपीनबाहुरेतेन संख्ये निहतोऽश्वचक्र । को नाम शा-म्बस्य महारथस्य रणे समक्षं रथमभ्युदीयात्" भा०व०प० ।

**अश्वचिकित्सक** पु० अश्वानां चिकित्सकः । अश्वानां रोग-निवारकेऽश्व वैद्ये चिकित्साविधिश्च जयदत्तकृतेऽश्व-शास्त्रे दृश्यः । [यदत्तकृतेऽश्वशास्त्रे दृश्या ।

**अश्वचिकित्सा** स्त्री ६त० अश्वरोगनिवारणोपाये सा च ज-

**अश्वचेष्टित** न० ६त० १वाजिचेष्टिते २शुभाशुभसूचके शकुनभेदे च तद्विवृतिः वृ०स० यथा" उत्सर्गान्न शुभदमासनोपरिस्थं वामे च ज्वलनमतोऽपरं प्रशस्तम् । सर्वाङ्गज्वलनमवृष्टिदं हयानां द्वे वर्षे, दहनकणाश्च धूपनं वा । अन्तःपुरं नाश-मुपैति मेढ्रे कोषः क्षयं यात्युदरे प्रदीप्ते । पायौ च पुच्छे च पराजयः स्याद् वक्त्रोत्तमाङ्गज्वलने जयश्च । स्कन्धास-नांसज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम् । ललाट-वक्षोऽक्षिभुजेषु धूमः पराभवाय ज्वलनं जयाय । नासापुट-प्रोथशिरोऽश्रुपातनेत्रेषु रात्रौ ज्वलनं जयाय । पालाश-ताम्रासितकर्बुराणां नित्यं शुकाभस्य सितस्य चेष्टम् । प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद्विना कम्पो वा वदनाच्च रक्तपतनं धूमस्य वा सम्भवः । अस्वप्नश्च विरो-धिता निशि दिवा निद्रालसध्यानता सादोऽधोमुखता

यते । न्यूनातिरिक्तता न स्यात्तस्मिन् कर्मणि जैमिने ! । तत्र तीर्थानि सर्वाणि तिलोत्तादीनि यानि वै ।”। तत्पूजनफलं तत्रैव । “अश्वत्थपूजकोयस्तु स एव हरिपूजकः । अश्वत्थरूपी भगवान् स्वयमेव यतो हरिः” ॥ तस्य तच्छाखायाश्च छेदने निषेधः तत्रैव । “तस्मात्तात् द्विजश्रेष्ठ ! । योऽश्वत्थं हन्ति मूढधीः । संसारे नास्ति तत् कर्म यत् कृत्वा स च शुध्यति । अश्वत्थोऽयं राजेन्द्रोऽयं हरिर्मूर्त्तिः प्रकीर्त्तितः । तस्मादश्वत्थहन्तुश्च त्राता कोऽपि न विद्यते । अश्वत्थशाखामेकाञ्च यस्तस्यामपि छिनत्ति यः । स कोटि ब्रह्महत्याया फलं प्राप्नोति मानवः” इति च । अन्यान्यपि तच्छेदने पापानि तत्रैवोक्तानि द्रष्टव्यानि । तच्छाखाच्छेदनमयज्ञार्थमेव निषिद्धं यज्ञार्थच्छेदने तु न दोषः यज्ञियेध्मत्वस्यापि विहितत्वात् “अर्के पलाशखदिर अपामार्गोऽथ पिप्पल” इत्यादिना जीवहोमे तस्यैव समिधो विधानात् । २नन्दीवृक्षे अश्वत्थभेदे च “नन्दीवृक्षोऽश्वत्थभेदः गरीडी गजपादपः । स्थालीवृक्ष क्षयतरुः क्षीरी च स्याद्वनस्पतिः । नन्दीवृक्षो लघु स्वादुस्तिक्तस्तुवरउष्णकः । कटुपाकरसग्राहीविषपित्तकफास्रजित्” भा०प्र० । ३गर्द्दभाण्डवृक्षे (वेलियापिप्पल) तद्गुणादि गर्द्दभाण्डशब्दे द्रष्टव्यम् । ४संसारवृक्षे तस्य चिरस्थायित्वाभावत् तथात्वम् । “ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्” गीता तद्विवरणमश्वत्थशब्दे । अश्व इव तिष्ठति स्था क पृ० ।५अश्विनीनक्षत्रे तस्याश्वमुखाकारत्वात् नामशब्दे उक्तत्वात्तथात्वम् । अश्वत्थनक्षत्रेण युक्तः कालः अण् तस्य संज्ञायां लुप् । “अश्वत्थो मूहूर्त्तः” सि०कौ० । असंज्ञायान्तु आश्वत्थमहः आश्वत्थी रात्री । चतुर्थ्यां काशा० इल । आश्वत्थिलः उत्क० छ अश्वत्थीयः तत्सन्निकृष्टदेशादौ त्रि० । अश्वत्थेन युक्ता पौर्णमासी अण् । तस्य पौर्णमास्यामपि “अश्वत्थायग्रहायण्यश्वत्थाट्ठक्” पा० निर्देशात् नि० लुप् अश्वत्थयुक्तायां पौर्णमास्याम् । लुपि व्यक्तिवचनोक्तेः प्रयुक्तम् । तत्र भव अण् ठक् । आश्वत्थिकं । चान्द्राश्विनमासि ।

अश्वत्थक पु० अश्वत्थफलम् तद्युक्तः कालोऽस्य अस्मिन्काले देयमृणम् वुन् । अश्वत्थफलपाके देयर्णादौ १देये ऋणे । स्वार्थे, कन् । २अश्वत्थवृक्षे ।

अश्वत्थकुण पु० अश्वत्थस्य पाकः पीला० कुणच् । अश्वत्थपाके फलादौ । [अश्वत्थशब्दे विवृतिः ।

अश्वत्थभेद पु० अश्वत्थस्य भेदोविशेषो यत्र । नन्दीवृक्षे

अश्वत्थामन् पु० अश्वस्येव स्थाम बलमस्य अश्व इव तिष्ठति युद्धे स्थिरत्वात् स्था—क वा पृषो० । भारतप्रसिद्धे १द्रोणाचार्य्यात्कृपीसुते वीरे । “गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः । अश्वत्थाम्नस्तु जननी कृपश्चैव महाबलः । अश्वत्थामा ततोऽजज्ञे द्रोणादेव महाबलः” भा० आ० प० । तस्य नामनिरुक्तिरपि दर्शिता भा० आ० १३०अध्या० । यथा “शारद्वतीं ततोभार्य्यां कृपीं द्रोणोऽन्वविन्दत । अग्निहोत्रे च धर्मे च दमे च सततं रताम् । अलभद्गौतमी पुत्रमश्वत्थामानमेव च । स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः । तच्छ्रुत्वान्तर्हितं भूतमन्तरीक्षस्थमब्रवीत् । अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति” “अश्वस्य स्थाम्नोऽकारः वार्त्ति० अकारः । अश्वत्थामः । भवार्थे तु तस्य लुप् अश्वत्थामा तद्भवे । २भारतप्रसिद्धे पाण्डवसैन्यस्थे मालवेन्द्रवर्म्मणः २गजभेदे तत्कथा च “मतिमान् श्रेयसि युक्तः केशवोऽर्जुनमब्रवीत् । नैष युद्धेन संग्रामे जेतुं शक्यः कथञ्चन । सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः । न्यस्तशस्त्रस्तु संग्रामे शक्यो हन्तुं भवेन्नृभिः । आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः ! । यथा नः संयुगे सर्वान् हन्याद्रुक्मवाहनः । अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम । तं हतं संयुगे कश्चिदस्मै शंसतु मानवः । एतन्नारोचयद्राजन् ! कुन्तीपुत्रो धनञ्जय । अन्ये त्वरोचयन् सर्वे कृच्छ्रेण तु युधिष्ठिरः । ततो भीमो महाबाहुरनीके स्वे महागजम् । जघान गदया राजन्नश्वत्थामानमित्युत । परप्रमथनं घोरं मालवस्येन्द्रवर्म्मणः । भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे । अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह । अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् । कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा । भीमसेनवचः श्रुत्वा द्रोणस्तत्परमप्रियम् । मनसा सन्नगात्रोऽभूत् यथा सैकतमम्भसि । शङ्कमानः स तन्मिथ्या वीर्य्यज्ञः स्वसुतस्य वै । हतः स इति च श्रुत्वा नैव धैर्य्यादकम्पत” । “सन्दह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् । अहतं वा हतं वेति पप्रच्छ सुतमात्मनः । स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् । त्रयाणामपि लोकानामैश्वर्य्यार्थे कथञ्चन । तस्मात्तं परिपप्रच्छ नान्यं कञ्चिद्द्विजर्षभः । तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे । ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधाम्पतिम् । द्रोणं ज्ञात्वा धर्मराजं गोविन्दो

श्वमेधे एकविंशतिर्यूपा सन्ति तत्र मध्यमोयूपोऽग्निष्ठसंज्ञः तत्र सप्तदश पशवोनियोजनीयाः अश्वः१ तूपरः२ (शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः छागः) गोमृगः गवयः ३। द्वौ आग्नेयौ ४ एकादशावयवयुक्तौ। अग्निमन्त्रे वक्ष्यमाणा रोहितादयः द्वादश गावः इति सप्तदश पशवोमध्यमयूपे बन्धनीयाः। द्वयोरेकादशावयवत्वाय मध्ये कृष्णग्रीवः, अश्वस्य रराटे पुरस्तात् ललाटे हन्वोरधस्तात् मेषौ, अधोभागे शुक्लौ छागौ, बाह्वोरश्वस्य पूर्व्वपादयो रेकैकः। अश्वस्य नाभ्या श्यामश्वेतकृष्णरोमाऽजः श्वेतः छागः दक्षिणपार्श्वे, वामे कृष्णः। बहुरोमपुच्छकौ छागौ पश्चात् पादयोरेकैकः। अश्वस्य पुच्छे श्वेतः, वेहत् गर्भघातिनी, वामनः खर्व्वः पशुः पुच्छे एवम् एकादशानामश्वावयवतया कल्पयित्वा तथाविधौ एकादशिनौ द्वौ मध्ययूपे बन्धनीयौ अन्येषु एकैकः इति भेदः। पृषतीत्यादीनां श्वेताः सौर्य्या इत्यन्तानां शतत्रयसंख्यकानां पशूनां मध्ये पञ्चदश पशव एकैकयाम् अश्वादयस्त्रय एते द्वादश च इत्येते पर्य्यङ्ग्य उच्यन्ते। अत्राश्वस्य शरीरं तुम्बीफलवत् रज्ज्वा गुम्फनीयम्। ततः कृष्णग्रीव इत्यादय अश्वस्य शरीरे यथोक्तस्थाने सबद्धा रज्ज्वा बन्धनीयाः ततो रोहितादयः वक्ष्यमाणा द्वादश नियोज्याः इतरेषु विंशतौ यूपेषु पञ्चदश पञ्चदश पशवः प्रत्येकमेकादशिनः इति षोडश इति भेदः।"

अश्वादिपशुभेदाः देवसंहिता यजु अ० २४ उक्ता यथा "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे। पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः, श्यामो नाभ्यां, सौर्य्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ, सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय, वेहद्वैष्णवोवामनः १। रोहितोधूम्ररोहितः कर्कन्धुरोहितस्ते सौम्याः, बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः, शितिरन्ध्रोऽन्यतः शितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः, शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः, पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः२। शुद्धवालः सर्व्वशुद्धवालो मणिवालस्त आश्विनाः, श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये, कर्णायामा अवलिप्ता रौद्रा नभोरूपाः, पार्ज्जन्याः ३। पृश्निस्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्ते मारुताः, फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः, प्लीहाकर्णः शुण्ठा कर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः, कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः" कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ४। शिल्पा वैश्वदेव्यो, रोहिण्यस्त्र्यवयो वाचे, ऽविज्ञाता अदित्यै, सरूपा धात्रे, वत्सतर्य्यो देवानां पत्नीभ्यः ५। कृष्णग्रीवा आग्नेयाः, शितिभ्रवो वसूनां, रोहिता रुद्राणां, श्वेता अवरोकिण आदित्यानां, नभोरूपाः पार्ज्जन्याः ६। उन्नत ऋषभो वामनस्त ऐन्द्रवैष्णवाः, उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः, शुकरूपा वाजिनाः, कल्माषा आग्निमारुताः, श्यामाः पौष्णाः ७। एता ऐन्द्राग्ना, द्विरूपा अग्नीषोमीया, वामना अनड्वाह आग्नावैष्णवा, वशा मैत्रावरुण्यो, ऽन्यत एन्यो मैत्र्यः ८। कृष्णग्रीवा आग्नेया, बभ्रवः सौम्याः, श्वेता वायव्या, अविज्ञाता अदित्यै, सरूपा धात्रे, वत्सतर्य्यो देवानां पत्नीभ्यः ९। कृष्णा भौमाः, धूम्रा आन्तरिक्षा, बृहन्तो दिव्याः, शबला वैद्युताः सिध्मास्तारकाः १०। धूम्रान् वसन्तायालभते, श्वेतान् ग्रीष्माय, कृष्णान् वर्षाभ्यो, ऽरुणाञ्छरदे, पृषतो हेमन्ताय, पिशङ्गाञ्छिशिराय ११। त्र्यवयो गायत्र्यै, पञ्चावयस्त्रिष्टुभे, दित्यवाहो जगत्यै, त्रिवत्सा अनुष्टुभे, तुर्य्यवाह उष्णिहे १२। पष्ठवाहो विराजे, उक्षाणो बृहत्या, ऋषभाः ककुभे, ऽनड्वाहः पङ्क्त्यै, धेनवोऽतिच्छन्दसे १३। कृष्णग्रीवा आग्नेया, बभ्रवः सौम्याः, उपध्वस्ताः सावित्रा, वत्सतर्य्यः सारस्वत्यः, श्यामाः पौष्णाः, पृश्नयो मारुता, बहुरूपा वैश्वदेवा, वशा द्यावापृथिवीयाः १४। उक्ताः संचरा एता ऐन्द्राग्नाः, कृष्णा वारुणाः, पृश्नयो मारुताः, कायास्तूपराः १५। अग्नयेऽनीकवते प्रथमजानालभते, मरुद्भ्यः सान्तपनेभ्यः सवात्यान्, मरुद्भ्यो गृहमेधिभ्यो वष्किहान्, मरुद्भ्यः क्रीडिभ्यः संसृष्टान्, मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् १६। उक्ताः संचरा एता ऐन्द्राग्नाः, प्राशृङ्गा माहेन्द्रा, बहुरूपा वैश्वकर्म्मणाः १७। धूम्रा बभ्रुनीकाशाः पितॄणां सोमवतां, बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां, कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां, कृष्णाः पृषन्तस्त्रैयम्बकाः १८। उक्ताः संचराः एताः शुनासीरीयाः, श्वेता वायव्याः, श्वेताः सौर्य्याः १९। एवं समाप्ता यूपाः इत्यश्वाद्याः सौर्य्यान्ताः सप्तविंशत्यधिकशतत्रयमिताः ग्राम्याः पशवः सर्व्वे उक्ताः। आरण्यानाह। "वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कान्, वर्षाभ्यस्तित्तिरीञ्छरदे वर्त्तिका, हेमन्ताय ककरान्, शिशिराय विककरान् २०। समुद्राय शिशुमारानालभते, पर्ज्जन्याय मण्डूकान्, अद्भ्यो मत्स्यान्, मित्राय कुलीपयान्, वरुणाय नाक्रान् २१। सोमाय हंसानालभते, वायवे बलाका

इन्द्राग्निभ्यां क्रुञ्चान्, मित्राय मद्गून्, वरुणाय चक्रवाकान् २२ । अग्नये कुटरूनालभते, वनस्पतिभ्य उलूकान्, अग्नीषोमाभ्यां चाषान्, अश्विभ्यां मयूरान्, मित्रावरुणाभ्यां कपोतान् २३ । सोमाय लबानालभते, त्वष्ट्रे कौलीकान्, गोषादीर्देवानां पत्नीभ्यः, कुलीका देवजामिभ्यो, ऽग्नये गृहपतये पारुष्णान् २४ । अह्ने पारावतानालभते, रात्र्यै सीचापूः, अहोरात्रयोः सन्धिभ्यो जतूः, मासेभ्यो दात्यौहान्, संवत्सराय महतः सुपर्णान् २५ । भूम्या आखूनालभते, ऽन्तरिक्षाय पाङ्क्त्रान्, दिवे कशान्, दिग्भ्यो नकुलान्, बभ्रुकानवान्तरदिशाभ्यः २६ । वसुभ्य ऋश्यानालभते, रुद्रेभ्यो रुरून्, आदित्येभ्यो न्यङ्कून्, विश्वेभ्यो देवेभ्यः पृषतान्, साध्येभ्यः कुलुङ्गान् २७ । ईशानाय परस्वत आलभते, मित्राय गौरान्, वरुणाय महिषान्, बृहस्पतये गवयान्, त्वष्ट्र उष्ट्रान् २८ । प्रजापतये पुरुषान् हस्तिन आलभते, वाचे प्लुषीन्, चक्षुषे मशकान्, श्रोत्राय भृङ्गाः, २९ । प्रजापतये च वायवे च गोमृगो, वरुणायारण्यो मेषो, यमाय कृष्णो, मनुष्यराजाय मर्कटः, शार्दूलाय रोहित्, ऋषभाय गवयी, क्षिप्रश्येनाय वर्तिका, नीलङ्गोः कृमिः, समुद्राय शिशुमारो, हिमवते हस्ती ३० । मयुः प्राजापत्य, उलो हलिक्ष्णो वृषदंशस्ते धात्रे, दिशां कङ्को, धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा, वाचे क्रुञ्चः ३१ । सोमाय कुलुङ्ग, आरण्योऽजो नकुलः शका ते पौष्णाः, क्रोष्टा मायोरिन्द्रस्य गौरमृगः, पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै, प्रतिश्रुत्कायै चक्रवाकः ३२ । सौरी बलाका, शार्गः सृजयः शयाण्डकस्ते मैत्राः, सरस्वत्यै शारिः पुरुषवाक्, श्वाविद्भौमी, शार्दूलो वृकः पृदाकुस्ते मन्यवे, सरस्वते शुकः पुरुषवाक् ३३ । सुपर्णः पार्जन्य, आतिर्वाहसो दर्विदा ते वायवे, बृहस्पतये वाचस्पतये, पैङ्गराजोऽलज आन्तरिक्षः, प्लवो मद्गुर्मत्स्यस्ते नदीपतये, द्यावापृथिवीयः कूर्मः ३४ । पुरुषमृगश्चन्द्रमसो, गोधा कालका दार्वाघाटस्ते वनस्पतीनां, कृकवाकुः सावित्रो, हंसो वातस्य, नाक्रो मकरः कुलीपयस्तेऽकूपारस्य, ह्रियै शल्यकः ३५ । एण्यह्नो, मण्डूको मूषिका तित्तिरिस्ते सर्पाणां, लोपाश आश्विनः । कृष्णो रात्र्या, ऋक्षो जतूः सुषिलीका त इतरजनानां, जहका वैष्णवी ३६ । अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणाम्, अपामुद्रो मासां, कश्यपो रोहित् कुण्डृणाची गोलत्तिका तेऽप्सरसां, मृत्यवेऽसितः ३७ । वर्षाहूर्ऋतूनाम्, आखुः कशो मान्थालस्ते पितॄणां, बलायाजगरो, वसूनां कपिञ्जलः, कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ३८ । श्वित्र आदित्यानाम्, उष्ट्रो घृणीवान् वार्ध्रीनसस्ते मत्या, अरण्याय सृमरो, रुरू रौद्रः, क्वयिः कुटरुर्दात्यौहस्ते वाजिनां, कामाय पिकः ३९ । खड्गो वैश्वदेवः, श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसाम्, इन्द्राय सूकरः । सिंहो मारुत, कृकलास पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः । ४० । एवं षष्ट्यधिकशतद्वयमारण्याः पशव उक्ताः । मध्यमयूपे द्वौ एकादशिनौ अन्येषु एकैके एकादशिनः इति एकविंशतियूपेषु द्वाविंशतिरेकादशिन्यः । अत सप्तविंशत्यधिकशतत्रयम् अश्वादि चौर्यान्न द्वाविंशत्या सह मिलिताम् एवं ऊनपञ्चाशदधिकं शतत्रयम् । ता ग्राम्याः पशव आरण्यास्तु २६० मिलिता ६०९ पशवोऽश्वमेधे विहिताः तदुक्तं लोके । "षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि च" । तेषु ग्राम्या आलभ्या आरण्या ब्रह्मनाशोत्सृज्या न तु हिंस्या इति । एवञ्चात्राश्वस्य प्राधान्यात् अश्वमेधत्वम् । अश्वलक्षणं तु "काकाम्भोधरवर्णाभः सर्वपर्वसुलोमवो । यस्य पार्श्वानुभागस्थौ चन्द्राकारौ सुशोभनौ । पुच्छं विद्युत्मतीकाशसदृशं कुन्दसन्निभम् । पादाश्चैव हरिद्राभा कर्णौ सिन्दूरसन्निभौ । ज्वलदग्निनिभा जिह्वा चक्षुषी भास्करोपमे, विराजितो रोमराज्या सानुलोमविलोमया । चित्रितैर्विविधैर्वर्णैर्विलोरजतबिन्दुभिः । यो वेगे वायुतुल्यः स्यादङ्गैश्च प्रमाणया । यस्य गात्रोत्थगन्धो गन्धर्वानपि मोहयेत् । एवं लक्षणसंयुक्तो यज्ञियः पशुरुच्यते" शाचि० रा० । "गोक्षीरसमवर्णश्च कुन्देन्दुहिमसन्निभम् । पीतपुच्छं श्यामकर्णं सर्वतोगतिमत्तमम् । एतादृशं वापि महीपाल ! यज्ञेऽश्वस्तुरगं विदुः" इति पुरा० । शत० ब्राह्मणे तु "द्विरूप एवैषोऽश्व स्यात् कृष्णसारङ्ग' प्रजापतेर्वा एषोऽश्वः समभवत् द्विरूपं वा इदं चक्षु शुक्लं चैव कृष्णं च तदेनं स्वेन रूपेण समर्धयतीति । अथ होवाच सात्ययज्ञिस्त्रिरूप एवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्धः शुक्लोऽपरार्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत् कृष्णः पूर्वार्धो भवति यदेवेदं कृष्णमक्ष्णस्तदस्य तदथ यच्छुक्लोऽपरार्धो भवति यदेवेदं शुक्लमक्ष्णस्तदस्य तदथ यत्कृत्तिकाञ्जिः पुरस्तात्सा कनीनिका स एव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत सकृद्रूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिमालभेत अनेन त्वेव समृद्धः स्यात्" । "कृत्तिकाकारं कृत्तिकान्निकरोहिणीयकठा

कारमञ्जिं पुरुषं ललाटे यस्य भा० । ललामम्" । का त्या०२०।१।२२। 'नीलपौण्ड्रकयुक्तमिति' कर्क० । तस्योत्सर्ज्जनं चोत्तरपूर्व्वादिशि । "पशुवदुत्सर्ज्जन निरष्टे ऽश्वयते" कात्या०२०।२।१ । "पशुवदित्युत्तरपूर्व्वां दिग् लक्ष्यते निरष्टे निरमणे हन्तृतया । अध्वर्य्युयजमानौ अ-श्वयते शतानामश्वानां मध्ये पशुवदुत्सर्ज्जनं कुरुत' कीदृशे निरष्टे अश्वस्य वयोव्यञ्जनानि एकैकं त्रीणि त्रीणि वर्षाणि अनुवर्त्तन्ते तानि निर्गतान्यस्मादिति निरष्टम् अतीतचतुर्विंशतिवर्षमित्यर्थः" कर्क० । तेन हन्तृतया स्कन्दनसामर्थ्यरहितं सूचितम् तथा हि तस्याश्वस्य "बड-वाभ्यो वारणम्" "मज्जेयाश्वोदकात्" कात्या०२०।२।१। २।२। वाक्येन बडवाभ्यो निवारणं, मज्जेयात् यथेच्छस्ना-नार्हाहृदकाच्च निवारणम् विहितम् । अतएव "प्रजाते वायव्यम्" कात्या० २०।२।२० । बडवायां रेतःस्कन्दने प्रजातइत्युच्यते तस्मिन् वायव्यपयोनिर्वापोविहितः। तस्य रक्षकाश्च यथारूपाः कर्त्तव्यास्तथाह शत०ब्रा० । "तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतं राजन्या निषङ्गिणः शतं सूतग्रामण्यां पुत्रा इषुपर्षिणः शतं क्षात्रसङ्ग्रहीतृणां पुत्रा दण्डिनः शतमश्वशतं निरष्टं निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति" अवधिकालमाह "तस्मात् पारिप्लवं षट्त्रिंशतं दशाहा नावर्त्तेत" इति शत०ब्रा० सावनगणनया संवत्सरे गते दीक्षा । "अश्वापदीक्ष्या चरुभिः सावित्रम्" इत्यादिना "सतेबार्दर्शने च" इत्यन्तेन कात्या०२०,३,२०। मायस्तवि-शेषाहुक्त्वा "अन्यस्य रचनादानादि करोत्यश्वयुक्तम्" स्वते अश्वस्यादर्शने च"का०२०,४,१। अपुनरागमसम्भवे च अ-न्यस्याश्वस्य रचनादानादि अश्वयुक्तमश्वसंबन्धि अश्वोपकारकं सर्व्वं कर्म्म पुनः करोति" कर्क । अश्वमेधारम्भकालश्च। "अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य" कात्या०२०,१,२, फाल्गुनशुक्लपक्षेऽष्टम्यां नवम्यां वा प्रारम्भः । "याऽसौ फाल्गुनी पौर्णमासी भवतीति" मतान्तरम् 'तस्यै पुरस्तात् षडहे वा सप्ताहे वा ऋत्विज उपसमायन्तीति" शत० ब्रा० ग्रीष्मे वेके" कात्या० २०,१,३, "अन्ये आचार्य्याः-ये शुक्लाष्टम्यां नवम्यां वेत्येके" कर्क । एकविंशतिपूपसम्मि-तेयमानादि यथा 'एकविंशतिर्यूपा सर्व्व एकविंशत्य रत्नयोराज्जुहालोऽग्निष्टो भवति पैतुदारवावभित', पड्बैल्वान्यय इत्यान्यय इत्यात्, षट् खादिरान्यय पलेशान्यय इत्यात्,षट् पालाशान्यय पलेशान्यय इत्यात्,

शत०ब्रा० । एतेषां नामनिर्व्वचन तत्रैव द्रष्टव्यम् ।

अश्वमेधस्य यौगिक नि द्वादश नामानि दर्शितानि श०-त० ब्रा० १३काण्डे । "एष वै प्रभूर्नाम यज्ञः१ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्रभूतं भवति । एष वै विभूर्नाम यज्ञः२ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव विभूतं भवति । एष वै व्यष्टिर्नाम यज्ञः ३ । यत्रैतेन यज्ञेन यजन्ते सर्व्व-मेव व्यष्टं भवति । एष वै विधृतिर्नाम यज्ञः ४ । यत्रै-तेन यज्ञेन यजन्ते सर्व्वमेव विधृतं भवति । एष वै व्यावृ-त्तिर्नाम यज्ञः ५ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्यावृत्तं भवति । एष वा ऊर्ज्जस्वान्नाम यज्ञः ६ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेवोर्ज्जस्वद्भवति । एष वै पयस्वान्नाम यज्ञः ७ । यत्रैते न यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति । एष वै ब्रह्म-वर्चसी नाम यज्ञः८ । यत्रैतेन यज्ञेन यजन्त आब्राह्मणो ब्रह्मवर्चसी जायते । एष वा अतिव्याधिर्नाम यज्ञः९ । यत्रैतेन यज्ञेन यजन्त आराजन्योऽतिव्याधिर्जायते । एष वै दीर्घो नाम यज्ञः१० । यत्रैतेन यज्ञेन यजन्तऽआदीर्घा-रण्यं जायते । एष वै क्लृप्तिर्नाम यज्ञः ११ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्लृप्तं भवति । एष वै प्रतिष्ठा नाम यज्ञः १२ । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्रतिष्ठितं भवति" । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" शत० ब्रा० "अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे" भा० अनु०प०।

**अश्वमेध** पु० अश्वमेधोऽस्त्यस्य अर्श० अच् । राजर्षिभेदे । "यो मंहति मंहीयत्यश्वमेधाय सूरये" ऋ० ५,२७,४ । अश्वमेधाय राजर्षये" भा० ।

**अश्वमेधिक** न० अश्वमेधमधिकृत्य कृत ग्रन्थ ठक् ठन् वा । महाभारतान्तर्गते चतुर्द्दशे पर्व्वणि । "ततोऽश्वमेधिकं पर्व्व सर्व्वपापप्रणाशनम्" "ततोऽश्वमेधिकं पर्व्व प्रोक्तं तच्च चतुर्द्द-शम्" इति च भा०आ०प० ।

**अश्वमेधीय** पु० अश्वमेधाय हितः "अश्वमेधाच्च च" पा०छ । अश्वमेधयोग्ये पशौ तल्लक्षणम् अश्वमेधशब्दे उक्तम् । घात् ठन् । अश्वमेधिकोऽप्यत्रार्थे ।

**अश्वया** स्त्री अश्वमिच्छति अश्व–क्यच् "न छन्दस्यपुत्रस्ये ति" पा० नेत्वदीर्घौ भावे अ । इच्छायाम् "असुराश्वयोत रथया" ऋ० ८,४६,१०। "अश्वया अश्वेच्छया" भा० ।

**अश्वयु** त्रि० अश्वोऽस्त्यस्य युच् । १अश्वयुक्ते "गव्युरश्वयुरी-यते" ऋ० ३१,१५ । अश्वमिच्छति क्यच् वेदे नि०नेत्त्व दीर्घौ उन् । २अश्वेच्छावति । अश्वयुर्गव्यूरथयु " ऋ० १,५१,१४ । "अश्वयुरश्वानिच्छन्" भा० ।

तस्य वाहनं वाजी दुर्लभं वाजिवाहितम्। हठाखनोऽपि तत्त्वज्ञो जितमुष्टिर्निरालसः। अविरागी स्थिरश्चापि प्रशस्तो वाजिवाहकः। चित्तं यो नैव जानाति तुरगस्य समासतः। न वहन्ति हयास्तस्य दण्डपातेन ताडिताः। क्षेपिते वल्गिते भीते तथा चोन्मार्गगामिनि। कुपितोद्भ्रान्तचित्ते वा मध्ये दण्डं निपातयेत्। क्षेपिते ताडयेन्मूर्ध्नि जानुभ्यां वल्गिते तथा। कुक्षौ उरसि हन्तव्यो भ्रान्तचित्ते तथोदरे। भीतं च ताडयेत्पश्चात् पुच्छे चोन्मार्गगामिनम्। ज्ञात्वा दोषं च रूपं च स्थानेष्वेतेषु ताडयेत्। अस्थानताडितो वाजी यावज्जीवं न सिध्यति। नो जहाति च तद्दोषं यावज्जीवं स्थितो हयः। धाराः पञ्च प्रवक्ष्यामि मुनिभिर्याः प्रकीर्त्तिताः। प्रथमा विक्रमा धारा द्वितीया वल्गका स्मृता। तृतीया पूर्णकण्ठी तु चतुर्थी त्वरिता स्मृता। पञ्चमी चैव या धारा निरालम्बा प्रकीर्त्तिता। षष्ठी चैव तु या धारा श्रूयते न तु दृश्यते। विक्रमा गतिधारा च चतुष्का वल्गका मता। उत्पादसमायुक्ता पूर्णकण्ठी तु सा भवेत्। स्वेच्छया त्वरिता धारा ताडिता चैव पञ्चमी। षष्ठी चैव तु या धारा स्वर्गलोकेषु गीयते। वल्गाश्च संप्रवक्ष्यामि मुनिभिः परिकीर्त्तिताः। पुष्पवन्ती च गोकर्णी तुलोत्तुला तुला तथा। नागफण्डी पुष्पधारी द्रुघटी च स्तनस्तनी। द्विहस्ती चैकहस्ती च सुभगा शोभना मता। इत्येता द्वादश वल्गा मुनिभिः परिकीर्त्तिताः" "आकण्ठकर्णमध्ये तु करो छवति वाजिनः" शनैस्तु वाहयेत्पूर्वं पश्चात्तं समादिशेत्। न वक्रो न तथोत्तानो न कुब्जो नाप्यधोमुखः। न भवेत्कम्पमानस्तु स भवेदश्ववाहकः। स्थिरोरुः स्थिरपादश्च त्रिकोन्नतस्थिरासन। दक्षिणादितरस्कन्ध वाहने तु दृढः सदा। अश्ववाराः समाख्याताः शेषास्तु भयदायकाः। ग्रीष्मादिषु न वर्षास्वपि तेषु त्रिषु वाहनम्। हेमन्तादिषु कर्त्तव्यं सादिभिः शास्त्रवेदिभिः। प्रतिपत्सु त्रयोदश्यां पञ्चम्यां वा सिते दले। इतिसिद्धातियोगेषु वासरे चन्द्रसूर्ययोः। मूलरोहिणीहस्तेषु पुष्ये चैवोत्तरासु च। एवंविधे दिने सादी वाहान् संवाहयेत् शुभे। रङ्गभूमौ च देवत्वं स्थापयेत् पूजयेत्ततः। पुष्पैर्धूपैः प्रदीपैस्तु चन्दनैः पायसैस्तथा। पक्वान्नैः पञ्चपल्लवैः प्रातःशुचिसुवाससा। रक्ताम्बरधरोभूत्वा रक्तपुष्पधरस्तथा"। "एकविंशतिवारांश्च ततः पर्याणयेद्धयम्। क्षोभयेत्तं तथा चाश्वं शनैःशनैः। वल्गानाम्यसु कर्त्तव्यः सव्यापसव्यमेव च। विक्रमा वल्गका पूर्णकण्ठी च त्वरिता तथा। खलीनादौ प्रयोक्तव्या सादिना वाजिनां क्रमात्। नातिस्थूलं नातिह्रस्वं न लघ्वं नातिकर्कशम्। समाङ्गुलप्रमाणन्तु खलीनं कारयेद्बुधः। खलीनादिषु योगेषु धारयेद्विक्रमादिषु। क्रमेणैव तुरङ्गाणां कटानि संप्रयोजयेत्। खलीनादौ तु धारासु यदा शिक्षितो हयः। तदा कटेषु तं सादी भ्रामयेद्विक्रमादिभिः। शतहस्तादिकां भूमिं सप्तहस्तावसानिकाम्। भ्रामयेद्वाजिनं सादी सव्यं चैवापसव्यकम्। मण्डलं चतुरस्रं च गोमूत्रं चार्द्धचन्द्रकम्। नागपाशं क्रमेणैव भ्रामयेत्कटमञ्चकम्। एतत्स्वपि कोटेषु त्रिष्वेव भ्रामयेत्कटे। एवं वाहयेद्वाहं तस्य कष्टं न जायते। दद्याद्भयमभीतस्य भीतस्यापि हरेद्भयम्। रहस्यं सादिनामेतद्वाहनेऽभिहितम्। पूर्वोक्तेषु च देशेषु मध्ये तु ह्येषु ताडयेत्। न जातु सादिनाप्यश्वान् काले दोषमतेरपि। दम्यमानस्य अश्वस्य यो दोषः सादिदोषतः। जायते ह्यसौ निराकर्त्तुं सादिना नैव शक्यते। एवं शास्त्रविधानेन यः सादी वाहयेद्धयान्। हयास्तस्य सिध्यन्ति भवन्ति फलदायकाः। वाहनं यत्र दुष्टं च धूपवेपनमन्त्रकैः। तदहं संप्रवक्ष्यामि मुनिभिः कीर्त्तितं यथा। अस्थिभिर्दशनैश्चैव हस्तिनां च यथा बुधैः। विषमक्षिकादंष्ट्राभिः धूमश्चात्र सर्पिषा। एलागुरुमदोशीरनागकेसरचन्दनैः। मञ्जिष्ठातैलसंयुक्तो धूपयेद्वाजिनम्। विषकोष्ठगदैश्चामिषैर्वाज्यदधिचन्दनैः। निःशेषदोषनाशाय धूप उक्तो हि वाजिनाम्। विलिप्य गोमयैः प्रातर्निशीथे सर्वसन्धिषु। अष्टम्यां च विशेषेण दुष्टाः सिध्यन्ति धूपिताः। काश्मीरं चन्दनं कौन्तीसिद्धार्थमरिचानि च। सैन्धवं वचामूलं गोमूत्रं कर्षकं शतम्। मुनिपुष्पाणि पिष्टानि [illegible] च। अञ्जनं सर्वदुष्टानां देयं पर्वणि पर्वणि। अनेनाभ्यञ्जितो वाजी निर्वाणमधिगच्छति। कोपमोहं भयं त्यक्त्वा पश्चात् सादिनोऽभयम्"।

अश्ववाह पु० अश्वं वाहयति चालयति वह–णिच्–अण्। अश्ववाहके सादिनि। ण्वुल्। अश्ववाहकोऽप्यत्र। ल्यु अश्ववाहनोऽप्यत्र पु०।

अश्वविक्रयिन् त्रि० अश्वं विक्रेतुं शीलमस्य वि+क्री—शीलार्थे णिनि ६त०। अश्वविक्रयाजीविकायुक्ते त्रिका०।

अश्वविद् पु० अश्वं हयहृदयं वेत्ति विद—क्विप् ६त०। १ नलनृपतौ तस्याश्वहृदयज्ञता वर्ण्णिता" भा०व०प०७२ अध्या०। यथा "ऋतुपर्णे प्रति बाहुकरूपस्य नलस्योक्तिः "बाहुकनल-

**अश्वस्तनिक** त्रि० श्वस्तनमस्त्यस्य मत्वर्थे ठन् न०त०। परदिनास्थायिधने वर्त्तमानदिनपर्य्याप्तधनसञ्चयकारिणि गृहस्थभेदे "कुम्भधान्यको वा स्यात् कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" मनुः।

**अश्वस्तोमीय** न० अश्वस्य स्तोमं स्तुतिरस्त्यस्य मत्वर्थे छ। हयस्तुतियुक्ते सूक्तभेदे तच्च सूक्तम्" ऋ० १,१६२। मानोमित्र इत्यादि द्वाविंशत्यृचम्। २ तत्साध्ये होमजाते च। "अश्वस्य वाऽआलब्धस्य मेध उदक्रामत्तदश्वस्तोमीय मभवद्यदश्वस्तोमीयं जुहोत्यश्वमेव मेधसा समर्धयति। आज्येन जुहोति। मेधो वा आज्यं मेधोऽश्वस्तोमीयं मेधमेवास्मिन्नेतन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयति। अश्वस्तोमीयं हुत्वा द्विपदा जुहोति। अश्वो वाऽअश्वस्तोमीयं पुरुषो द्विपदा, द्विपाद्वै पुरुषो द्विप्रतिष्ठस्तदेनं प्रतिष्ठया समर्धयति तदाहुः अश्वस्तोमीयं पूर्वं होतव्यां द्विपदा इति पशवो वा अश्वस्तोमीयं पुरुषो द्विपदा यदश्वस्तोमीयं हुत्वा द्विपदा जुहोति तस्मात् पुरुष उपरिष्टात् पशूनधितिष्ठति षोडशाश्वस्तोमीया जुहोति" शत०ब्रा०।

**अश्वस्थान** न० ६त०। वाजिशालायाम् "अश्वस्थानात् गजस्थानात् सङ्गमात् वल्मीकात् ह्रदात्" विष्णुध०पुरा०।

**अश्वहनु** पु० अश्वस्य हनुरिव हनुरस्य। "दानवभेदे हरिश्माश्रुर्हनुश्चैव वीरौ तावथ दुर्जयौ" हरिवं० २६ अध्या०।

**अश्वहन्तृ** पु० अश्वं हन्ति हन–तृच् ६त०। १करवीरे "वीर्ज्जं विद्धाश्वहन्त्रोर्हरिद्रे च हयवीक्षयम्" सुश्रुत। २हयमारके त्रि०।

**अश्वहय** पु० अश्वेन हिनोति गच्छति हि–कर्त्तरि अच्। अश्वेन गतिमति "प्रत्यर्द्धिर्यज्ञानामश्वहयो न रथानाम्" ऋ०१०,२६,५। अश्वेन हीयते व्याप्यते कर्मणि अच्। अश्वव्याप्ये। "अजन्त्यश्वहयैरनिमितं नमोभिः" ऋ०८,६१,,२।

**अश्वहृदय** न० अश्वस्य हृदयं मनोगतभावादि। हयाभिप्राये २तद्वेदकविद्याभेदे च अश्वविच्छब्दे उदा०।

**अश्वाद्य** पु० अश्वस्याद्यो अच् समा०। देवसर्षपवृक्षे।

**अश्वादि** पु० पाणिन्युक्ते शुभाशुभसूचकनिमित्ते संयोगाद्यर्थेऽर्थे ठञ्प्रत्ययनिमित्ते १शब्दसमूहे स च गणः अश्व, अश्मन् गण, ऊर्णा उमा गङ्गा वर्षा वसु। गोत्रापत्ये २फञ्प्रत्ययनिमित्ते शब्दसमूहे च स च गणः अश्व, अश्मन् शङ्ख, शूद्रक, विद, पुट, रोहिण, खर्जूर, खञ्जार, वस्त, पिञ्जूल भडिल, भण्डिल, भडित, भण्डित, प्रकृत, रामोद, क्षान्त, काश, तीक्ष्ण, गोलाङ्क अर्क, स्वर, स्फुट, चक्र, श्रविष्ट, पविन्द, पवित्र, गोमिन्, श्याम, धूम, धूम्र, वाग्मिन्, विश्वानर कुट, शप (आत्रेये)। जन, जड, खड, ग्रीष्म, अर्ह, कित, विशम्प, विशाल, गिरि, चपल, चुप, दासक, वैल्व प्राच्य, धर्म्म, आनडुह्य, (पुंसि)जात, अर्जुन, प्रहृत, सुमनस् दुर्मनस् मनस्, प्रान्त, ध्वन, आत्रेय (भरद्वाजे) भरद्वाज, (आत्रेये) उत्स, आतव, कितव, मद, गन्ध, पाद, शिव, खदिर अश्वादि।

**अश्वामघ** त्रि० अश्वोमघं धनमस्य वेदे दीर्घः। "अश्वरूपधन स्वामिनि "अश्वामघा गोमघा वां हुवेम" ऋ०७,७१,१

**अश्वायुर्वेद** पु०। अश्वस्यायुर्वेद्यतेऽनेन विद–णिच् घञ्। हयायुर्ज्ञापके शास्त्रे तच्च शालिहोत्रेण सुश्रुतनामानं स्वछात्रं प्रत्युपदिष्टम् तन्मूलञ्च जयदत्तकृतञ्च अश्वशब्दे निष्ठितिः।

**अश्वारि** पु० अश्वस्यारिः ६त०। महिषे।

**अश्वारूढ** पु० अश्वमारूढोऽनेन। सादिनि अश्वारोहिणि।

**अश्वारोह** पु० अश्वमारोहति आ+रुह–अण् उप०स०। हयवाहके, हयारोहणेन २युद्धकर्त्तरि च। अश्वस्तन्मेढ्रमिवारोहोमूलमस्य। ३अश्वगन्धायां स्त्री।

**अश्वावतान** पु० अश्वस्येवावतानोऽस्य। ऋषिभेदे। विदा० अपत्ये अञ्। आश्वावतानः तद्गोत्रापत्ये बहुषु गोपवना० न लुक्। आश्वावतानाः। [गन्धाष्टके॥

**अश्वावरोहक** पु० अश्वस्तन्मेढ्रमिवावरोहति ण्वुल्। अश्व-

**अश्विन्** पु० द्वि० अश्वाः सन्ति ययोः इनि, अश्विन्या नक्षत्रे भवौ "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" पा० अण् "नक्षत्रेभ्यो बहुलम्" पा० वा लुक् लुकि स्त्रीप्रत्ययस्य लुक्, अथवा तत्पत्तिः स्यात्तस्मात्स्यस्य इनि वा। १स्वर्गवैद्ययोः। "किमश्विनौ सोमरसं पिपासू" भट्टिः "वामोदचन्द्रसालोक्यमश्विसालोक्यमश्वदः" मनुः। "त्वाष्ट्री तु सवितुर्भार्य्या वडवारूपधारिणी। असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ" भा०आ०प०। "या वां कशा मधुमत्यश्विना सूनृतावती" यजु० ७,२। अश्वसन्निकर्षः अस्त्यर्थे इनि। "कपोलयोस्तथावर्त्तौ विद्येते वाजिनो यदि। तावश्विनाविति प्रोक्तौ राज्यवृद्धिकरौ परौ" अश्वलक्षणयोः २हययोश्च द्वि०व०। ३हययुक्ते त्रि०। स्त्रियां ङीप्। "गोमा अग्नेऽविमाँ अश्वी" ऋ०४,२,५।

**अश्विनी** स्त्री अश्वस्य तुरगस्याकारोऽस्त्यस्य इनि ङीप्। सप्तविंशतिधाविभक्तराशिचक्रस्य प्रथमे भागे। अस्या-श्वाकारत्वमश्वेशब्दे उक्तम्। "अश्विनीमघमूलानां गण्डा आद्यास्त्रिनाडिकाः" ज्यो० नक्षत्रपर्य्याये न०। "पुष्याश्विहस्ता लघुः" ज्यो० अश्वाया आकारोऽस्त्यस्याः इनि ङीप्। हयरूपधारिण्यां त्वष्टृसुतायां २रविभार्य्यायामश्वात्मजशब्दे २९८ पृ० विवृतिः।

**अश्विनीकुमार** पु० द्वि०व०। सूर्य्येण त्वष्टृसुतायां संज्ञायां वडवारूपायामुत्पादितयोः स्वर्वैद्ययोः तदुत्पत्तिकथा भा० आ०प० ६६ अध्याये अश्विनीतनयपुत्रसुतादयोऽप्यत्र। अश्वात्मजशब्दे २९८ पृ० विवरणम्।

**अश्वीय** न० अश्वानां समूहः छ। १हयसमूहे। अश्वस्य हितम् अपूपा० छ। २हयहिते। पक्षे यत्। अश्व्योऽप्युक्तार्थे।

**अश्वोरस** न० अश्वानामुर इव उरस्यम् अच् समा०। सख्ये हये।

**अष** दीप्तौ अक० गतौ, ग्रहणे च सक० भ्वा० उभ० सेट्। अषति ते आषीत् आषिष्ट।

**अषडक्षीण** त्रि० न सन्ति षडक्षीणि श्रोत्रेन्द्रियाणि यत्र ख। तृतीयजनकर्णागते द्वाभ्यामेव कृते मन्त्रादौ।

**अषाढ(षाढ़)** पु० अषाढ(षाढ़)या युक्ता पौर्णमासी आषाढी (षाढ़ी)सा यत्र मासे अण् वा ह्रस्वः। वैशाखादितस्तृतीये चान्द्राषाढ(ढ़)मासे। आषाढी पूर्णिमा प्रयोजनमस्य प्रयो-जनार्थे अण्। २ब्रह्मचारिधार्य्ये दण्डे, तस्य हि आषाढ-पौर्णमास्यां विहितकर्मप्रयोगित्वात् तथात्वम् पृ० ह्रस्वः। अषाढोऽप्युभयत्र। स्वार्थे कन् तत्रैव। षह क्त वेदे-ऽपोत्वाभावः षत्वञ्च न०त०। असोढे त्रि० "अषाढं युत्सु पृतनासु पप्रिम्" यजु० ३४,२०। "अषाढाय सहमानाय वेधसे" ऋ० २,२१,२।

**अषाढा(ढ़ा)** स्त्री षाढि षाढम सह–णिच्+क्तिन् ढत्वम् अर्थे आद्यच् न०त० पृषो० वा षत्वं ढत्वञ्च। अश्विन्यवधिके पूर्व्वादिके विंशे, उत्तरादिके एकविंशे च नक्षत्रे।

**अष्टक** न० अष्टौ अध्यायाः परिमाणमस्य अष्टन्+कन्। १पाणिनेरष्टाध्यायीसूत्रे, प्रत्येकमष्टाध्यायात्मके २ऋग्वे-दांशभेदे च ३अष्टसंख्यापरिमिते त्रि० "पैशुन्यं साहसं द्रोहईर्ष्या सूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोध-जोऽपि गणोऽष्टकः" मनुः। "संख्यायाः संज्ञासङ्घसूत्रा-ध्ययनेषु" पा०उक्तेः ४अष्टाध्यायाध्ययनेऽपि। अष्टकं वि-दन्ति अधीयते वा "सूत्राच्च कोपधात्" पा० अध्येतृवेदि-तृप्रत्ययस्य साकल्ये लुक्। अष्टकाः पाणिनेः ४सूत्रा-ध्यायिषु अ०व०। ५अष्टसंख्यायाम् "ताराष्टकमिदं पुण्यं भक्तिमान् यः पठेन्नरः" तन्त्रम्। गङ्गाष्टकं पठति यः प्रयतः प्रभाते" वाल्मी०। [ष्टिकर्णस्थायत्वात्वम्।

**अष्टकर्ण** पु० अष्टौ कर्णा अस्य। चतुर्मुखे ब्रह्मणि प्रतिमुखं

**अष्टकर्म्मन्** अष्टौ कर्माण्यस्य। "आदाने च विसर्गे च तथा प्रैषनिषेधयोः। पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे। दण्डशुद्ध्योः सदा रक्तस्तेनाष्टगतिकोनृपः" उशनसोक्ताष्टविधकर्मयुक्ते नृपतौ "अष्टकर्मा दिवं याति राजा शक्राभिपूजितः" उश०। अष्टगतिकोऽप्यत्र "तत्रा-दानं करादीनाम्। विसर्गो भृत्यादिभ्यो धनदानम् प्रैषोऽमात्यादीनां दृष्टादृष्टार्थेषु। निषेधो दृष्टा-दृष्टविरुद्धक्रियासु। अर्थवचनं कार्य्यशब्देन राजा-र्थैव तत्र नियमनम्। व्यवहारेक्षणं प्रजानामृ-णादिविप्रतिपत्तौ। दण्ड पराजितानां शास्त्रोक्त धनग्रहणम्। शुद्धिः पापे कर्मणि जाते तत्र प्राय-श्चित्तसम्पादनमिति" कुल्लूकभट्टः। मेधातिथिस्तु। "अ-कृतारम्भः। कृतानुष्ठानम्। अनुष्ठितविशेषणम्। कर्मफलसंग्रहः। तथा सामदानभेददण्डाः। एत-दष्टविधं कर्मेत्याह। अथवा "कृषि. वणिक्पथः। उदकसेतुबन्धनम्। दुर्गकरणम् कृतस्य संस्कारः नि-र्णयः। हस्तिबन्धनम्। खनिखननम्। शून्यनिवेश-नम्। दारुवनच्छेदनञ्चेत्यमाह"। तच्च ब्रूमः अष्टवर्ग-शब्दे वक्ष्यते।

**अष्टका** स्त्री अश्नन्ति पितरोऽस्यां तिथौ अश–तकन्। "अष्टका पितृदैवत्ये" इत्यजादिपाठात् न इत्वम्। "अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम्" इत्युक्त-लक्षणे १सप्तम्यादिदिनत्रये, २दिनत्रयसाध्ये कर्मभेदे च तच्चा-श्वलायन गृ० दर्शितम् तदपि पौषमाघफाल्गुनानां कृष्ण सप्तम्यादिषु कर्त्तव्यं तत्र प्रधानमष्टमी, सप्तम्यामारम्भः अष्टम्यां कृत्यं नवम्यामन्वष्टकेति भेदः। "अमावास्या चतुर्दश्योः पौर्णमास्यष्टकासु च" "अष्टकासु ह्यहोरात्रमृत्वन्तासु च रात्रिषु" इति च मनुः तत्र न पितृमात्रदेवत्वम् अन्यदेवत्व-मपि यथाह "पितृप्रदानाय मूढे कुरुष्टकास्त्रिक एव च। कृष्णपक्षे वरिष्ठा हि पूर्व्वा चैन्द्री हि भाष्यते। प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी। आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा। शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः" वायु०पुरा०। मूढे प्रधानस्थाने अमावस्या हि श्राद्धस्य प्रधानं कालः सहरित

यावत् रघु० । पश्वभावे स्थालीपाकेन कार्य्यं "अपि वा स्थालीपाकं कुर्व्वीतेति" गोभिल । एतद्विधानन्तु "स्थालीपाकं पशुस्थाने कुर्य्यात् यद्यानुकल्पिकम् । श्रपयेत्तं समत्सायास्तरुण्या गोः पयसस्तु" छन्दोगपरिशि० । अन्विति ओदनचरो पश्चात् । अत एव । "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्माद्द्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" मात्स्य० । तस्मादन्न प्रधानं मांसादिकन्तूपकरणत्वेन शक्तानामावश्यकं, सदेति श्रवणात् । "अमावस्याष्टका द्वितु कृष्णपक्षेऽयनद्वयम्" । "पौषमासस्य रोहिण्यामष्टकायामथापि वा" या०स्मृ० । अत्राय भेदः हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा" आश्व०गृ० उक्तेः समर्थासमर्थभेदेन चतुर्षु मासेषु कृष्णाष्टमीषु एकस्यां वा अष्टका कार्य्येति । आपस्तम्बायनस्य तत्र्ये तिस्रस्वष्टकासु" स्मृतन्तरात्तथात्वम् । अन्वष्टकाशब्दे विवृतमेतत् । अष्टपरिमाणमस्याः कन् । अजादिपाठा० टाप् पितृदैवत्ये इति अस्य प्रायिकत्वात् क्षिपका०नेत्त्वम् । ३ अष्टमीतिथिमात्रे "अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी । ब्रह्माष्टका पौर्णमास्यौ तस्मात्ताः परिवर्ज्जयेत्" मनुः एतद्भिन्नाया स्त्रियामष्टिका अत इत्वम् ।

**अष्टकाङ्ग** पु० अष्टकमङ्गं यस्य । नयपीठे लिका० तानि चाङ्गानि स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि चेत्युक्तानि अङ्गानि

**अष्टाकिक** त्रि० अष्टकाऽस्यस्य व्रीह्या० ठन् । अष्टकायुक्ते अत्र वा इनि अष्टकी । अत्रार्थे त्रि० स्त्रियां ङीप् ।

**अष्टकृत्वस्** अव्य० अष्टन्+क्रियाभ्यावृत्तौ कृत्वसुच् । अष्टधाभ्यावृत्तक्रियायाम् ।

**अष्टकोण** त्रि० अष्टौ कोणा अस्य । १ अष्टकोणयुक्ताकृतौ तन्त्रोक्ते २ यन्त्रभेदे च "बिन्दुत्रिकोणवसुकोणदशारयुग्ममिति" तन्त्रम् "२ कुण्डभेदे अष्टकोणगर्गमान्यामत्यन्तं च भयप्रदम्" हेमा०प्र०स०कुण्डप्र० । [क्रीते ।

**अष्टक्य** त्रि० अष्टकेन क्रीतः गवा० यत् । अष्टसंख्यान्वितेन

**अष्टगव** न० अष्टानां गवां समाहारः योगवि०अच् । गवाष्टके तद्युक्ते शकटे तु अष्टागवमित्येव । "अष्टागवं धर्म्महलमिति" स्मृतिः ।

**अष्टगुण** त्रि० अष्टभिर्गुण्यते गुण—अभ्यासे कर्म्मणि क । अष्टभिर्गुणिते अष्टावृत्ते । "मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्" मनु । "ददावष्टगुणमर्थं तेषां कष्टस्तु केशव" भा०व०प्र० ८२ अध्या० "ततश्चाष्टगुणं पार्थ । प्राप्नुते धर्म्मसुत्तमम्" ८५ अध्या० । अष्टौ गुणा यस्य अष्टविधगुणयुक्ते २ ब्राह्मणे ते च गुणा गौतमेनोक्ता यथा अथाष्टावात्मगुणा दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति । यस्यैते न चत्वारिंशत् संस्काराः न चाष्टावात्मगुणा न स ब्राह्मण" । अष्टावृत्तौ गुणोऽस्य वृत्तौ अष्टशब्दस्य तदावृत्तपरता । ३ अष्टावृत्तगुणके पदार्थे "अन्नादष्टगुणं चूर्णं चूर्णादष्टगुणं पयः । पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् । घृतादष्टगुणं तैलं मर्द्दयेन्न तु खादयेत्" वैद्यकम् ।

**अष्टगृहीत** त्रि० अष्टकृत्वो गृहीत इत्यौ सुजर्थोलुप् । अष्टवारगृहीते "दसमाज्यं मांसं पायसमिति संयूयाष्टगृहीत गृहीत्वा जुहूयात्" गोभि० अष्टगृहीत केवलमेवस्रोतणाष्टवारान् गृहीतम्" स०त० रघुनन्दन ।

**अष्ट(ष्टा)चत्वारिंशत्** स्त्री अष्टाधिका चत्वारिंशत् शा०त० आत्वम् । (आटचल्लिश) १ संख्यायां २ तत्संख्येये च । "अष्टचत्वारिंशत्संस्कारैः संस्कृत" इति मिताक्ष० गौत० । तत्र गौतमेन चत्वारिंशदेव संस्काराः अष्टौ गुणाश्च ब्राह्मण्यहेतवो दर्शिताः चत्वारिंशत् संस्काराः गुणसहिता अष्टचत्वारिंशदित्येके । ते च "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणान्नप्राशनचौडोपनयनम् । चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामिति सप्ताष्टकान्वष्टकापार्व्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था, अग्न्याधेयमग्निहोत्रदर्शपौर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्य्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत् संस्काराः । अथाष्टावात्मगुणा दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति यस्यैते न चत्वारिंशत् संस्कारा नचाष्टावात्मगुणा न स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति । यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति अधिकं संस्कारशब्दे वक्ष्यते" गौ० संहितायां तु चत्वारिंशत्संस्कारैः संस्कृत इत्येव पाठः । मिताक्षराधृत पाठस्तु उक्तरीत्या समर्थितः ।

**अष्टतय** त्रि० अष्टावयवा अस्य अष्टन्+तयप् । अष्टावयवे । "टिड्ढाणजिति" पा०सूत्रे तयपोग्रहणात् स्त्रियां ङीप् ।

अमावस्या च पूर्णिमा पर्व्वाण्येतानि राजेन्द्र ! रवि-संक्रान्तिरेव च" "अष्टम्या बलिदानेन पुत्रनाशो भवेद्", भ्रुवम् पुरा० । "अष्टम्याः शेषदण्डे च नवम्या आद्य एव च । अत्र या क्रियते पूजा विज्ञेया सा महाफला" ति०त०पुरा० । "अपरपक्षाणामष्टम्योष्टकाः" आश्व० ।

**अष्टमकालिक** त्रि० अष्टमः कालः भोजनेऽस्यस्य ठन् । सार्द्धदिनत्रयोपवासानन्तरं चतुर्थदिवसे रात्रौ भोक्तरि-दानप्रस्थभेदे "नक्तं चान्नं समश्नीयाद्दिवा वाऽऽहृत्य यज्ञितः । चतुर्थकालिको वा स्यात् स्याद्वाप्यष्टमकालिकः" मनुः । "मु-निभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिना नित्यम्" इत्युक्तया दिवसे वारद्वयभोजनस्य विधानात् सार्द्धत्रिदिने सप्ताहार-मतोत्र चतुर्थदिवसे रात्रौ भोजने हि तथात्वं भवति ।

**अष्टमङ्गल** न० अष्टगुणितं मङ्गलम् शा०त० । "मृगराजो वृषो नागः कलशो व्यजनं तथा । वैजयन्ती तथा भेरी दीप इत्यष्टमङ्गलम्" इत्युक्तेषु "लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपोराजा तथाष्टम" इत्युक्तेषु च अष्टसु द्रव्येषु व०व० । अत्र कर्म० संज्ञा-त्वात् द्विगुरिति भेदः ।

**अष्टमङ्गलघृत** न० अष्टभिर्द्रव्यैर्मङ्गलार्थं घृतम् । चक्रोदत्तोक्ते घृतभेदे "वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च । शारिवा सैन्धवञ्चैव पिप्पलीघृतमष्टमम् । मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने । दृढस्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान् भवेत् । न पिशाचा न रक्षांसि न भूता न च मातरः । प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम्" ।

**अष्टमभाव** पु० अष्टमोभावः । ज्योतिषोक्ते जन्मलग्नावधिके १ अष्टमस्थाने तन्वादिद्वादशभावमध्ये २ अष्टमे भावे च भावश्च इष्टकालेऽशकलाविकलादिना स्फुटीकृतलग्नादिः । तदा-नयनं यथा "पूर्व्वं न त स्वाहिमरात्रिखण्डं दिवानिशो-रिष्टघटीविहीनम् । दिवानिशोरिष्टघटीषु शुद्धं द्युरात्रि-खण्डं त्वपरं नतं स्यात् । तत्काले सायनार्कस्य भुक्त-भोग्यांशसंगुणात् । स्वोदयात् खाग्निलब्धं यत् भुक्तं भोग्यं रवेस्त्यजेत् । इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयात् । शेष-मम्बरोद्धृत भजमयुतेन तदादिकम् । अशुद्धलभे हीनयुक् तनुर्व्ययमांशकम् । एवं लङ्कोदयैर्भुक्तं भोग्यं शोध्यं पलोत्थतात् । पूर्व्वपश्चान्नतादन्यत् प्राग्वत्खमध्यमं भवेत् । सषड्भे तन्मे जाया, तुर्य्यौ, कर्म्मोनतुर्य्यतः । षष्ठां-शयुक् तनोःसन्धिरग्रे षष्ठांशयोजनात् । त्रयः स सन्धयोभावाः षष्ठांशैकयुक् स्युः । अग्रे त्रयः षड्भयुक्ते ते भावा युक्ताः परेऽपि षट्" । नील०ता० । स्वस्वदेशो-दयमानं देशान्तरयोगादिना आनेयम् लङ्कोदयमानानि तु मेषस्य २७८, वृषस्य २९९, मिथुनस्य ३२३, कर्कटस्य ३२३ सिंहस्य २९९, कन्यायाः २७८, तुलायाः २७८, वृश्चि-कस्य २९९, धनुषः ३२३ मकरस्य ३२३, कुम्भस्य २९९, मीनस्य २७८, पलानि । एतदनुसारेण दशमराशेः उदय-मानं गृहीत्वा दशमभावानयनम् "खेटे भावसमे पूर्णं फलं सन्धिसमे तु खम् । हीनेऽधिके द्विसन्धिभ्यां भावे पूर्व्वा-परे फलम्" नील०ता० । "भुक्तं भोग्यं खेटकालाच्च शुध्येत् लिप्ताभिस्ता स्वोदयाप्तं लवाद्यम् । हीनं युक्तं भास्करे तत्तनुः स्यात् रात्रौ लग्नं भार्द्धयुक्तात् रवेस्तु । खेटे सन्धिद्वयान्तःस्थे फलं तद्भावजं भवेत्" । नील०ता० । "अष्टमस्थाने च चिन्त्यान्याह दीपिकायाम्" "रन्ध्रायुर्म्मृतयोऽष्टमे" इति । ताजके तु अन्यान्यपि चिन्त्यान्याह । "मृत्युं चिरन्तनं द्रव्यं मृतिर्वित्तं रणे रिपुः । दुर्गस्थानं मृतिर्नाशः परीवादो मनोव्यथा" एतानि साधारणानि चिन्त्यानि विशेषतस्तत्र ग्रहयोगादिष्टाद्युक्तं जातके यथा । "आयुः-स्थानाधीश्वरः पापयुक्तः षष्ठान्त्यस्थः स्वल्पमायुस्तनोति । लग्नेशाढ्यश्चेदतिस्वल्पमेव दीर्घायुष्यं चाष्टमस्थः करोति । निधनतनुशभेशाः केन्द्रकोणत्रिलाभे १,३,४,५,७,९, १०,११, दधति हि विपुलायुर्भानुजोऽत्र प्रशस्तः । पणफरचतुरस्रे मध्यमं त्वायुरेते विदधति खलु नेष्टाः प्रान्त्य-षष्ठे बलिष्ठाः । कमलकुमुदबन्धू मृत्युरन्ध्रान्तिमाख्ये विपदमथ धराजो द्विद्विवर्षेऽष्टमस्थः । धनव्ययमथ यच्छेच्छुक्रतुल्ये बुधो-ऽब्दे चितिशुणदशसंख्ये रोगभोगापचारी । अरिष्टोच्छ्वास-निर्याणोच्छ्वासयोरत्र चिन्तनम् । दैवविद्भिः सदा कार्य्यमष्टमे भावचिन्तने" जातकप० वर्षप्रवेशकाले तु अन्यथा योग-विशेषात् फलमुक्तम् यथा "भौमेऽब्दपे क्रूरहते पत्याऽपातेऽव-लोकिते । अग्निभीरग्निभे क्रूरनष्टद्विपदभे क्षतिः । विपत्ति-र्नरपालोत्था रिपुतस्करतोभयम् । तुर्य्ये मातृ पितृव्या-द्या मातुलार्त्तिः क्षतोरुजः । लग्नेन्थिहापतिसमापतयो वलोभाश्चेदित्थशालिन इमे निधनप्रदाः स्युः । चेत् पाक-रिष्टसमये क्षतिरेव तत्र पाकें कुजे मृतभयं दिवसेऽब्दपेवे । सूर्य्ये मृगारिके सितेन जनने वर्षेऽधिकारी तथा केन्द्रे राज गदाङ्गयं च रुगङ्गकृस्थानेऽधिकारीन्दुजे । सौम्ये क्रूरदृग्भा कुजस्य रुगङ्गदोषादि नाथस्थिते दशभे मन्त्रकृतौ विद्वे-षतः इति प्राक्कुयुधे ताडने । भौमस्थानेऽधिकारीन्दौ गुप्तं मृतभयं रुजः । मन्देऽधिकारी खे चोपहते पीड़ाकर

मिश्रसोऽशुभा शुभमिदं स्वपचयन्दृश्योपचारातिभे नेष्टमन्यत् । यावती यावती रेखा ग्रहाणामष्टवर्गके । तावती द्विगुणीकृत्य अष्टाभिः परिशोधयेत् । अष्टोपरि भवेद्रेखा अष्टाभ्यन्तरबिन्दवः' । अष्टाभिस्तु समं यत्र तत्समं परिकीर्त्तितम् । रेखा ग्रहाङ्गुभे देया बिन्दवश्चेतरत्र तु । रेखाबिन्दु समानौ चेत् समफलं विनिश्चयेत् । रेखाधिक्ये शुभं ज्ञेयं तद्वद्बिन्दोरथाशुभम् । श्रीरामन्द्रसया श्रेयोभोगो राजा भवेत्तथा । मलिनोऽथ विपश्चैव दाम्भिकत्वं भवेत्तथा । द्व्यादिरेखा द्व्यादिबिन्दौ फलान्येतान्यनुक्रमात् । रेखायां वत्सरोऽयं शार्द्धसप्तदिनं धने । अष्टवर्गदशायुः स्यात् दिनं चतुर्षु बिन्दुषु" । इत्यष्टवर्गे । "अष्टवर्गशुभे श्रीमान् कर्म कुर्यात्शुभप्रदे । गोचरस्यैकादशाप्तौ तदतामौ च वेधगे । व्रतारम्भे विवाहे च यात्रायां शुभकर्मणि । अविशुद्धाष्टवर्गस्तु समस्ता निष्फला क्रियाः । सतत दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम् । भावफलं प्रथमार्द्धे द्रेष्कणान्यर्द्धभुक्तेषु" ज्यो०त० । अष्टानामकचटतपयशानां वर्गे । ज्योतिषादौ शुभाशुभज्ञापनाय विशेषरूपेण अष्टधा विभक्तेषु १वर्णसमूहभेदेषु यथा स्वरवर्गः १६ । कवर्ग, कादयोमायमाना पञ्चपञ्चात्मकाः कचगादयः५ । यरलवा ४यवर्गः । शषसहा ४शवर्ग इत्येवमष्टौ कल्पिता । तेषां विभागक्रमेण सप्ताभेद । "वर्गवर्णप्रमाणस्तु सस्वरस्ताडितं मिथः । पिण्डसंख्या भवेत्तत्र तथा भागैस्तु कल्पना" केरलम् । "स्वं वर्गं द्विगुणं विधाय परवर्गेणान्वितं सप्तहृत्" इति ज्योति० । तन्त्रोक्ते मन्त्रस्य शुभाशुभज्ञानार्थं अवर्गाद्यनुसारेण २ पक्षिमार्ज्जारादि-ग च । यथा आगमकल्पद्रुमे "इदानीं वर्गचक्रस्य विधानमभिधीयते । मन्त्रस्यानविशोधार्थं नाना ह्याक्षरपूर्वकम् । अष्टौ कोष्ठान् समालिख्य वर्गानष्टौ लिखेत्ततः । पक्षिमार्ज्जारपञ्चास्यश्वान सर्पाखुदन्तिनः । मेष क्रमादकारादि वसुवर्गान्विता इमे । साध्यसाधकयो प्रीतिर्ज्ञातव्या जानत' सदा' । इत्युक्त्वाथमे "वर्णशुद्धिं समासाद्य मन्त्रं दद्याद्गुरूत्तम । अवर्गः पक्षिणो ज्ञेयो मार्ज्जारस्य कवर्गकः । चवर्गश्च तथा सिंहटवर्गश्च कुक्कुर । तवर्गो नाग इत्युक्तो मूषिकश्च पवर्गकः । यवर्गश्च गजो ज्ञेय शवर्गश्चैव मेषकः । पक्षिभुजगयोर्वैरं तथा च गजसिंहयो । मार्ज्जारमूषिकयोश्चैव तथा कुक्कुरमेषयो । भुजङ्गसिंहयो मैत्री मेषमूषिकयोस्तथा । लोकाटम्यश्च विज्ञेय व्यवहारप्रयोगत ' इति तन्त्रसा० । 'ओषधवर्गभेदे काकल्यादिद्विद्विके । अष्टवर्गोऽष्टभिर्द्रव्यैरिति" वैद्यकोक्ते ४र्जीविका यष्टव्ये । "राज्ञामष्टवर्गस्तु यतोऽयमतिदुर्लभ । तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् । मेदाजीवककाकोलीद्धिद्वन्द्वेऽपि चासति । वरीविदार्यश्वगन्धा वाराहीश्च क्रमात् क्षिपेत्" वैद्य० । नीतिवेदिनां सम्मीये ५वर्गभेदे च । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरवलादानं सैन्यानां च निवेशनम् । अष्टवर्गमिमं साधु स्ववृद्ध्यै परिवर्द्धयेत्" नीति' ।

**अष्टविध** न० अष्ट विधा प्रकारा यस्य । शस्त्राद्यष्टप्रकारे कर्मणि तच्च अष्टकर्मशब्दे दर्शितम् । "शुश्रूषा चाष्टविधं कर्म पञ्चवर्गश्च तत्त्वत" मनु ।

सुश्रुतोक्ते विषयविशेषविषये छेद्यादौ अष्टप्रकारे शस्त्रकर्मणि तानि च यथा 'छेद्यभेद्यलेख्यवेध्यैष्याहार्य्यस्राव्यसीव्यरूपाणि । तेषां विषयविशेषा अपि तत्रैव दर्शिता यथा । 'छेद्या भगन्दरग्रन्थि श्लैष्मिकस्तिलकालकः । व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थि मांसगम् । शल्यं जतुमणिर्मांसं संघातो गलशुण्डिका । स्नायुमांसशिराकोथो वल्मीकं शतपोनक ॥ अध्रुषश्चोपदंशश्च मांसकन्द्यधिमांसक । भेद्या विद्रधयोऽन्यत्र सर्वजाद्ग्रन्थयस्त्रय ॥ आदितो ये त्रिसर्पाश्च इद्धय सविदारिका । प्रमेहपिडकाशोफस्तनरोगावमन्थका । कुम्भीकानुशयीनाड्यो वृन्दौ पुष्करिकालजी । प्रायश क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥ तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिण । बस्तिश्चाश्मरीहेतोर्मेदोजा ये च केचन ॥ लेख्याश्चतस्रो रोहिण्य किलासमुपजिह्विका । मेदोजो दन्तवैदर्भो ग्रन्थिवर्त्माधिजिह्विका ॥ अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा । वेध्या शिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ एष्या नाड्य सशल्याश्च व्रणा उन्मार्गिणश्च ये । आहार्य्या शर्कराश्चैव दन्तकर्णमलाश्मरी ॥ शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे । स्राव्या विद्रधय पञ्च भवेयु सर्वजादृते ॥ कुष्ठानि वायु सरुजः शोफो यश्चैकदेशज । पाल्यामया श्लीपदानि विषजुष्टं शोणितम् ॥ अर्बुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये । त्रयस्त्रयश्चोपदंशा स्तनरोगा विदारिका ॥ शौषिरो गलशालूकम् कण्टका कृमिदन्तक । दन्तवेष्टः सोपकुश शीतादो दन्तपुप्पुटः ॥ पित्तास्रकफजाश्चोष्ठा क्षुद्ररोगाश्च भूरिश । सीव्या मेद समुत्थाश्च भिन्ना सुलिखिता गदाः ॥ सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रया । न क्षाराग्निविषैर्जुष्टा न वा मारुत्वा-

हिनः ॥ नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥ पांशुरोमनखादीनि चलमस्थि भवेच्च यत् । अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् । रुजश्च विविधाः कुर्य्युस्तस्मादेतान्विशोधयेत् । ततोव्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥ सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा । शणजक्षौमसूत्राभ्यां स्नाय्वा वालेन वा पुनः । मूर्व्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् । ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥ देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् । आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥ धनुर्वक्रा हिता मर्मफलकोशोदरोपरि । इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः । कार्य्येन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः । नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत् । दूराद्रुजो व्रणौष्ठस्य संनिकृष्टेऽवलम्बनम् । अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् । प्रियङ्ग्वञ्जनयष्ट्याह्वलोध्रचूर्णैः समन्ततः । शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः । ततो व्रणं यथायोगं बद्धाचारिकमादिशेत् । एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम्" ।

**अष्टश्रवण** पु० अष्टौ श्रवणान्यस्य । चतुर्मुखे ब्रह्मणि चतुर्मुखस्य प्रतिमुखं द्विकर्णत्वाच्च तथात्वम् अष्टश्रवआदयोऽप्यत्र ।

**अष्टाकपाल** त्रि० अष्टासु कपालेषु संस्कृत अण् तस्य लुक् । "अष्टन कपाले हविषि" वार्त्ति० आत् । अष्टसु कपालेषु संस्कृते पुरोडाशादौ "आग्नेयोऽष्टाकपाल पुरोडाशो भवति" । "अष्टाकपाला मध्ये पुरोडाशा भवन्ति" इति च शत० ब्रा० ।

**अष्टाक्षर** त्रि० अष्टावक्षराणि यत्र पादे । १अष्टाक्षरयुक्तपादके अनुष्टुब्जातिके वर्णवृत्तभेदे । "अष्टाक्षरा वै गायत्री" श्रुति गायत्र्या षडक्षरचतुष्पादत्वेऽपि अष्टाक्षरत्रिपादकत्वं सर्व्वत्र प्रसिद्धम् । २वक्त्रनामके मात्रावृत्तविशेषे नियमवृत्ते । "पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः । प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् । लोकेऽनुष्टुबिति ख्यातम् तस्याष्टाक्षरता कृता" छन्दोम० ।

**अष्टाङ्ग** पु० अष्टावङ्गानि यस्य । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपे योगशास्त्रोक्ते ।योग विशेषे "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति पात० सू०" । "यमोनियमश्चासनञ्च प्राणायामस्ततः परम् । प्रत्याहारोधारणा च ध्यानं सार्द्धं समाधिना । अष्टाङ्गान्याहुरेतानि योगिनां योगसिद्धये इति" पुरा० । एतेषां लक्षणम् अष्टाङ्गयोगशब्दे वक्ष्यते । "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः" इत्युक्तलक्षणे २प्रणामे "आपः क्षीरं कुशाग्रञ्च दधि सर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः" इत्यष्टद्रव्यघटिते ३पूजोपकरणेऽर्घे, "आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि । रक्तानि करवीराणि तथा वै रक्तचन्दनम् अष्टाङ्ग एष वा अर्घो भानवे परिकीर्त्तितः" काशीख० उक्ते ४अष्टद्रव्यात्मके सूर्य्यार्घे ५शारीफलके च तस्य प्रत्येकपङ्क्तौ अष्टपदरूपाङ्गकत्वात्तथात्वम् । ६शल्याद्यष्टाङ्गके आयुर्वेदे यथा "तद्यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति । अथास्य प्रत्यङ्गलक्षणसमासः । तत्र १शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च ॥ २शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् ॥ ३कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम् ॥ ४भूतविद्या नाम देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम् ॥ ५कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम् ॥ ६अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहृतोपशमनार्थञ्च ॥ ७रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ॥ ८वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थञ्च ॥ एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते" सुश्रुत ॥ कर्म० समाहारे द्विगुः । अष्टसु तत्सदृशेषु न० श०च० ।

**अष्टाङ्गधूप** पु० कर्म्म० "पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी । सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्" इति चक्रदत्तोक्ते ज्वरनाशने धूपभेदे ।

**अष्टाङ्गमैथुन** न० कर्म्म० । "स्मरणं कीर्त्तनं केलिः प्रेक्षणम् गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः" इत्युक्ते स्त्रीणां स्मरणादिषु अष्टसु । यदभावो ब्रह्मचर्य्यम् ।

**अष्टाङ्गयोग** पु० अष्टावङ्गान्यस्य कर्म० । यमनियमाद्यष्टाङ्गे योगे स च अङ्गसहितोऽदर्शित तन्त्रसारे । "ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः । तस्य विघ्नाः षडाख्याता योगविघ्नकरास्तु ये । कामक्रोधलोभमोहमदमात्सर्य्यसंज्ञकाः । योगाङ्गैरेतान्निर्ज्जित्य योगिनो योगमाप्नुयुः । यमनियमावासन प्राणायामस्ततः परम् । प्रत्याहारो धारणाख्यं ध्यानं सार्द्धं समाधिना । योगाङ्गान्याहुरेतानि योगिनो योगसाधने । यमादयस्तु "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम् । क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश । तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम् । सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम् । दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः । आसनानि आसनशब्दे वक्ष्यन्ते । "इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया । धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया । सुषुम्णा मध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः । प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः । भूयोभूयः क्रमात्तस्य व्यत्यासेन समाचरेत् । मात्रावृद्धिक्रमेणैव सम्यग्द्वादश षोडश । जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः । तदपेतं निगर्भञ्च प्राणायामं परं विदुः । क्रमादभ्यस्यतः पुंसो देहे स्वेदोद्गमोऽधमः । मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः । उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते" इन्द्रियाणां विचरतां विषयेषु निरर्गलम् । बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते । अङ्गुष्ठगुल्फजानूरुसीमनी लिङ्गनाभिषु । हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि । भ्रूमध्ये मस्तके मूर्द्ध्नि द्वादशान्ते यथाविधि । धारणं प्राणमरुतो धारणेति निगद्यते । समाहितेन मनसा चैतन्यान्तरवर्त्तिना । आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते । समत्वभावनां नित्यं जीवात्मपरमात्मनोः । समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् । इत्यादि कथितं देवि कामादिरिपुनाशनम्" । पात० सू० तु अन्यथोक्तम् ।

**अष्टाङ्गावलेहिका** स्त्री कर्म० "कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी । श्लक्ष्णचूर्णितमेतत्तु मधुना सह लेहयेत् । एषावलेहिका हन्ति सन्निपातं सुदारुणम् । हिक्काश्वासं च कासञ्च कण्ठरोगं नियच्छति । अर्द्धाङ्गस्य प्रहरणे तथा स्वेदादिकर्म्मणि । विरोधेऽपि मधु त्यक्त्वा कार्या स्यादार्द्रकरसैः" । चक्रदत्तोक्तेऽवलेहभेदे ।

**अष्टादश** त्रि० अष्टादशानां पूरणः डट् स्त्रियां ङीप् अष्टादशसंख्यापूरणे । अष्टौ च दश च अष्टाधिका दश वा अष्टादशन् । १ (आठारो) संख्यायाम् २ तद्युक्तसंख्याते च त्रि० । "विद्या ह्यष्टादशैव तु" विष्णुपु० "अनाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम्" नैष० "अष्टादश पुराणानि कृत्वा सत्यवतीसुतः" भा० आ० प० ।

**अष्टादशधान्य** न० ब० व० कर्म० समाहारे द्विगुः । अष्टादशविधेषु धान्येषु । तानि च यथा । "यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः । माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः । गवेधुकाश्च नीवारा आढक्योऽथ सतीनकाः । चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु हेमा० दा० ख० ब्र० पु० । धान्यानि, व्रीहयः, गवेधुका, कसेरुकाः । नीवाराः आरण्यव्रीहयः सतीनकाः, वर्त्तुलकलायाः । चीनकाः षष्टिकविशेषाः । निष्पावा शिम्बीभेदाः । हेमा० ।

**अष्टादशपरिशिष्ट** स्त्री ब० व० कर्म० समाहारे द्विगुः । यूपादिलक्षणादिषु अष्टादशसु परिशिष्टविद्यासु "परिशिष्टाश्च संख्याता अष्टादश महर्षिणा । यूपलक्षणं छागलक्षणं प्रतिज्ञानुवाकसंख्याचरणव्यूहश्राद्धकल्पशुल्बकानि पार्षदमृग्यजुषमिष्टकापूरणं प्रवराध्यायोक्थशास्त्रं क्रतुसंख्यानिगमा यज्ञपार्श्वं होत्रकम् । प्रसवोत्थानं कूर्म्मलक्षणसंयुतम् । कथिताः परिशिष्टास्तु शास्त्रविद्भिः संख्यया" हेमा० दा० ख० देवीपु० ।

**अष्टादशपुराण** न० ब० व० कर्म्म० संज्ञात्वात् न द्विगुः । ब्राह्मादिषु अष्टादशसु पुराणेषु "ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् । आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमन्तथा । दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा । वाराहं द्वादशं प्रोक्तं स्कान्दञ्चात्र त्रयोदशम् । चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं तथा । मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डमष्टादश तथा" हेमा० दा० ख० वरा० पु० ।

**अष्टादशभुजा** स्त्री अष्टादश भुजा यस्याः । देवीमाहात्म्यस्य द्वितीयचरितदेवतायां महालक्ष्म्यां तन्मूर्त्तिर्ध्यानशब्दे वक्ष्यते ।

**अष्टादशविद्या** स्त्री ब० व० कर्म्म० समाहारे द्विगुः । वेदादिषु अष्टादशसु विद्यासु । "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश । आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चेति ते त्रयः ।

अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु” हेमा०प्र०ख० विष्णुपु०। अङ्गानि अङ्गधर्ष्ये उक्तानि शिक्षादीनि षट् इति अष्टादशसंख्यापूर्त्तिः।

**अष्टादशविवादपद** न०म०व०कर्म०संख्यात्वात् द्विगु। ऋणा-दानादिषु अष्टादशसु विवादस्थानेषु “तानि च मनुनोक्तानि यथा “तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः। सम्भूय च समुत्थानं दत्तस्यानपकर्म च। वेतनस्यैव चादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः। सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके। स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च। स्त्रीपुंधर्मो विभागश्च द्यूत-माह्वय एव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह”।

**अष्टादशस्मृतिकारिन्** पु०ब०व०कर्म०संख्यात्वात् द्विगुः। विष्णु प्रभृतिषु अष्टादशसु स्मृतिकारकेषु “विष्णुः पराशरो दक्षः संवर्त्तव्यासहारिताः। शातातपो वशिष्ठश्च यमापस्तम्ब गौतमाः। देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः। शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः। हेमा० दा०ख०प्रकृतः।

**अष्टादशाङ्ग** पुं न० अष्टादश अङ्गानि यत्र। वैद्यक-प्रसिद्धे पाचनभेदे तत्र वातादिभेदेन भिन्नभिन्नप्रकारं दर्शितं चक्रदत्तेन। “इयमूली शटी श्रृङ्गी पौष्करं कटुरा-ह्वयम्। भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी। अष्टा-दशाङ्ग इत्येष सन्निपातज्वरापहः। कासहृद्ग्रहपार्श्वा-र्त्तिश्वासहिक्कावमीहरः १। भूनिम्बदारुदशमूलमहौषधाब्द-तिक्तेन्द्रबीजधनिकेभकणाकषायः। तन्द्रीप्रलापकसनारु-चिदाहमोहश्वासादियुक्तमखिलं ज्वरमाशु हन्ति २। मुस्त-पर्पटकोशीरदेवदारुमहौषधम्। त्रिफलाधन्वयासश्च नी-लीकम्पिल्लकं त्रिवृत्। किराततिक्तकं पाठाबलाकटुक-रोहिणी। मधूकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते। अष्टादशाङ्गसहितमेतद्धि सन्निपातनुत्। पित्तोत्तरे सन्नि-पाते हितश्चोक्तो मनीषिभिः। मन्यास्तम्भे उरोघाते उरः-पार्श्वशिरोग्रहे” ३। अन्यविधमप्यन्यत्रोक्तं विस्तरात् तदुक्तम्।

**अष्टादशोपचार** पु०म०व०कर्म०संख्यात्वात् द्विगु। तन्त्रो-क्तेषु आसनादिषु अष्टादशसु उपचारेषु यथा “आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। स्नानं वस्त्रोपवीतञ्च भूषणानि च सर्वशः। गन्धपुष्पे तथा धूपदीपावन्नञ्च तर्पणम्। माल्यानुलेपनञ्चैव नमस्कारविसर्जने। अष्टा-दशोपचारैस्तु मन्त्री पूजां समाचरेत्” तन्त्रसारः।

**अष्टादशोपपुराण** न० ब०व० कर्म० संख्यात्वात् द्विगुः। सनत्कुमारादिषु अष्टादशसु उपपुराणेषु “अन्यान्युप पुराणानि मुनिभिः कथितानि तु। आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्। तृतीयं नारदं प्रोक्तं कुमारेण तु भाषितम्। चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्। दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम्। कापिलं मानवं चैव तथैवोशनसेरितम्। ब्रह्माण्डं वारुणं चाथ कालि-काह्वयमेव च। माहेश्वरं तथा साम्बं सौरं सर्व्वार्थस-ञ्चयम्। पराशरोक्तं प्रवरं तथा भागवतद्वयम्। इदमष्टा-दशं प्रोक्तं पुराणं कौर्म्मसंज्ञितम्। चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः”। हेमा०दा०ख०कूर्म्मपु०।

**अष्टादिशाब्दिक** पु० कर्म० संख्यात्वात् द्विगुः। “इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः” इत्युक्तेषु अष्टसु प्रथमप्रवृत्त्याख्य प्रवर्त्तकेषु इन्द्रादिषु।

**अष्टापद** पुंन० ब०व०अष्टौ अष्टौ पदानि पङ्क्तावस्य इत्थौ संख्या शब्दस्य दीर्घाद्यत्वाद्दीर्घकारः आत्त्वम् अर्द्धर्चादि०। १शारीफलके। अष्टसु धातुषु पदं प्रतिष्ठा यस्य। २स्वर्णे। “आव-र्ज्जिताष्टापदकुम्भतोयैः” कुमा०। “अचेष्टाताष्टापदभूमिरेणु” माघ। उपचारात् स्वर्णमयेऽपि “अष्टापदेन बलवान् राजा वज्रधरोपमः” इति हरिवंशः। ३शरभे ४लूतायाञ्च पु०। तयोरष्टपदत्वात्। अष्टं यथा स्यात्तथा पद्यते। ५क्रमौ। अष्टसु दिक्षु आपद्यते ६कीलके। अष्टाभिः सिद्धिभिरापद्यते। आ+पद-अप्। १त०। अणिमाद्यष्टसिद्धियुक्ते ७कैलासे पु०।

**अष्टापाद्य** त्रि० अष्टभिरापद्यते गुण्यते आ+पद—कर्मणि ण्यत्। अष्टभिर्गुणनीये “अष्टापाद्यम् शूद्रस्य स्तेये भवति किल्विषम्” मनुः।

**अष्टाविंशति** स्त्री अष्टाधिका विंशतिः शा०त० आदन्ता-देश। (आटाइस) १संख्याभेदे २तत्संख्यान्विते च। विश-त्यव्दे न समासे तत्रैव “अष्टाविंशाहिनम्” भगु श्रौ०। पूरणे डट्। अष्टाविंश। तत्संख्यापूरणे त्रि० स्त्रियां ङीप्। पूरणे तमप् अष्टाविंशतितम। तत्रैवार्थे त्रि०।

**अष्टाविंशतितत्त्व** न०अष्टविंशतौ स्थानेषु तत्त्वं तत्त्वज्ञानं यत्र। रघुनन्दनभट्टाचार्य्यकृते मलमासादिषु अष्टाविंशतिस्था-नेषु तत्त्वनामके स्मृतिनिबन्धे। तानि च स्थानानि तेन प्रतिज्ञायां दर्शितानि यथा “मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये। प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमीव्रते, दुर्गोत्सवे व्यवहृतावेकादश्यादिनिर्णये। तडागभवनोत्-सर्गे वृषोत्सर्गव्रते मते। प्रतिष्ठायां परीक्षायां ज्योतिषे

प्राप्तवानपि" माघ कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः" मनुः "दिनेदिने स्वं तनुरेधि रेऽधिकम्" नैष० "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" मनुः । "नत्वेवाहं जातु नासमिति" गीता । सन् सन्तौ सन्ति । "सदेव सोम्येदमग्र आसीत्" छा०उ० "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते" मनुः । "नासतो विद्यतेऽभावो नाभावो विद्यते सतः" गीता स्त्रियां ङीप् "सती सती योगविसृष्टदेहा" कुमा० "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी हरिः वि+व्यति+व्यतिहारे परस्परमेकरूपेण स्थितौ "अन्यो व्यतिस्ते तु ममापि धर्म्मः" भट्टिः ।

**अस** क्षेपे दिवा०पर०सक०सेट् । अस्यति अस्येत् अस्यतु आस्यत् आस्थत् आस । असिता-अस्ता असिष्यति । अस्यन् अस्यमानः अस्तः । असितुम्—अस्तुम् । असित्वा-अस्त्वा अभ्यस्य, निरस्य "आरे अस्मद्दैव्य हेलो अस्यतु" । ऋ०१,११४,४, "दस्मे हेतिमस्यार्य्यम्" ऋ०१,१०३,२, अति-अतिदूरक्षेपणे "बहुभिश्चैकमत्यस्यन्नेकेन च बहून् जनान्" भा०व्यत्यस्त० पा०। वि+अति । वैपरीत्येन स्थापने "व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः" मनुः "व्यस्ता-सम्बन्धयोगतः" स्मृतिः अधि-आरोपे आरोपश्च अतस्मिन् तद्बुद्धिः अन्योपरिस्थापनञ्च आद्यार्थे "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" "आह कोऽयमध्यासो नाम" उच्यते स्मृतिरूपः परत्र पूर्व्वदृष्टावभासः" शा०भा०। अनु-पश्चात् सह वा क्षेपणे अन्वस्तः । "कुङ्कुमेनास्ता मस्तकेनान्वस्ता भवति" शत०ब्रा०। अप-दूरीकरणे "गतिरपास्तसंस्था मतिः" मालतीमा० "किमित्यपास्याभरणानि यौवने" कुमा०। अभि-अभ्यावृत्तौ, "अभ्यस्यन्ति तटाघात निर्जितैरावता गजाः" कुमा० "अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते" गीता । "शैशवेऽभ्यस्तविद्यानाम्" रघुः । अव-अवक्षेपे "तासवास्यतो गच्छति च स्वजनम्" शत०ब्रा० समन्तात् क्षेपे "तामवास्यत्यागच्छति सुटम्" शत० ब्रा० उद्-ऊर्द्ध्वोत्क्षेपणे "पुच्छमुदस्यति" सि०कौ०। परि+उद् भिन्नतया बोधने । "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" मीमां० यथा श्राद्धादौ पर्य्युदस्तकालोरात्र्यादिः "अमावास्यायां पितृभ्यो दद्यात्" "रात्रौ श्राद्धं न कुर्वीत" इत्युभयोरेकवाक्यतया रात्रीतरामावास्यायां श्राद्धं कुर्वीतेति हि बोधः तत्र रात्रिः पर्य्युदस्ता एवमन्यत्रापि।परित्यागे च "अन्याः सर्व्वे पर्य्युदस्ता महर्षिभिर्निवेशने" भा०स०प०। वि+उद्—निवारणे । "चौराणीव व्युदस्तानि देशस्तत्र महावने" "रामा०स्यन्दहेतुनतोऽध्येतान् कामक्रोधौ व्युदस्य च" । भा०स०प० । उप-समीपस्थापने "तस्याधस्तादुदञ्चहिरुपास्यति चमसेषु" कात्या०१०,५, नि-अर्पणे "न मद्विधे न्यस्यति भारमग्र्यम्" । निक्षेपरूपेणार्पणे च "न्यासीकृता स्थानविदा हरेण" कुमा० "राज्यं न्यासमिवाभुनक्" रघु । उच्चारणपूर्व्वकं तत्र तत्र स्थाने अर्पणीयतया ध्याने च । "मातृकाद्यादिकन्यास करशुद्धिस्ततः परम् । अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च" तन्त्रम् । उप+नि+वाचारम्भणे "उपन्यासस्तु वाङ्मुखम्" अमर । प्रथमप्रयोगे च "भूतमप्युपन्यस्तं पूर्व्वमावेदितं न चेत् । हीयते व्यवहारेण" स्मृतिः "स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः" किरा० सम्+नि त्यागे "क्रीडारसं देवसदोऽस्य मन्ये संन्यस्तदेहः स्वयमेव कामः" कुमा० विहितकर्म्मणां विधानेन त्यागे च "एवमनेन सकलं धर्म्मनुतिष्ठन् समाहितः । वेदान्तं विधिवच्छ्रुत्वा सन्न्यस्येदनृणो द्विजः" मनु । "न हि संन्यसनादेव सिद्धिं समधिगच्छति" "मयि संन्यस्य कर्म्माणि" गीता । निस्—निर्-निष्ठीवने दूरीकरणे च । निरस्यति "निष्ठीवति निर्ष्ठिवु निरसने" पा०धातुपा० "निरस्त परायत्तु तद्यान्निरसने भवद्देव "निरस्तगाम्भीर्य्यमपास्तधैर्य्यम्" माघः "निरास भृङ्ग कुपितेव पद्मिनी" भट्टि "क्वणदुन्निद्रनूपुरा निरासे" किरा०। त्वरितोच्चारणे च "निरस्तं त्वरितोदितम्" अमरः ।

परा-निराकरणे "एतेन सञ्जनकारसतमपि परास्तम्" चिन्ता०

परि-परावर्त्तनेन स्थापने "भुजेन पर्य्यस्तविलोचनेन" कुमा०। "पर्य्यस्यन्निव विषयः सहस्रसंख्याम्" किरा०। अर्पणे च "ताम्रोष्ठपर्य्यस्तरुचः स्मितस्य" कुमा०। वि-परि-वैपरीत्ये, परिवर्त्तने भ्रान्तिज्ञाने च "इतरथा पात्रे विपर्य्यस्येत्" शत०ब्रा०। "संशयविपर्य्यासनिवारणेनेति" चिन्ता० "विपर्य्यासितदर्शनैः" मौद्गला० ।

प्र-प्रक्षेपे "अप्सु प्रास्य विनश्यामि रक्षोताम्यानि मन्त्रवत्" मनु "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" गीता ।

अनु-प्र-आनुलोम्येन अनुगततया एकरूपेण निवेशने अनुप्रासः

प्रति-प्रतिरूपक्षेपणे । "तद्यथाऽहिर्निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत" शत० ब्रा० ।

वि-विशेषरूपेण सम्यगवबोधनाय निवेशने व्यासः विग्रहवाक्यम् तस्य समस्तवाक्यार्थस्य विशेषेणावबोधहेतुतया निवेशनात्

तथात्वम् विभागे "विव्यास वेदान् यस्मात् स तस्मात् व्यास इति स्मृतः" भा०आ०प०। पाराशर्य्येति व्यस्त समस्त विपरीतम्" सि०कौ०। व्यस्तः "व्यस्तरात्रिन्दिवस्य ते" कुमा० पृथक्करणे एवैकत्र प्रयोगे व्यस्तः "व्यस्तसमस्तमहाव्याहृतिहोमं भवदेव। निरासे च "व्यस्यन्तु-द्यौ गिरिर्न पयोभिः" भट्टि। विक्षेपे "व्यस्ताकाराङ्गयादव" भा०।

वि—नि—अर्पणे। 'विष्णोर्वक्षसि विन्यस्तकौस्तुभमणिसिद्धान्तमुक्तावली विन्यस्ता" सि०मु० "विभागविन्यस्तमहार्घरत्नम्" भट्टि।

सम्—सङ्क्षेपे "समासेन निबोधत" पुरा०समस्या। सङ्क्षिप्यन्यसने यथा पीतम् अम्बरमिति समुदायस्य पीताम्बर इति सङ्क्षेपेण प्रयोगः समास। "सर्व्वोऽप्येकदेशोऽङ्गी सह समस्यते" वार्त्ति०। "समस्यमानपदार्थातिरिक्तपदार्थबोधकत्वं बहुव्रीहित्वमिति सारमञ्जरी। "समासं पण्डितो बुधैः" हरि साकल्ये च समस्तम् "ज्ञानमस्ति समस्तस्य देवीमा० "व्यस्तसमस्त महाव्याहृति होमे विनि०" भवदे० संयोजने च समस्य सम्पादयत गुणैरिमाम्" किरा०।

असंयत त्रि० न०त०। बन्धनशून्ये "असंयतोऽपि मोक्षार्थी" काद०। असंयतः अयत्नः अकारे विष्णौ भक्तथ।

असंयुक्त त्रि० विरोधे न०त०। १वियुक्ते। २अङ्कनवर्णा-मिश्रिते व्यञ्जनस्य ३द्रव्यान्तरैरसंसृष्टे च।

असंयुत त्रि० न०त०। संयुतभिन्ने "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्" पा० शिक्षा।

असंयोग पु० अभावे न०त०। १संयोगाभावे न०ब०। २संयोगशून्ये त्रि०। संयोग क्रियाजन्यः द्रव्याश्रयगुणविशेष इलुवर्णयोरवाऽव्यवधानञ्च। "असंयोगोपधात्" पा०।

असंलग्न त्रि० न०त०। १सम्बन्धभिन्ने विभक्ते २असंबद्धे च।

असंवृत त्रि० न संवृतः। १अनावृते "नासंवृतमुखः कुर्य्यात् क्षुत जिह्मां तथैव च" स्मृतिः "संवृतं शरणम् न०७ब०। अत्यन्तावरके २नरकभेदे न० "योऽस्य धर्म्मानाचष्टे यश्चोपदिशति व्रतम्। सोऽसंवृतं नाम तम सह तेनैव गच्छति" मनु।

असंशय पु० अभावे न०त०। १सन्देहाभावे न०ब०। २सन्देहशून्ये "असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः" शकु०सन्देहश्च एकस्मिन् धर्म्मिणि विरुद्धकोटिद्वयज्ञानम् यथा पर्व्वतो वह्निमान्नवा इत्यतदभावरूपविरुद्धकोटिद्वयमेकस्मिन् पर्व्वते धर्म्मिणि ज्ञायते "स्थाणुः

पुरुषो वेत्याद्य अवस्थानुभवस्य पुरुषत्वस्यावच्छेदकत्वेन गृहीतधर्म्मं कालेन निवृत्तत्वाद्ज्ञानमिति वेद्यः ३निश्चये च

असंश्रव त्रि० नास्ति संश्रवः सम्यक् श्रवणं यत्र। सम्यक्-श्रवणायोग्ये दूरदेशादौ। "असंश्रवे चैव गुरोर्न किञ्चि-दपि कीर्त्तयेत्" मनुः।

असंश्लिष्ट त्रि० न०त०। संश्लेषशून्ये १विभक्ते २असङ्गते च।

असंसर्ग पु० अभावे न०त०। १संसर्गाभावे। न०ब०। २संसर्गशून्ये निःसम्बन्धे।

असंसर्गाग्रह पु० असंसर्गस्य परस्परसम्बन्धाभावस्याग्रहः। मीमांसकोक्तस्य इदमिति रजतमित्यादि ज्ञानद्वयस्यापि प्रवृत्तिजनकताप्रयोजके परस्परसम्बन्धाभावस्याबोधे। विस्तरः व्यतत्ख्यातिशब्दे असत्ख्यातिनिरूपणे ५१२पृष्ठे दृश्यः।

असंसृष्ट त्रि० न० त०। १संसर्गरहिते। संसर्गश्च द्रव्ययोः सम्बन्धः धनिनोरेकत्र द्रव्ये विभागानन्तरं सहदायकालिकसम्पादनञ्च "विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते" बृह० उक्ते। संसृष्टं द्रव्यमस्यास्ति अर्शा०अच् संसृष्ट। इति संसृष्टी च विभागानन्तरमेकत्र द्रव्ये ऽन्येन सह सम्बन्धवान् तद्भिन्नः असंसृष्ट असंसृष्टी च "अन्योदर्य्यस्तु संसृष्टी-नान्योदर्य्यधनं हरेत् असंसृष्ट्यपि चादद्यात् संसृष्टोनान्यमातृज" या०स्मृ०। "तथाविभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं प्रगृह्णातीति" मिता०।

असंस्कृत त्रि० सम्+कृ-क्त सुट् न०त०। १गुणान्तराधानरहिते २अपरिष्कृते ३गर्भाधानादिसंस्काररहिते, च। असंस्कृत मृतो ब्राह्मणो नामरो वेदपारगः" स्मृतिः "असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः" या०स्मृ०। व्याकरणसंस्कारशून्ये ४अपशब्दे पु० "संस्कारोहि यतो गुणान्तराधानम् तच्च लौकिकालौकिकभेदेन। तत्र यथा गर्भाधानादिना अलौकिकेन चेतना देहः संस्क्रियते तत् संस्कारात् तदभिमानी देही। एवं स्नानाचमनादिनाऽपि। लौकिकेन तु पाकादिना द्रव्यान्तरयोगेन वा वस्त्रादौ गुणान्तरमाधीयते अतएव असंस्कृतं भक्ष्याः इति पा० अलम्भव्यस्य दध्याद्युपसेकेन संस्कार उक्त। भराबे असंस्कृतः माषान् सक्तु दधि संस्कृत दाधिकः सक्तुः" सि०कौ०।

असंस्तुत त्रि० न०त०। १अपरिचिते। "प्रेयानयमसंस्तुत इव परित्यक्तः" काद०। २असमस्तुते च।

असंस्थित त्रि० न०त०। १असमेते परलोकं प्रति असमस्थिते "असंस्थितान् भावान् संस्थापयेत्" शत०ब्रा०२असंस्थिते

कारित्वम् प्रसङ्गत्वन्तु सङ्गतित्वे सत्युपोद्घातादिभिन्नत्वम् "स्मृतस्य उपेक्षानर्हत्वं प्रसङ्गः" इति मतान्तरेऽपि स्मृतत्वम-नन्तराभिधानप्रयोजकस्मृतिविषयत्वम् उपेक्षानर्हत्वञ्च प्रसङ्ग-लक्षणोपेक्षा एव उपोद्घातादयस्तदन्यत्व तेन ततोऽपि प्रागुक्तस्यैवार्थस्य लाभ" इति न्यायमतम्। वेदान्तिमते तु सङ्गतिस्त्रिविधा "शास्त्रेऽध्याये तथा पादे न्यायसङ्गति-स्त्रिधा। शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम्"। शास्त्रप्रतिपाद्यमध्यायप्रतिपाद्यं पादप्रतिपाद्यमर्थमवगम्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्च तिस्रः सङ्गतय ऊहितुं शक्यन्ते इति तदर्थः। तत्र "शास्त्रं ब्रह्मविचा-राख्यमध्यायाः स्युश्चतुर्विधाः। समन्वयाविरोधौ द्वौ साधनं च फलं तथा" ब्रह्मविचाराख्यशास्त्रस्य प्रथमेना-ध्यायेन समन्वयः, (सर्व्वेषां वेदान्तानां ब्रह्मणि तात्-पर्य्यावधारणम्) प्रतिपाद्यते। द्वितीयेन अविरोधः। तृतीयेन साधनम् चतुर्थेन फलम्। इत्येवमध्यायानां एवमेषां प्रतिपाद्यमुक्त्वा षोडशपादप्रतिपाद्यानर्थानभि-धाय। "ऊहिता सङ्गतीस्तिस्रो यावावान्तरसङ्गतीः तत्र आक्षेपदृष्टान्तप्रत्युदाहरणाद्याः। पूर्व्वपक्षस्य सिद्धान्त युक्तिं वीक्ष्य परे नये। पूर्व्वपक्षोक्तयुक्तिं च तत्राक्षेपादि योजयेत्" इति वेदा०न्या०मा० अवान्तरसङ्गतिलक्षणे कथा। आक्षेपसङ्गतिर्दृष्टान्तसङ्गतिः प्रत्युदाहरणसङ्गतिरित्ये-वमादि। उदाहृतञ्च तत्रैव तद्यथा प्रथमाधि-करणे ब्रह्मविचारशास्त्रमारम्भणीयमिति सिद्धान्तः। तत्र युक्तिः ब्रह्मणः संदिग्धत्वमिति। द्वितीयाधि-करणस्य जगज्जन्मादि ब्रह्मलक्षणं न भवतीति पूर्व्वपक्ष तत्र युक्तिः जन्मादेर्जगन्निष्ठत्वादि। तदु-भयमवलोक्य तयोराक्षेपसंगतिं योजयेत्। सन्दिग्धत्वा-द्ब्रह्म विचार्य्यमित्ययुक्तं जन्मादेरन्यनिष्ठत्वेन ब्रह्म-लक्षणत्वाभावे सति ब्रह्मैव नास्ति कुतस्तस्य सन्दि-ग्धत्वं विचार्य्यत्व चेत्याक्षेपसंगतिः। दृष्टान्तप्रत्युदा-हरणसङ्गती अपि योजयितुं शक्येते। यथा संदिग्धत्व हेतुना ब्रह्मणो विचार्य्यत्व तथा जन्माद्यन्यनिष्ठत्व हेतुना ब्रह्मणो लक्षणं नास्तीति दृष्टान्तसंगतिः। यथा विचार्य्यत्वे हेतुरस्ति न तथा लक्षणसद्भावहेतुं प-श्याम इति प्रत्युदाहरणसंगतिः। एते दृष्टान्तप्रत्यु-दाहरणसंगती सर्व्वत्र सुलभे पूर्व्वाधिकरणसिद्धान्त द्वयोत्तराधिकरणपूर्व्वपक्षे हेतुमत्त्वसाम्यस्योत्तराधिकरण-सिद्धान्ते हेतुसद्भावासद्भावलक्षणवैषम्यस्य च मन्दैरप्युत्प्रेक्षितुं शक्यत्वात्। आक्षेपसंगतिर्यथायोगमुन्नेया। प्रासङ्गिकसंगति रुदीयते। देवताधिकरणस्याधिकारविचाररूपत्वात्समन्व-याध्याये नैव ब्रह्मवाक्यविमर्शे तृतीयपादे च संगत्यभावेऽपि युक्त्यावान्तरसङ्गतिरस्ति। तथाहि पूर्व्वाधिकरणे-ऽङ्गुष्ठमात्रवाक्यस्य ब्रह्मपरत्वादङ्गुष्ठमात्रत्व ब्रह्मणो मनुष्यमात्रहृदयापेक्षं मनुष्याधिकारत्वाच्छास्त्रस्येति उक्तम् तत्प्रसङ्गेन देवताधिकरण युक्तित्वम् सैव प्रासङ्गिकी संगतिः। तदेवं न्यायस्य सङ्गतिर्व्युत्पादिता"। एवं मीमांसासङ्गतिरपि अधिकरणमालायां दृष्टा विस्तरभयान्नोक्ता ईदृशकृत्स्नभा-वोऽसङ्गतिः। २असम्बन्धमात्रे ३अर्थालङ्कारभेदे च अल-ङ्कारशब्दे ३८४ पृष्ठे दृश्यः। [२तच्छून्ये त्रि०।

असङ्गम पु० अभावे न०त०। १सङ्गाभावे मेलनाभावे न०त०

असङ्गिन् त्रि० सन्ज-णिनुण् न०त०। सम्बन्धशून्ये "संस-र्गासङ्गिसम्यग्धीहेतुता या गिरामियम्" वे० परि०।

असच्छास्त्र न० असत् असदिष्टकत्वे नानिष्टप्रयोजकम् शास्त्रम्। बौद्धागमे। तस्यासदर्थप्रतिपादकत्वात् वैदिकधर्म्मविरु-द्धार्थकत्वाच्च तथात्वम्। "असच्छास्त्रप्रतिष्ठं ते जगदाडम्बरो-त्करमित्यादिना तेषामीश्वरानङ्गीकारेण चासत्त्वं ज्ञेयम्"।

असज्जन पु० विरोधे न०त०। सज्जनभिन्ने दुर्जने "न मामसज्जनेनार्य्यो समानयितुमर्हसि" रामा०।

असञ्ज्ञा स्त्री अभावे न०त०। १संज्ञाभावे न०ब०। २संज्ञा-शून्ये त्रि०। संज्ञा च ज्ञान नाम ईङ्गितादिज्ञापनञ्च तेषामभावः। "तेभ्योऽसञ्ज्ञां चकार" शत०ब्रा०।

असत् त्रि० अस+शतृ न०त०। १सद्भिन्ने, निरुपाख्ये निःस्व-रूपे निषेधरूपेण प्रतीयमाने, २अभावत्वाश्रये, "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थे"ति गीतोक्ते अश्रद्धया कृते ३होमादौ च। ४इन्द्रे पु०। ५दुरा-चारिणि असाधौ त्रि० "न च सत् नासदुच्यते" गीता। स्त्रियां ङीप् सा च ६कुट्टनायाम्। "परितसार रवेरसतीवसम्" माघः। नामरूपाभ्यामव्याकृते कारणात्मनास्थिते सूक्ष्म-रूपे ईश्वरशक्तौ, च "असदेवेदमग्र आसीत्" तथासतः सज्जा-येत" च इति छा०उप०। बौद्धागमसिद्धं शून्यमर्थक्रिया-कारित्वम् तच्छून्ये उत्पत्तिविनाशवदभावादौ तदविद्यमाने "नासतो विद्यते भावः" इति वत्तत् तदपतोः परमिति च" गीता "विभेदजनकाज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यति" वंचे०मा०।

असत्कर्म्मन् न० कर्म्म०। १वेदादिशास्त्रनिषिद्धे दुष्कर्म्मणि न सत् कर्म्म यस्य। २शास्त्राचारशून्ये त्रि०स्त्रियां ङाप्

मनुष्यव्यवहारविषयस्य चक्षुरगृहीतरजतादेर्व्याप्त्यादि ज्ञानाविषयत्वप्रसङ्गात् । नापि फलेऽन्यथात्वम् फलस्य स्फुरणस्य भ्रान्तौ सम्यग्ज्ञाने वा स्वरूपतो वैषम्यादर्शनात् । वस्तुन्यपि कथमन्यथात्वं किं शुक्तिकाया रजततादात्म्यं किंवा रजताकारेण परिणामः । आद्येऽपि किं शुक्तिरजतयोरत्यन्तभेदः किंवा भेदाभेदौ । नाद्यः । अत्यन्तभिन्नयोर्वास्तवतादात्म्यासम्भवात् अनिर्वचनीयस्य त्वया अनभ्युपगमात् अन्यतादात्म्यप्रतीतौ च गुणगुण्यादावपि तत्सम्भवेन भ्रान्तित्वं दुर्वारम् । समवायस्य च प्रक्रियामात्रसिद्धस्य तादात्म्यानतिरेकात् । भेदाभेदपक्षे तु खण्डो गौरितिवदभ्रान्तिः स्यात् । परिणामपक्षेऽपि बाधो न स्यात् । विमतं रजतज्ञानमबाध्यं परिणामज्ञानत्वात् क्षीरपरिणामदुग्धज्ञानवत् । अतः क्षीरवदेव शुक्तिर्न पुनर्बाध्येत । ननु कमलमुकुलविकासरूपपरिणामहेतोः सूर्य्यतेजसोऽपगमे पुनर्मुकुलीभाववद्रजतपरिणामहेतोर्दोषस्यापगमे पुनः शुक्तिभावोऽस्तु इति चेत् नैवं विकसितमेव मुकुलमासीदितिवत् रजतमेव शुक्तिरासीदिति प्रतीत्यभावात् कथञ्चित् तद्भावेऽपि न परिणामपक्षो युक्तः निर्दोषस्यापि रजतप्रतीतिप्रसङ्गात् नचैकमेव क्षीरं दधिरूपेण कञ्चित् पुरुषं प्रति परिणतमन्यं प्रति नेति अतएवं तदात्मान्यथाख्यातिः सुनिरूपा । ज्ञानलक्षणया देशान्तरगतरजतमानन्तु साक्षात्करोमीति साक्षात्कारोल्लेखविरोधान्यथानुपपत्त्या न सम्भवतीति द्रष्टव्यम् । किञ्च ज्ञानस्याकाराः प्रत्यक्षसिद्धत्वे तथैव पर्य्यन्ते वहिर्ज्ञानसम्भवेनानुमानादेरुच्छेदः स्यात् अनुव्यवसायाकल्पनकल्पने तु प्रकृतेऽपि साक्षात्कारानुव्यवसायसत्त्वेन समत्वात् । आत्मख्यातिरिति बौद्धाः । तथाहि सर्व्वासां बुद्धीनां विषयमन्तरेणापि तदाकारोल्लेखसम्भवेन रजतज्ञानमपि बुद्धिरूपतया न विषयान्तरमपेक्षते इत्यात्मनः बुद्धेरेव ख्यातिः प्रतिभासः “सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये । अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते” इति तेषां सिद्धान्तात् । तथाच विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगं विनाऽप्यपरोक्षत्वात् सम्मतबुद्धिवत् इत्यनुमानेन रजतादेस्तद्रूपतासिद्धिः । ते हि मन्यन्ते यत्क्रमेण रूपरसगन्धविषया सुखादिविषयाश्च षडपि प्रत्ययाः आलयविज्ञानसमनन्तरसहकार्य्यधिपतिरूपान् प्रत्ययपदवाच्यान् चतुरो हेतूनपेक्ष्यैव उत्पद्यन्ते तत्र नीलावभासरूपस्य चित्तरूपज्ञानस्य नीलालम्बनतो नीलाकारता भवति । समनन्तरप्रत्ययात् पूर्व्वतनज्ञानवासनारूपात् बोधरूपता, सहकारिप्रत्ययादालोकात् स्पष्टतावभासः । चक्षुरादेरधिपतिप्रत्ययात् विषयप्रतिनियम इति । तदेतदुच्यते प्रकृते न तावत् सहकारिप्रत्ययाख्यादालोकात् रजताकारोदयो भवति तस्य स्पष्टतामात्रहेतुत्वात् । नाप्यधिपतिप्रत्ययाख्याच्चक्षुरादेः सम्भवति तस्य विषयविशेषं प्रत्येव नियमनमात्रहेतुत्वात् । नापि समनन्तरप्रत्ययाख्यात् पूर्व्वज्ञानात् । विजातीयघटादिज्ञानानन्तरं विजातीयरजतभ्रमोदयप्रसङ्गात्, नाप्यालम्बनप्रत्ययाख्याद्बाह्यार्थात् भवति विज्ञानवादिभिस्तस्यानङ्गीकारात् । ततश्च रजतादिबाह्यार्थासत्त्वे विज्ञानस्य कथं रजताकारतासमर्पणम् । संस्कारसामर्थ्येन तत्कल्पनेऽपि न निस्तारः संस्कारस्य क्षणिकस्थायित्वविकल्पासहत्वात् । तथाहि स्थायित्वे सिद्धान्तहानिः । क्षणिकत्वे पूर्व्वानुभवोत्तरमुत्पन्नस्य तस्य द्वितीयक्षणे नाशात् रजताकारोल्लेखसमये तस्यासत्त्वात् कथं तेन तदाकारोल्लेखः सम्भवति । किञ्च संस्कारस्य विज्ञानातिरिक्तत्वे क्षणिकविज्ञानमात्रसिद्धान्तहानिः । अथानादिज्ञानसन्ततौ यदा कदाचित् पूर्व्वं रजतज्ञानमुत्पन्नं तदेव संस्काररूपत्वङ्गीक्रियते स च यद्यपि विजातीयानेकज्ञानव्यवहितः तथापि कदाचित् सजातीयं ज्ञानान्तरमुत्पादयत्येव यथा व्रीहिबीजमनेकाङ्कुरादिकार्य्यव्यवधानेऽपि कदाचित् सजातीयान्तरमुत्पादयति तद्वत् । अथ न पूर्व्वबीजादुत्तरबीजोत्पत्तिः किन्तु पूर्व्वबीजजन्याङ्कुरसन्तानादेव तदुत्पत्तिरिति चेत् तर्ह्यत्रापि पूर्व्वरजतज्ञानजन्यज्ञानसन्तानएव संस्कारोऽस्तु अतो न सिद्धान्तहानिः । एवं पूर्व्वरजतज्ञानमपि तत्पूर्व्वतररजतज्ञानादुत्पद्यते ततोऽनादिवासनाप्रापितं रजतं बुद्धिरूपमेव सत् भ्रान्त्या बहिर्वदवभासते इति चेत् उच्यते वेदान्तिभिः, किं तद्रजतमलौकिकं लौकिकं वा अलौकिकत्वेऽपि किं जन्मरहितम् उत लौकिकरजतवदेव जायते । अलौकिकत्वे जन्मरहितत्वे च जायमानस्य ज्ञानस्य रूपं न स्यात् । द्वितीयेऽपि किं बाह्यार्थात् जायते, उत ज्ञानात् नाद्यः तैर्बाह्यार्थानङ्गीकारात् ज्ञानादेव तदुत्पादाभ्युपगमे दृष्टकारणजन्यज्ञानादुत्पादो वाच्यः तथा च जनकस्य पूर्व्वसत्त्वनियमेन तज्जनिका प्रतीतिः न रजतं गृह्णीयात् वर्त्तमानपदार्थस्यैवाकारार्पकत्वनियमात् क्षणिकयोर्जन्यजनकयोर्भिन्नकालीनत्वेन रजतस्यापरोक्षकाले पूर्व्वज्ञानस्यासत्त्वात्

तेन प्रतीतमप्रत्यक्षत्वात् अतो रजतापरोक्ष्यव्यवहारो विलुप्तः स्यात्। यदि अन्येन केनचित् दुष्टकरणजन्यज्ञानेन तदुत्पादस्ततः ख्यातमनुभवा तदुपपत्तिः स्यादित्यङ्गीक्रियते तदाऽतिप्रसङ्गः किञ्च दुष्टकरणजन्यज्ञानस्यैव तदुत्पादकत्वे वाच्ये तत्र करणस्य दुष्टत्वञ्च अर्थक्रियाकारिताशून्यनि-मयप्राप्तित्वेनैव तथा च असति रजते कथं करणस्य दुष्टत्व निर्णय। अथ अदुष्टकरणजन्यज्ञानं तदुत्पादयति तदा तस्य घटादिवत् अर्थक्रियाकारित्वरूपसत्त्वसम्भवेन देशान्तरवर्त्ति-रजतविषयकादविशेषः स्यात्। किञ्च रजतस्यानुत्पत्तौ न तस्य ज्ञानविषयता ज्ञानाकारार्पकतयैव विषयत्वस्य त्वया स्वीकारात् अनुत्पन्नस्य कथं ज्ञाने स्वाकारार्पकत्वसम्भवः। तस्मादात्मख्यातिपक्षे रजतमेव ज्ञानेन न प्रतीयेत।

एवमख्यात्यन्यथाख्यात्यात्मख्यातिपक्षेषु निरस्तेषु इदानीम-सत्ख्यातिपक्षं वेदान्तिभिरभ्युपगतं आक्षेपपूर्ब्बकं प्रदर्श्यते इदं रजतमिति ज्ञानं स्मृतिग्रहणाभ्यामन्यत् अध्यास-नामकं ज्ञानं यत्र असतोऽनिर्वचनीयस्य उत्पन्नस्य रजता-देर्भानमीदृशं ज्ञानमसत्ख्यातिपदवेदनीयमस्ति। ननु ज्ञानस्य स्मृतिग्रहणाभ्यामन्यः प्रकारो न सम्भवति इति चेन्न किं विलक्षणसामग्र्यनिरूपणात् तदसम्भवः? उत विलक्षणज्ञानस्वरूपानिरूपणात्? उत विलक्षणविषया-निरूपणात्? नाद्यः संप्रयोगसंस्कारदोषाणामेव तत्-सामग्रीतया कल्पनात् न च दोषस्य पूर्ब्बमप्राप्तकार्य्यानुदयं प्रत्येव हेतुत्वं न पूर्ब्बकार्य्योदयं प्रतीति वाच्यं कार्य्यानुद-यस्य तत्प्रागभावरूपतयाऽनादित्वेन तत्र दोषहेतुत्वासम्भ-वात्। वातपित्तश्लेष्मणाञ्चापूर्ब्बकार्य्योत्पादकत्वदर्शनाच्च न च दोषस्य संस्कारोद्बोधकत्वेनान्यथासिद्धिः तदुद्बो-धस्य तद्व्यापारत्वात् न हि व्यापारेण व्यापारिणोऽ-न्यथासिद्धिरिति नियमात् मृदुरुद्यमननिपतने कुर्व्वन् कुठारः छिदिक्रियां प्रति अहेतुर्भवति। ननु इन्द्रिय सम्प्रयोगस्य इदन्तामात्रे सत्त्वात् रजतांशेऽसत्त्वात् इदन्ता-बोधनेन तस्योपक्षीणत्वात् एवं संस्कारस्य स्मृतिमात्र-जनकत्वनियमेन वेदान्तिमते अध्यासात्मकज्ञानस्य स्मृति-त्वानङ्गीकारात्, दोषस्य च स्वातन्त्र्येण ज्ञानहेतुत्वस्य अप्रमाण्य-दर्शनाच्च कथं रजतावभास इति चेत् उच्यते प्रथमं दोष-सहितेनेन्द्रियेण इदन्तामात्रविषयाऽन्तःकरणवृत्तिर्जन्यते तत्र इदन्तायां तद्वृत्त्यवच्छिन्ने च चैतन्यमभिव्यज्यते तच्चैतन्यनिष्ठा शुक्त्यविद्या च दोषवशात् क्षुब्धा भवति तत्रेदमंशावच्छिन्नचैतन्यस्थाऽविद्या दोषेण क्षुभिता सती सादृश्यात् उद्बोधितसंस्कारवशात् रजताकारेण विवर्त्तते। इदमंशावच्छिन्नचैतन्यस्थाऽविद्या तु रजतप्राप्तिसहितसंस्कार सहकृता वृत्तिरूपेण विवर्त्तते। तौ च रजततद्वृत्तिरूपविवर्त्तौ स्वाधिष्ठानेन साक्षिचैतन्येनावभास्येते इत्येव रजतावभासः कल्प्यते। यद्यप्यत्र करणवृत्तिरविद्यावृत्तिश्चेति ज्ञानद्वयम् तथापि तद्विषयौ सत्यानृते इदं रजते अन्योन्यात्मकतामापन्नौ इति विषययोरैक्यात् वृत्तिद्वयस्यैक्यम् ततश्च विषयावच्छिन्नफ-लस्याप्येकत्वेन ज्ञानैक्यमुपपद्यते। एवं मिथ्याज्ञानतद्विषय योर्निरूपणेन द्वितीयतृतीयविकल्पौ निरस्तौ वेदितव्यौ। यद्य-प्यत्र संप्रयोगसंस्कारौ परस्परं निरपेक्षौ प्रमितिस्मृत्यो-र्जनने समर्थौ दृष्टौ तथापि क्रमेण स्मृतिप्रमित्योरुत्पत्तौ प्रवर्त्तकत्वानुपपत्तौ प्रकृत्यन्यथानुपपत्त्या ताभ्यां सम्भूयैव एकं विशिष्टं मिथ्याज्ञानं जन्यते इति कल्प्यते यथा नैयायिकादिभिः निरन्तरोत्पन्नेष्वपि वर्णज्ञानेषु यौगपद्याभावात् पदार्थज्ञानानुपपत्त्या पूर्ब्बज्ञानजन्य संस्कारसहितमन्त्यवर्णज्ञानमेव पदार्थबुद्धिहेतुत्वेन कल्प्यते तद्वत्। ननु विमतं ज्ञानं नैकं भिन्नकारणजन्यत्वात् रूपरसादिज्ञानवदिति चेत् न अनुमानप्रत्यभिज्ञानयोर्व्य-भिचारात् उभयोरपि नानाकारणजन्यत्वात्। अनुमानं हि व्याप्तिज्ञानसंस्कारलिङ्गदर्शनपरामर्शजन्यम्। प्रत्यभिज्ञा च इन्द्रियसंप्रयोगसंस्कारजन्येति सर्व्वैरङ्गीक्रियते न च शुक्तौ अनिर्वचनीयस्य रजतस्योत्पत्तौ तस्य च शुक्तौ संसर्गात् कथं तस्य मिथ्यात्वमसत्त्वञ्च स्यादिति वाच्यम् सत्तात्रैविध्याङ्गीकारेण तत्र व्यावहारिकसत्ताशून्यत्वेनैव तस्य मिथ्यात्वस्य कल्पनात्। तथाहि सत्त्वं त्रिविधं पारमा-र्थिकं त्रैकालाबाध्यत्वरूपं यथा ब्रह्मणः। व्यावहारिकं ब्रह्मज्ञाननिवर्त्त्यं यथा आकाशादेः प्रातीतिकम् अधिष्ठा-नज्ञाननिवर्त्त्यं यथा शुक्तिरजतादेः। न च मिथ्यात्वकल्पनं मानहीनम्" "अथ रथान् रथयोगान् पथः सृजते" इति श्रुतेः मिथ्यैवात्र रजतमभादिति रजततज्ज्ञानयोर्मिथ्या-त्वप्रत्यभिज्ञानस्य च मानत्वात्। अतो मतान्तरवत् वेदान्तमते नानुभवविरोधोऽपि न्यूनत्वं वा। अख्यातिपक्षे अपरोक्षाव-भासिनः स्मर्य्यमाणत्वं विरुध्यते। ज्ञानद्वयपक्षे रजतस्य पारोक्ष्यस्मृतौ करणाभिमानमोषादिकम्, अन्यथाख्यातौ रजतस्य आपरोक्ष्यानुभवविरोधः आत्मख्यातिपक्षे विषया-भावेनापरोक्षावभासविरोधः"। प्रमेयविवरणसारांशः।

शुक्तिरजतादि ज्ञानं दृष्टान्तेन ज्ञाननिवर्त्त्यं तथा सर्व्वेषां घटपटादिज्ञानानामसत्ख्यातित्व तद्विषयाणां वस्तु-

**अह** अव्य० अहि–घञ् पृ०नलोपः। १प्रशंसायां, २ क्षेपे, ३वियोगे, ४निश्चये, ५आचारातिक्रमे, ६प्रेषणे च। "अत्याह तदिन्द्रोऽब्रुवत द्वेषो हि स" "इदमहेद सत्य रूपमप्यस्मात्प्रमयायम्" शत०ब्रा०।

**अहयु** त्रि० अहमहङ्कारोऽस्त्यस्य युस्। १गर्व्वयुक्ते २अभिमानिनि "अहंयुनाथ क्षितिपः शुभंयुः" भट्टि०।

**अहश्रेयस्** त्रि० अहमित्यव्ययम् अहमेव श्रेयान् यत्र। अहंश्रेयानितिनिर्णयप्रयोजने। "अथ ह प्राणा अहंश्रेयसि व्यूदिरेऽहंश्रेयानहंश्रेयानस्मीति" छा०उ० "अथ ह प्राणा एव यथोक्तगुणाः सन्तोऽहंश्रेयान् अहंश्रेयान् अहं श्रेयानस्मीति एतस्मिन् प्रयोजने व्यूदिरे नाना विरुद्धं वा ऊदिरे उक्तवन्त" भा०। "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः" बृ०उ०। "ते इमे प्राणा वागादयोऽहंश्रेयसे अहंश्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं वदमाना ब्रह्म जग्मुः" भा०।

**अह (हस्क)कर** पु० अहः करोति कृ–ट वा सत्वम्। १सूर्य्ये २अर्कवृक्षे च। [रो र०। १सूर्य्ये २अर्कवृक्षे।

**अह (हर्प)पति** पु० अह्नः पतिः उदयेन प्रवर्त्तकत्वात्। वा

**अह (हम्र्म)र्मेघ** पु० अह्नः मेघ वा सत्वम्। १दिवावसाने अह मेघो यत्र ब०। २अपौचाद्यन्तिमदिने।

**अहङ्कार** पु० अहमिति क्रियतेऽनेन कृ–घञ्। १अहमित्यभिमाने आत्मनि उत्कर्षावलम्बने २गर्व्वे ३तदाश्रये अन्तःकरणभेदे "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयोनिश्चयो गर्व्वं स्मरणं विषया इमे" वेदा०परि०। सांख्यमतसिद्धे ४अभिमानकारणे महत्तत्त्वजन्ये पञ्चतन्मात्रादीनां कारणे तत्त्वभेदे च यथोक्तं सां०का०। "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि" इत्युद्दिश्य तल्लक्षणकार्य्ये तत्रैवोक्ते यथा "अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्त्तते सर्गः। एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव"। व्याख्यातं च कौ० "अभिमानोऽहङ्कारः यत् खल्वालोचितं, मतञ्च तत्राहमधिकृतः, शक्तः खल्वहमत्र, मदर्था एवामी विषयाः, मत्तोनान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारः तमुपजीव्य हि बुद्धिरध्यवस्यति "कर्त्तव्यमेतन्मयेति"। तस्य कार्य्यभेदमाह तस्माद् द्विविधः प्रवर्त्तते सर्गः। प्रकारद्वयमाह एकादशकश्च गणः इन्द्रियाख्यः तन्मात्रपञ्चकश्चैव द्विविध एव सर्गोऽहङ्कारात् न त्वन्यः इत्येवकारेणावधारयति"। "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियम्" सा०सू०। अहङ्कारसत्त्वे प्रमाणमपि दर्शितम् "बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य" सा०सू० "बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्य्यैस्तत्कारणतयाहङ्कारस्यानुमानेन बोधः इत्यर्थः। अहङ्कारश्चाभिमानवृत्तिकमन्तःकरणद्रव्यं नत्वभिमानमात्रं द्रव्यस्यैव लोके द्रव्योपादानत्वदर्शनात्। सुषुप्त्यादावहङ्कारवृत्तिनाशेन भूतनाशप्रसङ्गात् सम्भ्रमात्मकत्वे नैवाहङ्काराख्यद्रव्यसिद्धेश्चेति। अत्रेत्थमनुमानम्। तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि अभिमानकार्यद्रव्यत्वात्। यन्नैवं तन्नैवम्। यथा पुरुषादिरिति। नन्वभिमानवद्द्रव्यमेवासिद्धमिति चेदहं गौर इत्यादिवृत्त्युपादानतया चक्षुरादिवत् तत्सिद्धेः। अनेन चानुमानेन मन आद्यतिरेकमात्रस्य तत्कारणतया प्रसाध्यत्वात्। अत्र चायमनुकूलस्तर्कः। "बहु स्यां प्रजायेय" इत्यादि श्रुतिस्मृतिभ्यस्तावद्भूतादिसृष्टेरभिमानपूर्व्वकत्वाद्बुद्धिवृत्तिपूर्व्वकसृष्टौ कारणतयाभिमानः सिद्धः। तत्रैकार्थसमवायप्रत्यासत्त्यैवाभिमानस्य सृष्टिहेतुत्वं लाघवात् कल्प्यत इति। नन्वेव कुलालाहङ्कारस्यापि घटोपादानत्वापत्त्या कुलालमुक्तौ तदन्तःकरणनाशे तन्निर्मितघटनाशः स्यात् न चैतद्युक्तम् पुरुषान्तरेण स एवायं घट इति प्रत्यभिज्ञायमानत्वादिति चेन्नैवम् मुक्तपुरुषभोगहेतुपरिणामस्यैव तदन्तःकरणमोक्षोत्तरमुच्छेदात्। न तु परिणामसामान्यस्यान्तःकरणस्वरूपस्य वोच्छेदः "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति" योगसूत्रे मुक्तपुरुषोपकरणस्याप्यन्यपुरुषार्थसाधकत्वसिद्धेरिति। अथ वा घटादिष्वपि हिरण्यगर्भाहङ्कार एव कारणमस्तु न कुलालाद्यहङ्कारस्तथापि सामान्यव्याप्तौ न व्यभिचारः समष्टिबुद्ध्याद्युपादानिकैव हि सृष्टिः पुराणादिषु सांख्ययोगयोश्च प्रतिपाद्यते न तु तद्व्यष्टिबुद्ध्याद्युपादानिका यथा महापृथिव्या एव स्थावरजङ्गमाद्युपादानत्वं न तु पृथिव्यवयवलोष्टादेरिति" सां०प्र०भा०। मनुनाप्युक्तम् "मनश्चाप्यहङ्कारमभिमन्तारमीश्वरम्"। "अहङ्कारश्च वीररसे व्यभिचारिभावः। अस्याधिष्ठाता" शङ्करः। निरहङ्काररूपस्याहङ्यावीरादिरेव न" सा०द०। "नाहङ्कारात् परो रिपुः"। "अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" गीता।

**अहङ्कारिन्** त्रि० अहमभिमानं करोति कृ–णिनि। १अभिमानवति २गर्वयुक्ते।

मनवः षट् व्यतीताः सन्धयः । वैवस्वतस्य च मनोर्युगानां त्रिधनो गतः । अष्टाविंशाद्युगादस्माद्यातमेतत् कृतं युगम् । अतः कालं प्रसंख्याय संख्यामेकत्र पिण्डयेत्" । सू० सि० तदानयनप्रकार उक्तः । तत्र सृष्ट्यादितस्तु अहर्गणस्यानयनमित्थम् । ब्राह्मदिनमानं मनुष्यपरिमाणेन ४३२००००००० वर्षाः रात्रिमानञ्च तथा, इत्यहोरात्रमानम् ८६४००००००० वर्षाः ब्राह्माहोरात्रमानस्य ३६० गुणितं तस्य वर्षमानम् ३११०४०००००००००० एवं वर्षेण ब्रह्मणः परमायु ३११०४०००००००००००००० तस्यायुषोऽर्द्धम् १५५५२०००००००००००० वर्षागताः । मन्वन्तरसंख्या ३०६७२०००० षड्भिर्गुणिता १८४०३२०००० एते वर्षाः षण्णां मनूनां गताः । तथा सन्धयश्च सप्त कृतयुगप्रमाणा गतास्तत्र युगसन्धिमानम् १७२८००० कृतप्रमाणवर्षाः सप्तभिर्गुणिता १२०९६००० वर्षाः । सप्तमस्य वैवस्वतमनोः २७युगानि गतानि तेषां समष्टिः ११६६४०००० वर्षाः सत्यादीनां त्रयाणां गतानां युगानां मानम् ३८८८००० । एवमादिसृष्टित वर्त्तमानयुगान्तर्गतद्वापरयुगपर्य्यन्तम् । १५५५२१९७२९४४००० वर्षा गताः परार्द्धतः १९७२९४४००० वर्षा गताः । वर्त्तमानमहायुगात् ३८८८००० वर्षागताः । एवमब्दपिण्डं कृत्वा तत्र कलियुगगताब्दपिण्डं योज्यम् । एतानि च सौरकु-पाणोनि ३६० गुणितानि सौरदिनवृन्दानि गतानि भवन्ति । "मध्यमग्रहभुक्तिश्च सावनेन द्युयुक्तेः सावनैरेव ग्रहमध्यभा वस्तामनतस्तेभ्यः सि० शि० चान्द्रसावनानयनं दर्शितम् । यथा "कथितकल्पगतोऽर्कसमागणो रविगुणो गतमाससमन्वितः । खदहनैः ३० गुणितस्तिथिसंयुतः पृथगतोऽधिकमास १५९३३००००० समाहतात् । रविदिनाप्ति १५५५२०००००००००० गताधिकमासकैः स्वतदिनैः सहितो द्युगणो विधोः । पृथगतः पठितावम २५०८२५५०००० सगुणाद्विधुदिना १६०२९९९०००००० प्रगतावमवर्जितः । भवति भास्करवासरपूर्वको दिनगणो रविमध्यमसावनः । अधिकमासदिनक्षयशेषतोऽक्षघटिकादिकमत्र न गृह्यते" । "अत्र वासना । कल्पगताब्दा द्वादशगुणिता रविमासा जातास्ते चैत्रादिगतचान्द्रतुल्यैः सौरैरेव युतास्त्रिंशद्गुणा दर्शान्तप्रतिपदादिगततिथितुल्यैः सौरैरेव दिनैर्युताः । एवं ते सौरा जातास्तेभ्यः पृथक्स्थितेभ्योऽधिमासानयनं त्रैराशिकेन । यदि कल्पसौरदिनैः कल्पाधिमासा लभ्यन्ते तदैभिः किमिति । फलं गताधिमासाः । तैर्दिनीकृतैः पृथक् स्थितः सौराहर्गणः सहितश्चान्द्रो भवति । यतः सौरचान्द्रान्तरमधिमासदिनान्येव । अथ चान्द्राद् द्युगणादवमानयनं त्रैराशिकेन । यदि कल्पचान्द्रैः कल्पावमानि लभ्यन्ते तदैभिः किमिति । फलं गतावमानि । तैरूनश्चान्द्रोऽहर्गणोऽत्र कर्त्तव्यः । यतः सावनचान्द्रान्तरेऽवमान्येव । एवं कृते सति रवेर्मध्यमसावनाहर्गणो भवति न स्फुटः । मध्यमस्फुटाहर्गणयोर्भेदो गोले कथितः । स चाहर्गणोऽर्कादिः । यतः कल्पादौ रविवासरः । अत्राऽधिमासानयनेऽधिमासशेषं न ग्राह्यम् । न पुनस्ताहिनाद्यवयवा ग्राह्याः । एवमवमशेषमपि । न तस्माद्घटिकादिकं ग्राह्यम् । अनुपातः सावयवो भवति कुतस्तदवयवा न ग्राह्याः । तत्कारणं गोले कथितं व्याख्यातं च" प्रमिता० । मध्यमग्रहादप्यहर्गणस्यानयनं तत्रैवोक्तम् । "चापात् च चक्रात् खगात् कुट्टकात् तत्कल्पचक्राग्रमहर्गणः स्यात् । निरग्रचक्रादपि कुट्टकेन वक्ष्येऽप्यतोऽग्रात् तथाप्ययोगात् । "ग्रहस्य भगणराशिभागकला विकला अन्ते विकलाशेषं च कुदिनैः संगुण्य खखदेन विभज्योपर्युपरि निक्षिपेत् । तद्यथा । भगणादिग्रहे विकलाशेषावधि कल्पकुदिनगुणे विकलाशेषस्थाने कुदिनैर्विभज्य विकलास्थाने फलं प्रक्षिप्य तत्र षष्ट्या ६० विभज्य कलास्थाने निक्षिपेत् भगणान्तं यावत् । तत्र कल्पभगणैर्हृतेऽहर्गणः स्यात् । अत्रोपपत्तिर्विलोमगणितेन । तथा निरग्रचक्रादपि पश्चात् तथा शेषकादग्रादपि तथा शेषयोः शेषाग्रयोर्वा योगादहर्गणानयनमप्यत इति प्रश्नाध्याये कुट्टकविधिना वक्ष्यते" प्रमि० । कलिगताद्यहर्गणानयनं तत्रैव । "कलिगताद्य या दिनसञ्चये दिनपतिर्भृगुजन्म भवति तदा । कलिमुखध्रुवकेण समन्वितो भवति तद्द्युगणो-ऽब्जखेचरः" । "अत्र कलिगताहर्गणेऽयं विशेषः । शुक्राद्यो वारो गणनीयः । यतः कल्पगताहर्गणात् कलिमुखे शुक्रवारो भवति । तत्र च ये ग्रहाः ध्रुवकाः कल्पिताः । तद्द्युचरखेचरस्य कलिमुखध्रुवकेण समन्वितः कार्यं इत्यत्र वासनापि सुगमा" प्रमि० । कुट्टकविधिश्च बीजगणिते दर्शितो यथा । "अस्य गणितस्य ग्रहगणिते महानुपयोगः । तदर्थं किञ्चिदुच्यते । "कल्प्याय शुद्धिर्विकलावशेषं षष्टिश्च भाज्यः

कुदिनानि हारः। तल्लं फलं स्युर्विकला गुणस्तु लिप्ता-चमथात्र कला लवाप्तम्। एवं तदूर्द्धं च तथाधिमासाव-मापकाभ्यां दिवसा रवीन्दो"। "चक्रस्य विकलावशेषाद्ग्रह-चाहर्गणयोरानयनम्। तद्यथा। षष्टिर्भाज्य॰। कुदिनानि हार॰। विकलावशेषं शुद्धिरिति प्रकल्प्य साध्ये गुणाप्ती। तत्र लब्धिर्विकलाः स्युर्गुणस्तु कलावशेषम्। एवं कलावशेषं शुद्धि॰ षष्टिर्भाज्य कुदिनानि हार॰। फलं कला॰। गुणोंऽशशेषम्। एवमंशशेष शुद्धिस्त्रिंश-द्भाज्यः कुदिनानि हारः। फलं भागा। गुणो-राशिशेषम्। एवं राशिशेषं शुद्धिर्द्वादश भाज्य॰। कुदिनानि हारः। फलं गतराशयोगुणोभगणशेषम्। एवं कल्पभगणा भाज्य॰। कुदिनानि हारः। भगणशेष शुद्धिः। फलं गतभगणाः। गुणोऽहर्गणः स्यादिति। अस्योदाहरणानि त्रिप्रश्नाध्याये॰। एवं कल्पाधिमासा-भाज्योरविदिनानि हारोऽधिमासशेषं शुद्धिः। फलं गताधिमासाः। गुणो गतरविदिवसा॰। एवं युगावमानि भाज्यश्चन्द्रदिवसा हारोऽवमशेष शुद्धि॰। फलं गताव-मानि। गुणोगतचन्द्रदिवसाइति" प्रमि॰।

अहर्गणानयने अधिमासावमपरित्यागे कारणमाह" सि॰ शि॰ "अहर्गणस्यानयनेऽर्कमासाश्चैत्रादिचान्द्रैर्गणकान्विता॰ किम्। कुतोऽधिमासावमशेषके च त्यक्ते यत॰ सावयवो-ऽनुपात॰। दर्शावधिश्चान्द्रमसो हि मासः सौरस्तु संक्रान्त्यवधिर्यतोऽतः। दर्शाग्रतः संक्रममानतः प्राक् सदैव तिष्ठत्यधिमासशेषम्। दर्शान्ततो यातति थिप्रमाणैः सौरैस्तु सौरा दिवसाः समेता। यतोऽ-धिशेषोत्यदिनाधिकास्ते त्यक्तं तदस्मादधिमासशेषम्। तिथ्यन्तसूर्योदययोस्तु मध्ये सदैव तिष्ठत्यवमावशेषम्। त्यक्तेन तेनोदयकालिकः स्यात् तिथ्यन्तकाले द्युगणोऽ-नुपात"। "मध्यममानेन यावत्यमावास्या तदन्ते चान्द्रामासान्त॰। मध्यमार्कस्य यस्मिन् दिने संक्रान्ति-स्तत्र संक्रान्तिकाले रविमासान्त॰। तयोः रविचन्द्रमा-सान्तयोरन्तरे यावत्यस्तिथय सावयवास्ता अधिमास-शेषतिथय॰। यतः सौरचान्द्रान्तरमधिमासाः। अहर्ग-णानयने गतास्ता रविगुणास्ते सौरा मासा जाताः। अतस्तेषु चैत्रादिचान्द्रतुल्याः सौरा एव मासा योजि-तास्ते संक्रान्त्यवधयो जातास्तेषु त्रिंशद्गुणेषु गततिथि-तुल्याः सौरा एव दिवसा योजिताः। अतः सौर-चान्द्रान्तरेणाधिका जातास्तदन्तरमधिमासशेषदिनानि भवन्ति सौरचान्द्रान्तरत्वात्। अतोऽधिमासशेषदिना-न्येभ्य शोध्याः। अथ चाधिमासानयनेऽनुपातलब्धै-रधिमासैर्दिनीकृतैस्तच्छेषदिनैश्च युक्ताः सौराश्चान्द्रा-हा भवितुमर्हन्ति। एवमत्राधिमासशेषदिनानि क्षेप्याणि। तत्र शोध्यानि। अतः कारणादधिमासशेषं त्यक्तम्। अथावमशेषत्यागकारणमुच्यते। तिथ्यन्तानन्तरं यावतीभिर्घटीभि सूर्योदया अवमशेषघटिकाः यतश्चान्द्रसावनान्तरमवमानि। अत्रावमशेषं न त्यज्यते तत्सावमैरवमशेषघटिकाभिश्च तिथव ऊनीक्रियन्ते तदा तिथ्यन्ते सावमोऽहर्गणो भवति। अथ च सूर्यो-दयोऽवधिः साध्य। तिथ्यन्ताहर्गणोऽवमशेषघटी-भिर्युक्तः सन् उदयावधिर्भवति। अतोऽवमशेषे त्यक्ते सतः सूर्योदयावधिर्भवति" प्रमि॰। "अहर्गणोमध्यम-सावनेन कृतश्चसत्वात् स्फुटसावनस्य। तदूनशेषा उदयान्तराद्य कर्मोद्भवेनोनयुता॰ फलेन' सि॰शि॰ अह-र्गणे विशेषमाह सि॰शि॰। "अभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तिथयोऽपि तद्वत्। तदाधिमासावमशेषके च कल्पाधिमासावमयुक्तहीने"। "इह किल स्थूलतिथ्यानयने यस्यां तिथौ यो वार आगतः स चेदहर्गणे नागच्छति तदाहर्गणं सैकं निरेकं कृत्वा चाहा साध्या इति ज्योति-र्विदां सम्प्रदायो युक्तियुक्त एव। यतोऽहर्गणस्य वारो नियामक॰। एव कृते यो विशेष सोऽभिधी-यते। तिथयोऽपि तद्वदित्यादि। अत्रैतदुक्तं भवति। यदा वारार्थं सैकोऽहर्गण कृतस्तदाधिमासावमशेषास्या चन्द्रार्कानयने कोष्ठाहतैरद्धकृतेन्दु बिम्बैरित्यादौ द्वादश-गुणास्तिथयोऽर्कभागेषु याः क्षेप्यास्ता॰ सैका कृत्वा द्वादशगुणा क्षेप्या॰। यदा निरेकोऽहर्गण कृतस्तदा निरेकम्। तथा यदि सैकोऽहर्गणस्तदाधिमास-शेष कल्पाधिमासैर्युतं कार्यम्। अवमैरवमशेषं च। यतः सैकास्तु तिथिषु सैकोऽहर्गणो निरेकास्तु निरेक॰। तथा प्रतिदिनमधिमासशेषस्याधिमासैरुपचयोऽवमैरवमशेषः स्यात् युक्तयुक्तम्" इति प्रमिता॰।

अहर्जर पु॰ अहोभिःपरिवर्त्तमानो लोकान् जरयति जृ-णिच्-अच्, अहानि वाऽस्मिन् जीर्य्यन्ति आधारे अप् वा। "संवत्सरे "यथादः सवत्सा यन्ति यथा मासा अहर्जरम्" इ॰उ॰।

अहर्दिव न॰ अहय दिवा च समा॰ इ॰ तुल्यार्थकतया वीप्सा गम्यते। प्रतिदिने इत्यर्थे "स इत्यमस्यास्त्रमहर्दिव

वारवैः" मनुः "अहार्य्यैरभेद्यैः" कुमा० । "अहार्य्यमेवं गगनाभिपद्भ्याम्" माघ० । "अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः" मनुः ।

**अहि** पु० आहन्ति आ+हन+डिन् टिलोपः आङो ह्रस्वश्च । 1 सर्पे, लोकप्रसिद्धसर्पभेदादि सुश्रुते दर्शितम् । "अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा" । "दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च । निर्व्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः ॥ दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः । तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः । द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश । निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा । वैकरञ्जोद्भवाः सप्त चित्रमण्डलिराजिलाः । पदाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा । ते दशन्ति महाक्रोधास्त्रिविधमुच्यते । सर्पितं रदितं चापि तृतीयमथ निर्व्विषम् । सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः । पदानि यत्र दन्तानामेकं द्वे वा बहूनि च ॥ निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि । चञ्चुमालकयुक्तानि वैकृत्यकरणानि च । सङ्क्षिप्तानि सशोफानि विद्यात्तत् सर्पितं भिषक् । राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा । विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत् । अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः । पदं पदानि वा विद्यादविषं तच्चिकित्सकः । सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः । कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत् । व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि च । तथातिवृद्धबालातिदष्टमल्पविषं स्मृतम् । सुपर्णदेवब्रह्मर्षियक्षसिद्धनिषेविते ॥ विषघ्नौषधियुक्ते च देशे न क्रमते विषम् । रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥ ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः । मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ॥ ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः । स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्ध्वञ्च राजिभिः ॥ चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः । मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः ॥ सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः । क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः ॥ सूर्य्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम् । कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा । धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः ॥ महिषद्वीपिवर्णाभास्तथैव परुषत्वचः । भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः ॥ रोषयत्यनिलं जन्तोः फणिनः सर्व्व एव तु । पित्तं मण्डलिनश्चापि कफञ्चानेकराजयः ॥ अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम् । ज्ञेयौ दोषैश्च दम्पत्योर्विशेषश्चात्र वक्ष्यते ॥ रजन्याः पश्चिमे यामे सर्पाश्चित्राश्चरन्ति हि । शेषेषूक्ता मण्डलिनो दिवा दर्व्वीकराः स्मृताः ॥ दर्व्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा । राजिमन्तो वयोमध्ये जायन्ते मृत्युहेतवः ॥ नकुलाकुलिता बाला वारिविप्रहताः कृशाः । वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः । तत्र दर्व्वीकराः । कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो महाकपोतो बलाहको महासर्पः शङ्खपालो लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः ककुदः पद्मो महापद्मो दर्भपुष्पो दधिमुखः पुण्डरीको भ्रुकुटीमुखो विष्किरः पुष्पाभिकीर्णो गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अलगर्द्द आशीविष इति ॥ मण्डलिनस्तु । आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डलश्चित्रमण्डलः पृषतो रोध्रपुष्पो मिलिन्दको गोनसो वृद्धगोनसः पनसो महापनसो वेणुपत्रकः शिशुको मदनः पालिन्दिरः पिङ्गलस्तन्तुकः पुष्पपाण्डुः षडङ्गोऽग्निको बभ्रुः कषायः कलुषः पारावतो हस्ताभरणश्चित्रक एणीपद इति ॥ राजिमन्तस्तु । पुण्डरीको राजिचित्रोऽङ्गुलराजिर्बिन्दुराजिः कर्द्दमकस्तृणशोषकः सर्षपकः श्वेतहनुर्दर्भपुष्पश्चक्रको गोधूमकः किक्किशाद इति ॥ निर्व्विषास्तु । गलगोली शूकपत्रोऽजगरो दिव्यको वर्षाहिकः पुष्पशकली ज्योतीरथः क्षीरिकापुष्पकोऽन्धाहिकोऽहिपताको गौराहिको वृक्षेशय इति । वैकरञ्जास्तु त्रयाणां दर्व्वीकरादीनां व्यतिकराज्जाताः । तद्यथा । माकुलिः पोटगलः स्निग्धराजिरिति । तत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः । राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः । कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति । तेषामाद्यस्य पितृवद्विषोत्कर्षो द्वयोर्मातृवदित्येके । त्रयाणां वैकरञ्जानां पुनर्दिव्येलकरोध्रपुष्पकराजिचित्रकाः पोटगलपुष्पाभिकीर्णदर्भपुष्पवेल्लितकाः सप्त तेषामाद्यास्त्रयो राजिलवत् शेषा मण्डलिवत् । एवमेतेषां सर्पाणामशीतिरिति । तत्र महानेत्रजिह्वास्यशिरसः पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः । उभयलक्षणा मन्दविषा अक्रोधा नपुंसका" इति । तेषां

बहूनि पुराणे नामान्युक्तानि तेषां प्रधान्यतो भारते कतिचिदुक्तानि "बहुत्वान्नामधेयानि पन्नगानां तपोधन!। न कीर्त्तयिष्ये सर्व्वेषां प्राधान्येन तु मे शृणु। शेषः प्रथमतो जातो वासुकिस्तदनन्तरम्। ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ। कालियो मणिनागश्च नागश्चापूरणस्तथा। नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः। नीलानीलौ तथा नागौ कल्माषशबलौ तथा। आर्य्यकश्चोग्रकश्चैव नागः कलशपोतकः। सुरामुखो दधिमुखस्तथा विमलपिण्डकः। आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा। निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा। बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः। कम्बलाश्वतरौ चापि नागः कालीयकस्तथा। वृत्तसंवर्त्तकौ नागौ द्वौ च पद्माविति श्रुतौ। नागः शङ्खमुखश्चैव तथा कुष्माण्डकोऽपरः। क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा। करवीरः पुष्पदंष्ट्रो बिल्वको बिल्वपाण्डुरः। मूषकादः शङ्खशिराः पूर्णभद्रो हरिद्रकः। अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा। कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्य्यवान्। विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्य्यवान्। हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः। कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः। कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा। कर्द्दमश्च महानागो नागश्च बहुमूलकः। कर्कराकर्करौ नागौ कुण्डोदरमहोदरौ। एते प्राधान्यतो नागाः कीर्त्तिता द्विजसत्तम!। बहुत्वान्नामधेयानामितरे नानुकीर्त्तिताः। एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः। असंख्येयेति मत्वा तान् न ब्रवीमि तपोधन!। बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च। अशक्यान्येव संख्यातुं पन्नगानां तपोधन!" भा॰आ॰ ३५ अ॰। "अहिपरिकरभाजो भास्वरैरङ्गरागैः" माघ। "महतोऽप्येनसो मासात् क्षपयेत्यहिर्विमुच्यते" "न पश्येदहिमभ्यनाम्नीं न च भीषणनामिकाम्" "कूताहि शरटानाञ्च तिरश्चां चाम्बुचारिणामिति" च मनुः। २सूर्य्ये, इन्, ४राहौ, ५पथिके, अह व्याप्तौ इन्। ६वृत्रासुरे तस्य सर्वलोकव्यापकत्वात्तन्नामकत्वम् स च विश्वरूपपितुस्त्वष्टुःपुत्रः तदुत्पत्तिकथा भाग॰ ६स्क॰ ६अ॰ "हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे। इन्द्रशत्रो! विवर्द्धस्व मा चिरं जहि विद्विषम्। अथान्वाहार्य्यपचनादुत्थितो घोरदर्शनः। कृतान्त इव लोकानां युगान्तसमये यथा। विष्वग्विवर्द्धमानं तमिषुमात्रं दिनेदिने। दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम्॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम्। देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी॥ नृत्यन्तमुन्नदन्तञ्च चालयन्तं पदा महीम्। दरीगम्भीरवक्त्रेण पिबता च नभस्तलम्॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम्। महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः। वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दिश॥ येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना। स वै वृत्र इति प्रोक्तः पापः परमदारुणः"॥ ७अर्के, ८वप्रके, ९सर्पसामिके अश्लेषानक्षत्रे च। "रुद्रगणश्चीश्लोऽहि बहेन्द्रयुक्" ज्यो॰। "हृत धनुःखण्डमिवाहिविद्विषः" किरा॰। "अहिपत्तद्द्युपता नियम्यताम्" माघ। १॰आकाशे त्रि॰ "अहिरसि बुध्न्य" ताण्ड्य॰। अहिराडनाहिरभक्तीनाम्" मा॰। अह-व्याप्तौ इन्। ११अबे महीव्यापित्वात्तत्वम् १२ व्यापके १३व्याप्ते च त्रि॰। १४व्यापशरविश्वो हि॰च॰ १५दृश्यिश्या १६स्त्रीगव्याञ्च स्त्री वा ङीप् नागनामत्वात् तज्जातत्वात् १७सीसे धातौ। तस्योत्पत्त्यादिकम् भावप्र॰ "दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोचयत्" सीसं जातस्ततो नागः सर्वरोगापहोऽन्तकाम्" सीसं वङ्गं तथा वप्र योगेऽष्ट नागनामकम् (नागोमुजय) सीसं रङ्गवद्यं ज्ञेयं निर्मीषाक्षैहनाशनम्। नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति। वह्निं प्रदीपयति कामबलं करोति मृत्युं च नाशयति सन्ततसेवितं स। पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टम्। पाण्डुप्रमेहानिलमाद्यशोथभगन्दरादीन् कुरुतः प्रभक्तौ" तस्य पाकविधिमाह तत्रैव। ताम्बूलरससंपिष्टशिलालेपात् पुनः पुनः। हालि यज्ञे पुटैर्नागो निरुत्थं भस्म जायते। (शिला मनःशिला) अन्यच्च। "अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निक्षिपेत्। तत्पात्रे विद्रुतो नागो लोहदर्व्या प्रचालितः। यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनःशिला। काञ्जिकेन द्वयं पिष्ट्वा पचेद्गजपुटेन तत्। स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च। पुनः पचेत् पुटेताभ्यामेव षष्टिपुटैरिति"।

अहिंसक त्रि॰न हिनस्ति हिन्स-ण्वुल् न॰त॰। हिंसारहिते

अहिंसा स्त्री हिन्स-अ न॰त॰। १वाङ्मनःकायैः परपीडाभावे, २प्राणिपीडानिवृत्तौ, ३अशास्त्रीयप्राणिपीडनाभावे च "अहिंसा परमो धर्म्मः" इति श्रुतिः। "या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्यात् वेदाद्धर्म्मो हि निर्बभौ" मनुना वैधहिंसायां दोषाभावोक्तः एतच्च मीमांसकादिमते सांख्यमते तु

समायुक्तेऽधीतेऽपाने मिथोर्भवेत् । स्निग्धसाराप्यमानस्य कण्डूरक्तकफोद्भवा । कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते । एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्" इति तस्य लक्षणाद्युक्तम् । अस्य स्त्रीत्वमपि ॥ "धात्र्याः स्तन्यं शोधयित्वा चाद्ये साध्याहिपूतना" । "पटोलपत्रत्रिफला-रसाञ्जनविपाचितम् । पीतं घृतं नाशयति कण्डूमाश्वहिपूतनाम्" "चिकित्सितं तु कुष्ठकण्डूस्वाप्यहिपूतनपानवत्" सुश्रु० ।

**अहिफेन** पु० अहेः फेनः गरलमिव तीक्ष्णगुणत्वात् । (आफिङ्) इति ख्याते १वृक्षनिर्यासभेदे । ६त० २सर्पलालायाञ्च ।

**अहि(बु)र्बुध्न** पु० अहेरिव बुध्नो ग्रीवा यस्य । १रुद्रभेदे,२तद्देवताके २उत्तरभाद्रपदनक्षत्रे ३मुहूर्त्तभेदे च । ष्ट० अहिर्बु(र्वु)ध्नोऽहि(र्बु)र्बुध्न्योऽप्यत्र । तत्स्वरूपं ध्यानशब्दे वक्ष्यते । "अजैकपादहिर्बुध्न्य विरूपाक्ष रैवत" विष्णु ध० । मुहूर्त्तभेदश्च अह शब्दे ५७६ पृष्ठे उक्त तन्नक्षत्रस्य तद्देवताकत्वञ्च अश्विनीशब्दे ४६८ पृष्ठे उक्तम् ।

**अहिभय** न० अहेः, गूढचरत्वात् आहताकारत्वाच्च अहितुल्यात् स्वपक्षात् भयम् । राज्ञां स्वपक्षजनिते १भये ६त०।२सर्पभये च। [भयनाशिकायाम् भूम्यामलक्याम् ।

**अहिभयदा** स्त्री अहिभयं द्यति खण्डयति दो-क । सर्प

**अहिभानु** पु० अहिर्व्याप्तो भानुर्द्युतिरस्य । सूर्य्यगतिहेतौ वायौ प्रवाहानिलेनैव सूर्यगतेर्ज्योतिषोक्तेस्तथात्वम् । "मरुतो अहिभानवः" ऋ० १,१७२,१ ।

**अहिभुज्** पु० अहिं भुङ्क्ते क्विप् ।१गरुडे, २मयूरे, ३नकुले च

**अहिभृत्** पु० अहिमाभूषणतया बिभर्त्ति भृ-क्विप् । १शिवे

**अहिम** न० विरोधे न०त० । १उष्णस्पर्शे २तद्वति त्रि० ।

**अहिमद्युति** पु० अहिमा उष्णा द्युतिरस्य । १सूर्य्ये २अर्कवृक्षे च अहिमकरादयोऽप्यत्र ।

**अहिमन्यु** त्रि० अहिरिव हिंस्रो मन्युरस्य । १हननशीले २अहिवत्हिंस्रक्रोधे च "प्रवताऽहिमन्यव" ऋ० १,६४,८ । ६त० । ३सर्पक्रोधे च । [कुलीनामलतायाम् ।

**अहिमर्द्दनी** स्त्री अहिर्मर्द्यतेऽनया मृद-ल्युट् । गन्धना-

**अहिमाय** त्रि० अहेरिव कुटिला मायाऽस्य । वृत्रासुरादौ "वृहस्पतेरहिमायान् अभि द्यून्" ऋ० १,१९०,४ ।

**अहिमार** पु० अहिं मारयति मृ-णिच्-अण् । १अरिमेदकवृक्षे सर्पमारके २गरुडे ३मयूरे ४वृत्रासुरनाशके इन्द्रे च । [अरिमेदवृक्षे ।

**अहिमेद(क)** पु० अहिराक्रमणार्थरिव मेदोऽस्य वा कप् ।

**अहिरिपु** पु० ६त० । १गरुडे २मयूरे ३नकुले ४क्षणे च ५वृत्रघातिनि इन्द्रे च । अहिजिच्छब्दे विवृतिः ।

**अहिलता** स्त्री अहिलोकस्य पातालस्य लता शाक०त० अहिरिव लता वा दीर्घाकारत्वात् । १ताम्बूल्याम् २अहिछत्री लता शा०त० । २गन्धनाकुल्याम् ।

**अहिविद्विष्** पु० ६त० । १गरुडे २मयूरे ३नकुले ४क्षणे ५गन्धनाकुलीवृक्षे वृत्रघातिनि ६इन्द्रे च "कृतं धनुःखण्डमिवाहिविद्विषः" किरा० । क । अहिविद्विषोऽप्यत्र ।

**अहिशुष्म** त्रि० अह-व्याप्तौ इन् अहि व्यापि शुष्मं यस्य व्यापकबले । "आपाञ्जगम्यादहिशुष्म" ऋ०५,३३,५ ।

**अहिसक्थ** त्रि० अहिरिव दीर्घं सक्थि यस्य । १सर्पतुल्यदीर्घसक्थियुक्ते उपचारात् २तदाधारदेशे पु० । तद्देशस्यादूरभवम् सुवास्वा० अण् । आहिसक्थ । तद्देशादूरभवे देशादौ त्रि० ।

**अहिहत्य** न० हत्या हननं भावे क्यप् वेदे न० । १वृत्रासुरहनने "अर्कमहिहत्ये जघु" ऋ० १,१६१, । लोके स्त्रीत्वम् । २सर्पहनने स्त्री । [२इन्द्रे च ।

**अहिहन्** पु० अहिं सर्पं वृत्रासुरं वा हतवान् क्विप् । १गरुडे

**अहीन** पु० अहोभिः साध्यते ख । अह समूहसाध्ये द्विरात्रादियागभेदे । स च ताण्ड्य०ब्रा० भाष्ये षोडश ऋत्विज उपक्रम्य 'एतेऽहीनैकाहैर्याजयन्ति" आपस्त०सूत्र० "तएते होत्रादिनामका षोडशर्त्विजोद्विरात्रादिभिरहीनसंज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति" भा० "अहीनयजमनमृत्विक्कर्मिति" श्रुतिः "अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति" मनुः । अहीनामिन स्वामी । २सर्पराजे वासुकौ पु० । न हीनः । ३अन्यूने त्रि० न न महीन महीनपराक्रमम् रघुः "वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु" मनुः "तस्य. सुतमहीनकोसैः" भा०आ०प० ।

**अहीनगु** पु० सूर्य्यवंश्ये नृपभेदे "अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास" रघुः "रामस्य तनयोजज्ञे कुश इत्यभिविश्रुतः । अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः । निषधस्य नलः पुत्रोनभः पुत्रोनलस्य तु । नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः । क्षेमधन्वसुतस्त्वासीद्देवानीकः प्रतापवान् । आसीदहीनगुर्नाम देवानीकात्मजः प्रभुः । अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः" । हरि०व०१६अ० ।

**अहीनवादिन्** त्रि० न हीनं वादी । "अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" इति उक्तहीनभिन्ने वादिनि ।

**अहीमती** स्त्री अहिरस्त्यस्याम् मतुप् शरादि० दीर्घः । नदीभेदे

**अहीर** पु० आभीरस्य पृषो० साधुत्वम् । आभीरे । [उक्त ।

**अहीरणादि** पु० अरीहणादिगणे पाठान्तरम् स च गणः तच्छब्दे

**अहीरणि** पु० अहीन् ईरयति दूरीकरोति ईर–अनि । द्विमुखसर्पे तद्दर्शनाद्धीतरे सर्पाः पलायन्ते ।

**अहीशुव** पु० अहिरिव श्रूयते श्रु–क बा० दीर्घः । असौ "पिप्रु'-दासमहीशुवम्" ऋ० ८,३२,२ । "अहीशुवं गतम्" भा० ।

**अहु** त्रि० अह–व्याप्तौ उन् । व्यापके स्त्रियां ङीप् "पर उर्वीर्वा अन्या उपसदः परोऽह्वीरन्या" शत० ब्रा० । अंहते व्यापारे उन् अंहु भगे न० । "यदस्य अंहुभेदा ऋषु" य० २२,२८, "अहुमर्गं भेदं विदार्य यस्याः" दीप० ।

**अहुत** पु० नास्ति हुतं हवनं यत्र । धर्मसाधनत्वेऽपि अहोमे १वेदपाठे । "अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च। ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते" जपोऽहुतो हुतो-होम प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम्" मनुः यस्य हवनं न कृतं तादृशे २हविरादौ त्रि० । "अथ यत् पुराणा नाग्नावग्नि यथा अहुतस्य हविषो नाश्नीयात् एव तत्तस्याहीक्षितस्य नाश्नीयात्" शत० ब्रा० ।

**अहृणान** त्रि० हृणी–रोषणे कण्ड्वा० ताच्छील्ये चानश् वेदे नि० न० त० । अक्रोधने । "किं मे हव्यमहृणानो-जुषेत" ऋ० ७,८६,२ । लोके काचित् वेदे च अहृणीय मान० । "राजाना क्षत्रमहृणीयमाना" ऋ० ५,६२,६ ।

**अहे** अव्य–अह+ए । १क्षेपे, वियोगे च । "अहे राम ! घनश्याम ! पश्यामि तवपङ्कजम् । यदि जीवामि शोकेन पुनः पश्यामि ते मुखम्" ।

**अहेड** त्रि० हेड–अनादरे अच् न० त० । अवज्ञाशून्ये

**अहेडमान** त्रि० हेड–शानच् न० त० । आद्रियमाणे अवज्ञाशून्ये "अहेडमानो वरुण" ऋ० १,२४,११ ।

**अहेतु** पु० न० त० । १हेतुभिन्ने न० त० । २हेतुशून्ये त्रि० वा कप् अहेतुकोऽप्यत्रार्थे । हेतु कारणशब्दे दृश्यञ्च । कारणञ्च कार्याव्यवहितपूर्वक्षणे कार्याधिकरणे स्थितिशाली यथा घटादिकं प्रति दण्डचक्रादि पटकादिकं तन्त्वादि । तयोस्तदधिकरणे तत्पूर्वं स्थितत्वात् तथात्वम् । कारणताग्राहकौ च अन्वयव्यतिरेकौ । मतभेदे तद्ग्राहकाणि कारणशब्दे वक्ष्यन्ते

**अहेरु** पु० न हिनोति हि–रु न० त० । शतमूल्याम् ।

**अहैतुक** त्रि० हेतुत आगतम् ठञ् न० त० । १हेतुतोऽभावे २दृढ़िद्रान्तरागकृततयाऽकृते । ३उपपत्तिशून्ये च । "यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम्" गीता ।

**अहो** अव्य० न+हा–डो । १शोके, २धिक्कारे, ३विषादे, ४दयायां, ५सम्बोधने, ६विस्मये, ७प्रशंसायाम्, ८वितर्के, ९अङ्गीकृयायाञ्च "अहो महत्त्वं महतामपूर्वम्" नीति० "कुसुमधनुषोमन्दिरमहो" श्यामास्तवः । "अहो अहोभिर्भवद्भिमाहिमागमे" नैष० ।

**अहोरात्र** पु० अहश्च रात्रिश्च टच् समा० । सूर्योदयद्वयमध्यवर्त्तिकाले षष्टिदण्डात्मके मानुषे दिने पित्राद्यहोरात्रमानन्तु–अहन्शब्दे ५७६पृष्ठे उक्तम् । त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रस्तु तावतः । अहोरात्रे विभजते सूर्यो मानुषदैविके" मनुः । "रात्राह्नाहाः पुंसि" पा० उक्ते पुंस्त्वेऽपि आर्षत्वात् क्लीवम् "रात्रिञ्च तावतीमेव तेऽहोरात्र विदोविदुः" मनुः । [दिवसे गेये रथन्तरनामकसामभेदे ।

**अहोरथन्तर** न० अह्नि गेयं रथन्तरम् शाकभेदः न टो र ।

**अहोरूप** न० अह्नो रूपम् न टो र । दिवसरूपे ।

**अहोवत** अव्य० अहो च वत च द्व०। १खेदे, २सम्बोधने ३अनुकम्पायाञ्च । "अहोवत महत् कष्टम्" गणरत्न० "अहोवत महत् पापम्" गीता "अहोवतासि स्पृहणीयवीर्य्य" कुमा०

**अह्नवाय्य** त्रि० ह्नु–बा० आय्य न० त० । निह्नवाकर्त्तरि । "सत्य तत् तुर्वशे यदौ विदानो अह्नवाय्यम्" ऋ० ८,४५,२७

**अह्नाय** अव्य० ह्नु–घञ् पृषो० यस्य यत्व न० त० । शैघ्र्ये । "अह्नाय सा नियमजं क्लममुत्ससर्ज" कुमा० "अह्नाय तावदरुणेन तमो निरस्तम्" रघुः स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा–मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय व " का० प्रा०।

**अह्रयाशु** त्रि० अह्रिमाहन्तारं प्रत्युं प्रति अय–उ । प्रत्युं प्रति आभिमुख्येन गन्तरि "अह्रयाशूनां विप्रयां अविष्यास्" ऋ० २।३८।२ ।

**अह्रय** त्रि० न जिह्रेति ह्री–अच् न०त० । निर्लज्जे "हणीमहे अह्रय वाजमग्नियम्" ऋ० २,२,४, ।

**अह्रयाण** त्रि० ह्री–बा० "शानच् न० त० । निर्लज्जे "अस्य एति युवतिरह्रयाणा" ऋ० ७,८०,२ । [ऋ० ८,५४,१ ।

**अह्रि** पु० ह्र–क्रि न० त० । धनी । "शुक्रं दुदुह्रे अह्रय"

**अह्रुत** त्रि० ह्वृ–क्त न० त० पृ० । अकुटिले "अमेनमह्रुत हसा गिर" ऋ० ८,२४,६ ।

**अह्रीक** पु० नास्ति ह्रीर्यस्य । १ क्षपणके तस्य दिगम्बरत्वेन लज्जाहीनत्वात्तथात्वम् २निर्लज्जे त्रि० ।

अङ्कल त्रि० न कलति चलति कल—अच् न०त० १भल्लातके । २विह्वलभिन्ने त्रि० ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये बृहदभिधाने अकारादिकशब्दसमूहः समाप्तः ।

## आ

आ अव्य० आप—क्विप् पृ० पलोप । १वाक्ये (वाक्यस्यान्ययात्वद्योतने पूर्व्वमेवमसंस्था इदानीमेवमिति प्रतिपादने) २स्मृतौ (आ एवं मन्यसे इति स्मृतस्यान्यथा प्रतिपादने) ३अनुकम्पायाम् । ४समुच्चये, ५अङ्गीकारे, ६ईषदर्थे ७क्रियायोगे, ८सीमायां ९व्याप्तौ च । वाक्यस्मृतिभिन्नेऽस्य ङित्त्वमिच्छन्ति अङितोऽस्य एकाजनिपातत्वात् प्रगृह्यसंज्ञा ङितस्तु न । अतवोक्तम् "मर्य्यादायामभिविधौ क्रियायोगेषदर्थयो । य आकार स ङित् प्रोक्तो वाक्यस्मरणयोरङित्" तत्र सीमायाम् आ—आत्मबोधात् आत्मबोधात् "लौकिक तद्वदेवेद प्रमाणं त्वात्मनिश्चयात्" । व्याप्तौ मञ्चास्यासकलात् । सकल व्याप्येत्यर्थः । एतदर्थे विकल्पेन अव्ययीभाव । आत्मबोधम् । आसकलम् । धातुयोग उपसर्ग । यथा आगच्छत् आगात् । ईषदर्थे आकम्प आकेकर । वाक्यस्य वाक्यार्थद्योतकता । स्मरणं प्रमाणान्तरावगतस्य नतु यस्मात्पेणावगतस्येति तयोर्भेदः ।

आकन पु० आ+कन—अच् । ऋषिभेदे कर्ग्वा० फिञ् । आकनायनिः तदृषे आनक इति वा पाठः ।

आकम्प पु० आ+ईषदर्थे कपि—घञ् । ईषत्कम्पे ।

आकम्पन त्रि०आकम्पते आ+कपि—युच् । १ईषत्कम्पनशीले । २भावे ल्युट् । ईषत्कम्पे न० । आ+कपि—णिच्—ल्यु । ३ईषच्चालके त्रि० । ततएव भावे ल्युट् । ४ईषच्चालने न० ।

आकम्पित त्रि०आ+कपि—कर्त्तरि क्त । १ईषत्कम्पिते "अमोकाहार्कम्पितपुष्पगन्धी" रघु । भावे क्त । २ईषत्कम्पने न० । णिच्—कर्म्मणि क्त । ३ईषच्चालिते त्रि० ।

आकल्य न० न कल स्वच्छताकारी अकलस्तस्य भावः ष्यञ् । अस्वच्छत्वकारित्वे । "न नञ्पूर्व्वात्तत्पुरुषादित्यादि" पा० सूत्रे तस्य पर्य्युदासात् तत्पुरुष एव ष्यञ् । नञ्समीपौ तु तलादि । अकलता अकलत्वम् ।

आकम्प्र त्रि० आ+कपि—र । ईषत्कम्पशीले ।

आकर पु० आकुर्व्वन्ति संभीभूय कुर्व्वन्ति व्यवहारमत्र आ+कृ—घ । १समूहे, "शब्दाकरकरग्राममर्थमण्डलमण्डलम्" कविकल्पद्रु० "बस्नुवज्राकरभूषणायाः रघु" । २श्रेष्ठे च । आकीर्य्यन्ते धातवोऽत्र कृ—अप् । ३रत्नाद्युत्पत्तिस्थाने "आकरे पद्मरागाणां जन्म काचमणेः कुतः" हितो० "शुचोनाकरकर्म्मान्ते भीष्वन्तर्निवेशने" "आयव्ययौ च नियतावाकारान् कोषमेव च" "सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम्" मनु । "दिलीपसूनुर्मणिराकरोद्भवः" रघुः । ४स्थानमात्रे च कमलाकरः पद्माकरइत्यादि । "हरिदश्वः कमलाकरानिव" रघु "शैलेन्द्रोहिमवाञ्चाम धातूनामाकरो महान्" रामा० । आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदा सहवासः" नैष० ।

आकरिक त्रि० आकरे नियुक्तः ठञ् । स्वर्णाद्युत्पत्तिस्थानेषु राज्ञा नियुक्ते तत्र हि नियुक्तस्य लोभाधिक्येन पापसम्भवात् तत्राधिकारस्य मनुना उपपातकमध्ये परिगणना कृता । "सर्व्वाकरेष्वधीकार इति" ।

आकरिन् त्रि० आकर उत्पत्तिस्थानं प्राशस्त्येनास्त्यस्य इनि स्त्रियां ङीप् । "प्रशस्ताकरजाते । "दधतमाकरिभि करिभि क्षतैः" किरा० ।

आकर्ण अव्य० कर्णपर्य्यन्तम् अव्य० । कर्णपर्य्यन्ते "आकर्णमुत्कर्षितमस्य विकाषिकाणम्" माघः ।

आकर्णन न० आ+कर्ण—ल्युट् । श्रवणे "सदा तदाकर्णन तत्पराभूत्" नैष० ।

आकर्ष पु० आकृष्यते विषयान्तरतोऽनेन आ+कृष—घञ् । १पाशके, २शारिफलके, ३द्यूते, ४इन्द्रिये धन्विनो ५धनुरभ्यासे च । भावे घञ् । ६आकर्षणे । आधारे घञ् । ७निकषे उपले । स्वर्णादिगत धान्यमाकृष्यतेऽनेन करणे घञ् । अङ्कुशाकारे (आकुड़ा) इति ख्याते द्रव्यभेदे । "आकर्ष श्वेव आकर्षेश्च" सि०कौ० । आकर्षति कर्त्तरि अच् । ८आकर्षके त्रि० । मध्विवाकर्षे कृष्णे" काव्या० १२,१,२० । मध्वाकर्षे कृषे" कर्क० "आकर्षसेऽप्याकफल सुप्रणीतोऽसि हृदि मौढौमन्त्रपदः समाधि" भा० स० ६अ० आकर्षकः हृदयाकर्षक समाधि चिन्तामम् अपाकफल नीचफलः । आकर्षे (षे) ण चरति ठन् आकर्षिकः । आकर्षणचारिणि त्रि० स्त्रियां ङीप् ।

श्र० । द्रौपदीकृतलक्षणस्य च । "आकूतिं सत्या मनसो मे अस्तु" ऋ० १०,१२८,४ । "सं म आकूतिर्ऋध्यात्" ऋ० ४,२६,२ । संज्ञायां क्तिच् । स्वायम्भुवमनो शत-रूपायां पत्न्यामुत्पादिते कन्याभेदे तत्कथा यथा । "कस्य रूपमभूद्द्वेधा यत् कायमभिचक्षते । ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत । यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् । स्त्री याऽऽसीत् शतरूपाख्या महिष्यस्य महात्मनः । तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे । स चापि शतरूपायां पञ्चापत्यान्यजीजनत् । प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ! । आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ! । आकूतिं रुचये प्रादात् कर्दमाय तु मध्यमाम् । दक्षायादात् प्रसूतिञ्च यतआपूरितं जगत्" भा० १स्क०।

**आकृति** स्त्री आक्रियते व्यज्यते जातिरनया करणे क्तिन् । जातिव्यञ्जकेऽवयवसंस्थानभेदे । "आकृतिग्रहणा जातिः" महाभा० । "जात्याकृतिव्यक्तयस्तु पदार्थः" गौ०सू० तत्राकृतिलक्षणं तत्रोक्तम् "आकृतिर्जातिलिङ्गाख्या" गौ० । "जातेर्गोत्वादेः सास्नादिः संस्थानविशेषो हि लिङ्गमिति । "इयमाकृतिरेव शक्यार्थः" इति केचिन्मन्यन्ते । तदभिप्रायेण, महाभा० । "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द इति" अनाकृति संज्ञा आकृतिमन्तः संज्ञिन इति । "लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते" इति च महाभा० । गौतमेन तु इतरपक्षनिराकरणेन त्रयाणामेव शक्यार्थत्वमुररीकृत यथा । "आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" सू० । आकृतिः पदार्थः कुतः सत्त्वस्य प्राणिनो गवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेः तदपेक्षत्वादाकृत्यपेक्षणात् अयमश्वो गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वात् आकृतिरेव शक्यार्थः । इति पक्षं तद्दूषयित्वा जातेः पदार्थत्वमाह "व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः" सू० । मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रसङ्गात् जातिः पदार्थः । इतरथा मृद्गवकस्यापि व्यक्तित्वात् गवाकृतिमत्त्वाच्च तेषु प्रोक्षणादिप्रसङ्ग इति भावः । एवं जात्याकृतिव्यक्तीनां प्रत्येकस्य शक्यत्वपक्षं निराकृत्य त्रयाणामेव शक्यत्वमिमाह । "जात्याकृतिव्यक्तयस्तु पदार्थः" सू० "तुशब्देन एकमात्रपदार्थत्वव्यवच्छेदः एककवचनं तु तिसृष्वप्येकैव शक्तिरिति सूचनाय, विभिन्नशक्तौ कदाचित् कस्यचिदुपस्थितिः स्यात् । शक्तेस्तुल्यत्वेऽपि शाब्दे विशेष्यत्वं तथैव शक्तिग्रहात् । न चाकृत्यादिसाधारणशक्यतावच्छेदकाभावात् न शक्यत्वम् इति वाच्यम् तथा नियमे मानाभावात् इदं गवादिपदमभिप्रेत्याह तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः. जातिपदं वा धर्मपरं तथैव लक्षणस्य वक्तव्यत्वादिति" वृत्तिः । एवं शक्यत्वं व्यवस्थाप्य आकृतेर्लक्षणमाह "आकृतिर्जातिलिङ्गाख्या" सू० प्रागुक्तम् । एतेनाकृतिमन्त्रस्य जातिव्यक्त्योः संबन्धपरत्वकल्पनमर्वाचीनानां परास्तम् सम्बन्धस्य जातिलिङ्गत्वाभावात् तस्य शक्यतावच्छेदकत्वेन शक्यत्वाभावाच्च । सा०भा० आकृतीनां नित्यत्वोक्तिस्तुल्याकृतिमवाहनित्यत्वाभिप्रायेण इष्टव्या "यत्राकृतिस्तत्र गुणा वसन्ति" नीतिः "न ह्यविषये ह्याकृतिः" "यदुदाहरणाकृतौ गुणाः" इति च नैष० २ आकारे "इङ्गितज्ञतोभावो बहिराकार आकृतिरिति" वक्ष्यमोक्ते ३ आकृतियुक्ते देहे "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" शकु० । "सदाकृतिं पतरथेन्द्रकेतो." रघुः । "स्फुरितं मनोगतमिवाकृतयः" "गोवर्द्धनस्याकृतिरन्वकारि" इति च माघः । "नाकृतिगुरुता गुरुता" उद्भटः । ४ आकारे मूलसन्ध्यादौ च आकृतिगणः ।

**आकृतिगण** पु० आकृतौ आकारप्रसिद्धो गणः शाक०त० । पाणिन्युक्ततत्तत्कार्य्यनिमित्ते शब्दसमूहे । यथा स्वरादिराकृतिगणः कण्ड्वादिरित्यादि गणपाठे भूरिप्रयोगः ।

**आकृतिच्छत्रा** स्त्री छादयति छद–णिच् कर्त्तरि ष्ट्रन् ६त० । (घोषा) घोषातकीलतायाम् ।

**आकृष्ट** त्रि० आ+कृष–क्त । कृताकर्षणे । "नाकृष्टं न च टङ्कितं न नमितं नोत्थापितं स्थानतः" महाना० ।

**आकृष्टि** स्त्री आ+कृष–क्तिन् । आकर्षणे ।

**आके** अव्य० आ+कम–डे । १ अन्तिके २ दूरे च निरु० । "त्वमग्ने मधुराके नमस्य" ऋ०२,१,१०

**आकेकरा** स्त्री आके अन्तिके कीर्य्यते कृ–कर्म्मणि अप् । "दृष्टिराकेकरा किञ्चित्स्फुटापाङ्गे प्रसारिता । मीलितार्द्धपरा लोके तारा व्यावर्त्तनोद्भवा" इत्युक्तलक्षणे दृष्टिभेदे नेत्रादिविशेषणत्वे त्रि० "निमीलदाकेकरलोलचक्षुषा" माघः ।

**आकेनिप** त्रि० आकेऽन्तिके निपतति नि+पत–ड । अन्तिकपातिनि "आकेनिपासो अहभिर्दविध्वतः" ऋ० ५,५४,६,

**आकोकेर** पु० ज्योतिषोक्ते मकरराशौ । "क्रियताबुरिजितुमकुलीरलेयपाथेययूककौर्प्याख्याः । तौक्षिक आकोकेरोहृ-

**आक्षिप्त** त्रि० आ+क्षिप-क्त । १कृताक्षेपे यस्याक्षेपः कृतस्तस्मिन् २आकृष्टे च ।

**आक्षीव** पु० आ+क्षीव-णिच्-अच् । १शोभाञ्जनवृक्षे । क्षीव-क्त नि० क्षीबोमत्तः प्रादि० । २ईषन्मत्ते ३सम्यक्मत्ते च त्रि० ।

**आक्षेप** पु० आ+क्षिप-घञ् । १भर्त्सने, २अपवादे, ३आकर्षणे, धनादिन्यासरूपे, ४निक्षेपे ५अर्थालङ्कारभेदे स च ३६४पृष्ठे दृश्यः। ६निवेशने "गोरोचनाक्षेपनितान्तगौरैः" कुमा० ७उपस्थापने "स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम् । उपादानं लक्षणं चेति" काव्यप्र० । ८अनुमाने यथा जातिशक्तिवादिना मते व्यक्तेराक्षेपात् बोधः । स चानुमानमेव । तथा हि गामानयेति वाक्ये गोत्वकर्मकानयनं गोकर्मकानयनं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानेन गोत्वाश्रयस्य व्यक्तेरनुमानेन भानम् । यथोक्तं शब्दशक्ति० "गामानयेत्यादौ गोत्वादिकर्मकत्वेनैवानयनादेरन्वयबोधः गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यानयनबुद्धिं प्रत्येव हेतुत्वात् गामनयेत्यादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रत्ययार्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्मताकत्वेन बोधस्तूत्तरकालमाक्षेपात् । कर्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकम् गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात्" । ९भर्त्सनाप्रयोगे च "विरुद्धमाक्षेपवचस्तितिक्षितः" किरा० ।

**आक्षेपक** त्रि० आ+क्षिप-ण्वुल् । १निन्दके २आकर्षके । "यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः । तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः । मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः" इत्युक्तलक्षणे ३वातरोगभेदे ४व्याधे च पु० मेदि० ।

**आक्षेपण** न० आ+क्षिप-ल्युट् । आक्षेपार्थे "पतनपीडनभङ्गाराक्षेपणप्रहाराभिघातयन्त्रणमन्थनाभिरभिघातविशेषैः" सुश्रु० ।

**आ(अ)क्षैत्रज्ञ** न० अक्षेत्रज्ञ एवं ब्राह्मणा० स्वार्थे ष्यञ् । द्विपदवृद्धिः पूर्वपदस्य वा । अक्षेत्रज्ञे क्षेत्रानभिज्ञे ।

**आक्षेपिन्** त्रि० आक्षिपति आ+क्षिप-णिनि । १आकर्षके । आक्षेपः कृच्छ्रवृध्या पर्यालोचनमस्त्यस्य इनि । २कृच्छ्रवृध्या आलोचनपूर्व्वकाकर्षके च । "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" पात० सू० । प्राणायामशब्दे विवृतिः ।

**आक्षोट** पु० आ+अक्ष-ओट । पर्वतपीलुभेदे ।

**आक्षोड** पु० आ+अक्ष-ओड् । पर्वतपीलुवृक्षे ( आखरोट ) इति ख्याते । "विलासमलकमहीकाफलमाम्रातदाडिमम् । भव्यं पानीयताघोडम्" स्मृतिः "आक्षोडमलकं फलस्फरम् काश्मीरमविद्रुम्" आह्निकतत्त्वे रघुनन्दन ।

**आख** पु० आखनत्यनेन आ+खन-ड । खनित्रे । अच् स्वार्थे कन् गौरा० पाठान्तरम् ङीप् । आखकी मुद्रखनित्रे स्त्री ।

**आखण्डल** पु० आखण्डयति भेदयति पर्व्वतान् आ+खडि-डलच् डस्य नेत्त्वम् । इन्द्रे । "आखण्डलः काममिदं बभाषे" कुमा० "तयोः कामरूपाणामत्याखण्डलविक्रमः" रघु । [ पूर्व्वपदाद्युदात्तम् ।

**आखण्डि** आ+ड्खण्ड-इन् आखण्डके भेदके पत्रादि० ।

**आखन** पु० आखनत्यनेन आ+खन-घ । खननसाधने खनित्रे । वेदे तु पु०णत्वम् । "एवं तथाखानमाखण्य कृत्वा" आ०उ० । न शक्यते खनितुं कुद्दालादिभिरपि ऊर्ध्वमेव न शक्योऽखणस्तत्कृत्वा" शा०भाष्यम् ।

**आखनिक** आ+खन-कर्त्तरि इकन्। १चौरे, २शूकरे, ३मूषिके च ४खनककर्त्तरि त्रि० ।

**आखनिक** पु० आ+खन-करणे कर्त्तरि वा इकक । खनित्रे १चौरे २शूकरे ३मूषिके च ५खनके त्रि०। उर । आखरोऽप्यत्र । पात्रेसमितादि युक्तारोह्यादिश्च ।

**आखर** पु० आ+खन-करणे ड । खनित्रे ।

**आखरेष्ठ** त्रि० आखरे तिष्ठति स्था-क पत्वम् वेदे नित्यमलुक् । आखरे स्थिते "कृष्णोऽस्याखरेष्ठः" सि०कौ० ।

**आखान** पु० आ+खन घञ् । समन्तात् खनने ।

**आखु** पु० आ+खन-कु । १मूषिके, २चौरे, ३शूकरे च । कर्म्मणि कु । ४देवताड्वृक्षे । "विभवे सति नैवास्ति न ददाति जुहोति न । तमाखुराखु"रित्युक्तलक्षणे ५कृपणे च

**आखुकर्णपर्णिका** स्त्री आखुकर्णाविव पर्णान्यस्या वा कप् । (उन्दुरकाणी) लतायाम् ।

**आखुकर्णी** स्त्री आखोः मूषिकस्य कर्ण इव पर्णमस्याः ङीप् (उन्दुरकाणी) मूषिककर्णतुल्यपर्णयुक्तायां लतायाम्।

**आखुग** पु० आखुना मूषिकेण गच्छति । गम-ड । मूषिकवाहने गणेशे । तस्य यथा मूषिकवाहनत्वं तथा गणेशशब्दे वक्ष्यते आखुवाहनादयोऽप्यत्र ।

**आखुपर्णिका** स्त्री आखुः तत्कर्णाविव पर्णमस्याः वा कप् । (उन्दुरकाणी)वृक्षे । कपभावे ङीप् । आखुपर्णीत्यपि तत्रैव ।

**आखुभुज्** पु० आखुं भुङ्क्ते भुज-क्विप् । मूषिकभक्षके विडाले । क । आखुभुजोऽप्यत्र ।

**आखुकरीष** न० ६ त०। मूषिकस्थानस्य पुरीषरूपकरीषे "तथा-दाखुकरीषं सम्भरति" शत० ब्रा०।

**आखुपाषाण** पु० आखुः खनक पाषाण कर्म० "आखुपाषाण-नामायं लौहद्रावकारक "इत्युक्ते पाषाणभेदे राजनि०।

**आखुविषहा** स्त्री आखुविषं मूषिकविषं हन्ति हन-ड। मूषिकविषहरे १ लताभेदे, २देवताड़ोलतायाञ्च।

**आखूत्कर** पु० आखुभिरुत्कीर्य्यते उत्+कॄ-कर्म्मणि-अप्। मूषिकैरुत्कीर्य्यमाणेषु पांसुषु। (उन्दुरमाटि)। "हिरण्यं निधायोत्खुत्कराद्विपति" कात्या० ४,८,१६।

**आखूत्थ** त्रि० आखुभ्य उत्तिष्ठति उद्+स्था क। १आखूद्भूते। भावे क। २आखूनामुत्थाने न० सि० कौ०।

**आखेट** पु०आखिद्यन्ते त्रास्यन्ते प्राणिनोऽत्र आ+खिट-घञ्। प्राणिनाशार्थायां मृगयायाम्। स्वार्थे कन् आखेटकोऽप्यत्र

**आखेटशीर्षक** न०। आखेट इव शीर्षमस्य। "कपिशीर्षं कुम्भशीर्षं तथा आखेटशीर्षकम्। इति कुट्टिमभेदा-स्तु" इत्युक्ते (खड्डा) कुट्टिमभेदे। [२तत्कुट्टिमस्थाने च।

**आखेटिक** पु० आखेटे कुशल ठञ्। मृगयाकुशले १कुक्कुरे।

**आखोट** पु० आख खनित्रमिव उटानि पर्णान्यस्य। (आखरोट) इति ख्याते शैलपीलौ।

**आख्या** स्त्री आ+ख्यायते अनेन आ+ख्या-घञ्। संज्ञायां रूढेर्नाम्नि वाचकशब्दे। "यथाहमाख्या सुमुखी जगाम" कुमा नाम च "येन स्वीयपदार्थस्य मुख्यतः प्रतिपादने। स्वोत्तर-प्रथमापेक्षा तन्नाम स्यात् सदर्थकमिति" शब्दश० तल्लक्षणकम् "यत् प्रातिपदिकं नाम तस्मान्नो नातिरिच्यते" इति च तत्रो क्त "वाचकशब्देन स्वोपस्थाप्यदर्थत्वविशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृश शब्द एव सदर्थक नाम। घटादयो हि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यक बोधमुत्पादयन्ति नत्वन्यथा न हि घट इत्यादित इव घटादित्यादितोऽपि घटादिमुख्यविशे-ष्यकः सुवर्णसंख्यादेरवगमः। पीतपटेत्यादिकः समासोऽपि स्वोत्तर प्रथमाप्रतिसन्धानदशायामेव घटादिमुख्यधर्म्मि-ताकस्य पीताद्यन्वयबोधस्य जनकः अतएव 'नापदं प्रयु-ञ्जीतेति' वृद्धाः। पदं विभक्त्यन्त पीतपटरूपमित्यादावपि नावान्तरवाक्यार्थबोधपूर्व्वको महावाक्यार्थबोध घटा दिनाम्न प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वयधिय पूर्व्वमसम्भवात् विशिष्टवैशिष्ट्यावगाहितया प्रमाणान्तरेण पटधर्म्मि कपोतनिषयादपि तत्र सम्भवात्। न चाम्योन्य-पदस्पादिनामस्याप्तिः 'इथ्य, प्रथमा नाभिधीयते' इति

रूढ' अरण्यादिति पाञ्चं मन्नाभ्यामन्योन्यं दृश्यत इत्यादौ भक्तयो परस्परकत्र्तृकहननकर्म्मताभ्याहारोभेन तेषामपि प्रथमान्तताबादन्यदा सकर्म्मकस्य प्रत्नैर्भावाख्यातयोकाङ्क्षा-त्वात्तदुपपत्तेरकर्म्मकस्यैव धातोरन्वयात्" । तेन न्याय-मते प्रथमान्तमुख्यविशेष्यकशाब्दबोधस्तोकारेष तथात्वं वैया-करणादिमते तु न तथा "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति" या० उक्ते भावप्रधानस्यैव बोध तथाच "अर्थ वद्धातुरप्रत्ययः प्रातिपदिक" "कृत्तद्धितसमासाश्चेति" पा० उक्त लक्षण प्रातिपदिकमेव नामेत्यभिधीयते अतएवोक्तम् "उणादयो ह्यदन्तञ्च तद्धितान्तं समासजम्। नामषट्का मचेतस्य स्याद्व्युत्पत्तिरुदुत्तरम्" "तच्च नाम चतुर्विधम्" "रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम्। तच्चतुर्थां परे रूढयौगिकं मनुतेऽधिकम्" शब्दश० व्याख्यात च स्वयमेव जगदी-शेन। "निरुक्तं नामविभजते। रूढञ्चेत्यादि तत् नाम। चवयवमवधारणार्थं तेन किञ्चिन्नाम कश्चिदर्थे रूढ-मेव यथा गोमण्डलो गवादि, नमेर्टौ टामाभ्या तुर्ड्ड-रूढेत्यादेरौणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्व-विरहात्। किञ्चिल्लक्षकमेव यथा तीरादौ गङ्गादि, आद्य-व्युत्पत्त्या पूर्वत्तीरे शक्तिप्रसक्त्याविपिष्टयोऽन्यानामिक-प्रयोगापत्त्या तद्मावाद्यकल्पनात् शक्ते पूर्व्वपूर्व्वप्रयोग नियतत्वात्। किञ्चिद्योगरूढमेव यथा पङ्कजातपङ्कादौ पङ्कजादि "किञ्चित् यौगिकमेव यथा पाचकर्त्रादौ पाच-कादि। रूढयौगिकमप्यधिकं नाम यथा मण्डपमहा-रजनादि तद्धि कदाचिदवयवशक्त्या योगार्थमेव कदाचित्त समुदायशक्त्या रूढार्थमेवाभिधत्ते इत्यपरेषाम्मतम्। गौर्वाहीक इत्यादौ तु गवयार्थसदृशत्वावच्छिन्नबोधकतया गौण गवादिपद गोसदृशादौ लक्षकमेव न तु ततोभिद्यते" तत्र रूढादिलक्षणानि तत्रैवोक्तानि यथा "रूढं सङ्केतव-न्नाम सैव सङ्केत कीर्त्यते। नैमित्तिकी पारिभाषिक्यौपा-धिक्यपि तद्भिदा। यन्नाम यादृशार्थे सङ्केतितमेव न तु यौगिकमपि तद्रूढ योगरूढन्तु पङ्कजादिकं न तथा रूढनामैव च संज्ञापदेनाभिलप्यते न तु कुलादिवत् संज्ञापि नाम्नोऽवान्तरभेदः, येन विभागव्याघातः स्यात्। संज्ञायाश्च त्रयोभेदाः नैमित्तिकी पारिभाषिकी औपा-धिकी चेति। पाचकपाठकादयस्तु न संज्ञाः सङ्केतव्यत्या-दिति ये तु रूढस्य शास्त्रसङ्केतैर्भ्यधत्वमाहुस्तन्मतव्युत्पत्ति। जातिद्रव्यगुणरूपस्वधर्म्मै सङ्केतवत्तया। जातिशब्दादि-भेदेन चातुर्विध्यं परे जगुः। गोगवयादीनां गोत्वादि

जात्या पश्वादीनां लाङ्गूलवत्त्वादिद्रव्येण धर्म्यादीनां शुक्लादिगुणेन पाचकपाठकादीनाञ्च शब्दानां कर्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव रूढानामिति। यदुक्तं दण्ड्याचार्यैः "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः। चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः" इति तदेतत्पङ्कजपुष्पदीनामसम्भवादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः। नैमित्तिकसंज्ञां लक्षयति। जात्यवच्छिन्नशक्तिमती नैमित्तिकी मता। जातिमात्रेऽपि सङ्केताद्व्यक्तेर्भान छडुपकरम्। यन्नाम जात्यवच्छिन्नशक्तं तन्नाम नैमित्तिकी संज्ञा यथा गोत्वादि ना हि गोत्वघटत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोत्वादिजातिमात्रं गोपदं गोत्वे शक्तमित्याकारकपदज्ञानात् गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्। ननु गामानयेत्यादौ गोत्वादिकर्मताकत्वेनैवानयनादेरन्वयधीर्गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात् सुबर्थकर्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्मताकत्वेन बोधस्तूत्तरकालमेवोपपादनात् कर्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात् आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसम्भवात्। न च वस्तुगत्या व्यक्तित्वगमकत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवं ग्रहादपि शुद्धगोत्वस्यान्वयबोधापत्तिः गोत्वत्वावच्छिन्नशक्तत्वप्रकारकज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्ततात्प्रकारकज्ञानस्यैव हेतुत्वं गोत्वत्वाद्यप्रवेशादिति वाच्यम् गोपदं गोत्वशक्तमित्याकारज्ञानत्वेन हेतुतायां शुद्धस्यैव गोत्वस्य विषयितासम्बन्धेन प्रकृते विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यायोगात्। न हि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्मावच्छिन्नत्वनियमो मानाभावात् अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारे तत्र ज्ञाततासिद्धकानुमानेऽनुव्यवसाये वा व्यभिचाराच्च प्रागनुपस्थित्या गोत्वत्वादेस्तत्रोपनयायोगात्। एतेन जातेर्निरवच्छिन्नप्रकारतायाः समवायसंसर्गावच्छिन्नत्वनियमात् केवलस्य गोत्वादेः शक्त्यंशे विषयतया सुबर्थकर्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम् उक्तस्थल एव व्यभिचारात्। नचैवं कालो गौः पटं गौरित्यादिप्रत्ययोऽपि प्रमा स्यात् कालिकादिसम्बन्धेन गोत्वादिमति तत्प्रकारकत्वादिति वाच्यं कालिकादि-

सम्बन्धेन गोत्वादेः प्रमात्वस्य गोत्वत्वाद्यवच्छिन्नप्रकारताघटितत्वेन तादृशमते प्रमात्वायोगात् अन्यथा घटत्वादिजाते स्वस्थानसमवेतत्वमते संयोगो घट इत्यादिप्रतीतेः समवायेन प्रमात्वस्य दुर्वारत्वापत्तेः शब्दस्यैव प्रत्यक्षस्यापि कालो गौरित्यादिविशेषस्य नियमतो गवाद्यभेदावगाहित्वेनैवाप्रमात्वसम्भवाच्चेति भट्टमतानुयायिनः। तन्मन्दं विनाप्युक्तेषं गामानयेत्यादितो गवादिकर्मताकत्वेनानयनादेरन्वयबोधस्यानुभविकत्वात् गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेनासमर्थनात् गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात् स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्त्वानुमापकस्य व्यभिचारादिदोषेण दुःसाध्यत्वाच्च। एतेन कर्मत्वादौ गोत्वादेः स्वाश्रयवृत्तित्वसम्बन्धेनान्वयबोधोत्तरं कर्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वं विनानुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येनैव कर्मत्वं गवीयमित्यौपादानिको गवादिव्यक्तिबोध इति श्रीकरमतमप्यनादेयं सिद्धोऽसिद्धाभ्यां शब्दस्वार्थापत्तिभ्यामवच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौपादानिकबोधस्य जननायोगाच्च। यत्तु गौर्जायते गौर्नश्यति सर्वत्र गोत्वादिजातिशक्तेनैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां शक्यत्वेनान्यलभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्यानुपपत्तेरपि लक्षणाया बीजत्वात् यदाहुः खण्डनाचार्याः "जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति। नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे" इति तदपि तुच्छं व्यक्तिविशेष्यतायां गोत्वादिजातौ गवादिपदस्य सुप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वात्। न च गौरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ सुप्रयोगः तत्र पञ्चम्याः सार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात् अन्यथा गोगोत्वयोर्भिन्नशक्तिभ्यां गोपदेन बोधने वृत्तिद्वययौगपद्यापत्तेः वस्तुतः शुद्धस्य गोत्वादेः शाब्दधीप्रकारताया समवायावच्छिन्नत्वनियमात्स्वावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनान्वयो दुर्घट एव। द्रव्यं घट इत्यादिप्रतीतेः समवायेन प्रमात्वानुरोधाद्घटत्वजातेर्नानात्वोपगमादिति। प्रभाकरास्तु गोत्वपदस्येव

प्रकारत्वं समवायेनैवेत्यभिहितं प्रागिति"। लक्षकलक्षणमुक्तं तत्रैव 'शक्यार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत्। तत्र लक्षकं नाम तच्छक्तिविधुरं यदि। शक्यार्थसम्बन्धवति यन्नाम शक्तमिति तदेव शक्यार्थे लक्षकं यदि शक्यार्थे शक्तिशून्यं भवेत्। सैन्धवादयश्च शब्दास्तुरगादिसम्बन्धिनि लक्षका अपि लवणादाविव तुरगादावपि शक्ता एव। गङ्गादयस्तु तीरादावशक्ता इति तत्सम्बन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्तीति तत्र लक्षका एव। शक्तत्वे पूर्व्वपूर्व्वप्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् कथञ्चित्तीरादिसम्बन्धित्वेन गृहीतादपि गङ्गादिपदात्तीरादेरन्वयबोधेन तीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा गङ्गागङ्गायां घोष इत्यादावपि गङ्गागङ्गेतिभागस्य निरूढलक्षणायाः सत्त्वेन वैयर्थ्याभावप्रसङ्गाच्च। एतेन तीराद्यशक्तत्वे सति तीरादिपरत्वं तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्तम् अपभ्रंशस्यापि लक्षकत्वापाताच्च नचेष्टापत्तिः शक्तिलक्षणान्यतरवृत्तिमत्त्वे तस्य साधुतापत्तेः पदसाधुताया वृत्तिमत्त्वस्यैव तन्त्रत्वात्। किञ्चानुभावकत्वं यद्यनुभवस्योपधायकत्वं तदा घोषादिपदसाकाङ्क्षस्य गङ्गादिपदस्य तीरलक्षकता न स्यात् तेन तीरसम्बन्धिनो नीरस्यानुभवानर्ज्जनात् स्वरूपयोग्यत्वन्तु गङ्गायामिति वाक्यस्य दुर्व्वारं तस्याधेयताधर्मिकनीरानुभवं प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात् नीराधेयत्वस्य च नीरसम्बन्धित्वानपायात्। ननु वाक्यमपि लक्षकं भवत्येव कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिना बोधः कथं वा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्य न हि तत्र नदीपदं तीरलक्षकं गभीरायामित्यस्यानन्वयापत्तेः न हि तीरं गभीरं नापि गभीरपदम्। तथा नद्यामित्यस्यायोग्यतापत्तेः नापि तीरं नदी तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षकमिति मीमांसकाः तन्न गभीरायां नद्यामिति विभक्त्यन्तभागस्य तादृक्तीरलक्षकत्वे घोषाद्याधेयत्वेन तदन्वयानुपपत्तेः समासादन्यत्र नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। एतेन तादृशतीरवृत्तितायामेव तद्भागस्य लक्षणायामपि न निस्तारः तादृशतीरवृत्तेस्तु लक्ष्यत्वे घोषादावभेदेन तदन्वयायोगः समासभिन्नस्थले नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वात्। न च गभीरायां नद्यामिति भागस्यैव तादृक्तीरलक्षकत्वम्। तदर्थं विभक्त्यर्थस्यानन्वयापत्तेर्नहि स भागः प्रकृतिर्येन तदर्थे विभक्त्यर्थस्यान्वयः स्यात् गभीरायां नद्यां घोष इत्यादितोऽपि गभीरनदीतीरकर्म्मत्वादिबोधकत्वे तद्भागस्य वाक्यादन्यत्वाच्च तस्माद्गभीरापदं नदीपदं वा तत्र गभीरनदीतीरलक्षकं पदान्तरन्तु तत्र तात्पर्य्यग्राहकमिति सिद्धान्तविदः। घटपटाद्यनुकरणस्य डफडादिस्तोभस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव। गौर्वाहीक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न ततोभिद्यते"। तस्य विभागोऽपि दर्शितस्तत्रैव। "जहत्स्वार्थाजहत्स्वार्थनिरूढाधुनिकादिका। लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा। काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य। काचित् लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्व्वपूर्व्वं प्रत्यायकत्वात् निरूढा यथा आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य। काचिच्च पूर्व्वपूर्व्वं तादृग्रूपेणाप्रत्यायकत्वादाधुनिकी यथा घटत्वादिना पटादिपदस्य। आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौण्युपसङ्ग्रहणे यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य। तदेव विविधलक्षणावत्त्वाल्लक्षकं नामापि जहत्स्वार्थादिभेदादनेकविधमित्यर्थः। स्यादेतत् यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेद्धेतुर्भवेदप्युक्तक्रमेण लक्षकाणां विभागः नत्वेतदस्ति तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात् गुरूणाम् अग्नौ शैत्यं स्पृशेदित्यादौ शक्तेन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना शाब्दीमगृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्यन्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीराद्यविशेषितस्य सुबर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात्। न च शक्तस्यैव पदस्य स्वसाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्मिकान्वयबोधं प्रति हेतुत्वात् नान्वयबुद्धौ लक्ष्यार्थस्य प्रवेशः कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यतानुपपत्तेः कुमति पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यनुभविकत्वाच्च तथा शक्तेरिव भक्तेरपि ज्ञानमनुभावकं भवत्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः"।

लक्षणाभेदेन लक्षकशब्दभेदा बहवः लक्षणाभेदाश्च श० द० दर्शिता लक्षणाशब्दे विवृतिः । तत्र योगरूढलक्षणमुक्तं शब्दश० । "स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृन्मिथः । योगरूढं न यत्रैकं विनान्यस्यास्ति शाब्दधीः ।" यन्नाम स्वावयवशक्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम योगरूढं यथा पङ्कजकृष्णसर्पाश्वकर्णादि तद्धि स्वान्तर्निविष्टानां पङ्कादिशब्दानां शक्तिलभ्येन पङ्कजनिकर्त्रादिना सह स्वशक्यस्य पद्मादेरन्वयानुभावकम् । पङ्कजमित्यादितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्वसिद्धत्वात् । इयांस्तु विशेषो यद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं, मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयाबोधात् । योगरूढं तु पङ्कजादिपदमवयवशक्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवशक्त्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्तिवैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं कुमुदमित्यत्र पङ्कजनिकर्तृत्वेन, भूमौ पङ्कजमुत्पन्नमित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम् । ननु पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्व तन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वस्य अतस्तदुपस्थापितस्य पङ्कजातादेः क्व पदान्तरानुपस्थापिते पद्मादावन्वय इति चेदपङ्कजवत्ति घटेत्यादौ सवत्सचरद्गोभिः तन्मध्या सुपङ्कजमित्यादौ च व्यभिचारादुक्तव्युत्पत्तेः सङ्कोचेनेति ध्येयम् । न च धेनुपदस्य धानकर्मत्वविशिष्टाया गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौ रूढिरेवास्तु न तु योगरूढिरिति साम्प्रतम् अन्यत्र क्लृप्तशक्तिकेभ्य पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरौ समुदायशक्त्यादनन्यलभ्यस्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यय एव पद्मत्वविशिष्टस्य लक्षणया लाभसम्भवात् पङ्कजभागस्य तत्र शक्तिरुचिता प्रकारान्तरालभ्यस्यैव शब्दशक्यार्थमित्युक्तत्वात् तथापि पङ्कजत्वमानत्वयोरिवैकपदार्थयोरपि कर्तृपद्मयोर्मिथोऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरभावे पदेऽपि वा पद्मादौ तदर्थस्यान्वयबोधविरोधिभेदाभावात् पङ्कजमस्तीत्यादितः पद्मसत्त्वाद्यनुभावार्थमवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढिरेषा इतरथा प्रकृत्यर्थविशेषस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया प्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहान्वयानुपपत्तेः । अतएव पङ्कजादिपदाद्गृहीतशक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्रस्तीत्याकारकोऽन्वयबोधः प्रत्ययमात्रोपस्थाप्यस्य कर्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते । किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढलक्षणया तत्तदर्थानुभावकत्वसम्भवात्कमलादिसमुदायस्यापि तत्तदर्थे शक्तिर्विलीयेत कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि कमलादिशब्दात्पद्मादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं कादिप्रत्ययमात्रस्य पद्मादौ शक्तिसत्त्वेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्वसिद्धत्वात् । नचैवं चित्रगुरित्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्य शक्तिनिषिद्धत्वादिति वाच्यम् अन्यलीलावयवशक्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां शक्तेरन्वयापेक्षाया तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति" योगरूढभेदस्यैवोक्तः । "सामासिकं तद्धिताक्तमिति तत् द्विविधं भवेत् । योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः ।। तत् योगरूढं सामासिकं समासात्मकं कृष्णसर्पादि तद्धितान्तं वासुदेवादि । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भाव इति भाष्यम् । यौगिकस्यापि विभागो तत्रैव । "योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् । समासकृत्तद्धितात्मं कृदन्तञ्चेति तत्त्रिधा । यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव वाक्यार्थस्यान्वयबोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम् । योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं न तु तन्मात्रस्य तच्च यौगिकं त्रिविधं समासकृत्तद्धितात्मं कृदन्तञ्चेति । अन्योऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य भावादिपदार्थस्यान्वयबोधकतया यौगिक एव । सर्वं चेदं रूढान्यत्वेन विशेषणीयं नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः । माधवो वभ्रूः शुक्र इत्यादौ कौमारेः श्रोत्रियाभिस्ते तादृशं नाम यौगिकमेव अन्यथा तु श्रोत्रादिमति तत्तदर्थे रूढमेव नातोऽविभागस्य व्याघातः' ।

रिति न बोधाद्युत्पत्तिरिति वाच्यम् एवमपि विभिन्नधर्मा विरहितादेवस्येत्र लक्षणाया असम्भवात् । नच चरमपदे एव वा प्रत्ययार्थान्वयानुरोधात् प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम् एवं हि बहुव्रीह्यसम्भवापत्तेः "अनेकमन्यपदार्थे" इत्यनेकसुबन्तानामन्यपदार्थप्रतिपादकत्वे तद्विधानात् । किञ्च एवं सति घटादिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात् पूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसम्भवात् एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेदत्रासुदकघटमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः । एवञ्च अपभ्रंशबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना प्रसज्येत अगत्या गत्यन्तरकल्पनेत्यर्थः क्लृप्तत्याग इत्यस्य क्लृप्तस्योपपत्तिरिति व्युत्पत्तित्यागश्च तथाऽस्ति तत्किम् सर्वत्र समासे शक्तिं न कल्पयेरिति भावार्थः । यत्तु व्रमेयावादिनो नैयायिकमीमांसकादायः न समासे शक्तिः राजपुरुष इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्धिभिन्न पुरुषप्रति बोधोपपत्तेः । अतएव राज्ञः पदार्थैकदेशतया न तत्र शोभनस्येत्यादिविशेषणान्वयः । न वा घनश्यामनिष्कौशाम्बिर्गोरथइत्यादौ इत्यादिप्रयोगापत्तिः उक्तार्थ तथा इत्यक्रान्तादिपदप्रयोगासम्भवात् । न वा "विभाषेति" सूत्रानावश्यकत्वम् लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्येत्यादिप्रयोगनियमसम्भवात् । नापि पङ्कजपदप्रतियन्द्री शक्तिसाधिका तत्रावयवशक्तिमजानतोऽपि बोधात् । नच शक्यपक्षे लक्षणया तेभ्योविशिष्टार्थप्रत्ययः सम्भवति । अतएव राजादिपदशक्यपक्षे राजपुरुषचित्रगुरित्यादौ न बोध । नच चित्रगुरित्यादौ लक्षणासम्भवेऽप्यपभ्रंशबहुव्रीहौ लक्षणाया असम्भवः बहुव्रीहौ व्युत्पत्तिभङ्गापत्तेरिति वाच्यम् प्राप्तोदक इत्यादावुदकपदे एव लक्षणास्वीकारात् । पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात् । प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च । घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते विशिष्टस्यैव सङ्केतितत्वात् । बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात् । प्रकृते चात्यन्तसन्निधानेन प्रत्ययार्थान्वयस्वीकाराय्योत्तरपदे एव सा कल्प्यतइति विशेषः स्वीकृतश्च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकमन्यैरित्याहुः । अत्रोच्यते । समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात् अर्थवत्त्वाभावात् "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यस्याप्रवृत्तेः । नच "कृत्तद्धितसमासाश्च" इत्यत्र समासग्रहणात् सा । तस्य नियमार्थतया वाक्यविज्ञाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात् । समासवाक्ये शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवात् । अथ तिप्सुभ्भि इत्यारभ्य ङ्योस्सुपिति तिप्प्रत्याहारोभाष्यसिद्धः तस्मादयातिप्प्रातिपदिकमित्येव सूत्र्यताम् कृतमर्थवदादिसूत्रद्वयेन । समासग्रहणञ्च नियमार्थमस्तु तथा च सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात्समासस्यापि सा स्यादिति चेत्तथापि प्रत्येकं वर्णेषु संज्ञावारणाय अर्थवत्त्वावश्यकत्वेन समासाव्याप्तितादवस्थ्यमेव । तथा च प्रातिपदिकसंज्ञारूपं कार्य्यमेवार्थवत्त्वमनुमापयति धूम इव वह्निम् । किञ्चैवं चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् । यत्तु सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति तन्न उपकुम्भं अर्द्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात् । न च तत्रापि सन्निधानमेव आनुशासनिकसन्निधेर्विवक्षितत्वात् तथा च यत्पदोत्तर यानुशिष्टा सा तदर्थगतं स्वार्थं बोधयति । समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम् अर्थवत्सूत्रेण विशिष्टस्यैव विभक्त्यनुशासनात् । अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वय इत्येव कल्प्यत इति चेत्तर्हि पङ्कजमानय दण्डिन पश्य ऋत्विज पूजयेत्यादौ पङ्कदण्डत्विगाद्यानयनदर्शनपूजनादेरन्वयप्रसङ्गात् अघटमानयेत्यत्र घटेऽप्यानयनान्वयापत्तेश्च । न च दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः । पाकाश्रीश' कर्म्मानुकूलो इत्यादौ पाकधर्म्मादिहेतुताया रूपतत्त्वादावन्वयप्रसङ्गात् । यत्र प्रकृत्यर्थत्वं तत्त्वान्वयज्ञानविषयत्वमात्रं तत्रातानिरूढमिति तत्र घट पश्येत्यत्र घटपदात्समवायेनोपस्थिताकाशवारणाय तथा प्रकृत्यर्थत्वस्यावश्यकत्वात् । अथ प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमितिचेन्न गामानयति कृष्णोदण्डेनेत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात् । अथ समस्यमानपदार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेन्न अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागश्चापेक्ष्य समुदायशक्तिकल्पनस्यैव गुरुत्वादिति दिक् । अपि च समासे विशिष्टशक्त्यस्वीकारे राजपुरुषः

चित्रगुः नीलोत्पलमित्यादौ सर्वं साम्ययमसङ्गः । राज-पदादेः सम्बन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुतया आवश्यकत्वात् पुरुषादेस्तथात्वाभावात् । तण्डुलं पक्वं इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तण्डुलादेरस्य च पक्के अभेदेनैवान्वयः । शुभेन तण्डुलेनेत्यादौ च विशेषणविभक्तिरभेदार्था साधुत्वार्थिकोवान्वय इति नातिप्रसङ्गः । तथा च समासे परस्परमन्वयासम्भवादावश्यकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः । किञ्च राजपुरुषइत्यादेः सम्बन्धिनि सम्बन्धे वा लक्षणा । नाद्यः राज्ञः पुरुष इति विवरणविरोधात् समासार्थकवाक्यस्यैव विग्रहत्वात् । अन्यथा समासशक्तिनिर्णयो न स्यात् नान्त्यः राजसम्बन्धरूपः पुरुष इति बोधप्रसङ्गात् विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे । अतएव "वषट्कर्त्तुः प्रथमभक्षः" इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरत्वभङ्गापत्तेरिति तृतीये, "अग्नये स्विष्टकृते यजति" इत्यत्राग्न्यनुवादेन न स्विष्टकृत्त्वविधानं युक्तम् एकप्रसरत्वभङ्गापत्तेरिति दशमे च निरूपितं सङ्गच्छते । सङ्गच्छते चारुणाधिकरणारम्भः । अन्यथा "अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यत्रारुणपदवदितरयोरपि एकत्वादिगुणमात्रवाचकतया अमूर्त्तत्वात् क्रीणातौ करणत्वासम्भवस्य तुल्यत्वादारुण्यस्यैव वाक्याद्भेदशङ्काया असम्भवादिति प्रपञ्चितं भूषणे । तस्मात्समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तर" ।

**आख्यात** त्रि० आ+ख्या—कर्म्मणि क्त । कथिते । आख्यायतेऽनेन वा० करणे क्त । तिङ्रूपे प्रत्यये तल्लक्षणमाह शब्दश० "धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने । समर्थं स्वार्थयत्नस्य शब्दोयाख्यातमुच्यते" इति । व्याख्यातं चैतत् स्वेनैव "धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दो आख्यातं तदेव च तिङ् इत्यप्युच्यते तिङाख्यातयोः पर्य्यायत्वात् । पाचकचैत्रस्येत्यादौ नामार्थेनैव विशिष्टस्वार्थकर्त्तृत्वस्याभिधायकः ण्वुलादिकोन तु धात्वर्थेन विशिष्टस्य । चैत्रः पचतीत्यादौ धात्वर्थावच्छिन्नस्य यत्नस्य विधेयतया बोधकत्वमपि नामधातू न स्वार्थस्य । चैत्र पाचक इत्यादौ तु धात्वर्थविशेषितस्य यत्नस्य न विधेयता किन्तु कर्त्तुरेव कृतां धर्म्मिपरत्वादन्यथा पाचकचैत्र इत्यादिकम् योग्यमेव प्रातिपदिकार्थयोः पाचकचैत्रयोर्भेदेनान्वयस्याव्युत्पन्नतया कर्त्तुः कृतेश्चादावन्वयायोगाच्च । अथ पक्तुं कामइत्यादौ तुमादिना धात्वर्थावच्छिन्नोऽनुकूलत्वादि रूपं चिकीर्षत्यादौ च सनादिनेच्छादिरेव विधेयत्वेनानुभाव्यते इति न तेष्वतिप्रसङ्गः । अत्रेदं तत्त्वम् । जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकं न तु चेष्टाया जनकत्वस्य चिकीर्षाया वा जन्यत्वस्यावच्छेदकतया सिद्धं प्रवृत्तित्वम् । चैत्रोनिश्वसितीत्यादितोऽपि श्वासाद्यनुकूलप्रयत्नस्य प्रतीतेः । तिङर्थकृतौ च धात्वर्थस्य तं करोमीतिप्रतीतिनियामकं साध्यत्वाख्यविषयताभेदरूपं तदृष्टफलोपधायकत्वलक्षणमनुकूलत्वं वा संसर्गमर्य्यादया भासते तथैव चाकाङ्क्षादतोगत्यादिगोचरनिवृत्तिदशायां गच्छतीत्यादिको न प्रयोगः । "तत्र निश्वासप्रश्वासमात्रप्रतीतावपि प्रयत्नत्वमेव तिङः शक्यतावच्छेदकं न तु प्रवृत्तित्वं पचतीत्यतः पाककृतिमानिति प्रतीते र्नहि प्रवृत्तित्वमेव कृतित्वं पाके प्रवृत्तोऽस्मीत्यस्यानुभवस्य पाकं करोमीत्यतोविषयवैलक्षण्यस्य सर्वसिद्धत्वात् नित्यकृतौ रागप्रयोज्यस्य प्रवृत्तित्वस्य बाधादीश्वरः करोतीत्यादिवाक्यस्यायोग्यतापाताच्च । निविड़निश्वासस्तु पुरुषः शस्त्यागगोचरप्रयत्नवानपि न तदुपधायकप्रयत्नवान् अतस्तत्रायमुच्छ्वसितीत्यादिकोन प्रयोग नचैवमीश्वर पचतीत्यपि स्यात् तस्यापि पाकानुकूलप्रयत्नवत्त्वादिति वाच्यं तिङर्थकृतेरवच्छेदकत्वेनैव संसर्गेण नामार्थान्वयस्य व्युत्पन्नत्वादङ्गुलौ पचतीत्यादि प्रयोगस्येष्टत्वात् अन्वयितावच्छेदकत्वस्यैव तादृशतिङर्थकृते संसर्गत्वे मत्यभावाच्च । नित्यप्रयत्नव्यावृत्तस्वरूपानुकूलत्वविशेषश्च तिङर्थकृतौ धात्वर्थस्य संसर्गत्वमित्यप्याहुः" । ईश्वरो जानातीच्छति रथोगच्छतीत्यादौ च ज्ञानादिमत्त्वमात्रप्रतीते समवायित्वे, चैत्रोजानातीत्यादावयच्छेदकत्वे, बुद्धिरवगाहते घटोभासत इत्यादौ दैशिकान्वयत्वे, नश्यतीत्यादौ च प्रतियोगित्वे, तिङोनिरूढलक्षणा । कृतित्वप्रदाश्रयत्वादेरखण्डत्वे तदवच्छिन्नेऽपि ज्ञानेच्छादेरपि तिङः शक्तिरेव । कृत्यादिकमनवयवः प्रयत्नत्वेनावच्छेदको न तु ज्ञानेच्छादेरपि प्रमाणाभावादतः करोजानातीत्यादिको न प्रयोगः । प्रागुक्तैव वा रीतिरत्रापि । पच पतति स्पन्दते इत्यादावपि पतनादेः समवायित्वमेव तिङानुभाव्यते न तु तदनुकूलं गुरुत्वद्रवत्वादि येन कृतितुल्यपरोरेषु तेष्वपि तिङः शक्तिरापाद्यते । घटोनास्ति पततीत्यादौ च प्रतपदार्थस्यैकदेशएव प्रतमपद्यादौ

फले इत्यादि। विक्लित्त्यादि फलं प्रति। तिङर्थं कर्तृकर्मसंख्याकालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे, संख्या कर्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात्। तथाचाख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः। नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो वाच्यः सोऽपि चन्द्र इव मुखं दृश्यते, देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोः आख्यातार्थानन्वयादितराविशेषणत्वघटित इत्यतिगौरवम्। इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे। कालस्तु व्यापारे विशेषणम्। तथा हि “वर्त्तमाने लट्” इत्यत्राधिकाराद्धातोरिति लभ्यम् तत्र धात्वर्थं वदप्राधान्याद्व्यापारमेव पाचयतीति तत्रैव तदन्वयः। न च संख्यावत् कर्तृकर्मणोरेवान्वयः सह्यः अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च। नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेयम्। न चामवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः। परयत्नसाध्यानादप्रयोगात्। किञ्चिच्चेष्टादिनावगतो चायमुत्तिष्ठति यत्नसद्भावात् फलन्तु न जायत इति लोकप्रतीतेरिष्टत्वात्। एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम्। यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि “भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति” निरुक्तोक्तेः भूवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते। अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः समभेदान्वयात् प्रथमान्तस्य प्राधान्यापत्तिः। तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात् प्रथमान्तमृगस्य धावनक्रियाविशिष्टस्य दृशिक्रियायाः कर्मत्वापत्तौ द्वितीयापत्तेः। न चैवम् अप्रथमासामानाधिकरण्यात् लट्प्रसङ्गः। एवमपि द्वितीयायाऽव्यारत्वेन पश्य मृगस्त्यादिवाक्यसंप्रवासम्भवापत्तेः। न च पश्येत्यत्र तमिति कर्मोध्याहार्य्यम्। वाक्यभेदप्रसङ्गात् उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयान्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे अनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु तज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः पश्य मृगो धावति, पचति भवतीत्याद्यनुरोधादिति दिक्। इत्थञ्च पचतीत्यत्रैकाश्रयिका पाकानुकूला भावना, पच्यते इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः। घटो नश्यतीत्यत्रापि घटाभिन्नैकाश्रयको नाशानुकूलो व्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अतएव तस्यां सत्यां नश्यति, तदत्यये नष्टः, तद्भावित्वे नङ्क्ष्यतीति प्रयोगः। देवदत्तो जानातीच्छतीत्यादौ च देवदत्ताभिन्नैकाश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापार इति बोधः स चान्ततः आश्रयतैवेति रीत्योह्यम्”। एवञ्च वैयाकरणमते कृदभिन्नत्वे सति संख्याबोधकप्रत्ययत्वमाख्यातत्वमिति लक्षणम् “सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङामित्युक्तेः। यद्यपि आख्यातसामान्यस्य संख्यासामान्यशक्तत्वज्ञापकं सूत्रं नास्ति तथापि लडादेशैकवचनादीनां तत्तत् संख्याशक्तताज्ञापकसूत्रेण आदेशगतं तथात्वं स्थानिनि लकारे कल्पितमिति संख्याबोधनयोग्यत्वमादाय लक्षणसमन्वय इति बोध्यम् “आख्यातमाख्यातेन क्रियासातत्ये” मयूर० गणसूत्रम् तत्र आख्यातपदं च तदन्तपरम् “प्रत्ययग्रहणे तदन्तग्रहणम्। इति नियमात् २आख्यातान्ते च।

**आख्याति** स्त्री आ+ख्या–क्तिन्। कथने।

**आख्यातृ** त्रि० आ+ख्या–तृच्। उपदेशके। “आख्यातोपयोगे” पा०।

**आख्यान** न० आ+ख्या–भावे ल्युट्। १कथने। २पूर्ववृत्तकथने “आख्यानं पूर्ववृत्तोक्तिः” सा०द०। “यथा देवः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः” वेणी० ३प्रतिवचने च। प्रश्नाख्यानयोः” पा० “विभाषाख्यानपरिप्रश्नयोरिञ्” पा०। करणे ल्युट्। ४भेदके धर्मे। “सख्येत्यभूताख्यानेत्यादि” पा० इत्थंभूतः कश्चित् प्रकारं प्राप्त आख्यायते अनेन इति व्युत्पत्तेः कञ्चित्प्रकारं प्राप्तस्य भेदको धर्म इति सूत्रार्थः यथा भक्तो विष्णुमभि। ५आर्षमहाकाव्यान्तर्गतसर्गभेदे तेन हि कथाविशेषवर्णनीयचरिताख्यानात्मकत्वम् महाकाव्यं वर्णयित्वा

तदीयसर्गनामकरणे विशेषमाह" सा० द० "नामास्य सर्गोपादेयकथया सर्गनाम तु" इत्यभिधाय "अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः" यथा भारते रामोपाख्यानम्। नलोपाख्यानं शकुन्तलोपाख्यानमित्यादि आख्यान+अस्त्यर्थे अर्श० अच्। ईदृशाख्यानसंज्ञकसर्गयुक्ते आर्षमहाकाव्यभारतादौ। "स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च" मनु "साङ्गोपनिषदान् वेदान् चतुराख्यानपञ्चमान्" भा० व०। स्वार्थे कन् तत्रैव "नाटकाख्यानकादेश्चव्याख्यानादिक्रियानिपुणं" काद०।

आख्यानकी स्त्री "आख्यानकी तौ जगुरू गश्चोजे जतावथोजे जगुरू गुरुश्चेदिति" उक्तिते विषमवृत्तभेदे।

आख्यायक पु० आ+ख्या–ण्वुल्। परोक्षवृत्तान्तस्य कथके। दूते "आख्यायकेभ्यः श्रुतदस्युवृत्तिः भट्टिः" २कथकमात्रे त्रि०।

आख्यायिका स्त्री आ+ख्या–ण्वुल् "आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम्। अस्यामन्यकवीनाञ्च वृत्तम् गद्यं क्वचित् क्वचित्। कथांशानां व्यवच्छेद आश्वास इति बध्यते। आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्। अन्योपदेशेनाश्वासः मुखे भाव्यर्थसूचनम्" सा० द० उक्ते कथाभेदे कथा च "कथायां सरसं वस्तु गद्यैरेव विनिर्म्मितम्। क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके। आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तन"मित्युक्तलक्षणयुक्ता तत्र आख्यायिका यथा हर्षचरितादि" कथा कादम्बर्य्यादि। २उपलब्धार्थबोधककथायाञ्च" अमर।

आख्यायिन् त्रि० आ+ख्या–णिनि। १कथके। २आवेदके दूतादौ च "रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचर" शकु०। "रहस्याख्यायिनाञ्चैव प्रणिधीनाञ्च चेष्टितम्" याज्ञ०

आगत त्रि० आ+गम–क्त। १आयाते, २उपस्थिते, ३प्राप्ते च। "श्रेय तु समनागतम्" पात० "क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यत्" स्मृतिः। "पितृत आगतम् पित्र्यमिति" दायभा०। "तत आगत" पा०। आगता यत जरैव हिमानी सेव्यतां सुरतरङ्गिणी" उद्भटः भावे क्त। ४आगमने न० "गतागतं कामकामा लभन्ते" गीता।

आगति स्त्री आ+गम–क्तिन्। १आगमने "लोकस्यास्य गतागतिम्" रामा०। २प्राप्तौ च तासामध्वर्य्युरागतौ यवो इवीव मोदते" ऋ० २,५,६। वेदे यास्कः सविकारैर्जन्मना मरणेन च। आस्त्वा गत्वा तथाऽऽगत्वा" याज्ञवल्क्य।

आगत्य(त्व) अव्य० आ+गम–ल्यप् वा लोलोपे तुक्। आगमन कालेऽस्यर्थे तस्यागमस्य वलेन" माघ०। "आगत्य विन्ध्यशाखायां वसिष्ठे कुरु सन्निधिम्" पुरा०।

आगन्तव्य त्रि० आ+गम–तव्य। १आगम्ये प्राप्ये "आगन्तव्य तु नोद्दिष्टं पुनरात्रममङ्गलम्" भावे तव्य। २अवश्यागमने न० आगन्तव्य झटितिमथुरामङ्गलात् गोपकान्ते पटाद्भूतम्।

आगन्तु पु० आ+गम–तुन्। १अनियतस्थायिनि अतिथौ "वैदर्भमागन्तुमजं गृहेशम्" रघु। २हठादुपस्थिते च आगन्तुना सह मैत्री न कर्त्तव्या" हितो०। ३आगमनशीले त्रि०। स्वार्थे कन्। आगन्तुकोऽप्यत्र।

आगन्तुज त्रि० आगन्तोः हठादुपस्थितात् जायते जन–ड। हठोपस्थितजाते रोगादौ। "आगन्तुजे निजेरोगे यत्नेनोत्पन्न जयेत्"। "दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ" सुश्रुत।

आगम पु० आ+गम–घञ्। १आगतौ २प्राप्तौ ३उत्पत्तौ च "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत!" गीता, आगम्यते प्राप्यतेऽनेन करणे घञ्। ४आमाद्युपाये "आगमैः सदृशारम्भ आरम्भसदृशोदय" रघुः आगम्यते स्वत्वमनेन। स्वत्वमापके ५क्रयप्रतिग्रहादौ "आगमोऽभ्यधिको भुक्तिः लोकापि यत्र नो" या० स्मृति "आगमस्तु यो भुङ्क्ते बहून्यब्दशतान्यपि" स्मृति "यादृशागमस्य प्रामाण्यं तन्निरूपितम्" मिता०। "भोगमात्रस्य व्यभिचारात् कीदृशोभोगः प्रमाणमित्यत आह। "आगमोऽभ्यधिकोभोगाद्विना पूर्वक्रमागतात्" या० स्मृतेः प्रतिग्रहक्रयादिरागम। स भोगादभ्यधिकोबलीयान् स्वत्वबोधने भोगस्यागमसापेक्षत्वात्। यथाह नारद। "आगमेन विशुद्धेन भोगोयाति प्रमाणताम्। अविशुद्धागमो भोग प्रामाण्यं नैव गच्छतीति"। न च भोगमात्रात्स्वत्वावगमः परकीयस्याप्यपहारादिनोपभोगसम्भवात्। अतएव 'भोग तु केवलं यस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेय स तु तस्कर' इति स्मर्य्यते। अतश्च आगमोदीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति। तथा च स्मर्य्यते। 'आगमो दीर्घकालश्चाविच्छेदोऽन्यरवोज्झितः। प्रत्यर्थिसन्निधानञ्च परिभोगोऽपि पञ्चधेति"। क्वचिदागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह। विना पूर्वक्रमागतादिति।

रुद्रयामले तु मतं श्रीवासुदेवस्येति पाठः क्षीवत्वेन "आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः । पञ्चवक्त्रैर्महेशेन आगमोक्ताः शृणु प्रिये ॥ यां कृत्वा कलिकाले च सर्वाभीष्टं लभेन्नर" तन्त्रसारे यामलम्" प्रसङ्गात् तन्त्ररूपागमस्य प्रामाण्यं तदुपासनादिषु कलौ अधिकारिविशेषस्य कर्त्तव्यता च प्रदर्श्यते। नित्यनिमित्तकर्मोपासनारूपपापप्रवाहान् अनात्मज्ञान् जन्ममरणादिक्लेशभाजः संसारपारं गन्तुमसमर्थान् प्राणिनो विलोक्य परमेश्वरः वेदेन कर्मकाण्डोपासनाकाण्डब्रह्मकाण्डात्मकार्थान् समुपदिदेश। तत्र वेदानाम् उच्छिन्नप्रायतया क्रमशो रागबाहुल्येन तदुक्तधर्मेषु उच्छिन्नप्रायेषु सत्सु कर्त्तव्याख्यानानामध्ययनस्य दुर्मेधसामिदानीन्तनादीनां दुरधिगततया आयासबाहुल्येन च तत्राप्रवर्त्तमानानां क्रमशो विलुप्तेषु श्रौतधर्मेषु कथङ्कारमुद्धारः स्यादित्यालोच्य कारुण्योदयेन वेदार्थप्रकाशनार्थं सुगमोपायेन जैमिनिव्यासनारदादिरूपोपधिभिरुपहितः सन् तत्तद्ग्रन्थान् प्रणीतवान्। तत्र कर्म्मकाण्डार्थो जैमिना मन्वादिभिश्च सम्यक्तया व्याहृत उपासनाकाण्डार्थः स्वयं शिवमूर्त्त्या तन्त्रशास्त्र, नारदादिमूर्त्त्या च पञ्चरात्रादिकं विधाय विवृतः ब्रह्मकाण्डार्थश्च वेदव्यासमूर्त्त्येति विवेकः। ततश्च धर्मे वेदस्यैव स्वतःप्रामाण्येन वेदमूलकत्वादन्येषां प्रामाण्यं तत्र स्मृतीनामिव आगमस्यापि वेदमूलकत्वमनुमीयते। वेद एव रामतापनीयनृसिंहतापनीयाद्यात्मके आगमोक्तोपासनादिसंवादात् तन्मूलकत्वाधिगमात् येषां च मूलानि नाधिगम्यन्ते तेषामपि प्रामाण्यं स्मृतिवाक्यवत् अनुमातव्यम् भ्रमप्रमादादिशून्यत्वहेतोः स्मृतिकर्त्तॄणामिव आगमकर्त्तुः शिवस्य सत्त्वात् तन्त्रवाक्यस्य स्मृतिवाक्यवत् प्रामाण्यम् न च बौद्धागमादिवत् विप्रलम्भकवाक्यत्वं रागद्वेषादेस्तत्राप्यसम्भवात्। तत्र कर्मकाण्डार्थे सर्वेषामपर्य्युदस्तानामधिकारः मुमुक्षोरपि तत्त्वज्ञानपर्य्यन्तं चित्तशोधनार्थं प्रत्यवायपरिहारार्थं च कर्म्मणां कर्त्तव्यतोपदेशात् "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन तपसेत्यादि" श्रुतेः "आरुरुक्षोर्मुनेर्योगम् कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते" गीतावाक्याच्च । ततोऽन्येषामपि ईश्वरार्पणेन फलानभिसन्धानेन च कृतानां कर्म्मणां चित्तशुद्धिहेतुत्वात् क्रममुक्तिः फलम्। एवमुपासनाकाण्डार्थेऽपि सर्वेषामधिकारः श्रुतौ तपसेति निर्देशात् "सर्वं खल्विदं ब्रह्म तज्जला-मिति शान्त उपासीत स क्रतुं कुर्वीतेति" श्रुत्या सोपाधिकस्य ब्रह्मण उपासनाविधानाच्च । उपासना च मानसी क्रिया ध्यानापरपर्य्याया तत्र निराकारस्य ब्रह्मणोऽसम्भवात् सोपाधिकेश्वरविषयैवोपासना कर्त्तव्या। सा च गुणोपाधिविशिष्टस्येव तत्तदाकारोपहितस्यापि सम्भवति "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना" इत्युक्तेः । कल्पना च न स्वेच्छया किन्तु शास्त्रादिशिष्टैव । यथा आगमपुराणादिषु यानि यानि रूपाणि वर्णितानि तद्रूपेणैव उपासना कर्त्तव्या । ब्रह्मकाण्डार्थे तु कर्मभिश्चित्तशुद्धौ साकारोपासनेन तदैकाग्र्यवत वेदान्तोक्तसाधनचतुष्टयवत एवाधिकार इति भेद । तत्र तान्त्रिकोपासने कर्त्तव्येऽपि "देवो भूत्वा देवं यजेत्" इत्युक्तेः भूतशुद्ध्यादिना आत्मानं शोधयित्वा उपास्यदेवेनैकीभूतमात्मानं ध्यात्वैवोपासनं कार्य्यम् "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुरेव स देवानामिति" श्रुत्या भेदेनोपासनाया निन्दनात् तान्त्रिकोपासनेऽपि कर्त्तव्ये वैदिककर्म्मसु सावित्र्यात्मकोपनयनसंस्कारस्येव तन्त्रोक्तदीक्षाया एवाधिकारप्रयोजकत्वम् तत्र दीक्षायाञ्च सर्वेऽपि वर्णा अनुलोमप्रतिलोमजाश्चाधिकारिणः "मां हि पार्थ । व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिमिति" गीतायां भगवदुपासने सर्वेषामधिकारस्य प्रतिपादनात् । अत्र "पुराणादौ कश्चित् विशेषो दर्शित यथा "यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा तु तामसी। करालभैरवञ्चापि यामलं वामभाषितम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु। मया सृष्टानि चान्यानि मोहायैव भवार्णवे" इति देवीपुराणवचने वामभाषितमिति विशेषणात् श्रुतिस्मृतिविरुद्धानीति निर्देशाच्च श्रुतिस्मृतिविरुद्धवाममार्गस्यैव निन्दनात् तत्रैवाधिकारिविशेषस्यानधिकारो न तु तन्त्रोक्तेष्वपि इतरांशेषु वेदाविरुद्धेषु इति निर्णयः । वस्तुतः "सौत्रामण्यां सुरां पिबेत्" इति श्रुत्या विहितस्य सौत्रामण्यां सुरासेवनस्येव वामदेवसामोपासकस्य "न काञ्चन परिहरेदिति" सर्वस्त्रीगमनस्येव अधिकारिविशेषविषये तस्यापि आदृतता । अतएव मनुना "न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति" सामा-

न्यतो विहितमद्यादौ न दोष इत्युक्तम् । कुलाचारगळ्के चतुर्थाश्रमस्य कुलाचारधर्मस्य प्रावेणेदासीनतानां दुष्कारत्वेन सुतरां तन्मार्गस्य तन्त्रनिर्द्दिष्टाधिकारित्वाभिदासीनत्वात् नैव कर्त्तव्यता । अथ कथित् मागभयपाथनाय ब्राह्मणधिकारी सम्भवति तथापि कुलचूडामणौ “यत्नाथय त देवं स्यात् ब्राह्मणस्तु विशेषतः । तत्रार्घ्यकरणं दद्यात् ताम्रे वा विसृजेन्मधु । देव्यास्तु दक्षिणे भागे चक्रपार्श्वे निवेदयेत् । मद्यद्रव्यं तु शूद्रस्य नान्यथा तु कदाचन” । “वैश्यस्य माक्षिकं शुद्धं क्षत्रियस्य तु चाज्यकम् । ब्राह्मणस्य गवां क्षीरं ताम्रे वा विसृजेन्मधु । नारिकेलोदकं कांस्ये सर्वेषां चैव शोधनम् इति” च द्विजातीनामासवदाननिषेधेन गोक्षकल्प एवाधिक्रियते न सुराकल्पे । “पीत्वा पीत्वा पुनः पीत्वा पतितोधरणीतले । उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते” इति वचनन्तु चतुर्थाश्रमविषयमिति तन्त्रसारः । “निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः” इत्युक्ते चतुर्थाश्रमस्य विधिनिषेधातिक्रान्तत्वेऽपि परमहंसाश्रमस्यैव दोषाभाव इति युक्तमुत्पश्याम । “वरं प्राणा प्रगच्छन्तु ब्राह्मणो नार्पयेत् सुराम्” ब्राह्मणो मद्यदानेन ब्राह्मण्यादेव हीयते” इत्युत्तरतन्त्रम् । अतएव कालिका पु० “यत्नस्य विहितं यत्र मद्यं तत्र द्विजः पुनः । नारिकेलोदकं कांस्ये ताम्रे वा विसृजेन्मधु” इत्युत्कल्पो ऽत्रकस्यद्विजातिमात्रे विहितः एवं मत्स्यमांसयोर्निषिद्धयोरपि वाममार्गिणां दानादिकं न श्रुतिविरुद्धं “देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्” इति मनुना देवार्च्चनावशिष्टमांसभोजनस्य विधानात् । एतदपि दिव्यभावविषयमिति तन्त्रसारः “मादकं सर्वदा वर्ज्यं मद्यं मांसं सुलोचने । । ज्ञानेन रहितं तत्तु महापातकमायममिति” कुलार्णवोक्तेः । ज्ञानेन सर्वभूतेषु आत्मत्वज्ञानेनेत्यर्थः । तदपि न श्रुतिविरुद्धं विश्वनरेषु आत्मदृष्टिमतो वैश्वानरज्ञानोपासकस्य सर्वान्नभक्षणविधानवत् तस्यापि तादृशज्ञानमाहात्म्येन तत्र पापासम्पत्तिसम्भवात् यथा वैश्वानरज्ञानोपासकं प्रकृत्य “न किञ्चनानन्नं भवति श्वभ्य आश्वकुमिभ्य इति” छा० उ० सर्व्वान्नभोजनं विहितमेवमस्यापि ज्ञानेन पूतत्वात् तद्भक्षणं दोषावहमिति । “कृते श्रुत्युदितोमार्गस्त्रेतायां स्मृतिमोदितः । द्वापरे तु पुराणोक्तः कलावागमसम्मतः” इत्यागमवचनं तु प्रशंसापरम् रागादिप्राबल्येन श्रौतादिधर्मस्य कलावसम्भवदृति तादृशानां तन्त्राधिकारित्ववर्णनार्थम् “चत्वार ओघमार्गाश्च शैवाः षट्चिन्तवस्तथा । कापिलं नाकुलं वाम भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः”, कूर्म्म पु० “शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि । प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्” पद्मपु० इत्यादिवचनैरागमस्य तामसत्वेन मोहशास्त्रत्वेन निषिद्धत्वेऽपि वेदाविरुद्धांशस्य प्राह्यत्वैव । “तथापि योऽ शोऽमार्गाणां वेदेन न विरुध्यते । सोऽंश प्रमाणमित्युक्तं केषाञ्चिदधिकारिणाम्” सूतसंहितावचनात् तत्र केषाञ्चिदित्युक्ते न सर्वेषामधिकारितेति सूचितम् तत्राधिकारित्वं भाग्गु० दर्शितं । “श्रुतिभ्रष्टः स्मृतिप्रोक्तप्रायश्चित्तपराङ्मुखः । क्रमेण श्रौतसिद्ध्यर्थं ब्राह्मणस्तन्त्रमाश्रयेत्” “पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् । वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान्” इति च । ततश्च इदानीन्तनानां विशेषतो गौड़देशवासिनां श्रौतकर्म्माग्निहोत्रादिकर्म्मोच्छेददर्शनेन तत्प्रायश्चित्ताय प्रायश्चित्तपराङ्मुखतादर्शनेन च श्रौतमार्गभ्रष्टतया क्रमेण श्रौताधिकारस्य सामर्थ्यं तन्त्रोक्तोपासनादिषु वेदाविरुद्धेषु अधिकारः । वेदविरुद्धेषु वाममार्गेषु तु चतुर्थाश्रमस्य तन्त्रोक्ताद्भुताश्रमस्यैवाधिकारः न म्लेच्छस्य द्विजानाम् प्रागुक्तवचनात् ब्राह्मणादिषु सुरामद्यदानसेवनयोर्निषेधात् म्लेच्छस्य शूद्रस्य तु सुरायेऽप्यधिकारः द्विजानामनुकल्पाचरणेन तन्त्राश्रयणेऽप्यधिकार इतिविवेकः । तत्रवचनन्तु “कलिप्रचयस्यैव देवानां च तथार्च्चनम् । साधनञ्चैव सर्वेषां पुरश्चरणमेव च । षट्कर्म्मसाधनञ्चैव ध्यानयोगचतुर्विधः सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदोविदुः” इति आगमभेदाश्च तन्त्रसारे सन्ति । अतएव कलिवर्ण्य प्रकरणे” एव क्रियायोगपरं सुमान् वैदिकतान्त्रिकैः । अर्च्चेदुभयतः सिद्धिम् मत्तोविन्दत्यभीप्सितम्” भाग० ११ स्कन्धे २७ अध्याये तान्त्रिकपथेनाप्यर्चनं विहितम् । “अथ स्नातकिनः पूजां वक्ष्याम्यागमनोदिताम्” या० रा० । आगच्छति प्रकृतिप्रत्ययावनुपहत्य उत्पद्यते कर्त्तरि संज्ञायां च । १२ व्याकरणोक्ते प्रकृतिप्रत्ययानुपघातके अट् इट् इत्यादौ यन्मते “आगमादेशयोर्मध्ये बलीयानागमोविधिः” व्याकरणान्तरपरि० “यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते” । “आगमशास्त्रमनित्यम्” इति च परिभा० । “आगमा अनुदात्ताः” “आगमा अविद्यमानवद्भवन्तीति” च का० मा०

आगमन न० आ+गम–भावे ल्युट् । १ किञ्चिद्देशावधिकविभागजनकक्रियायामागतौ । "संवत्सरे व्यतीते तु पुनरागमनाय च" दुर्गाविसर्जनमन्त्रः । २ प्राप्तौ " एतत्ते सर्व्वमाख्यातं वैरस्यागमनं महत्" रामा० । ३उत्पत्तौ च "आगमापायिनोऽनित्या" गीता । [आगमयुक्ते

आगमवत् त्रि० आगम' अस्त्यर्थे मतुप् मस्य वः स्त्रियां ङीप् ।

आगमवृद्ध त्रि० आगमेन तज्ज्ञानेन वृद्धः । शास्त्रालोचनाजनितपरिणतज्ञाने "प्रतीप इत्यागमवृद्धसेवी" रघु ।

आगमवेत्तृ त्रि० आगमं वेत्ति विद्–तृच् इत० स्त्रियां ङीप् । आगमाभिज्ञे ।

आगमवेदिन् त्रि० आगमं वेत्ति विद्–णिनि ईत० । १ आगमवेत्तरि २ शङ्कराचार्य्यपरमगुरौ गौडपादाचार्य्ये पु० ।

आगमापायिन् त्रि० आगमश्च अपायश्च तौ विद्येते यस्य इनि स्त्रियां ङीप् । उत्पत्तिविनाशयोगे "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ।" गीता ।

आगमावर्त्ता स्त्री आगमकाले च गमनकाले च आवर्त्तते वक्रं गमनमस्याः आ+वृत–अपादाने घञ् । हयिकाख्यां (विछाति) क्षुपभेदे ।

आगमिक त्रि० आगमादागतः ठञ् । आगमप्राप्ते ।

आगमित त्रि० आ+गम–स्वार्थे–णिच्–क्त । अधीते ज्ञाते २पठिते । प्रेरणे णिच् क्त । ज्ञापिते ३प्रापिते च ।

आग(गा)मिन् त्रि० आ+गम–भविष्यति णिनि गम्यादीनामुपसंख्यानमित्युक्तेः वा ह्रस्व । भविष्यदागमने आगमी" सि०कौ० । "यद्वागामिक्रिमाणस्यकालसामन्तराश्रयम्" कात्या०सू० "आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी" अमरः स्त्रियां ङीप् । "आगामिनीं अस्थिरे जगतामारुणाम्" माघः ।

आगर पु० आगीर्य्यते उद्गमितुमारभ्यते चन्द्रमा अत्र आ+गॄ–आधारे अप् । अमावास्याया तत्र शेषयामे भक्षिता हि चन्द्रकलाः देवैः उद्गमितुमारभ्यन्ते इति तस्यास्तथात्वम् । "वर्द्धमानमावास्ये चक्षीणो भवति चन्द्रमाः । अमावास्यायाः मर्ये च ततः किल भवेदपु" इत्युक्तेस्तस्यास्तथात्वम् ।

आगवीन त्रि० गो' प्रत्यर्पणपर्य्यन्तं कर्म्म करोति मर्य्यादायामव्ययीभा० आगु+कर्म्मकारकार्थे ख । गो प्रत्यर्पणपर्य्यन्तकर्मकरे गोपालकभेदे । गोपालकश्च द्विविधः दिवामात्रं गो प्रचारणे नियुक्तः । दिवारात्रं योगक्षेमे नियुक्तश्च । "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे । योगक्षेमेऽन्यथा चेत्तु पालोवक्तव्यतामियात्" मनुना दिवारात्रभेदेन पालकद्वयविषये दोषभेदविधानात् तथा विभागः । तत्र दिवापालकविषये आग० "यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा । प्रमादमृतनष्टांश्च प्रदाप्य कृतवेतन" इति ।

आगस् न० "इण आग अपराधे" उणा० इण्–असुन् आगादेशः । १अपराधे "मदीये हृदये नूनं वसति । नागो न विद्यते । वदन्ती यदिहैति किं नाविद्धमि मामिति" उज्ज्वलदत्तोक्ते । "सखिभिरे घनमागसि तनोरु इति यत्नया" माघः । "अथ्यस्तमागकृतमखमङ्गि" रघु । "दासे कृतागसि भवत्युचितः प्रहारः" सा०द० अपराधस्य सकर्त्तृकत्वकर्म्मणः स्खलनम् । अपराधशब्दे २२२पृ० विवृतिः आगस्कर्त्ता आगस्कारी । २पापे ३दण्डे च ।

आगस्ती स्त्री अगस्त्येयम् अण् स्त्रियां ङीप् यलोपः । दक्षिणस्यां दिशि । [अगस्त्यकृतकार्य्ये ।

आगसीय त्रि० अगस्त्ये हितम् अण् यलोपः ।

आगस्त्य त्रि० अगस्त्यस्येदम् यञ् यलोपः । अगस्त्यसम्बन्धिनि दक्षिणदिग्भागे "कौबेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः" माघ "अगस्त्यस्य स्थितिस्थानत्वात्" म०थि० "अयीतिमार्गोयाम्यायामगस्त्योमिथुनान्तगः" । स्वीयक्रान्तिविभागस्याभावात् दक्षिणस्यामयोत्य' सेत्स्यारात्मकः अगस्त्यः मिथुनान्तगः कर्क्कादिभागे स्थितः" रङ्गनाथः । एवञ्च तस्य दक्षिणदिग्भागगतत्वेन तद्भागस्यागस्त्यसम्बन्धित्वम् अगस्तेरपत्यं गर्गा० यञ् । २अगस्तेरपत्ये पुंस्त्री० अगस्त्य+कण्वादि० अण् । ३तद्गोत्रापत्ये पुंस्त्री उभयत्र स्त्रियां ङीप् यलोपः ।

आगाध त्रि० अगाध एव स्वार्थे अण् । १अतलस्पर्शे २दुरधिगमे च । [ नकशब्दार्थे च ।

आगान्तु पु० आ+गम–तुन् नि०वृद्धिः । १अतिथौ २आग-

आगामक त्रि० आगमयति भविष्यद्वस्तु बोधयति आ+गम–णिच्–ण्वुल् । भविष्यद्वेदके । "मतिरागामिका ज्ञेया बुद्धिस्तत्कालदर्शिनी" । [कालबन्धौ च ।

आगामिन् त्रि० आगमिवत् । १आगन्तुके २भविष्यत्-

आगामुक त्रि० आ+गम–उकञ् । आगमनयोग्ये । "सुग्रीवमागमित मित्रं सर्व्वायागामुकाम् कृतम्" भट्टिः ।

आगार न० अग–कुटिलायां गतौ घञ् आगमृच्छति ऋ–अण् उप०स० । गृहे भवने ।

आगारगोधिका स्त्री ७त० । गृहगोधिकायाम्(टिक्टिकि) ।

आगारधूम पु०आगारं गृहं धूमयति धूमान्वितं करोति

धूम+पिब्–अण । (भुव) १टङ्कधूमे । उत्त०२टङ्कसिधूमे च

**आगुर्** स्त्री आ+गुर्–क्विप् । प्रतिज्ञायाम् "अस्य यज्ञस्यागुर उद्चमशीय" श्रुतिः । [ यामयत ।

**आगुरण** न० आ+गुर–ल्युट् । उद्यमे पृ० दीर्घं आगूर-

**आगू** स्त्री आ+गम–क्विप् "ऊ च गमादीनाम् मलोपे ऊकारादेशः प्रतिज्ञायाम् । वधूवद्रूपम् ।

**आगूर्ण** त्रि० आ+गुर–क्त । १उद्यते । भावे क्त २उद्यमे न० ।

**आगूर्त्त** त्रि० आ+गुर–क्त "नसत्तेत्यादिना" पा० नि० भेदे नत्वाभावः । १उद्यते । भावे क्त । २उद्यमे न० ।

**आगूर्त्तिन्** त्रि० आगूर्त्तमनेन इष्टा० इनि । कृतोद्यमे "आगूर्त्ती वा एष भवति यो दर्शपौर्णमासाभ्यां यजते" श्रुति ।

**आग्नापौष्ण** त्रि० अग्निश्च पूषा च द्व० आनङ् अग्नापूषणौ तौ देवते अस्य अण् द्विपदवृद्धि० वा० नेत् । अग्नापूषदेवताके हविरादौ । "आग्नापौष्ण, इन्द्रापौष्ण" कात्या० १५,२।

**आग्नावैष्णव** त्रि० अग्निश्च विष्णुश्च द्व० आनङ् अग्नाविष्णू तौ देवते अस्य अण् द्विपदवृद्धिः "इद्‌वृद्धौ" पा० इत्त्वेप्राप्ते "विष्णौ न" वार्त्ति० नेत्वम् । अग्नाविष्णुदेवताके हविरादौ । "अथ-श्वोभूते आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति" "तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति" इति च शत० ब्रा० । "आग्नावैष्णव ऐन्द्रावैष्णव" कात्या० १५,२ अग्नाविष्णुशब्दौ विद्येते यत्र विभक्त्या० अण् । अग्नावैष्णवमन्त्रयुक्ते २अध्याये १अनुवाके च ।

**आग्निक** त्रि० अग्नेरिदं वा० ठक् । अग्निसम्बन्धिनि । "मक्ता-न्योद्रुमभक्षाणि कृत्वा समाग्निकाग्न्याकृतिमिति" कात्या० १६,५। "द्विश्च स्थाल्याः स्रुवेणेत्येतदाग्निके भवति" कर्क-धृता श्रुति । [ दत्तपत्रिकष्टेयादौ ।

**आग्निदत्तेय** त्रि० अग्निदत्त+चतुरर्थ्यां सख्या० ढक् । अग्नि-

**आग्निपद** त्रि० अग्निपदे दीयते कार्य्यं वा व्यु० दा० अण् । अग्निस्थाने १दीयमाने २कार्य्ये वा पदार्थे ।

**आग्निमारुत** त्रि० अग्निश्च मरुतश्च द्व० आनङ् अग्नामरुतौ तौ देवते अस्य अण् द्विपदवृद्धिः "इद्‌वृद्धौ" पा० इत् । अग्ना-मरुतदेवताके १यज्ञे सोमभेदे २हविरादौ च ।

**आग्निवारुण** त्रि० अग्निश्च वरुणश्च द्व० ईत् अग्नीवरुणौ तौ देवते अस्य अण् द्विपदवृ "इद्‌वृद्धौ" पा० इत् । अग्नी-वरुणदेवताके हविरादौ ।

**आग्निवेश्य** पुंस्त्री अग्निवेशस्य ऋषेरपत्यम् गर्गा० यञ् । तदृषेरपत्ये "पुरोहितस्य कौरव्य । वेदवेदाङ्गपारगम् । आग्निवेश्यस्य राजानम्" भा० आश्र० प० ६४अ० स्त्रियां ङीप् यलोपः । आग्निवेशी तद्गोत्रस्त्रियाम् ।

**आग्निशर्मि** पुंस्त्री० अग्निशर्मणोऽपत्यं बाह्वा० इञ् । तदपत्ये ततः गोत्रे फक् । आग्निशर्मायणः तद्गोत्रे पुं स्त्री० आग्निशर्म्मीभवाः गह्वा० छ । आग्निशर्मीयः तद्भवे त्रि०

**आग्निष्टोमिक** पु० अग्निष्टोमं यज्ञं वेत्ति तत्प्रतिपादकग्रन्थमधीते वा ठक् । १अग्निष्टोमयज्ञाभिज्ञे २तत्प्रति-पादकग्रन्थपाठके च । अग्निष्टोमग्रन्थस्य व्याख्यानः ग्रन्थः ठञ् । अग्निष्टोमग्रन्थव्याख्याने ३ग्रन्थे ४स्त्रियां स्त्री ङीप् । [अग्निष्टोमदक्षिणायाम् ।

**आग्निष्टोमिकी** स्त्री० अग्निष्टोमस्य दक्षिणा ठञ् ङीप् ।

**आग्नीध्र** न० अग्निमिन्धे अग्नीत् तस्य शरणम् "अग्नीधः शरणे रण् भं च" वार्त्ति० रण् भत्वात् जश् । आग्नीध्रे-यजमानस्य स्थाने उपचारात् २ ऋत्विजे द्विजे पु० स्त्री० । अग्निं धारयति धृ–मूल० क पृषोदरादित्वात् स्वार्थे अण् इति वा । ऋत्विजे यजमाने द्विजे । "प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्" ऋ० २,३६,१ । अग्नीध्र+स्वार्थे अण् । १अग्नीध्रस्थाने स्त्रियां ङीप् अग्नीध्री तदाधारभूमौ स्त्री । स्वार्थे गह्वा० छ आग्नी-ध्रीयः । अग्निस्थाने "गार्हपत्याद्वा आग्नीध्रीयमागच्छति" श्रुतिः आग्नीध्रस्येदम् वृद्धात् छः । आग्नीध्रसम्बन्धिनि त्रि० । "आग्नीध्रीयं प्रथमं चिनोति" श्रुतिः ।

**आग्नीध्रा** स्त्री अग्नीध्रस्थानमर्हति यत् । अग्निस्थानार्ह-शालायाम् ।

**आग्नेन्द्र** त्रि० अग्निश्च इन्द्रश्च द्व० आनङ् तौ देवते अस्य अण् "नेन्द्रस्य परस्य" इति पा० नोत्तरपदवृद्धिः इद्वाभावात् नेत् । अग्नेन्द्रदेवताके हविरादौ स्त्रियां ङीप् । "वा वा आग्नेन्द्र्यैन्द्राग्नी वा" श्रुतिः ।

**आग्नेय** त्रि० अग्नेरिदम् अग्निर्देवता वास्य ढक् । अग्निदेव-ताके १हविरादौ "आग्नेय पुरोडाशो भवति" शत० ब्रा० २अग्निसम्बन्धिनि च ३कृत्तिकानक्षत्रे न० तस्य अग्नि-देवताकत्वात् तत्त्वम् "आग्नेयाद्यमविदैवतेति" ज्योति० । अग्निना प्रोक्तं पुराण ढक् । "आग्नेयं वेदवर्णितम्" इत्युक्ते अग्निप्रोक्ते महापुराणभेदे अग्निपुराणशब्दे विवृतिः ४प्रतिपदि तिथौ स्त्री तस्याः तद्देवताकत्वात् यथा "अग्निः प्रजापतिः गौरी गणेशोऽहिर्गुहोरविः । शिवोदुर्गान्तकोविश्वेहरिः कामोहरः शशी । पितरः प्रतिपदादीनां तिथीनामधिपाः क्रमात्" । "५स्वर्णे तस्य वह्नेर्जातत्वात् तथात्वम् । अग्निदेवःशब्दे विवृतिः ।

वै कार्त्तिकेये पु० तस्य वह्नेर्जातत्वात् तथात्वम् अग्निकुमारमन्त्रे विवृतिः। ७ रुधिरे न० जठरानल-जायमानत्वात् देहस्थापितरूपाग्नेर्विकारत्वात् वाऽस्य तथा-त्वम्। अग्नये हितम् ठक्। जठरानलादिहितकरे वैद्यकोक्ते ८ द्रव्यभेदे त्रि० ९ वाह्याग्निवर्द्धके अन्नप्रभृतौ च १० अग्निपर्व्वते ११देशभेदे च पु०तस्य देशस्याग्न्यधिष्ठितत्वात् तथात्वम् स च देशः। दक्षिणा-पथवर्त्तिकलिङ्गविन्ध्यादेशसमीपस्थः माहिष्मतीपुरीयुक्तः तत्र हि वह्निः नीलराजकन्यासौन्दर्य्येण मोहित तामकामेऽथ तामोढ्वा तत्सहायार्थं तत्रैव पुर्य्यां स्वयं स्थितः यथोक्तम्" भा० स०प०"तत्र माहिष्मतीवासी भगवान् हव्यवाहनः। श्रूयते हि कृतो वै पुरस्तात् पारदारिकः। नीलस्य राज्ञो दुहिता बभूवातीव शोभना। साग्निहोत्रमुपातिष्ठद्बोध-नाय पितुः सदा। व्यजनैर्धूयमानोऽपि तावत् प्रज्व-लते न सः। यावच्चारुपुटौष्ठेन वायुना न विधूयते। ततः स भगवानग्निश्चकमे तां सुदर्शनाम्। नीलस्य राज्ञः सर्व्वेषामुपनीतश्च सोऽभवत्। ततो ब्राह्मणरूपेण रममाणो यदृच्छया। चकमे तां वरारोहां कन्यामुत्पललोचनाम् तन्तु राजा यथाशास्त्रमशासद्धार्म्मिकस्तदा। प्रजज्वाल ततः कोपाद्भगवान् हव्यवाहनः। तं दृष्ट्वा विस्मितो राजा जगाम शिरसावनिम्। ततः कालेन तां कन्यां तथैव हि तदा नृपः। प्रददौ विप्ररूपाय वह्नये शिरसा नतः। प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा। चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः। वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः। अभयञ्च स जग्राह स्वसैन्ये वै महीपतिः। ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः। जिगीषन्ति बलाद्राजंस्ते दह्यन्ते च वह्निना। तस्यां पुर्य्यां तदा चैव माहिष्मत्यां कुरूद्वह!। बभूवुरनभिग्राह्या योषि-तश्छन्दतः किल। एवमग्निर्वरं प्रादात् स्त्रीणामप्रतिवा-रणे। स्वैरिण्यस्तत्र नार्य्यो हि यथेष्टं विचरन्त्युत। वर्ज्जयन्ति च राजानस्तत्पुरं भरतर्षभ। भयादग्नेर्म-हाराज। ततः प्रभृति सर्व्वदा। सहदेवस्तु धर्म्मात्मा सैन्यं दृष्ट्वा भयार्द्दितम्। परीतमग्निना राजन्नाकम्पत यथाऽचलः। उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत् पावकं ततः। सहदेव उवाच। त्वदर्थोऽयं समारम्भः कृष्ण-वर्त्मन्नमोऽस्तु ते। मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक!। पावनात् पावकश्चासि वहनाद्धव्यवाहनः। वेदा-स्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि। चित्रभानुः सुरे-

शश्च अनलस्त्वं विभावसो!। स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी। वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरिते-जसः। कुमारसूस्त्वं भगवान् रुद्रगर्भो हिरण्यकृत्। अग्निर्द्ददातु मे तेजो वायुः प्राणं ददातु मे। पृथिवी बलमादध्याच्छिवञ्चापो दिशन्तु मे। अपां गर्भ! महासत्त्व! जातवेदः! सुरेश्वर!। देवानां मुखमग्ने! त्वं सत्येन विपु-नीहि माम्। ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि। नित्यं सुहुतयज्ञेषु सत्येन विपुनीहि माम्। धूमकेतुः शिखी च त्वं पापहानिलसम्भवः। सर्व्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम्। एवं स्तुतोऽसि भगवन् प्रीतेन शुचिना मया। तुष्टिं पुष्टिं श्रुतिञ्चैव प्रीतिञ्चाग्ने! प्रयच्छ मे। वैशम्पायन उवाच। इत्येवं मन्त्रमाग्नेयं पठन् यो जुहुयाद्विभुम्। ऋद्धिमान् सततं दान्तः सर्व्वपापैः प्रमुच्यते। सहदेव उवाच। यज्ञविघ्नमिमं कर्त्तुं नार्हस्त्वं हव्यवाहन!। एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य्य मेदि-नीम्। विधिवत् पुरुषव्याघ्रः पावकं प्रत्युपाविशत्। प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत!। न चैनमत्य-गाद्वह्निर्वेलामिव महोदधिः। तमुपेत्य शनैर्वह्निरुवाच कुरु-नन्दनम्। सहदेवं नृणां देवं सान्त्वपूर्व्वमिदं वचः। उत्ति-ष्ठोत्तिष्ठ कौरव्य! जिज्ञासेयं मया कृता। वेद्मि सर्व्व-मभिप्रायं तव धर्म्मसुतस्य च। मया तु रक्षितव्येयं पुरी भरतसत्तम!। यावद्राज्ञो हि नीलस्य कुले वंशधरा नृप!" १२ अग्न्युपासने मन्त्रे १३ अग्निसम्बन्धिधारणाभेदे स्त्री "आग्नेय्या धारणया देहं दग्ध्वेति भूतशुद्धिः। "देहं धारणयाग्नेय्या दग्ध्वा चाभाविशत् स्वकम्" भाग० १४ दक्षिण-पूर्व्वायां दिशि स्त्री। अग्नेर्भक्तः ठक्। १५ अग्निभक्ते "आग्नेयो वै ब्राह्मणो देवतया" श्रुति अग्नेरपत्यम् अग्नेरागतम् अग्नौ भवः अग्निना दृष्टं सामेति वा ठक्। १६ अग्ने-रपत्ये १७ अग्नितआगते १८ त्रि० अग्निना दृष्टे साम्नि न० "मान्त्रं भौमं तथा तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्त स्नानानि चक्षते" इति विभज्य "आग्नेयं भस्मना स्नानमिति" परापरोक्ते भस्ममर्द्दनपूर्व्वके १९ स्नाने न०। "प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्मसु दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतमिति" मनूक्ते २० नृप-तिचरितभेदे न० अग्नौ अग्न्युद्दीपने साधु ठक्। २१ अ-ग्न्युद्दीपनसाधने मधुरतादौ त्रि० "जिघ्राणोऽस्य वसागन्धं सर्पिर्जठरविनिर्मितम्। कृतं हि व्यक्तमाग्नेयमिदं वेद्य परन्तप!" "यदीदं पक्वमाग्नेयं विहितं मन्यते भवान्"

ध्रुवे । तत्र व्रीह्याग्रयणस्य काल उक्तः ,वसन्तो यवाग्र-यणस्य । तत्र हि तेषां प्रथमः पाक इति तत्र विशेषाभावात् उभयोः सहवचनं तयोर्धान्ये विराजौ च भवतः । “इतरत् पौर्णमासं तन्त्रं वैराजम्” इत्येता वर्तैवोक्तेऽपि तावन्मात्रविकारसिद्धौ सत्यां धान्याविराज-पदस्य विकल्पेन इयम्वतोरपि प्रापणार्थम् १२ । आद्ययो-र्विकल्पेनैता देवता स्यातन्त्रे । यदि श्यामाकाग्रयणमन्वा-र्वेष्टौ समानतन्त्रेण क्रियते तदा सौमस्तृतीयो भवति १३ । इन्द्राग्न्योः सोमस्य चोक्ता याज्यानुवाक्यार्हन्तः” १४ । “न वाहिताग्निराग्रयणेनानिष्ट्वा प्राश्नीयात्” श्रुतेः अतो-ऽकृते दोषश्रवणान्नित्यत्वम् । अतएव कर्कपद्धतौ नित्याग्नि द्दर्शपौर्णमासवदाग्रयणाग्रयणपशुचातुर्मास्या-दीनि अवश्यं कर्त्तव्यानीत्युक्तम् । २तन्निमित्तके नवशस्येष्टौ स्त्री गौरा० ङीप् । “इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् । अग्निराग्रयणो नाम भासोरैवान्वयस्तु स इत्युक्ते ३कल्पान्तके वह्निभेदे पु० । उपचारात् ४आग्र-यणकाले “व्रीह्याग्रयणानन्तरं यवाग्रयणादर्वाग्व्रीहि-भिरेव दर्शपौर्णमासौ कार्य्यौ यवाग्रयणानन्तरं प्राग् व्रीह्याग्रयणाद्यवैरेव । अथवा व्रीहिभिरेव इति” कर्कः । “शस्यान्ते नवशस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः” मनु-व्याख्यायां पूर्व्वार्ज्जितधान्यादिशस्ये समाप्ते यदि नवान्नमिति स्मृतकारवचनात् असमाप्ते पूर्व्वशस्ये नव-शस्योत्पत्तौ आग्रयणेन यजेतेति शस्यक्षयस्यानियतत्वात् धनिनां बहुकालजीवनोचितशस्यसम्भवात्” कुल्लू० आग्रयणस्य कर्त्तव्यकाले न कर्त्तव्यम् यथोक्तम् “वाचारम्भणकालमुपेत्यादिनोपक्रम्य” “गोदानाग्रयण मपाप्रयणकोपाकर्म्म वेदव्रत”मित्यादीन्युक्त्वा “अवश्य-कोर्वेषं परीक्षां च यज्ञस्यार्त्तविभुवे इन्द्वथितयोर्भूगा-मार्गे तथा” ज्यो०चि० उक्तेः । “सोमयोगादिकर्माणि आग्रयणानि तु यानि तु चे । तथैवाग्रयणाधानचातुर्मास्या-दिकान्यपि” म०परि० उक्तेः । “मावे वा यदि वा पौषे चाग्नं मते गुरौ । नवमासइवैतानि वर्ज्जयेत्” इत्युक्तेः ।

आग्रह पु० आ+ग्रह—अच् । १आवेशे आसक्तौ अभिनिवेशे “ववेऽपि भावस्य पदार्पणाग्रहः” नैष० । २आक्रमे ३अनुग्रहे ४ग्रहणे च ।

आग्रहायण पु० अग्रहायण्या मृगशीर्षनक्षत्रेण युक्ता पौर्ण-मासी आग्रहायणी अस्मिन् मासे ज्योत्स्ना० अण् । १चान्द्रमार्गशीर्षे मासि अग्रहायण्या युक्ता पौर्णमासी अण् । २चान्द्रमार्गशीर्षमासपौर्णमास्यां स्त्री । “आग्रहायण्या ऊर्द्ध्वं तिस्र एवाष्टकास्तु” स्मृतिः । “कार्त्तिक्या आग्रहायणी मासे” सि०कौ० । यथा च मृगशीर्षनक्षत्रसम्बन्धात् मासस्य मार्गशीर्षत्वं तथोक्तम् सू०सि० “नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्व्वान्तयोगतः” इति “पूर्णमास्यां मृग-शीर्षनक्षत्रयोगात् मार्गशीर्षश्चान्द्रमासः मृगशीर्ष एव अग्र-हायणीनामा पौर्णमास्यां तत्सम्बन्धयोग्यत्वमेव तदर्थः अत एव “कार्त्तिकादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्” सू०सि० तेन कृत्तिकारोहिणीभ्यां कार्त्तिकी मृगार्द्राभ्यां मार्गशीर्ष इत्यादि क्रमेण नक्षत्रद्वयसम्बन्धकत्वोक्तः ।

आग्रहाय(या)णिक न० आग्रहायण्यां देयमृणं वुञ् ठञ् वा । आग्रहायण्यां देये ऋणे ।

आग्रहायणिक पु० आग्रहायणो पूर्णिमाऽस्मिन्मासे ठक् । चान्द्रमार्गशीर्षे मासि । [ ( अपदानो ) विमे ।

आग्रहारिक त्रि० अग्रहारोऽग्रभागो नियत दीयतेऽस्मै ठञ् ।

आग्रायण पुंस्त्री अग्रनामकस्य ऋषेः गोत्रापत्यम् नडा० फक् । अग्रनामर्षे० गोत्रापत्ये १अग्रेऽयनं यस्यास्यास्य ज्योत्स्ना० अण् । २नवशस्येष्टौ ।

आघट्टक पु० आघट्टयति रोगान् ण्वुल् । रक्तापामार्गे राजनि० चालके त्रि० । [नयो नमस्तत” माघः ।

आघट्टना स्त्री आ+घट्ट—युच् । चालनायां “रथाङ्गिराघट्ट-

आघट्टित त्रि० आ+घट्ट—क्त । चालिते ।

आघमर्षण न० अघमर्षणे विहितम् अण् । अघाना नाश-नाय विहिते सूक्तभेदे अघमर्षणशब्दे तत्र दर्शितम् ।

आघर्ष पु० आ+घृष—घञ् । घर्षणे “गण्डस्थलाघर्षगलन्मद-दोदक” माघः । भावे ल्युट् । आघर्षणमप्यत्र न० ।

आघाट पु० आ+हन—कर्त्तरि संज्ञायां घञ् पृ० नि० तस्य टः । १अपामार्गे २आघातके त्रि० । “यत्राघाटाः कर्कर्य्यः संवदन्ति” श्रुतिः ।

आघाटिन् त्रि० आ+हन—णिनि पृ०नि० । आघातके “आघाटिभिरिव धावयन्” ऋ०१,०,१४६,२ ।

आघात पु० आ+हन—घञ् । १वधे २आहनने ३ताड़ने च तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः” मेघ० । “आस्थ-स्वन्ति वटाघातं निर्जितैरावताजाः” कुमा० । “धृता-घातश्च उच्यते” सुश्रुत० । आधारे घञ् । ४वधस्थाने । “आघातं नीयमानस्य वध्यस्येव” ।

आघातन न० आहन्यतेऽत्र आ+हन—आधारे णिच्—आधारे

ल्युट् । १अवस्थाने ख्याटा० भावे ल्युट् । २क्षरणे ।

**आघार** पु० आ+घृ–णिच्–कर्मणि अच् । १घृते । भावे अच् । आहिताग्नेः वायव्यकोणादारभ्याग्नेय यावत् नैर्ऋतीमारभ्य ऐशानीं यावच्चाविच्छिन्नधारया २घृतसेचने । "तूष्णीमाघारावाघार्य्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहा" आश्व०सू० । "तूष्णीं मन्त्रवर्जनम् उत्तरपश्चिमाया आरभ्य दक्षिणपूर्व्वाम् अव्यवच्छिन्नामाज्यधारां हरेत् तथा दक्षिणपश्चिमामारभ्य उत्तरपूर्व्वां प्रत्याघारयेत्" तद्वृत्ति० इति ऋग्वेदिनाम् । यजुर्वेदिनान्तु मन्त्रोच्चारपूर्व्वकमस्येत्यनयोर्भेदः उभयवेदिनामपि आघारकाले प्रजापतीन्द्रयोर्मनसा ध्यानम् आज्यं च स्रुवे चतुर्व्वारं ग्राह्यमिति विवेकः ।

**आघूर्णित** त्रि० आ+घूर्ण–क्त । १चलिते, २भ्रान्ते च ।

**आघृणि** पु० आगतो घृणिर्दीप्तिरस्य । सूर्य्ये । "एहि वां विमुचो नपादाघृणे ! संसचावहै" । "रायोधारास्याघृणे वसो ।" ऋ० ६,५५,१,२ । आघृणे । आगतदीप्ते । हे पूषन् !" भा० ।

**आघोषण** न० आ+घुष–ल्युट् । सर्व्वत्र प्रचारणायोच्चैः–शब्दकरणे । णिच्–युच् । आघोषणाप्यत्र स्त्री ।

**आघ्राण** त्रि० आ+घ्रा–क्त । १गृहीतगन्धे पुष्पादौ नासिकया यस्य गन्धग्रानं जातं तस्मिन् २तृप्ते च भावे क्त । ३ गन्धग्रहणे ४ तृप्तौ च न० ।

**आघ्रात** त्रि० आ+घ्रा–क्त वा तस्य नत्वाभावः । १गृहीतगन्धे पुष्पादौ २तृप्ते ३ स्पृष्टे च "पुष्पाद्यनाघ्रातमिति–विषयम्" ति०त० रघुनन्दन ।

**आघ्रेय** त्रि० आ+घ्रा–यत् । घ्राणेन ग्राह्ये "आघ्रेयः सर्व्वदेवानाम्" धूपदानमन्त्रः ।

**आङ्** अव्य० आप–बा० डाङ् प्रयोगे तस्य ङित्त्वम् । आयत्यर्थे तच्छब्दे विहिते तत्र ईषदर्थे आताम्रं आपिङ्गलं अभिव्याप्तौ अग्राह्यस्यासकलत्वात् । सीमायाम् "आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्" रघु धातुविशेषयोगेनार्थविशेषे आगच्छति आतिष्ठते आलम्बते "प्रभ्रां यदारोहति दन्तवाससा" अभ्यासे आहत्तिः अभ्यासस्य । प्रत्याहत्तौ प्रत्यागच्छति । समन्ताद्वृत्तौ आचित आकीर्णः ।

**आङ्कुशायन** त्रि० अङ्कुशेन निर्वृत्तादि सङ्काशा० चतुरर्थ्याम् फक् । अङ्कुशनिर्वृत्तादौ । [ रथवुक्षे ।

**आङ्कुशिक** त्रि० अङ्कुशः प्रहरणमस्य ठक् । अङ्कुशप्रह–

**आङ्ग** न० अङ्ग+स्वार्थे अण् । १कोमलाङ्गे अङ्गादागतः अण् । व्याकरणप्रसिद्धे २अङ्गाधिकारविहिते कार्य्ये "वर्णादाङ्गं बलीयः" परिभाषा अङ्गदेश भवः अण् । ३अङ्गदेशभवे त्रि० बहुवचने तु तस्य लुक् अङ्गाः । अङ्गानां राजा अञ् । ४अङ्गदेशस्य राजनि बहुषु लुक् अङ्गा तद्राजसु । स्त्रियां प्राच्यत्वान्न लुक्, आङ्गी ।

**आङ्गक** त्रि० अङ्गेषु जनपदेषु भवः वुञ् । १अङ्गदेशभवे । अङ्गाः क्षत्रियाः तद्गन्धपतयो भक्तिरस्य वुञ् । अङ्गदेशक्षत्रिया यस्य सेव्याः तस्मिन् २अङ्गनामकदेशक्षत्रियाणां सेवके । अङ्गा जनपदोभक्तिरस्य वुञ् । ३अङ्गाख्यजनपदसेवके च त्रि० ।

**आङ्गविद्य** त्रि० अङ्गविद्यां वेद "अङ्गक्षत्रधर्म्मत्रियागाद्विद्यान्तादेति वक्तव्यम्" वार्त्ति० ठको निषेधात् अण् । १व्याकरणाद्यङ्गविद्यावेत्तरि । तद्व्याख्यानो ग्रन्थः ऋगयनादि० अण् । २अङ्गविद्याव्याख्याने ग्रन्थे अङ्गविद्यायां भवः अण् । ३तद्विद्याभवे । [ समूहे ।

**आङ्गार** न० अङ्गाराणां समूहः भिक्षादि० अण् । अङ्गार"

**आङ्गिक** त्रि० अङ्गेन अङ्गचालनेन निर्वृत्तम् अध्यात्मा०ठक् । भावव्यञ्जके अङ्गनिष्पन्ने नटादीनां १भ्रूविक्षेपादौ । "भवेदभिनयोऽवस्थानुकारः स चतुर्विध. । आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" सा०द० । स्त्रीणां चेष्टाविशेषे २हावादौ । "यौवने सत्त्वजास्तासामष्टाविंशति संख्यकाः । अलङ्कारास्तत्र हावभावहेलास्त्रयोऽङ्गजा" सा०द० । हावादयश्च तत्तच्छब्दे वक्ष्यन्ते "अङ्ग मृदङ्ग तद्वाद्यं शिल्पमस्य ठक् । मृदङ्गवादनशिल्पके त्रि० ।

**आङ्गिरस** पुंस्त्री० अङ्गिरसोऽपत्यम् अण् । १अङ्गिरस ऋषेरपत्ये "अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः" मनु । बहुत्वेऽणो लुक् । अङ्गिरस स्त्रियां न लुक् ङीप् । "आथर्व्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत" अथ० ८,५,९ । २बृहस्पतौ तस्य तदपत्यत्वम् भा० आ०प० ६६अ० । "अङ्गिरसस्त्रयः पुत्रा लोके सर्व्वत्र विश्रुताः । बृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रत" । अङ्गिरसा दृष्टम् अण् । अथर्ववेदोक्ते सूक्तभेदे "अथर्व्वाङ्गिरसं मौसरूं देव्यपराजिता । मधु सूक्तं रौधरक्ष शान्तिकाध्यायमेव च । अथर्व्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ" दानपारि० पुरा० । तच्च सूक्तं अथर्वसंहितायां १८,१,५८,५९,६०,६१ मन्त्र चतुष्टयात्मकम्, "अङ्गिरसो नः पितरः" इत्यादिकम् । तच्च प्रथादानादिपद्धतौ अस्माभिः १८५४० दर्शितम् अङ्गिनामकानां रस० धार: स्वार्थे अण् ।

र्षिपितृजादृणात् । माध्यस्थमाश्रयेत् गेही सुते निक्षि-
प्य गृहं च । गृहेऽपि ज्ञानमभ्यस्येत्काशीं वाथ समाश्रयेत् ।
सम्यग्ज्ञानेन वा मुक्तिः किं न विश्वेशवेश्मनि ? । सम्यग्-
ज्ञानं भवेत् पुंसां कुत एकेन जन्मना ? । वाराणस्यां ध्रुवा
मुक्तिः शरीरत्यागमात्रतः । अद्यश्वो वा परश्वो वा काला-
द्वाथ परं शतात् । सत्वरं गत्वरो देहः काश्यां चेद्गतो
भवेत् । सा च वाराणसी लभ्या सदाचारवता सता ।
मनसापि सदाचारमतो विद्वान्न लङ्घयेत्" । वसिष्ठस्मृतौ च
"आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भि-
रङ्गैः । छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव
जातपक्षाः । आचारहीनस्य तु ब्राह्मणस्य वेदाः षड-
ङ्गास्त्वखिलाः सयज्ञाः । कां प्रीतिमुत्पादयितुं समर्था अ-
न्धस्य दारा इव दर्शनीयाः । नैनं छन्दांसि वृजिनात्ता-
रयन्ति मायाविनं मायया वर्त्तमानम् । तत्राक्षरे सम्य-
गधीयमाने पुनाति तद्ब्रह्म यथावदिष्टम् । दुराचारो हि
पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधि-
तोऽल्पायुरेव च । आचारात् फलते धर्म्म आचारात्
फलते धनम् । आचारात् श्रियमाप्नोति आचारो हन्त्य-
लक्षणम् । सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति । आहारनिर्हा-
रविहारयोगाः सुसंवृता धर्म्मविदा तु कार्य्याः । वाग्बु-
द्धिवीर्य्याणि तपस्तथैव धनायुषी गुप्ततमे च कार्य्ये । उभे
मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः । रात्रौ कुर्य्याद्दक्षि-
णास्य एवं ह्यायुर्न रिष्यते । प्रत्यग्निं प्रतिसूर्य्यञ्च प्रति गां
प्रति च द्विजम् । प्रतिसोमोदकं सन्ध्यां प्रज्ञा नश्यति
मेहतः । न नद्यां मेहनं कार्य्यं न पथि न च भस्मनि ।
न गोमये नवा कृष्टे नोप्ते क्षेत्रे न शाड्वले । छायायामन्ध-
कारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्य्यात्
प्राणबाधाभयेषु च । उद्धृताभिरद्भिः कार्य्यं कुर्य्यात् स्नान-
मनुद्धृताभिरपि । न हरेन्मृत्तिकां विप्रः कूलात् ससि-
कतां तथा । अन्तर्जले देवगृहे वल्मीके मूषिकस्थले । कृत-
शौचावशिष्टे च न ग्राह्याः पञ्च मृत्तिकाः । एका लिङ्गे
करे तिस्र उभाभ्यां द्वे तु मृत्तिके । पञ्चापाने दशैक-
स्मिन्नुभयोः सप्त मृत्तिकाः । एतच्छौचं गृहस्थस्य द्विगुणं
ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतीनान्तु चतुर्गुणम् ।
अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोडश । द्वात्रिंशत्तु
गृहस्थस्य अमितं ब्रह्मचारिणः । अनड्वान् ब्रह्मचारी च
आहिताग्निश्च ते त्रयः । भुञ्जाना एव सिध्यन्ति नैषां

सिद्धिरनश्नताम् । तपोदानोपहारेषु व्रतेषु नियमेषु च ।
इज्याध्ययनधर्म्मेषु यो न सक्तः स निष्क्रियः । योगस्तपो-
दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्ति-
क्यमेतद्ब्राह्मणलक्षणम् । सर्व्वेत्र दान्ताः श्रुतपूर्णकर्णा जिते-
न्द्रियाः प्राणिवधे निवृत्ताः । प्रतिग्रहे सङ्कुचिता गृह-
स्थास्ते ब्राह्मणास्तारयितुं समर्थाः । असूयुः पिशुन-
श्चैव कृतघ्नो दीर्घरोषकः । चत्वारः कर्म्मचाण्डाला जन्म-
तश्चापि पञ्चम । दीर्घवैरमसूयाञ्च असत्यं ब्रह्मदूषणम् ।
पैशुन्यं निर्द्दयत्वञ्च जानीयाच्छूद्रलक्षणम् । किञ्चिद्वेदमयं
पात्रं किञ्चित् पात्रं तपोमयम् । पात्राणामपि तत्पात्रं
शूद्रान्नं यस्य नोदरे । शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि
नित्यशः । हुत्वापि च जपित्वापि गतिमूर्द्ध्वां न विन्दति
शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः । स भवेच्छू-
करो ग्राम्यस्तस्य वा जायते कुले । शूद्रान्नेन तु भुक्तेन
मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा न च स्वर्गा-
र्हको भवेत् । स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं चैतन्यस्थं
पापभीरुं बहुज्ञम् । स्त्रीषु क्षान्तं धार्म्मिकं गोशरण्यं
व्रतैः क्षान्तं तादृशं पात्रमाहुः । आमपात्रे यथा न्यस्तं
क्षीरं दधि घृतं मधु । विनश्येत् पात्रदौर्बल्यात्तच्च पात्रं
रसाश्च ते । एवं गाश्च हिरण्यञ्च वस्त्रमश्वं महीं तिलान् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् । नाङ्गनखवा-
दित्रं कुर्य्यात् न चापोऽञ्जलिना पिबेत् । न पादेन
पाणिना वा राजानमपि हन्यात् न जलेन जलम् ।
नेष्टकाभिः फलानि पातयेत् न फलेन फलम् । न कल्क-
पुटको भवेत् । न म्लेच्छभाषां शिक्षेत । अथाप्युदाहरन्ति ।
न पाणिपादचपलो न नेत्रचपलो भवेत् । न चाङ्गचपलो-
विप्र इति शिष्टस्य गोचरः । पारम्पर्य्यागतो येषां वेदः
सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ।
यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं
न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः" एवं मन्वादि-
संहितादौ बहव आचारा उक्तप्रायाः दर्शिताः ।
भावापरपर्य्यायः तन्त्रोक्ताचारः दिव्याचारवीराचार-
पश्वाचारभेदात् त्रिविधः यथोक्तं तन्त्रसारे ।
"अथ भावविधिं वक्ष्ये शृणुष्व कमलानने । विना येन
न सिध्येत्तु जन्मकोटिशतैरपि । भावस्तु त्रिविधो देवि !
दिव्यवीरपशुक्रमात् । दिव्यवीरौ महाभावौ अधमः
पशुभावकः । वैष्णवः पशुभावेन पूजयेत् परमेश्वरम् ।
शक्तिमन्त्रे वरारोहे । पशुभावो भयानकः । दिव्ये वीरे-

महेशानि । जायते सिद्धिरुत्तमा । दिव्ये वीरे न भेदोऽस्ति ताभ्यां भेद पयोत्तमः । दिव्यवीरौ प्रवक्ष्यामि सर्वभावोत्तमोत्तमौ । विना मद्यैर्न पूजास्ति मत्स्य मांस विना प्रिये ॥ मुद्रायां मैथुनस्यापि विना नैव प्रपूजयेत् । स्त्रीभग पूजनाधारं सर्वं द्रव्यकमेव च । अभावे सर्वद्रव्याणामनुकल्प कलौ युगे । अथ वा परमेशानि । मानसं सर्वमाचरेत् । स्नानन्तु मानसं प्रोक्तं वैदिके मानसं सदा । यत्र भुक्त्वा महापूजा मानसं भोजनन्तु तत् । स्वकीयां परकीयां वा मानसन्तु रमेत् स्त्रियम् । मानसं मद्यमीनादि स्वीकुर्यात् साधकोत्तम । सर्वन्तु सुलभं तद्वत् मानसं समुपाचरेत् । मानसं भगरोमादि मानसं भगपूजनम् । सर्वन्तु मानसं कुर्यात् तेन सिद्धिमवाप्नुयात्" इति निरुत्तरतन्त्रे पूर्वखण्डे दशम पटल । तद्विवरण तत्तच्छब्दे दृश्यम् । आचारचन्द्रिका आचारचिन्तामणि आचारदीप आचारमाधव आचारमयूखः आचारादर्श आचारार्क इत्यादयश्च ग्रन्था आचारभेदमाश्रित्य भारतवर्षे देशभेदे च प्रसिद्धा । तत एवाचारभेदा अवसेया । निषिद्धाचारश्च अनाचारः स च अनाचारशब्दे २५७ पृष्ठे उक्तप्राय । अधिक निषिद्धशब्दे वक्ष्यते ।

**आचारदीप** पु० आचारार्थः नीराजनार्थो दीपः । राज्ञां वाजिप्रभृतीनां वा नीराजनार्थे दीपे ।

**आचारवत्** त्रि० आचार शास्त्रोक्तानुष्ठानं कर्त्तव्यतयाऽस्त्यस्य मतुप् मस्य व । शास्त्रोक्तानुष्ठानयुक्ते स्त्रियां ङीप् ।

**आचारवर्जित** त्रि० आचारेण वर्जितः । शास्त्रोक्ताचारहीने आचारहीनादयोऽप्यत्र ।

**आचारवेत्तृ** त्रि० आचारं वेत्ति विद्–तृच् स्त्रिया ङीप् । आचाराभिज्ञे । [ स्त्रियां ङीप् ।

**आचारवेदिन्** त्रि० आचारं विद्–णिनि । आचाराभिज्ञे

**आचारवेदी** स्त्री आचारस्य वेदीव । पुण्यभूमौ हेम० ।

**आचाराङ्ग** न० आचारमङ्गमिव । तत्प्रचारे द्वादशसु अङ्गेषु मध्ये अङ्गभेदे हेमचन्द्र ।

**आचारिन्** त्रि आचरति शास्त्रोक्तानुष्ठानेन आ+चर–णिनि । शास्त्रोक्तानुष्ठानवति स्त्रियां ङीप् ।

**आचारी** स्त्री० सम्यक् चारः प्रसरणं यस्याः गौ० ङीष् । (हेलञ्चा) हिलमोचिकाख्यलतायाम् ।

**आचार्य्य** पु० आ+चर–ण्यत् । "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः । सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते" इति मनूक्तलक्षणे १ वेदाध्यापयितरि, "आम्नायतत्त्वविज्ञानाच्चराचरसमानतः । यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते" इत्युक्तलक्षणे २ मतप्रस्थापके शङ्कराचार्य्यादौ च । स्त्रियां टाप् आचार्य्या । आचार्य्यपत्न्यान्तु ङीष् आनुक् च आचार्य्याणी न णत्वम् । "अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः । सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" दक्षः "कस्मादाचार्य्य आचारं ग्राहयत्याचिनोत्यर्थान् आचिनोति बुद्धिमिति वा" निरु० "आचार्य्यस्तु ते गतिं वक्तेति" छा० उप० "आचार्य्यात् पादमादत्ते पादं शिष्यः स्वमेधया । कालेन पादमादत्ते पादं सब्रह्मचारिभिः" नीलकण्ठधृता स्मृतिः । क्रमेणाचार्य्यसम्प्रदायधर्माभ्यासे कृतोऽर्थेन" याज्ञ० । यज्ञादौ कर्मोपदेशके ३ गुरौ "आचार्य्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञेऽस्मिन्नाचार्य्यो भव सुव्रत । यथा शक्रस्य वागीश आचार्य्यः सर्व्वकर्मसु । तथा मया त्वमाचार्य्यं वृतोऽस्मिन् यज्ञकर्मणि" इति विधानपारि० पुरा० । ४पूज्यमाने त्रि० सुराचार्य्य दैत्याचार्य्य ५विद्याकमात्रे च "स ब्रह्मचारी गुरुवत्क्षे विद्याचाचार्य्यक परे" रघु ।

**आचार्य्यक** न० आचार्य्यस्य कर्म भावो वा योपधगुरूपोत्तमत्वात् वुञ् । आचार्य्यकर्मणि । "स ब्रह्मचारी गुरुवत्क्षे विद्याचाचार्य्यक परे" रघु "नैव जातु महेष्वास पार्थमक्लिष्टकारिणम् । इन्द्रादाचार्य्यक दीप्त रुद्रस्य नरनिर्मितम्" भा०उ०प०१६६ अध्या० । "आचार्य्यक विजयि मान्मथमाविरासीत्" त्व आचार्य्यत्वं तत्रैव न० तल् आचार्य्यता तत्रैव स्त्री । सोऽचिरेणैव कालेन परमाचार्य्यतां गतः" ।

**आचार्य्यभोगीन** त्रि० आचार्य्यभोगाय हितम् ख "आचार्य्यादणत्वम्" वार्त्तिकोक्ते न णत्वम् । आचार्य्यभोगपर्य्याप्ते द्रव्यादौ ।

**आचार्य्यमिश्र** पु० आचार्य्योमिश्र । अतिशयपूज्ये ।

**आचिख्यासा** स्त्री आख्यातुमिच्छा आ+ख्या–सन–अ । आख्यातुमिच्छायाम् । [आख्यातुमिच्छौ ।

**आचिख्यासु** त्रि० आख्यातुमिच्छु आ+ख्या–सन उ ।

**आचित** त्रि० आ+चि+क्त । १व्याप्ते, "कचाचितौ विष्वगिवागजौ गजौ" किरा० "फलैरुपचितैर्दिव्यैराचिता स्वादुभिर्श्च सम्" (बदरी देवा) भा०व०प० १४५ अ० । २गुम्फिते ग्रथिते "अर्द्धाचिता सत्वरमुत्थितायाः" कुमारः रघुश्च "तथा चकार तास्तां विमला भार आचितः" इत्युक्ते

क्रान्तं देवगणैः समममवलपौरुषैः । यज्ञमक्षोलयित्वा तु विमायाभ्या महाबल. । ममाद प्राणयोगेन मध्यमाम ह्र-वार्णवः । तृतीय वायुविषयं समाक्रम्य/विमाणशान् । म-नाद वशशान्नाद सहस्र इव पर्व्वणि” हरि० १२४ अ० ।

**आजगर** न० अजगरं सर्पस्त्वं मङ्गपर्मधिकृत्य कृतोग्रन्थः अण् । अगस्त्यशापेनाजगररूपतां प्राप्तस्य नहुषस्य युधिष्ठिरेण संवादरूपे भारतान्तर्गतवनपर्व्वणि अवान्तर पर्व्व-भेदे तच्च भा० वनपर्व्वणि १७६ अ० अवधि १८० अ-ध्यायपर्य्यन्ताध्यायषट्कात्मक तत्कथा तत्रैव दृश्या ।“निवा-तकवचैर्युद्ध पर्व्व चाजगर ततः” भा० आ० प० १अ० ।

**आजगव** न० अजगवमेव प्रज्ञाद्यण् । १शिवधनुषि अजगवश-ब्दार्थे विवृतिः. अजगवं तद्धनुषाद्यस्य तस्येदम् अण् । तद्धनुष्य इट्ठे २धनुषि च “आजगव नाम धनु धरा रह्णोऽप्यायवे” भा० व० प० १२७ अ० “तथेत्युक्त्वा पृथुर्वेगोटङ्कोत्वाजगवं धनु” भा० द्रो० प० ६९ अ० ।

**आजधेनवि** पुंस्त्री० अजैव धेनुरस्य ष० इवत् तस्यापत्यम् बाह्वादे आकृतिगणत्वादिञ् । छागीरूपधेनुयुक्तमुनेरपत्ये ।

**आजनन** अव्य० आ+जन–ल्युट् । १विख्यातजनने “तेषा-माजननं पुण्यं कर्म्मण प्रीतिमावहेत्” भा० आ० प० सीमायाम् अव्ययी० । २जन्मपर्य्यन्ते अव्य० ।

**आजन्म(न)** अव्य० जन्मन पर्य्यन्तम् सीमायाम् अव्ययी० वा अच् । जन्मपर्य्यन्ते “सोऽहमाजन्मशुद्धानाम्” रघु ।

**आजन्मसुरभिपत्र** पु०आजन्मम् सुरभि पत्रमस्य । मरुवक वृक्षे राजनि० । [मारापत्ये ।

**आजमार्य्य** पुंस्त्री० अजमारस्यापत्यम् कुर्व्वादि०ण्य । अज-

**आजमीढ** पु० अजमीढो देशभेदस्तत्र भव अण् । (आजमीर) १देशभवे तस्य राजा अण् । तद्देशाधिपे २नृपे बहुषु तस्य लुक् । अजमीढाः । “सधस्तुतिमाजमीढासोऽग्मन्” ऋ० ४, ४४,६, ‘आजमीढास तद्गुसम्बन्धिन” भा० । ३यादव नृपभेदे च “भरतस्य कुरो पूरोराजमीढस्य चान्वय । याद-वानामिमं वशम्” इत्युपक्रान्तम् भा०आ०प० ७५अ० । “व्योमिनैव षष्ठिरोऽपि भारतान् मत्यपद्यत । अथाभ्य-षिञ्चत् साम्राज्ये सर्वचत्रस्य गौरवम् । विमाणभूत सर्वेषां पृथिव्यामिति नः श्रुतम् । भरताध्युषित पूर्व्वं सोऽध्य-तिष्ठत् पुरोत्तमम् । पुनर्बलिभृतश्चैव चक्रे सर्व्वमहीक्षित । तत स पृथिवीं प्राप्य पुनरीजे महाबलः । आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ६४अ० । अजमीढेषु भवः वुञ् । आजमीढक. वङ्गत्वदाजमीढभवे त्रि० ।

**आजयन** न० आजीयतेऽत्र आ+जि–आधारे ल्युट् । युद्धे

**आजरस** अव्य० जरापर्य्यन्तम् अव्ययी० अच् जरसा-देशः । जरापर्यन्ते । आगता जरा यस्य प्रा० ब० अच् जरसादेशश्च । प्राप्तजराभावे “आजरसाय समनक्त्वर्यमा” ऋ०१०,८५, ४३, ।

**आजवस्तेय** पुंस्त्री० अजवस्तेर्ऋषेरपत्यम् शुभ्रा० ढक् । अ जवस्तिनामकर्षेरपत्ये स्त्र्यां ढञ् । आर्षाजिकोऽप्यत स्त्रियां ङीप् ।

**आजवाह** त्रि० अजोवाह्यतेऽत्र वह–णिच् आधारे घञ् अजवाहोदेशभेदः तत्र भवादि अण् । अजवाहदेश-भवादौ । स च देश वदरिकाश्रमादुत्तरस्यां पर्व्वतोपरिस्थः तत्र हि अजैरेव भारो वाह्यते इति तस्य तथात्वम् ।

**आजातशत्रव** पु० अजातशत्रोरपत्यम् अण् । १युधिष्ठिरा-पत्ये न जात शत्रु रस्य । अयत्नुकस्य नृपभेदस्यापत्ये २भद्र-सेने नृपे च । “एतया वै भद्रसेनमाजातशत्रवमा-रुणिरभिचचार” शत० ब्रा० अजातशत्रु च काशी-राजः यथोक्तम्” छा०उ० “सहोवाचाजातशत्रु काश्य ग्रज्ञ ते ब्रवाणीति” ।

**आजाति** स्त्री आ+जन–क्तिन् । आजनने जन्मनि “ताड-यित्वा तृणेनापि संवादान्मतिपूर्व्वकम् । एकविंशतिमाजाती-पापयोनिषु जायते” । “साक्ष्येऽनृत वदन्पापैर्बध्यते वारु-णैर्भृशम् । विवश शतमाजातीस्तस्मात्साक्ष्ये वदेदृतम्” इति च मनु ।

**आजाद** पु०स्त्री अजमत्ति अद–अण् उप०स० तस्यापत्यम् गर्गा०यञ् । छागभक्षकस्य मुनेरपत्ये स्त्रियांङीप् यलोपश्च ।

**आजान** अव्य० जनोजननमेव अण् जाम तत्पर्य्यन्तम् अ-व्ययी० । सृष्टिकालपर्य्यन्ते सृष्ट्ये ।“अद्भ्यः सम्भृत पृथि-व्यै रस विश्वकर्म्मणः समवर्त्तताग्रे तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे” यजु० ३१, १७, “पूर्व्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्त स्तूयते । “अद्भ्यः जलात् पृथिव्याः सकाशात् पृथिव्यपां ग्रहण भूतपञ्चकोपलक्षकम् भूतपञ्चकात् योरस सम्भृत पुष्टः तथा विश्व कर्म यस्य विश्वकर्म्मणः कालस्य रसात् प्रीतेः योरसोऽग्रे प्रथम समवर्त्तत समभवत् भूतपञ्चकस्य कालस्य च सर्व्वं प्रति कारणत्वात् पुरुष-मेधयाजिनो लिङ्गशरीरे पञ्चभूतानि पुष्टानि कालश्च ततः पुष्टेभ्य कश्चित्रसविशेषफलरूपोत्तमजन्मप्रद उत्पन्न इत्यर्थ. । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा, आ-

दिव्यं एति मत्यश्चदय करोति अथ प्रथमं मर्त्त्यस्य मनुष्यस्य शतकस्य पुरुषमेधयाजिनः आजानं देवत्वं तच्च देवलम् स्वव्यक्षपेण । द्विविधा देवाः कर्मदेवा आजानदेवाश्च कर्म्मणोत्कृष्टेन देवत्व प्राप्ताः कर्म्मदेवाः सृष्ट्यादावुत्पन्ना आजानदेवाः ते कर्म्मदेवेभ्य श्रेष्ठाः "ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्द इति श्रुतेः" वेददी० जननसाधने २प्रकृतौ च । "न हस्तिन प्रतिगृह्णीयात् पुरुषाजानोऽहि हस्तीति" शत० ब्रा० पुरुषाजानः पुरुषप्रकृतिक" इति भा० । आ+जन घञ् दीर्घः" ३उत्पत्तौ पु० ।

**आजानज** त्रि० आजान' जायते । सृष्टिकालादारभ्यजाते देवादौ । द्विविधा हि देवा केचित् कर्म्मदेवा केचिदाजानदेवाश्च यथ "ते ये शतमाजानजानां देवानामानन्दाः स एकः ये कर्म्मणा देवानपियन्ति" ऐत०उ० ।

**आजानदेव** पु० आजान सृष्टिकालमारभ्य देव' देवत्वमाप्त । कर्म्मणानुत्पन्नदेवभावे चिरप्रसिद्धदेवे "अथ ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते शतमाजानदेवानामानन्दाः" वृ०उ० । "आजानदेवानामेक आनन्दः उत्पत्तितएव ये देवास्ते आजानदेवा" भा० ।

**आजानि** त्रि० आ+जन–अन्तर्भूतण्यर्थे इण् छन्दसीति दीर्घः । १जनके जननकर्त्तरि । "तीव्रयायू'पि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।" ऋ०३,१७,३ । आजानी जनयित्रीर्मातर" भा० । अन्तर्भूतण्यर्थाभावे । २अनुजाते च "तत्रैव पक्षान्तरे आजनय अनुजाता उषस इति भाष्यकृता व्याख्यातम् ।

**आजानिक्य** न० आजानौ भवः ठञ् तस्य भावादौ पुरो० यक् । आजन्मसिद्धपदार्थस्य भावे कर्म्मणि च ।

**आजानेय** पु० आजे विक्षेपेऽपि आनेयोऽश्ववाह्यो यथा स्थानमस्य । "शक्तिभिर्भिन्नहृदया' स्खलन्तश्च पदेपदे । आजानन्ति यत संज्ञामाजानेयास्ततः स्मृता" इत्युक्तलक्षणे उत्तमाश्वे । [ स्य

**आजायन** पु स्त्री अजस्यापत्यम् नडा० फक् । अजनामकन्टपआजि स्त्री अजन्त्यस्याम् अज–इण् न वीभव । १समरभूमौ २संग्रामे, "आजिं न जग्मुर्गिर्वाहो अश्वाः" ऋ०६,२४,६, 'ते यावन्तएवाजौ तावान् स ददृशे परै" रघु' । "अस्माकमिन्द्र! दुष्टर पुरोयावानमाजिषु" ऋ०५,३५,७ "आजिषु संग्रामेषु" भा० । ३मर्य्यादायां स्त्री वा ङीप् ।

"अतोयान्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मन्थनम् आजेः सरणम् दृढस्य धनुष आयमनम्" छा०उ० "आजेः मर्य्यादाया सरणं धावनम्" शङ्करभा० ५धावने ६मार्गे पु० । "धन्वना गां धन्वनाजिं जयेम" यजु०२९,३९ । "धन्वना आजिं मार्गं जयेम अजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गं" वेददी० । भावे इण् ७आक्षेपे ।

**आजिनीय** त्रि० अजिन+चतुरर्थ्यां कृशाश्वा० छण् । चर्म्मसन्निकृष्टदेशादौ । [ सन्निकृष्टदेशादौ ।

**आजिरि** त्रि० अजिर+चतुरर्थ्यां सुतङ्गमा० इञ् । अङ्गन-

**आजिरेय** त्रि० अजिर+शुभ्रादि० ढक् । अङ्गनभवादौ ।

**आजिहीर्षा** स्त्री आहर्त्तुमिच्छा आ–हृ सन्–भावे अ । आहरणेच्छायाम् । उ । आजिहीर्षुः । आहरणेच्छौ त्रि० ।

**आजीकूल** न० आजौ कूलति आवृणोति यस्मिन् आ+कूल-आधारे क । मर्य्यादावरके देशभेदे तत धूमादि०भवादौ पथ्यादौ वुञ् । आजीकूलिक । आजीकूलदेशभवे–पथि अध्याये, न्याये, विहारे, मनुष्ये, हस्तिनि, गोमये च ।

**आजीगर्त्ति** पुंस्त्री० अजीगर्त्तस्यापत्यम् बाह्वा०इञ् । अजीगर्त्तस्यापत्ये ।

**आजीव** पु० आजीव्यतेऽनेन आ+जीव–करणे घञ् । १आजीवनोपाये कृष्यादौ २उपाये च । अन्नाशनप्रकरणस्थ "तस्मिन् काले स्थापयेत्तत्पुरस्तात् वस्त्रं शस्त्रं पुस्तकं लेखनीञ्च । स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा" मु०चि० । न्टणा जन्मलग्नावधि दशमभावे मेषादीनां चेत्तद्धोराद्रेक्काणनवांशद्वादशांशत्रिंशांशरूपे षड्भिर्वर्गैः क्रमेणाजीवोपायविशेषज्ञान भवति यथोक्तं जातके "अथ कल्याणवर्म्मोक्ता दशमेऽर्थविभेदजाम् । वृत्तिचिन्ता लिखेत्कर्म्माजीवोक्तामपि चिन्तयेत् । "वाटिकाकृषिवणिक्सेवादूत्यतोऽजगणात् लभे भवेत् । जीवनं इषगणाञ्चतुष्पदैः पक्षिधान्यशकटादिसंभवैः । मौक्तिकादिजलजैर्लिपिलेख्यैर्विक्रमादिकवणिक्क्रियादिभिः । द्वन्द्वभागत अथो कुलीरतोनीरजैर्विपभगाग्निशस्त्रजैः । वनाद्रिकाष्ठसञ्चारकुप्याकुप्यैश्च धान्यकैः । कृषिपापाणवाणिज्यैर्वृत्तिः सिंहागत लभे । गान्धर्वशिल्पशकटैर्मणिहेमकर्म गन्धक्रयैर्नभसि पटकगणैश्च वेश्यैः । हेमाम्बु गोमहिषधान्यकृषिक्रयैश्च मूलैर्धनैर्नृपतितोऽपि तुलोत्थवर्गे । स्त्रीसङ्गमाप्तधनचौर्य्यचिकित्सितैश्च निन्द्योद्यमैर्नृपतिसेवनतोऽलिवर्गे । भैषज्यरूपगणितादिकयन्त्रविद्याभूपालमन्त्रगिरिदुर्गमयाद्वहंसे ।

सितमधुर्युग्मपत्रं सुशुभ्रम् । तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना विद्यामुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता । एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्” एतदभिप्रायेणैव “मनोऽपि भ्रूमध्ये निवसत्यानन्दलहर्य्यामुक्तम् । मनसस्तत्र स्थित्या च तदुपहितजीवस्यापि तत्रैव स्थितिः । एवञ्च श्रुतौ हार्द्दविद्यायां “हृद्ययं तस्माद्धृदयम्” इत्युक्तिस्तु हृदये ध्यानार्थत्यादविरोधः । महानिर्वाणतन्त्रे शरीर एव चतुर्द्दश भुवनानि सूक्ष्मरूपेण स्थितानि तानि च तत्रैव ध्येयानीत्युक्तं तत्र कुत्र किं ध्येयमित्याकाङ्क्षायां मूलाधारादिकं भूरादिलोकतया ध्येयमित्युक्तम् तत्र विशुद्धचक्रस्य जनोलोकतया ध्येयतामुक्त्वाह ।

“एतत्पद्मस्योर्द्ध्वदेशे ज्ञानपद्मं सुदुर्लभम् । दलद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम् । पद्ममध्ये बीजकोणे चरेश्चिन्तामणेः पुरीम् । तन्मध्ये नवकोणञ्च यन्त्रं परमदुर्लभम् । शम्भुबीजं हि तन्मध्ये साकारं हंसरूपकम् । हंसः परब्रह्मरूपः साकारः शिवरूपकः । तारचक्षुर्द्दारोहे निर्गमागमपल्लवान् । शिवशक्तिपदद्वन्द्वं बिन्दुत्रयविलोचन । विहारवास्य हंसस्य हेमपङ्कजपूजिते । एव हंसोमणिद्वीपे तस्य क्रोडे परः शिवः । वामे तस्य सिद्धकाली सदानन्दस्वरूपिणी । तस्याः प्रसादमासाद्य सर्व्वकर्त्ता महेश्वरः । तपोलोक इदं भद्रे । सर्व्वलोकस्य दुर्लभम् । यत्र ब्रह्मादयो देवा ध्यानयोगं सदाभ्यसेत् । मनसापि न लभ्येत योगेन तपसा न च । तपोलोकगोलोकस्य चतुर्लक्षगुणं शिवे । । ब्रह्मलोकेषु ये देवा वैकुण्ठे ये सुरादयः । शम्भुलोके वसेद्योहि तेजोभक्तिपरायणः । तपसापि न लभ्येत तपोलोकगतिं शिवे । तपोलोकसमोनास्ति लोकमध्ये सुलोचने । । सालोक्यं हि महोलोके सारूप्यं जनलोकके । सायुज्यं च तपोलोके निर्व्वाणं हि तदूर्द्ध्वके । ततो ब्रह्मादयो देवास्तपोलोकाश्रिनः सदा । इति ते कथितं कान्ते । चक्रषट्कस्य लक्षणम् । यज्ज्ञानादमरश्चैव जीवन्मुक्तश्च साधक । यज्ज्ञात्वा जननीगर्भे न विशेत् कदाचन” ।

**आज्ञात** त्रि० आ+ज्ञा–क्त सम्यग्ज्ञाते “आज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथः” यजु० शिवसङ्कल्पः ।

**आज्ञातीर्थ** न० ६त० । तन्त्रे मानसस्नानाङ्गे ध्येयतयोक्ते आज्ञाचक्राख्ये तीर्थे । “आज्ञाचक्रे सदा ध्यात्वा स्नाति निर्व्वाणसिद्धये” । रुद्रयामलम् ।

**आज्ञान** न० आ+ज्ञा–ल्युट् । आज्ञाकरणे मानसवृत्तिभेदे । मानसवृत्तयश्च यथा । “संज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामोवश इति सर्व्वाण्येवैतानि प्रज्ञानस्य नामधेयानि” ऐ० उ० । “तदन्तःकरणोपाधिकस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था अन्तःकरणवृत्तयो बाह्यान्तर्वर्त्तिविषयविषयाश्च इमा उच्यन्ते । संज्ञानं संज्ञप्तिश्चेतनभावः । आज्ञानम् आज्ञप्तिरीश्वरभावः । विज्ञानं कलादिपरिज्ञानम् । प्रज्ञानं प्रज्ञप्तिः प्रज्ञता । मेधा ग्रन्थधारणे सामर्थ्यम् । दृष्टिरिन्द्रियद्वारा सर्व्वविषयोपलब्धिः । धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति । धृत्या शरीरमुद्वहन्तीति हि वदन्ति । मतिर्मननम् । मनीषा तत्र स्वातन्त्र्यम् । जूतिश्चेतसो रुजादिदुःखिभावः । स्मृतिः स्मरणम् । संकल्पः शुक्लकृष्णादिभावेन सङ्कल्पनम् रूपादीनाम् । क्रतुरध्यवसायः । असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामोऽसन्निहितविषयाकाङ्क्षा । वशः स्त्रीव्यतिकराद्यभिलाष इत्येवमाद्याः अन्तःकरणवृत्तयः” शङ्करभाष्यम् ।

**आज्ञानुग** त्रि० आज्ञामनुगच्छति अनु+गम–ड ६त० । आदेशानुसारेण गन्तरि दासादौ क्त आज्ञानुगतोऽप्यत्र त्रि० ।

**आज्ञानुगामिन्** त्रि० आज्ञामनुगच्छति अनु+गम–णिनि ६त० स० । आज्ञानुगते स्त्रियां ङीप् ।

**आज्ञानुयायिन्** त्रि० आज्ञामनुयाति अनु+या–णिनि ६त० स्त्रियां ङीप् । आज्ञानुसारेण गन्तरि दासादौ ।

**आज्ञानुवर्त्तिन्** त्रि० आज्ञामनुवर्त्तते अनु+वृत–णिनि ६त० स्त्रियां ङीप् । आज्ञानुसारेण वर्त्तमाने दासादौ ।

**आज्ञानुसारिन्** त्रि० आज्ञामनुसरति अनु+सृ–णिनि ६त० स्त्रियां ङीप् । आज्ञानुसारेण कर्म्मकारके दासादौ

**आज्ञापक** त्रि० आज्ञापयति आदिशति आ+ज्ञा–णिच् ण्वुल् । आज्ञाकारके स्वामिप्रभृतौ । [पत्रे(हुकुमनामा)

**आज्ञापत्र** न० आज्ञाज्ञापकं पत्रम् शाक० त० । आदेशज्ञापके

**आज्ञाभङ्ग** पु० आज्ञाया आदेशस्य भङ्गः स्वविषयेषु प्रचाराभावः । आदेशस्याकरणेन आदिष्टविषयेषु प्रचाराभावे (हुकुम ना माना) । “दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा नाज्ञाभङ्गं सहन्ते नरप । नृपतयस्त्वादृशाः सार्व्वभौमा” इति “चन्द्रगुप्तस्य चेतसः पीड़ारूपचिन्तता चाणक्येन क्रियमाणे चाज्ञाभङ्गे तयोपश्लोकैरुपश्लोक-

यितव्य" इति च शुद्धाराघवम् । [आज्ञानुकूले दासादौ

**आज्ञावह** पु० आज्ञां वहति वह–अच् । आदेशवाहके

**आज्ञासम्पादिन्** त्रि० आज्ञाम् आदिष्टविषयं सम्पादयति सम्+पद+णिच्–णिनि ६त०स० स्त्रियां ङीप् । आदिष्ट विषयसम्पादके अनुकूले दासादौ ।

**आज्य** न० आज्यते आ+अनृज–क्यप् नलोप । १घृते । "सर्पि-र्विलीनमाज्य स्याद्घनीभूत घृत भवेदित्युक्ते २विलीने सर्पिषि "स्रुवेण दक्षभागादाज्यं गृहीत्वा" भवदेवः "घृत पवित्रे थे-षाज्यमापः शुम्भन्तु सैनम" इ पदमन्त्र श्नोधरे चन्द्रने पु०अजयपाल । "आजिमीयुस्तमादाज्यानामाज्यत्वमिति निरुक्ते सामस्तोमभेदे । स च" स्तोम सामवि०ब्रा०भा०उक्त: "बहिष्पवमानस्तृचस्य आद्यम् अग्न आयाहि वीतये" - इत्यादि सूक्तम्, आनो मित्रावरुण इति द्वितीयम् "आयाहि सुष्य आहत इति" तृतीयम् । "इन्द्राग्नी आगतमित्यादि चतुर्थम्" उत्तरा०१प्र० २,५,६,७, सूक्तानि तान्येतानि प्रातः सवने गायत्रसाम्ना गीयमानानि आज्यस्तोत्रा-ण्युच्यन्ते तेषु चाज्यस्तोत्रेषु पञ्चदश स्तोमो भवति तस्य स्तोमस्य विष्टुतिरेवमाम्नायते । "पञ्चभ्योहिङ्करोति स तिसृभिः स एकया स एकया पञ्चभ्योहिङ्करोति स एकया स तिसृभिः स एकया पञ्चभ्योहिङ्करोति स एकया स एकया स तिसृभिः" सामविधानब्राह्मणम् "एव त्रिरावर्त्य तत्र प्रथमावृत्तौ प्रथमायास्त्रिरा-वृत्ति द्वितीयावृत्तौ मध्याया स्त्रिरभ्यास । तृतीयावृत्तौ उत्तमायास्त्रिरभ्यास । सोऽयं पञ्चदशस्तोम इति"

**आज्यदोह** न० सामवेदिपाठ्ये सूक्तभेदे "वामदेव्यं बृहत्साम ज्येऽसाम रथन्तरम् । तथा पुरुषसूक्तस्य रुद्रसूक्तं तत परम् । आज्यदोहानि सामानि यान्त्रिकं भारुण्डानि च । पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा" दानपारि० पु० तानि च सामानि देवव्रतसंज्ञकानि त्रीणि यथा । "अधि पतायि मित्र पतायि क्षत्रप तायि स्वाः प तायि धनप ता २, यि मा २, मा । मन्युना वृत्रहा सू-र्य्येण स्वराड्यज्ञेन मघवा दक्षिणास्य प्रिया तनूराज्ञा विश्वं दाधार । वृषभस्त्वष्टा वृत्रे या शचीपतिरग्नेन पय पृथिव्या सुरभिकोऽग्निना विश्वं भूतम् । अभवो वायुना मिश्रा । प्रजा अध्ययपया वषट्कारेणाङ्भाक् सोमेन सोमपा समिज्या परमेष्ठी । ये देवादेवा । दिविषद । स्तेभ्यो वो देवादेवेभ्यो नमः । ये देवादेवा । अन्तरि क्षसद. । स्तेभ्यो० । ये देवा० । पृथिवीषदः । स्तेभ्यो० । ये देवा० । अप्सुषद । स्तेभ्यो० । ये देवा० दिक्षुसदः । स्तेभ्यो० । ये देवा० । आशासद । स्तेभ्यो० । अव-ज्यामिव धन्वने विते मन्युप्रयामसि कृतां महद् अक्ष-भ्यम् । इडा २, ३, भा । यदिदं विश्वं भूत युयो २, । आउ । वा २,३, मा २,३,४, मा ॥१॥ अ-धिप तायि मित्रप तायि क्षत्रप तायि । स्वः-प तायि धनप ता २, वि । मा २, माः । नम उत्ततिभ्यश्चोत्तस्थानेभ्यश्च नमो नीवक्तिभ्यश्चोपवीतिभ्यश्च न-मोऽसक्तरेभ्य प्रविद्यानेभ्यश्च नम प्रविध्यद्भ्यश्च प्रव्याधि-भ्यश्च नमः त्सरद्भ्यश्च त्सारिभ्यश्च नम श्रीस्तभ्यश्च आयि-भ्यश्च नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्च नमो यते च वियते च नमः पथे च विपथाय च अवज्यामिव धन्वने इत्यादि मा-त्वम् ॥२॥ अधिप । तायि । मित्रप । तायि क्षत्रप । तायि । स्व प । तायि । धनप । ता २, वि । मा २, मा । नमोऽस्त्वाय नमोऽस्त्रपतय एकाक्षाय वामपक्षादाय च नमो नम । रुद्राय वीरवद्दे नम स्थिराय स्थिरधन्वने नम० प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च कपर्दिने च नम आम्रयेभ्यश्च प्रत्याम्रयेभ्यश्च नम० क्रव्येभ्यश्च निरिम्फो-भ्यश्च नम, संहते च विहते च अवज्यामित्यादि पूर्व्वं वत् ३ । (सामारण्ये ५प्र०१अ० ६,७,८गा०) गाना-यक्तौ अधिपतये इत्याद्यनुवाक त्रिधा जपेत् अधिपतये मित्रपतये क्षत्रपतये स्वःपतये धनपतये नम इत्येव पठनीयमेवमग्रेऽपि अक्षभ्यमित्यनन्तरं य इदं विश्वं भूतं युयोधे नम इति गीयत्येत्यत्र निषक्तोत्येव पठनीय-मन्यत् गानीय स्तोभ विहाय समानम् ।

**आज्यप** पु० आज्य पिबन्ति आज्य+पा–क उप०स० । पुलस्त्यस्य पुत्रे वैश्यानां पितृदेवेषु । "सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुज । वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः" मनुः । "पुलस्त्यस्याज्यपाः पुत्राः" इति भा०आ०प० । "देवा आज्यपा आवहेति" "देवा आ-ज्यपा अग्निहोत्रायावहेति" च शत० ब्रा० ।

**आज्यभाग** पु० आज्यस्य भाग । १घृतैकदेशे "सरस्वत्याज्य-भागा भवति" शत०ब्रा० । तस्य २वैदिकाहुतिभेदे च स च ऋग्वेदिनामग्नेरुत्तरभागे स्रुवेणाग्नये दीयमान आहुति-विशेषः तद्दक्षिणभागे सोमाय दीयमान आहुतिभेदश्च । "तूष्णीमाघारावाघार्याज्यभागौ जुहुयादग्नये स्वाहा सो-माय स्वाहेति" आश्व०गृ० । यजुर्वेदिनान्तु अग्नये स्वाहा इदमग्नये इति उत्तरपूर्व्वार्द्धे सोमाय स्वाहा इदं

सोमायेति दक्षिणपूर्व्वार्द्धे" इति भेदः। "ता उद्दैता देवताकृतुः यादमा अग्नीषोमावभ्याजजनुरग्नीषोमौ युवं वै नौ भूयिष्ठमाजौस्तायोर्वामिदं युवयोरत्माभ्याभजतमिति। तौडोचतुः किमावयोस्ततः स्यादिति यस्मै कस्मै च देवतायै हविर्निर्वपाश्चद्दां पुरस्तादाज्यस्य यजामिति तस्मादस्मै कस्मै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति" शत०ब्रा०। इति तयोः सर्व्वदेवानां यज्ञादौ आज्यभागदानं विहितम्। "आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन" क०स्रौ० २,१,१,।

**आज्यभुज्** पु० आज्यं मन्त्रेण प्रक्षिप्तं विलीनं सर्पिः भुङ्क्ते भुज–क्विप्। १हविर्भुजि वह्नौ तन्मुखेन हविर्भोजे २देवे च।

**आञ्जन** न०आ+अञ्ज–ल्युट्। समन्तादभ्यञ्जने। "तेज वा एतदक्ष्योर्यदाञ्जनम्" ऐ०ब्रा०। अञ्जनायां भवः अण्। २हनूमति वानरभेदे स च दाशरथिसहाय "दाशरथियशोभिरिवाञ्जनमनोजनबलपरिगतप्रान्तैः" काद०। अञ्जनस्येदम् अण्,। ३अञ्जनसम्बन्धिनि त्रि०।

**आञ्जनिक्य** न० अञ्जनाय हितम् ठञ् ततः पुरो० भावे कर्मणि च यक्। अञ्जनसाधनत्वे।

**आञ्जनेय** पु० अञ्जनाया अपत्यं ठक्। अञ्जनागर्भजाते हनूमति वानरे। "अञ्जनागर्भसंभूतो वायुपुत्रो महाबलः"। हनुमत्स्तुतिः। [ अञ्जलिकरणे।

**आञ्जलिक्य** न० आञ्जलिरेव स्वार्थे कन् ततः पुरो० यक्।

**आञ्जिनेय** पु० अञ्जिन्यां भवः ढक् ( आजनाइ ) कीटभेदे।

**आञ्जिहिषा** स्त्री आहितुमिच्छा आ+अनुह–सन्–अ। आगमनेच्छायाम् "आजिहिष जातांजिहिष" भट्टिः।

**आटरूष** पु० अटरूष एव स्वार्थे अण्। वासकवृक्षे स्वार्थे कन् तत्रैव "आटरूषकपर्णानाभहया यान्त्यनुयायिनाम्" भा०द्रो० प०।

**आटविक** त्रि० अटव्यां चरति भवो वा ठक्। अरण्यचारिणि "प्रच्छन्नचस्थकास्त्वेते ये स्तेनाटविकादयः" मनुः "दण्डेषु हस्त्यश्वकुमाराटाविकाः सामन्तसैनिकाद्यास्य" सा०द०। २"सैन्यभेदे। सैन्यानि च षड्विधानि। यथा "मौल भृत्य सुहृच्छ्रेणी द्विषदाटविक बलम्" मल्लिनाथ धृतकोषः। तदभिप्रायेणैव "षड्विधं बलमदायेति" रघुः।

**आटवी** स्त्री अटव्याः समीपभवा पूः अण्। दक्षिणदिक्स्थयवनपुरीभेदे। सहदेवदिग्विजयवर्णने। "दूतैरेव वशे चक्रे करस्रैनामदापयत्" "पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः। अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्। आटवीञ्च पुरीं रम्यां यवनानां पुरं तथा" भा०स०प०।

**आटि** पु०आ+अट्–इण्। १शरारिपक्षिणि। २मत्स्यभेदे च जातित्वेन स्त्रियां वा ङीप्। स्वात्यादिषु पाठात् माला शब्दे परेऽस्योदात्तत्वम्।

**आटिक** त्रि० आटाय गमनाय प्रवृत्तः ठञ्। गमनप्रवृत्ते स्वार्थे ष्यञ्। आटिक्यमप्यत्र न०।

**आटिकी** स्त्री आटम् अटनमर्हति षण्–ङीप्। स्वातन्त्र्येण बहिर्गन्तुमर्हायामनुपजातपयोधराया स्त्रियाम्। "मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राण उवास" छा०उ०। आटिक्याऽनुपजातपयोधरादि स्त्रीव्यञ्जनया जायया सह" इति भा०।

**आटीकन** न० आटीक्यते ईषद्गम्यते आ+टीक–ल्युट्। वत्सानां प्रथमगमने स्वार्थे कन् तत्रैव इकारो वानतया पाठः प्रामादिकः।

**आटीमुख** न० आट्याः शरारिभेदस्य मुखमिव मुखमस्य। सुश्रुतोक्ते शस्त्रभेदे "सूचीकुशपत्राटीमुखशरारीमुखेत्यादि विंशतिशस्त्रगणनायाम् सुश्रु० अर्द्धधारशब्दे विवृतिः।

**आटोप** आ+तुप–घञ् पृषो० ठत्वम्। १दर्पे, २संरम्भे, ३आडम्बरे च। "साटोपमुर्वीमनिशं नदन्तः" माघ "मदजलदुर्दिनान्धकारगजघटितघनघटाटोपपरिपालितापि"काद० "साटोप परिक्रम्य" वेणी० "कलापरुचिराटोपमनिचितान् सुकुटानिव" भा०व०प०। ४वातजन्ये उदरशब्दभेदे "आमाटोपार्मचिरं प्रसुप्तं क्रिमिविकारिणाम्" सुश्रु०।

**आडम्बर** पु० आ+डवि–क्षेपे, अरन्। १हर्षे, २दर्पे, ३तूर्यस्वने, ४आरम्भे ५संरम्भे, ६अखिलोद्यमे, घनगर्ज्जिते, ७आयोजने च। मत्वर्थे इनि। आडम्बरिन् तद्युक्ते त्रि०। [भेदे। ततः गोत्रप्रत्ययस्य बहुषु लुक्।

**आडारक** पु० अड–उद्यमे घञ् ततः आरक् ऋषि-

**आडि** पु० अड–उद्यमे इण्। स्वनामख्याते मत्स्यभेदे। शरारीविहगे च पुंस्त्री० स्त्रीत्वे वा ङीप् स्वार्थे कन् आडिकाप्यत्र।

**आडू** पु० अल ज लस्य डः नि० दृद्धिः। (भेला) उडुपे।

**आढक** पु० आढौकते आ+ढौक–घञ् पृ०। "अष्टमुष्टिर्भवेत् कुञ्चिःकुञ्चयोऽष्टौ तु पुष्कलम्। पुष्कलानि च चत्वारि आढकः परिकीर्त्तित इति" मतभेदे चतुर्द्विंशत्यधिकशतप्रमाणे "द्वादशप्रसृतिभि पुरुषस्तास्त्वङ्गुलोत्तर प्रस्थादकद्रोणा, इत्युक्ते द्विनवत्युत्तरशतप्रसृतिमाने च

एतच्च धान्यादेर्माने । स्वर्णादिमाने तु सुश्रुतः । "द्वादश धान्यमाषाः मध्यमाः षट्सर्षपमाषक. ते षोडश सुवर्णम् । अथ मध्यमनिष्पावा एकोनविंशतिर्धरण माष्काः ततोयानि कर्षं ततचोर्द्धं चतुर्गुणमभिवर्द्धयन्तः मकाकुडवप्रस्थाढकद्रोणा इत्यभिनिर्द्दिष्यन्ते इत्युक्ते २५ई मानभागे च । अर्द्धर्चादिपाठात् क्लीवभावश्चत्वेऽपि अत्र पु० न० लिङ्गता । अस्य परिमाणवाचकत्वात् आढकीमी हिरिक्कादौ प्रथमाया' परिमाणमर्थः आढकपरिमाण परिच्छेद्योमीहिरित्यादि बोधः । आढकं सम्भवति अवहरति पचति वा च ठञ् वा । आढकीनः आढकिकः आढकमितधान्यस्थापने तदवहारके च पात्रे तत्पाचके कटाहादौ त्रि० ठञि स्त्रियां ङीप् इति भेदः ।

**आढकजम्बु** पु० आढकमिता जाम्बूयेन देशे । स्मूजम्बु कुमदेशे तत्र भवः प्रहात्प्राचाम् ठञ् अस्यापवादकः । आढकजम्बुकः । तत्र भवे त्रि० ।

**आढकी** स्त्री आढौकते अच् पृषो० गौ० ङीष् । (अरहर) इति ख्याते शमीधान्यभेदे । "आढकी तुवरी रूक्षा मधुरा शीतला लघुः ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्" भावप्र० फले अस्य पुंस्त्वमपि "आढकांश्च मसूरांश्च कोद्रवान् वरकं त्यजेत्" काशी०ख० वैद्यदेशे वर्जने ।

**आढ्य** त्रि० आ+ध्यै—क पृषो० । १युक्ते, २विशिष्टे ३सम्पन्ने ४धनिनि च । युक्ते धनाढ्य पुष्पाढ्य विनयाढ्य । सम्पन्न' सम्प्रयुक्त "आढ्यास्तथाऽव्यसनिनः स्वनुरक्ताश्च सर्वदा" भा०स०प० ५अ० । "आढ्योऽन्यति इष्टोऽधर्मअतिक्रामति धर्ममतिक्रामन् पापं करोतीति नीलकण्ठधृता श्रुतिः "वेतुःपञ्चभिराढ्यानाम्" श्रुति "आढ्यादिव प्रापणिकादजस्रम्" माघः ।

**आढ्यकुलीन** पुंस्त्री आढ्यकुले भवः ख । आढ्यकुलभवे ।

**आढ्यङ्करण** न० अनाढ्यमाढ्यं करोत्यनेन आढ्य+क-करणे ख्युन् मुम् उप०स० । अभूताढ्यस्य आढ्यताकरणे ।

**आढ्यचर** त्रि० भूतपूर्वः आढ्यः चरट् । भूतपूर्वाढ्ये स्त्रियां ङीप् ।

**आढ्यतम** त्रि० अतिशयेन आढ्यः तमप् । अतिशयाढ्ये ।

**आढ्यपदि** अव्य० आढ्यं पदं प्रहरणं यत्र द्विदण्ड्या० इच् इजन्तत्वादव्ययत्वम् । आढ्यपदप्रहरणयुक्ते युद्धे ।

**आढ्यम्भवन** न० अनाढ्य आढ्यो भवत्यनेन आढ्य+भू-करणे ख्युन् मुम् उप०स० । अनाढ्यस्य आढ्यभवनसाधने ।

**आढ्यम्भविष्णु** त्रि० अनाढ्य आढ्यो भवति आढ्य+भू-खिष्णुच् मुम् उप०स० । अभूतपूर्वाढ्ये आढ्यताम् प्राप्ते "आढ्यम्भविष्णुरभवत् कुमारः" भट्टि ।

**आढ्यम्भावुक** त्रि० अनाढ्य आढ्योभवति आढ्य+भू-खुकञ् मुम् उप०स० । अनाढ्ये आढ्यतया भवे ।

**आढ्यवात** पु० आढ्योवातोयत्र । "कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते । तदा सक्थ्यस्थिगैस्तब्धौ तम्भवत्याशु रौद्रैः निद्रया पाहिलौ तस्मौ शीतावाममवेतनौ । गुरुकावस्थिरावूरू न स्वाविव च मन्यते । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" सुश्रुतोक्तलक्षणे ऊरुस्तम्भरोगे ।

**आणक** त्रि० अणक एव स्वार्थे अण् । १अधमे कुत्सिते कुत्सितः । "आणक सुरतं नाम दम्पत्योः पापर्ष्यस्मयोः" इत्युक्तलक्षणे २सुरतभेदे न० ।

**आणव** न० अणोर्भावः युवादि० वा अण् । अणुत्वे ।

**आणवीन** त्रि० अणुधान्यानां सर्षपादीनां भवनं क्षेत्रम् वा खञ् । (सरसाकाङ्गा) क्षेत्रभेदे यत्र सर्षपाद्यणुधान्यान्युत्पद्यन्ते तस्मिन् । पक्षे यत् अणव्यमप्यत्र ।

**आणि** पुंस्त्री०अण-इण् स्त्रियां वा ङीप् । रथचक्रायस्से १कीलके, २कोटौ ३सीम्नि च । "मयोभुवा सरया यातमर्वाक्त्स निधिं धुरमाणि न नाभिम्" ऋ० ४, ४३,८ । "आणिं न रथ्यममृताधितस्थुः" ऋ० १,३५,६, सुश्रुतोक्ते मर्मस्थानभेदे, अत ऊर्ध्वं मध्येकपोलमर्मस्थान व्याख्यास्याम" इत्युपक्रम्य । "जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम तत्रयोफाभिवृद्धिः सक्थिस्तब्धता च" उक्तम् ।

**आणीवेय** पुस्त्री० अणिवस्त्र्यस्य वा दीर्घ अणीव ऋषिभेद तस्यापत्यम् शुभ्रा० ढक् । अणीवर्षेरपत्ये ।

**आण्ड** त्रि० अण्डे भव अण् । १अण्डसम्भवे पक्षिप्रभृतौ स्त्रियां ङीप् वेदे तु क्वचित् टाप् । "आण्डेव भित्त्वा शकुनस्य गर्भम्" ऋ० १,६८,७, २अण्डजाते हिरण्यगर्भे पु० "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्तेस्तस्याण्डजातत्वात् तथात्वम् । "विराड्भवत्यामाण्डो स्वराट् च' शत०ब्रा० । अण्डमेव स्वार्थे अण् । ३मुष्कदेशे स्वार्थिकप्रत्ययस्य क्वचित् लिङ्गवचनातिक्रमस्येष्टत्वात् पु० "यस्य कृष्णाण्डो भवतः रेतः सिञ्चति" शत०ब्रा० । "आनन्दनन्दावाण्डौ मे" यजु० २०,६, "आण्डौ वृषणौ" वेददी० । "अण्ड इवयोऽस्त्यस्य अण् । ४वृषणयुक्ते "आण्डौ वै रेतःसिचौ" शत०ब्रा० । अण्डेन निर्वृत्त अण् । अण्डनिर्वृत्ते ५प्रपञ्चरूपे द्युलोके भूलोके च । "तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्

स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा । ताभ्यां स श-कलाभ्याञ्च दिवं भूमिञ्च निर्ममे इति" मनुनाऽण्डशक-लाभ्यां तयोरुत्पत्तिप्रतिपादनात्तयोस्तथात्वम् ।

**आण्डज** पु० अण्डात् जायते जन–ड स्वार्थे अण् । १अण्डजे पक्षिसर्पादौ । २तच्छरीरे न० "तेषां खल्वेषां भूतानां त्रीण्येव वीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्" इति छा०उ० । "तेषां जीवाविष्टानां खल्वेषां पक्ष्यादीनां भूतानामेषामिति प्रत्यक्षनिर्द्देशात् तेज प्रभृतीनाम् । तथासेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि वीजानि कारणानि भवन्ति । कानि तानीत्युच्यन्ते । अण्डजमण्डाज्जातम् अण्डजमेवाण्डज पक्ष्यादि । पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते । तेन पक्षी पक्षिणां वीजम् सर्पः सर्पाणां वीजम् । तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां वीजमित्यर्थः ॥ नन्वण्डाज्जातमण्डजमुच्यतेऽतोऽण्डमेव वीजमिति युक्तं कथमाण्डजं वीजमुच्यते । सत्यमेवं स्यादादि त्वदिच्छातन्त्रा श्रुतिः स्यात्स्वतन्त्रा श्रुतिर्यत आहाण्डजाद्येव वीज नाण्डादीति । दृश्यते चाण्डजाद्यभावे तज्जातीयसन्तत्यभावो नाण्डाद्यभावे । अतोऽण्डजादीन्येव वीजान्यण्डजादीनाम्" भा० ।

**आण्डायन** त्रि० अण्डेन निर्वृत्तः पक्षा० फक् । अण्डनिर्वृत्ते त्रि० । [ण्डीर इत्येव साधुरित्यन्ये ।

**आण्डीर** पु० आण्डमस्त्यस्य ईरच् । मुष्कयुक्ते वृषभे च

**आण्डीवत** पु० राजभेदे । तेन निर्वृत्तम् कृशा० फिञ् । आण्डीवतायनि तन्निर्वृत्ते त्रि० ।

**आत्** अव्य० अत–क्विप् । १अनन्तरमित्यर्थे । "आदस्य वातो अनुवाति शोचिः" ऋ० १,१४८,४ २अपिचेत्यर्थे "विश्वकर्मा विमना आद्विहायाधाता विधाता परमोत सन्दृक्" यजु० १७,२६, "आत् अपि च" वेददी० आ+अत्कर्म तकार । ३आकारस्वरूपे वर्णे पु० "आतलोपशर्णे च" पाणिनिसूत्रम् ।

**आत** त्रि० आ+अत् अच् । सततगते प्रसृते । "पयोभिर्ममाना उदातैः" यजु०२९,५, "आतैः प्रसृतैः" वेददी०

**आतङ्क** त्रि०आ+तङ्क्–क । १सततगन्तरि २सर्पभेदे पु० "वासुकिराजमुख्या भूतंकः प्रातरातको । कौरव्यकुलजास्तेते प्रथाता ..." भा०आ०५७ ष० ।

**आतङ्क** पु० आ+तकि–घञ् । १रोगे, "दीर्घतीमामयमसं प्राप्तं कामयापि वा । हेरा पथि निरातङ्कं तमा या अच्छात्रा गुचि" या० २सन्तापे, "प्रश्नेन च विजानीयात् देशं कालं जातिसात्म्यमातङ्कं सत्तामसि वेदनासमुच्छ्रायम्" इत्यादि सुश्रुतः । ३सन्देहे, ४मुरजशब्दे, ५भये च । "पुरुषायुषजीविन्यो निरातङ्का निरीतयः" रघुः ।

**आतञ्चन** न० आ+तञ्च–ल्युट् । १वेगे, २मापणे, ३आप्यायने दुग्धादौ दध्यादिभावापादनाय ४अम्लद्रव्यप्रक्षेपे,(दम्बल देओया)५निक्षेपे, ६उपद्रवे, ७द्रवद्रव्यप्रक्षेपेण कठिनद्रव्यस्य चूर्णने गलितस्वर्णादेर्द्रव्यान्तरयोगेण दलारणे च । करणे ल्युट् । ८दधिसाधन द्रव्ये (दम्बल) । गोभ्योऽपि द्रव्यभिधाः दुग्धादय उत्पद्यन्ते यथोक्तं श्रुतौ "प्रतिधुक् तस्यै शृत तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीत तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्" शत०ब्रा० । तत्र प्रतिधुक् सद्योदुग्धम् १शृतं पक्वं पयः२ । शर पक्वक्षीरस्योपरि सारभूतम्३ । घनीभूत वस्तु दधि४ । दधिभवं सारभूतमुदकं मस्तु ५, । नवनीतघृते ६,७, प्रसिद्धे आतञ्चनं दधिभावकारणम् ८ । आमिक्षा तप्ते पयसि दध्यानयने सति यत् घनीभूतं वस्तु जायते सामिक्षा९ । द्रवात्मकं वाजिनम् १०" भा० 'यत्पूर्व्वेद्युर्दुग्धं स्यात्तदातञ्चनं तत्कुर्वीत कात्या० । [स संसदा" रघु ।

**आतत** त्रि० आ+तन–क्त । विस्तृते "आततज्यमकरोत्

**आततायिन्** त्रि० आततेन विस्तीर्णेन शस्त्रादिना अयितु शीलमस्य अय–णिनि । यथोच्यते । विषयभेदेन आततायिवधे दोषादोषौ" मा०वि० उक्तौ यथा वृह० "नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित् । विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्" । किल्बिषाभाव प्रायश्चित्तनिषेधार्थं अपराधाभावो दण्डनिषेधार्थं । यतः "सर्वत आत्मानं गोपायीतेति" श्रुतिमूलमिदम् अतः पलायनादिनापि रक्षणाभावे इदं बोद्धव्यम् । कात्यायन । "आततायिनमायान्तमपि वेदान्तगं रणे । जिघांसन्त जिघांसीयान्न तेन ब्रह्महा भवेत्" जिघांसी घन् इयाच्छेदित्यर्थः । देवल । "उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् । निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्" । भ्रूणोऽत्र ब्राह्मणविशेषः । दोषदर्शनं नियमार्थम् । मनुविष्णू । "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन्" एवकारोनियमार्थः । तथा "नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति" । यत्राह्नन्तमन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषोहन्ति हन्यते नेति पूर्व्वमर्नापिधेरपवादः । आततायिम-

नाह वशिष्ठः । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः" । विष्णुकात्यायनौ । "उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्तारं पिशुनश्चैव राजसु । भार्य्यातिक्रमिणश्चैव विद्यात् सप्तातताथिनः । यशोवित्तहरानन्यानाहुर्धर्मार्थहारकान्" । विशेषमाह कात्यायनः । "अनाचारितपूर्ब्बोयस्त्वपराधे प्रवर्त्तते । प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता" । अनाचारितोऽनपकृतः । तेन पूर्ब्बकृतापकारस्य मारणोद्यतस्य नाततायिता । तेन प्रत्युपकारवधे दोषएव । ननु आततायिनोरपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः । "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात् यदा हन्यात् प्रायश्चित्तं कुर्य्यात्" । तथा भविष्ये । "घातकानपि गोविप्रान् हन्याद्वै कदाचनेति" । अतः पूर्ब्बवचनविरोध । सत्यम् । अत्र व्यवस्थामाह कात्यायनः । "आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः । वधस्तत्र तु नैव स्यात् पापे हीने वधोभृगो" । जन्मपदेन जातिः कुलञ्चोच्यते । तेन हन्तुरपेक्षया तपोविद्याजातिकुलैरुत्कृष्टोनाततायी वध्यस्तदन्योवध्यएव । अतएव भगवद्गीतायामाह । "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति । एतान् भीष्मादीन् अत्यन्तोत्कृष्टगुणानित्यर्थः । एवम्भूताततायिनश्चाहनने फलमप्याह वृहस्पतिः । "आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् । यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्" । यद्यपि "गुरुम्बा बहुश्रुत हन्यादिति" । श्रूयते । तथापि गुरोः सकाशात् कुलविद्यातपोभिः शिष्यस्याप्युत्कर्षसम्भवः । एव बहुश्रुतादावपि । एवमधमवर्णस्योत्तमवर्णो न वध्यः । पूर्ब्बकृतापकारविषयं वा सुमन्तुवचनम् । गौराततायपि न वध्यः । "नखिनां श्टङ्गिणाञ्चैव दंष्ट्रिणाञ्चाततायिनाम् । हस्त्यश्वानान्तथान्येषां वधे हन्ता न दोषभागिति" कात्यायनवचनं गोव्यतिरिक्तशृङ्गिविषयम् । विशेषमाह कात्यायनः । "उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते । निवृत्तस्तु यदारम्भाद्ग्रहणं न वधः स्मृत" इत्यन्तेन । नतत्यश्रूषणव्दार्थमाह देवलः "अनूचानो गुणोपेतो यश्च स्वाध्यायनिश्चितः । भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः" । मिताक्षरायामपि "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वा प्रकाशं वा मन्युस्तन्मन्युमृच्छति" । तथा "आततायिनमायान्तमपि वेदान्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्" इत्याद्यर्थशास्त्रम् । "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इत्यादि धर्म्मशास्त्रमनयोर्विरोधे धर्म्मशास्त्रं बलवदिति युक्तम् । अनयोरेकविषयत्वासम्भवेन विरोधाभावाच्च बलावलचिन्ता अवतरति । तथा हि "यश्च द्विजातिभिर्ग्राह्यन्धर्म्मौयत्रोपरुध्यते" इत्युपक्रम्य "आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च धर्म्मेण घ्नन् न दुष्यति" इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायाञ्च आततायिनमकूटशस्त्रेण घ्नन् न दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते । "गुरुं वा बालवृद्धौ वेत्यादि" । गुर्व्वादीनप्यनातव्यानप्याततायिनो हन्यात् किमुतान्यानिति । वाशब्दश्रवणादपि वेदान्तगमित्यत्राप्यपिशब्दस्य श्रवणाच्च गुर्व्वादीनां वध्यत्वप्रतीतिः "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधादिति" सुमन्तुवचनात् । "आचार्य्यं च प्रवक्तारम् पितरं मातरं गुरुम् । न हिंस्याद्ब्राह्मणान् गाश्च सर्व्वाश्चैव तपस्विनः" इति मनुवचनाच्च । आचार्य्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवादान्यथा हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । "नाततायिवधे दोषो हन्तुर्भवति कश्चन" इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः" तथा "उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा । आथर्व्वणेन हन्ता च पिशुनश्चापि राजनि । भार्य्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान् विजानीयात् सर्व्वानेवाततायिनः" इति सामान्येनाततायिनो दर्शिताः । अतश्च ब्राह्मणादय आततायिन आत्मादित्राणाय हिंसानभिसन्धिना निवार्य्यमाणा प्रमादाद्यदि विपद्येरंस्तत्र लघु प्रायश्चित्तं राजदण्डाभावश्चेति" । ब्राह्मणाद्याततायिवधे दोष उक्तः । अतएव भीष्मादीनामाततायिनामपि हननेन "अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे" इति भारते युधिष्ठिरादीनां महापातकित्वमुक्तम् ।

**आतनि** त्रि॰ आ–तन–इन् । आतानके विस्तारके । "त्वं विधिमुरसि यज्ञमातनिः" ऋ॰ २, १, १० ।

**आतप्** त्रि॰ आतपति आ+तप–क्विप् । तापके "परिमाणक्षमावयोश्चावरस्य आतपः" ऋ॰५,७२,५ । "आतपः आतापिनः" भा॰ ।

**आतप** पु॰ आ–तप–अ । १उद्द्योते, २निविडकिरणे रौद्रे च । "आतपः कटुकोरूक्षः स्वेदमूर्च्छाभ्रमा-

मृदा परिपूर्य मृद्दुपात्रं शुचौ देशे तीरे निधाय गायत्र्या प्रोक्ष्य तच्छिरसा त्रेधा विभज्यैकेन मूर्ध्नं स्नानाभेरपरेण पादस्तादङ्गमनुलिप्याप्स्वाप्लुत्य क्षालयित्वादित्यमिरोक्ष्य त ध्यायन् स्नायादेतन्मलस्नानमाङ्करय तीरे द्विराचम्य तृतीयमंशेणादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभागमंशेन दिक्षु दशसु विनिक्षिप्योत्तरन्नीर्थे क्षिप्त्वा तृतीयङ्गायत्र्याभिमन्त्रितमादित्याय दर्शयित्वा तेन मूर्ध्न आपादात् गायत्र्या प्रणवेन वा सर्वाङ्गमनुलिप्य "सुमित्रियान आप ओषधयः सन्त्विति" सकृदञ्जिरात्मानमभिषिच्य "दुर्मित्रास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः" इति मृत्क्षेपमद्भिः क्षालयेदय वरुणप्रार्थना तर्पणान्तेनोक्तेन विधिना स्नायात् । नास्मिन् प्राक् मध्यतर्पणाद्वस्त्रं निष्पीडयेदुपवासादयो ह्यन्ते तर्यां हत्येष स्नानविधिस्तदेतद् सम्भवेऽद्भिरेव कुर्यात्ग्रीष्मदिनादिषु च न दृष्टे मृदा स्नायात् च शीतोदकेन शीतोष्णोदकेन दृष्टे स्नायान्मन्त्रविधि वर्जयेद्वर्त्विर्वा शुचौ देशे सर्व पश्चात्कुर्यादिति । अथायक्तस्य मन्त्रस्नानं शुचौ देशे शुचिराचान्तः प्राणानायम्य दर्भपाणिः सव्ये पाणावप कृत्वा तिसृभिरापो हिष्ठेत्याभिः प्रत्यं प्रणवपूर्वं दर्भोदकैर्मार्जयेत् । पादयोर्मूर्ध्नि हृदये मूर्ध्नि हृदये पादयोर्हृदये पादयो मूर्ध्नि पादार्धर्चयो मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाय ऋक्षयो हृदये पादयोर्मूर्ध्नि चाय दृशेन मूर्ध्नीति मार्जयित्वा गायत्र्या दशधाभिमन्त्रिता अप प्रणवम पीत्वा द्विराचामेदेतन्मन्त्रस्नानम्"। शाखिभेदेनान्यविधविधानं तत्तत्सूत्रेषु दृश्यम् । तत्र कृत्याद्युक्तद्रव्याणां तत्तत् मन्त्राणां तद्विधानानाञ्चाभिषेचनिकत्वं बोध्यम् कर्मान्ते ५यजमानाभिषेकार्थे मन्त्रे च । ते च मन्त्राः वैदिका पौराणिकाश्च । तत्र मन्त्रास्तु मनुकृततुलादानादिपद्धतौ २०६ पृष्ठादौ दृश्याः । पौराणिकतान्त्रिकतत्तत्कर्म स्वधिकारसिद्ध्यर्थस्याभिषेकस्य साधने ६मन्त्रादौ ७तद्द्रव्यभेदे ८तद्विधाने च तत्र पौराणिकाभिषेकद्रव्यविधानादि "शिवमन्त्राभिषेकं य कुर्यान्निष्यादिकन्यिये" इत्यारभ्य "ब्रह्मरत्नाभिषेक" इत्यन्तेन अग्निपुराणे दर्शितम् । शाक्ताभिषेकद्रव्यविधानानि च तन्त्रे ज्ञेयानि । ९रुद्राभिषेक द्रव्ये १०तद्विधाने च तद्द्रव्यविधानादि च विधानपारिजाते रुद्रकल्पपद्धतौ च दृश्यम् ११ देवाभिषेकादिसाधनद्रव्यादौ

**आभिचारिक** त्रि० अभिचारम् चार अभिचार प्रयोजनमस्य तत्र साधुर्वा ठञ् । अभिचारसाधने उपढौकनीये ( भेटी ) इति जगतीमसिद्धे द्रव्ये ।

**आभीक** न० अभीकेन दृष्टं साम अण् । अभीकर्षिदृष्टे सामभेदे "आभीकमभिनिधनमाभीशवानि चैके कात्या० २५,१४, १५ । एके आचार्या आभीकाद्यान्यपि सामान्यावपन्ति" कर्क० ।

**आभीक्ष्ण्य** न० अभीक्ष्णस्य भावः ष्यञ् । सातत्ये पौनःपुन्ये आभीक्ष्ण्यञ्च अविच्छेदेनैकरूपक्रियोत्पादनम् । "नित्यवीप्सयो" पा० सूत्रे "आभीक्ष्ण्ये वीप्सायाञ्च द्योत्ये" सि०कौ० । "बहुलमाभीक्ष्ण्ये" पा० "आभीक्ष्ण्ये ग्रहणतु" पा० । "जाड्यकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति" पा०ग०सू० ।

**आभीर** पु० समन्तात् भियं राति रा-क । गोपे सङ्कीर्णजातिभेदे स हि अल्पभीतिहेतोरप्यधिकं बिभेतीतितस्य तथात्वम् "आभीरवामनयनाहृतमानसाय दत्तं मनोयदुपते । तदिदं गृहाण" उद्भट स च सङ्कीर्णवर्णः । "ब्राह्मणा दुग्रकन्यायामावृतोनाम जायते । आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः" इति मनूक्त । "श्रीकोङ्कणादधोभागे तापीतः पश्चिमे तटे । आभीरदेशोदेविशि । विन्ध्य शैले व्यवस्थित" इति शक्तिसङ्गम० उक्ते २देशभेदे ३तद्देशवासिनि ४तद्देशराजे च व०प० । "एकादशकलधारि कविकुलमानसहारि । इदमाभीरमनेहि जगणमन्त्यम नुधेहि" इत्युक्तलक्षणे ५मात्रावृत्तभेदे न० ।

**आभीरपल्लि(ल्ली)** स्त्री ६त० वा ङीप् । गोपप्रधाने ग्रामे घोषे (गोयालपाड़ा) ।

**आभीरी** स्त्री आभीरस्य पत्नी आभीरजातिर्वा स्त्री ङीष् । १आभीरभार्य्यायाम् २गोपजातिस्त्रियां महाशूद्राम् ।

**आभील** न० समन्तात् भयं लाति ददाति ला-क । १कष्टे २दुःखे ३भयानके तदस्यास्ति अच् । ४तद्वति त्रि० "आभीलमिव प्राविशन् प्रत्यवश्यन्" माघ । "रात्रौ निशीथे साभीले गतेऽर्द्धसमये नृप" इति भा०स०प०११अ० ।

**आभीशव** अभीशुना दृष्टं साम–अण् । सामभेदे "आभीकमभिनिधनमाभीशवानि चैके" कात्या० २५,१४,१५ । "आभीकाद्यानि सामान्यावपन्ति" कर्क ।

**आभु** त्रि० समन्तात् भवति आ+भू-डु । विभौ व्यापके "तुच्छ्येनाभ्वपिहितं यदासीत्" ऋ०१०।१२९,३ । "आभु व्यापकम्" भा० क्विप् आभूरप्यत्र "आभूभिरिन्द्र श्रयमन्नमाभुव" ऋ०१,५१,९ । [२६पद्धमे ।

**आभुग्न** त्रि० आ+भुज कर्मकर्त्तरि क्त तस्य नः । १आकुञ्चिते

**आभूति** स्त्री आ+भू क्तिन्। व्याप्तौ "आभूतिरेषा भूतिः" ऐ०उ०

**आभेरी** स्त्री रागिणीभेदे हलायुधः।

**आभोग** पु० आ+भुज–आधारे घञ्। परिपूर्णतायां, यस्य यावदपेक्षितं रूपं तत्पूर्णत्वे हि आभोगा-भातेति तस्य तथात्वम्। "अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति" शकु०। "पर्व्वताभोगवर्ष्माण-मतिकायं महाबलम्" भा०व० १७८ अ०। "छदभि-हितो भावो द्रव्यवत् प्रकाशते" इति भाष्योक्तेः आभोग-वत्पर्यन्तत्वस्वरूपेणेत्यर्थः। "यत्नेन कविनाम स्यात् स आभोग इतीरितः" इति सङ्गीतदामोदरोक्ते गानसमाप्तौ (भणिता) प्राप्ते २कविनामस्थापने। आभुज्यतेऽनेन करणे घञ्। ३यत्ने यत्नादिनैव हि भोगः सम्यग् सम्पद्यते इति यत्नस्य तथात्वम्। "सा सुखोऽयं महाभोगोऽधरणिस्योऽपि राजसः" किरा० "महाभोगः अभिनवोत्साह" मल्लि० "यत्नाद् भोगं प्रा०ह०। ४सम्यग्ज्ञानावधारणे "विषया-भोगेषु नैशारद" शान्तिवचन। ५वरुणस्य छत्रे च मेदि०।

**आभोगय** त्रि० आभोगं याति या–क। आपूर्णे "आभोगयं प्रयदिच्छन्त ऐतनापाकाः प्राञ्चो मम केचिदापयः" ऋ० १,११०,२।

**आभोगि** त्रि० आभोगं करोति आभोग+णिच्-इन्। विषया-भोगकारके "जिह्मश्ये चरितवे मघोन्याभोगय इष्टये" ऋ० १,११३,५।

**आभोगिन्** त्रि० आभोगोऽस्त्यस्य इनि। परिपूर्णे स्त्रियां ङीप्।

**आभ्यन्तर** त्रि० अभ्यन्तरे भवः अण्। मध्यवर्त्तिनि "कच्चि-दाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते!" भा०स०प० ५अ०। "वर्णोच्चारणे, प्रयत्नो द्विधा आभ्यन्तरो बाह्यश्च आद्यश्चतुर्धा स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम् विवृतमूष्मणां स्वराणाञ्च ह्रस्वस्यावर्णस्य प्रयोगे संवृतं प्रक्रियादशायान्तु विवृतमेव" सि०कौ०। "एतेषाञ्चाभ्यन्तरत्वं वर्णोत्पत्तेः प्रागभावित्वात् "तथा हि नाभिप्रदेशात् प्रयत्नविशेषप्रेरितः प्राणवायुः ऊर्द्ध्वमाक्रामन् उरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वोत्पत्तिः तत्रोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि वर्णोत्पत्तिस्थानं ताल्वादि यदा सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषत्स्पर्शे ईषत्स्पृष्टता, समीपावस्थाने संवृतता, दूरावस्थाने विवृतता। अतएव इयु-वर्णानां तालव्यत्वाविशेषेऽपि वर्णे उच्चारयितव्ये जिह्वाग्रस्य तालुस्थानेन सम्यक्स्पर्शः, यकारे ईषत्स्पर्शः, शकारे, समीपेऽवस्थानम् इवर्णे तु दूरेऽवस्थानम्" मतृक्ततरला।

**आभ्यवहारिक** त्रि० अभ्यवहाराय हितम् ठक्। भोजनयोग्ये ओदनादौ। [ठक्। कुटुम्बभरणव्यापृते हेम०।

**आभ्यागारिक** त्रि० अभ्यागारे गृहस्थकुटुम्बभरणे व्यापृतः

**आभ्यादायिक** न० आभिमुख्येनादानमभ्यादानं तत्र नियुक्तः ठक्। पितृमातृकुलादिप्राप्ते स्त्रीधनभेदे।

**आभ्यासिक** त्रि० अभ्यासे निकटे भवः ठक्। १निकटस्थिते "बलैराभ्यासिकैर्युक्तः शुशुभे योधरक्षितम्" भा०आ० २७६ अ०। अभ्यासात् पौनःपुन्यात् आगतः ठक्। २अभ्यास-प्राप्ते दृढसंस्कारादौ।

**आभ्युदयिक** न० अभ्युदयः प्रयोजनमस्य ठक्। २वृद्धिनिमित्ते श्राद्धभेदे तत्र छन्दोगानामाभ्युदयिकश्राद्धविधिर्गोभिल-सूत्रछन्दोगपरिशिष्टयोरुक्तः यथा।

गोभिलः। "अथाभ्युदयिके श्राद्धे युग्मानाशयेत्। प्रदक्षिणमुपचारः ऋजवो दर्भाः यवैस्तिलार्थः सम्पन्न-मिति तृप्तिप्रश्नः दधिबदराक्षतमिश्राः पिण्डाः नान्दी-मुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दी-मुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो माता-महेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्तां, न स्वधाञ्च प्रयुञ्जीत" इति। "आभ्युदयिके अभ्युदयनिमि-त्तके अभ्युदय इष्टाम विवाहादि तदर्थं श्राद्धं आभ्युदयिकम्। तच्च भूतभविष्यद्भेदेन द्विविधं तत्र भूतं पुत्रजन्मादि भविष्यद्विवाहादि एतच्च श्राद्धविवेकादौ श्रा-द्धभेदगणने दर्शश्राद्धत्वेन कर्माङ्गत्वेन च यदुभयत्व-मुक्तं तदुभयमेवाभ्युदयिकत्वेनोपपन्नं तेनाभिलापे आ-भ्युदयिकश्राद्धमिति प्रयोज्यम्। तत्र यवैस्तिलार्थद्रव्यमेन पार्वणश्राद्धप्राप्ततिलस्थाने यवविधानादाभ्युदयिकस्यापि पार्व्वणप्रकृतिकत्वं प्रतीयते। अन्यथा तिलार्थत्वपा-दानं व्यर्थं स्यात्। ततश्च पार्वणप्रकृतिकत्वेन पितृपक्षेऽ-युग्मब्राह्मणप्राप्तौ तन्निरासाय पितृपक्षे ब्राह्मणयुग्मस्यो-पदेशः। दैवे युग्मत्वस्य पार्व्वणत्वेन प्राप्तत्वान्न तदर्थोपदेशः "अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्" इति याज्ञ-वल्क्यवचनेन दैवकर्मानन्तरं पितृकर्मकरणे प्राप्तयाप्रो-पचारनिरासाय प्रदक्षिणमुपचारस्तेन दैवपितृकर्म्मकर-णाय दक्षिणावर्त्तेन गन्तव्यम्। द्विगुणभुग्नत्वनिरासाय ऋजवो दर्भा इति ऋजुत्वोपदेशः। तृप्ताः स्थ इत्यनेन तृप्तिप्रश्ने सम्पन्नमिति प्रष्टव्यं योगत्वात् सम्पन्नमिति प्राप्ते वक्ष्यमाणच्छन्दोगपरिशिष्टवचनाच्च सुसम्पन्नमित्यु-

याम् "स्यादाभ्युदयिकं श्राद्धं वृद्धियुक्तेषु कर्मसु । पुंसवन-सीमन्तचौलोपनयनेष्विह । विवाहे चाग्न्याधेयप्रभृतिश्रौत-कर्मणि । इदं श्राद्धं प्रकुर्वीत द्विजा वृद्धिनिमित्तकम् । अन्यैः गोकुमसवारसरस्यादिपूच्यते । चाप्याद्युद्याप-नादौ तु कुर्युः पूर्त्तनिमित्तकम्" वोपदेवश्राद्धादर्शौ "सोम-व्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञ-तनयोत्पत्तिप्रतिष्ठासु च । पुष्कत्यायसथमेषगमसुताद्यासा-दनोकान्नमन्त्रोच्चारक्षितिपाभिषेकदयितादर्शौ च नान्दी-मुखम्" श्राद्धकौमुद्यां निर्णयामृते च माघत्र "असमासे च सोमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने । देववृक्षजलादीनां प्रतिष्ठायां विशेषत । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम् । तत्र गर्भाधाने आभ्युदयिकं छन्दोगेतरपरं यथोक्तं शातातपे छन्दो॰प॰ । वृषोत्सर्गे वृद्धिश्राद्धं काम्य विषयम् । अघौचान्तद्वितीयदिनादिविहिते न वृद्धिश्राद्धमिति भेदः । "अष्टकादुयानि कर्माणि क्रियेरन् कर्मकारिभि । प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च । आधाने होमयज्ञे च वैश्वदेवे तथैव च । बलिकर्मणि दर्शे च पौर्ण-मासे तथैव च । नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः । एकमेव भवेत् श्राद्धमेतेषु न पृथक् पृथक् । नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजात-कर्म्म प्रोषितागतकर्म्मसु । विवाहादि कर्म्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते । विवाहादावेकमेवात्र कुर्यात् श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् । प्रधानतः क्रियमाणेषु मातृभ्यः पूजनं सकृत् । सकृदेव भवेत् श्राद्ध-मादौ न पृथगादिषु । यत्र यत्र भवेत् श्राद्धं तत्र तत्रैव मातरः" । इदं चावश्यकम् । "वृद्धौ न तर्पिताये वै पितरो गृहमेधिभिः । तद्धीनमफलं ज्ञेयमासुरो विधिरेव च" इति शातातपोक्तेः । "अष्टकामासाभ्युदयातीर्थ-यात्रोपपत्तयः । भिन्नकामविवेकोऽयं मासिकामावृष्णुत्र-कृत इति देवी॰पु॰ उक्तेश्च मुच आवश्यक इति श्रा॰त॰ रघु॰ । अत्र श्राद्धत्रयमाह शाता॰ । "मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ततो मातामहानाञ्च वृद्धौ श्राद्ध-त्रयं स्मृतम्" तत्कालमाह पृथ्वीचन्द्रोदये गार्ग्यः "मातृ-श्राद्धं तु पूर्वेद्युः कर्म्माहनि तु पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्" । अशक्तौ स एव "पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकमिति" वृद्धमनुरपि "अमा-

भेऽभिन्नकालानां नान्दीश्राद्धत्रयं बुधः पूर्वेद्युर्वै प्रकु-र्व्वीत पूर्वाह्णे मातृपूर्वकम्" अत्र "सङ्कल्प पूर्वेद्युस्तद-हरन्येष्विति" गृह्यपरिशिष्टव्यवस्था ज्ञेया । कर्म्मदिवस एवेति गौडाचारः । तच्च प्रातरेव । "पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति" निर्ण॰ सि॰ शातातपोक्तेः । अत्र प्रात शब्द॰ शार्ङ्गरहरपर "सङ्गवोऽप्यर्धसंयुक्त प्रातरित्यभिधीत इति" गार्ग्योक्तेरिति पृथ्वीचन्द्रोदय । "आवर्त्तनसमीपे वेया, इक्तेः मध्याह्नावधिरिति" गौडा । इदं च पुत्रजन्मातिरिक्तविषयम् तदाहात्रिः "पूर्वाह्णे वैश्ववद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीतश्राद्धं तात्कालिकं बुध इति" एतदनियतनिमित्तपरम् "नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् । तेषामनियतत्वे तु तदानन्तर्यमिष्यत" इति लोगाक्षिस्मृते॰ । आमामाञ्च नान्दीश्राद्धं त्वपराह्णे एव "आमश्राद्धं तु पूर्वाह्णे विद्वान्नेन तु मध्यतः । पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथाम्निकमिति" निर्णयामृते गालवोक्तेः "नान्दीमुखा-दयः प्रातराग्निकं त्वपराह्णत" इति विष्णूक्तेश्च । इदं च मातृपितृमातामहादिक्रमेण छन्दोगेतर-सपर्देयत्वं कार्य्यम् तत्र मातामहादयस्तु सपत्नीका॰ "मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानामिति" पृथ्वीचन्द्रोदये गद्यरूपेण गारुडवाक्यात् । हेमाद्रौ मनुः "नान्दीमुखे सत्यवसू संकीर्त्यौ वैश्वदेविके" । वृद्धपराशरः "नान्दीमुखेभ्यो देवेभ्य प्रदक्षिणकुशासनम् । पितृभ्यश्च-श्रुमुखेभ्यश्च प्रदक्षिणमिति स्मृतिः" । श्राद्धे माषादान-निषेधेऽपि वृद्धौ माषाविशेषदानं विहितम् । "माषाश्चः शतपत्राया मल्लिकाकुब्जयोरपि । केतक्याः पाठलाया वा देया माला न कोविदा" कू॰पु॰ उक्तेः । "कुशस्थाने च दूर्वाःस्युर्मङ्गलस्याभिवृद्धय" इति हेमा॰ ब्रह्मा॰ पु॰ "ऋजवोदर्भा इति प्रागुक्तं वाक्यं तु छन्दोगविषयम् । अत्राधिकारी निरूप्यते । "जातस्य जातकर्माणि क्रिया-काण्डमशेषतः । पिता पुत्रस्य कुर्व्वीत श्राद्धं चाभ्युदया-त्मकम्" विष्णु॰पु॰ । "स्वपितृभ्य पिता दद्यात् सुतसं-स्कारकर्मसु । पिण्डानोद्वहनात् तेषां तदभावेऽपि तत्-क्रमात्" छन्दोग॰ । "जीवत्पितृकस्याप्यत्राधिकारः । अनग्निकोऽपि कुर्व्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात् तानेवोद्दिश्य तर्पयेदिति" हारीतोक्तेः "उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवत॰ पितुः । मैत्रायणपरिशिष्टम् "जीवतः जीवस्य

**आमगन्धि** त्रि० आमस्यापक्वस्य गन्धइव गन्धो यस्य इत् समा० । अपक्वमांसादितुल्यगन्धाढ्ये । क्लीबमित्यन्ये ।

**आमज्वर** पु० आमोऽपक्वः ज्वरः । अपक्वज्वरे नवज्वरे "सद्यआमामज्वरं प्राप्य कोऽयमा परिपिप्लवति" माघ० ।

**आमनस्य** न० अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।

**आमन्त** पु० आमात् अजीर्णात् त्रायते तत्फलतैलेन मलनिःसारणात् त्रै–क पृषो० । १एरण्डवृक्षे राजनि० "आमण्ड इति वा पाठः । तत्फलतैलपाने हि अजीर्णमलनिःसारणासम्भवात्" । आ+मन्त्र–अच् । २आमन्त्रणयन्त्रार्थे च ।

**आमन्त्रण** न० आ+मन्त्र–ल्युट् । १अभिनन्दने, २संबोधने, ३कामचारानुज्ञारूपे क्रियाभेदेषु प्रवर्त्तकव्यापारे च । "विधिनिमन्त्रणामन्त्रणेत्यादि" पा० । अवश्यकर्त्तव्ये नियोगे निमन्त्रणं यथा श्राद्धादिभोजने । यस्याकरणे प्रत्यवायोनास्ति तादृशव्यापारे नियोजनमामन्त्रणम् यथा स्वलविषये शयनायामन्त्रणम् । नवपतिकामवेशपूर्वं दिवसे सायं विलसतो संबोधनरूपे ४व्यापारे च युच् आमन्त्रणाप्यत्र स्त्री

**आमन्त्रित** त्रि० आ+मन्त्र–क्त । १अनावश्यके कर्मणि नियोजिते २व्याकरणपरिभाषितायां सम्बोधनार्थकप्रथमाविभक्तौ न० "सामन्त्रितम्" पा० "सम्बोधने या प्रथमा सामन्त्रितसंज्ञा स्यात्" सि०कौ । "आमन्त्रितं पूर्वमविद्यमानवत्" "आमन्त्रिते समानाधिकरणे सामान्यवचनम्" पा० । ३ निमन्त्रिते त्रि० "मातरामन्त्रितान् विप्रान्" छन्दोग० ।

**आमन्त्र्य** अव्य० आ+मन्त्र–ल्यप् । १सम्बोध्येत्यर्थे । "आद्यमामन्त्र्य पूर्ववत्" छन्दोग० आ+मन्त्र–कर्मणि यत् । २संबोधनीये आवश्यककार्ये ३नियोज्ये च त्रि० ।

**आमन्द** पु० आमं रोगं द्यति दो–ड बा०मुम् । वासुदेवे ।

**आमन्दा** स्त्री आमन्दमीषन्मन्दं करोति आमन्द+णिच्–अच् । वृक्षभेदे ( नेआरेरखाट ) शब्दच० ।

**आमन्द्र** पु० ईषन्मन्द्रः प्रा०स० । १ईषद्गम्भीरशब्दे "आमन्द्रमन्थध्वनिदत्ततालम्" भट्टि । २तद्युक्ते त्रि० ।

**आमपाक** पु० आमस्य अजीर्णविशेषस्य पाकः । वैद्यकोक्ते शोफरोगाद्युक्ते आमस्य पाकभेदे । तद्विवरणमुक्तं सुश्रुते यथा "स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्ययाद्बहुत्वाद्वा दोषाणां, तदा पाकाभिमुखो भवति । तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय । तत्र मन्दोष्णता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताल्पशोफता चामलक्षणमुद्दिष्टम् । सूचिभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिः, ताभिश्च संसृप्यत इव, छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्ट्यत इव चाङ्गुल्या, दह्यत इव पच्यत इव चाग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति आध्मातवस्तिरिव । व्रतश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गम् । वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीडिते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीडिते मुहुर्मुहुस्तोदः कण्डूरुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् । कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति यत्र हि त्वक्सवर्णता शीतशोफता स्थैर्य्यमल्परुजताश्मवद्घनता न तत्र मोहमुपेयादिति । भवन्ति चात्र । आमं विपच्यमानञ्च सम्यक् पक्वञ्च यो भिषक् । जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः । वातादृते नास्ति रुजा, न पाकः पित्तादृते, नास्ति कफाच्च पूयः, । तस्मात्समस्ताः परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः" ।

**आमपात्र** न० कर्म० । अपक्वे पात्रे (काँचा) मृन्मयपात्रे "विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि" मनुः ।

**आमय** पु० आमं रोगं यात्यनेन या–करणे क पृषो० क आ+मीञ् हिंसायां करणे अच् वा । रोगे आमयशब्दे तद्विवरणं दृश्यम् "आमयस्तु रतिरागसम्भव" रघुः "तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्" सुश्रुत । अनामय निरामयः । "शमो हि सिद्धेरयमातो दत्तुर्मन्त्रामय स च" माघ ।

**आमयाविन्** आमयोऽस्त्यस्य विनि दीर्घश्च । रोगयुक्ते । "क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुनखिनि च" "अकृत्ताः सवाविनम्" इति च मनु । [आमयशब्दे विवृतिः ।

**आमरक्त** न० आममपक्वं रक्तम् । रोगभेदे रक्तातिसारे

**आमरणान्तिक** त्रि० आमरणान्तं मरणरूपसीमापर्य्यन्तं व्याप्नोति ठञ् । मरणकालपर्य्यन्तव्यापके "अन्योन्यस्याव्यभिचारो भवेदामरणान्तिक" मनुः ।

**आमर्द** पु० आ+मृद–घञ् । बलात् निष्पीडने । "आमर्दकाले राजेन्द्र ! व्यपसर्पेतत् परम्" भा०आनु०प०।अ०। "अङ्गपीतस्तनमामर्दक्लिष्टकेशरम्" शकु०माघे स्फुट। आमर्दनमप्यत्र न० ।

"वाचःपरिधानानन्तरम् उद्वयमित्यनेन मन्त्रेणोदेतोदीता अवभृथात् वहिर्निष्क्रामिता· सन्तस्त्विषः सदसमानाः आमहीयामित्येवंस्य ऋचाम् अपामेत्येवास्य जपन्तः सर्वे देवयजनं प्रति गच्छन्ति" कर्कः ।

**आमहीयव** न० आमहीयुना ऋषिभेदेन दृष्टं साम अण् । सामभेदे तस्यायनपाद्यता तत् आ०सं०भा० दर्शितम् यथा "ग्रामेगेयगाने सप्त छन्दांसि तेषु नव सामानि गेयानि तत्र प्रथमे छन्दे गायत्रमामहीयवं चेति द्वे सामनी" आमहीयवस्य साम अरण्ये गाने अरण्यगानारम्भे प्रथमं साम ।

**आमाति(ती)सार** पु० आमकृतोऽति(ती)सारः । आमकृते षड्विधे अतिसाररोगभेदे अतिसारशब्दे तस्य विवृतिः । अस्य निदानादि उक्तं सुश्रुते यथा । "अन्नाजीर्णात् प्रद्रुताः क्षोभयन्तः कोष्ठं दोषा धातुसंघान् मलांश्च । नानावर्णान् नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति" आमातिसारे नो कार्यमादौ संग्रहणं न्यासम्" सुश्रु० ।

**आमात्य** पु० अमात्य एव स्वार्थे अण् । अमात्ये ।

**आमानस्य** न० अप्रशस्तं मानसमस्य अमानसः तस्य भावः ष्यञ् । दुःखे शब्दरत्ना० ।

**आमावास्य** त्रि० अमावास्यायां भव· सन्धिवेलादि० अण् । अमावास्याभवे "आमावास्येन हविषेष्टा पौर्णमासेन वा" श०ब्रा० । वा वुन् आमावास्यक इत्यपि तत्रैव त्रि० ।

**आमाशय** पु० आमस्यापक्वान्नस्याशयः । देहमध्यस्थे नाभेरूर्द्ध्वस्थाने भुक्तापक्वान्नादिस्थाने । आशयाश्च देहस्थाः सप्त सुश्रुते दर्शिता यथा "आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयः मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम इति आमाशयस्थानमेव दोषरूपश्लेष्मस्थानं यथोक्तं सुश्रु०। "दोषस्थानान्यत ऊर्द्ध्वं वक्ष्यामः तत्र समासेन वातः श्रोणिगुदसंश्रयः । श्रोणिगुदयोरुपर्य्यधो नाभि पक्वाशयः पक्वामाशयमध्यं पित्तस्य । आमाशयः श्लेष्मणः । तस्य स्थानं निर्णीतं भावप्र० यथा "अग्निवेगवशः प्राणोगुदान्ते प्रतिहन्यते । स ऊर्द्ध्वमागम्य पुनः समुत्क्षिपति पावकम् । पक्वाशयस्य योन्यामूर्द्ध्वमामाशयः स्थितः । नाभिमध्ये शरीरस्य प्राणाः नित्यं प्रतिष्ठिताः" चरके तु "नाभिस्तनोत्तरं जन्तोराहुरामाशयं बुधाः" इति अत्र विशेषमाह "उरो रक्ताशयस्तस्मादधः श्लेष्माशयः स्मृतः। आमाशयस्तु तदधस्तदधोऽग्न्याशयो मतः" इति आमपक्वान्न प्रसङ्गात् आहारपाकप्रकारस्तावदुच्यते भावप्रकाशे सुश्रुतः "यो वायुः प्राणनामासौ स्वयं गच्छति देहधृक् सोऽन्नःप्रवेश्य गच्छत्येतं प्राणश्चायावलम्बते" इति तमाहारमामाशयस्थं क्लेदननामा कफः क्लेदयति क्लेदनात् संहतिं भिनत्ति च उक्तं च सुश्रुते "स आहारःषड्रसोऽप्यामाशये माधुर्यं लभते आमाशयस्थस्य मधुरस्य कफस्य योगात् उक्तं च श्लेष्मस्वरूपं "श्लेष्मा श्वेतो गुरुःस्निग्धः पिच्छिलः शीतलस्तथा । तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् । फेनभावं च लभते जठरानलतेजसा" । अत आह वाग्भटः "संधुक्षितः समानेन पचत्यामाशयस्थितम् । औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलमिति" प्राणवायुना प्रेरितस्ततः किञ्चिच्चलितः पाचकाख्यपित्तोष्मणोपतप्तो भवति उक्तं च "अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेदिति" पाचकपित्तेन पाचकपित्तोष्मणा ततः एवाहारो नाभिमण्डलाधिष्ठानेन समाननाम्ना वायुना प्रेरितो ग्रहणीं प्रति याति उक्तं च ।"ततः समानमरुता ग्रहणीमभिधावति" । ग्रहणीलक्षणमाह "षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । आमपक्वाशयान्तःस्था ग्रहणी साभिधीयते" पित्तधरा पाचकाख्यं पित्तं यदग्न्यधिष्ठानं तद्धारयति तत्र ग्रहण्यामामाशयपक्वाशयमध्यवर्त्तिपाचकाख्यपित्ताधिष्ठानेनाग्निनाहारः पच्यते स कटुश्च भवति तथा च "ग्रहण्यां पच्यते कोष्ठवह्निना जायते कटुरिति" । अयमर्थः आहारो ग्रहण्यां कोष्ठवह्निना ग्रहणीस्थितपाचकपित्तस्थेन च वह्निना पच्यते पच्यमानः स ग्रहणीस्थितस्य कटुरसस्य पित्तयोगात्कटुर्भवति एतदाहारपाके विशेषमाह शरीरं पाञ्चभौतिकं तत्र पञ्चसु भूतेषु पञ्चाग्नयस्तिष्ठन्ति उक्तं च चरके "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यतः" । अत्रोष्मपदेनाग्निरुच्यते आहारोऽपि पाञ्चभौतिकः तत्र पाचकपित्तस्थेनाग्निनोत्तेजितेन शरीरवर्त्तिभूमाग्निः पच्यते पक्वो भूभागः स्वकीयान् गुणानभिवर्द्धयति एवं जलादिभागा अपि पच्यन्ते तथा च सुश्रुते "पञ्चभूतात्मको देह आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेदिति" गुणशब्देनात्र गुणिनः पृथिव्याद्य उच्यन्ते तेन गुणान् शरीरवर्त्तिनः पार्थिवादीन् भागानभिवर्द्धयेदिति एवमग्नेरालेप भक्त आहारो मिष्टः कटुश्च मधुरो भवति अम्लोऽम्लो भवति कटुतिक्तकषायश्च कटुर्भवति उक्तं च "मिष्टः कटुश्च मधुरोऽप्यम्लोऽम्लः पच्यते रसः । कटुतिक्तकषायाणां विपाको जायते कटुरिति" एवं विपक्वस्याहारस्य सारो रसः शेषो ग्रहणीस्थो मल एव

मल।। अस्य जलभागः शिराभिर्वस्तिस्रोतोमूलं भवति उक्तं च “आहारस्य रसः सारःसारहीनोमलद्रवः। शिराभिस्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात्। शेषं किट्टं भवेत्तस्य तत् पुरीषं निगद्यते। समानवायुना नीतं तत्तिष्ठति मलाशये” तत्र मलाशयाच्चेनापानवायुना प्रेरितं मूत्रं मेढ्रभगमार्गेण, पुरीषं गुदमार्गेण, शरीराद्बहिर्याति। उक्तं च “मूत्रमूपस्थमार्गेण, पुरीष गुदमार्गतः। अपानवायुना क्षिप्तं बहिर्याति शरीरतः”। उपस्थः शिश्नोभगश्च। रसस्तु समानवायुना प्रेरितोधमनीमार्गेण शरीरारम्भकस्य रसस्य स्थानं हृदयं गत्वा तेन सह मिश्रितो भवति उक्तं च “रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् वितर्पयेत्। केदारेषु यथा कुल्या पुष्णाति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः”। रसस्तु तत्र तत्र त्रिधा भिद्यते उक्तं च चरके “सूक्ष्मस्थूलमलैर्भेदैस्तत्रतत्र त्रिधा रसः”। अधिकमाहारपाकशब्दे वक्ष्यते।

**आमिक्षा** स्त्री आमिष्यते स्निह्यते मिष–सक्। तप्ते पक्वे दुग्धे दधियोगाज्जाते (छाना) पदार्थे। “तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्योवाजिनम्” श्रुतिः “आमिक्षापदवाच्यत्वात् तस्यैव विनयार्पणम्” भट्टका०।

**आमिक्षीय** न० आमिक्षायै हितं छ। आमिक्षोपकरणे दधि “आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम्” भट्टि। स आमिक्षीयमप्यत्र न०। यत् आमिक्ष्यमप्यत्र न०।

**आमितौजि** पुंस्त्री अमितौजसोऽपत्यम् बाह्वा० इञ् सलोपश्च। अमितौजसोऽपत्ये स्त्रियां ङीप्।

**आमित्रि** पुंस्त्री अमित्रस्यापत्यं इञ्। अमित्रापत्ये तत्र भवादि गहा० छ। आमित्रीय तद्भवादौ त्रि० युवापत्ये तु नडा० फक्। आमित्रायण अमित्रयुवापत्ये आमित्रेरपत्यम् तिका० फिञ्। आमित्रायणिः तदपत्ये। अमित्रस्येदम् अण्। आमित्रः शत्रोःसम्बन्धिनि त्रि० “अग्नयामित्रो व्यथिरादधर्षति” ऋ० ६,२८,२।

**आमिश्र** त्रि० आ+मिश्र–अच्। मिश्रिते संश्लिष्टे। “चेतोजन्माशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्” नैष०। वेदे क्वचित् रस्य लः। आमिश्ल। “स सोम आमिश्लतमः” ऋ० ६,२९,४।

**आमिष्** न० आमिषति सिञ्चति स्नेहम् आ+मिष–क्विप्। मांसे “आवेनयो नवर्द्धतआमिषि:” ऋ० ६,१६,१४ “आमिषि मांसे” भा०।

**आमिष** न० आमिषति स्नेहम् आ+मिष–सेचने क अमटिपच् दीर्घश्च, वा। १मांसे स्नेहातिरेकात्तस्य तथात्वम् २भोग्यवस्तुमात्रे ३उत्कोचे ४सुन्दररूपादौ ५लोभे ६लोभनीये विषये च। तत्रमांसे “उपानयत् पिण्डमिवामिषस्य” रघु० “आमिष कलहं हिंसां-वर्षवृद्धौ विवर्ज्जयेत्” स्मृतिः “भुङ्क्ते यश्च निरामिषं स हि भवेज्जन्मान्तरे पण्डितः” ज्योति०। “जन्मान्तरे पाण्डित्यकामो जन्मतिथावामिषं न भुञ्जीतेति” गदाधर०। “बाधमानं महाबाहु कङ्गणीकामिषं मधु” इत्य मांसास्तु भक्ष्याणि वराहमहिषामिषैः” मनुः “सात्त्विकी जपयज्ञैश्च नैवेद्यैश्च निरामिषैः” दुर्गो०त० पु० मात्स्यादीनामिषं अग्न्याः “तत्रामिषेण कर्त्तव्यम्” इति च मनुः। लोभनीये “रक्षांस्येषपदलाभाय हिमामामिषतां ययौ” “आलम सद्भजुषा सरसामिषेण” आनन्दवृन्दा०। “प्राणान्नेवानुमिच्छन्ति नवामामिषगर्द्धिनः” मनुः। “मत्ता भाक्ता मिषं मर्षं जम्बीरस्य फलेष्वपीति” स्मृतौ निरामिषव्रते आमिषतया वर्ज्जनीये उपसर्गे द जम्बीरफले च।

**आमिषप्रिय** पु० ६त०। १कङ्कपक्षिणि। २मांसामिषप्रिये त्रि०।

**आमिषाशिन्** त्रि० आमिषमश्नाति अश–णिनि ६त०। मांसभक्षके “दिनोपवासी तु निशामिषाशी” हारा० स्त्रियां ङीप्। आमिषभुगादयोऽप्यत्र।

**आमिषी** स्त्री आमिषं तदाकारोऽस्त्यस्य जटायाम् अर्श०अच् गौरा० ङीप्। जटामांस्याम्। तत्र चतुर्थ्याम् भव्या० यत्। आमिष्यः आमिषीसन्निकृष्टदेशादौ त्रि०।

**आमुक्त** त्रि० आ+मुच–क्त। परिहिते “आमुक्तमुक्तालतमस्य वक्षः” माघ।

**आमुक्ति** स्त्री आ–मुच–क्तिन्। १परिधाने, मर्य्यादायाम् वा अव्ययो०। २मुक्तिपर्य्यन्ते अव्य० “आमुक्ति श्रियमन्विच्छेत्” । समासाभावे आ मुक्तेरित्येव।

**आमुख** न० आमुखयति अभिमुखीकरोति दर्शनार्थं परिषदोऽनेन आमुख+णिच्–करणे अच्। नाटकाङ्गभेदे “प्रस्तावभेदोदाहरणानि” सा०द०यथा “नटी विदूषकोवापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि वा। सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधारउच्यते। तस्यानुचरः पारिपार्श्विकः। तस्मात् किञ्चिदूनोनटः”।

तस्य भेदाः पञ्च यथाह तत्रैव "उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा। प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः। तत्र। पदान्यन्यगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते१। यथा मुद्राराक्षसे सूत्र०। "क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्। अभिभवितुमिच्छति बलात्" । अनन्तरं नेपथ्ये आः क एष मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छति। अत्र अन्यार्थवन्त्यपि पदानि हृदिस्थार्थावगत्या अर्थान्तरे संक्रम्य पात्रप्रवेशः। सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा। भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते२। वाक्यं यथा रत्नावल्याम्। "द्वीपादन्यस्मादपि घटयति विधिरभिमतमभिमुखीभूतः" इत्यादि। सूत्रधारेण पठिते नेपथ्ये एवमेतत् कः सन्देहः द्वीपादन्यस्मादपीत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः। वाक्यार्थं यथा वेण्याम्। "निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन। रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये। आः दुरात्मन्! वृथामङ्गलपाठक! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः। ततः सूत्रधारो निष्क्रान्तः भीमसेनस्य प्रवेश। यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ३। यथा कुन्दमालायाम्। नेपथ्ये "इत इतोऽवतरत्वार्य्या" सूत्र० कोऽयं खलु आर्य्याह्वानेन साहायकं मे सम्पादयति विलोक्य कष्टमतिकरुणं वर्त्तते। "लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन। निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम्"। अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयमिति" सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयानएव प्रयोगः प्रयोजित। कालं प्रवृत्तमाश्रित्य सूत्रधृक् यत्र वर्णयेत्। तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्त्तकम् ४। यथा "आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तः। उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः"। ततः प्रविशति यथा निर्दिष्टो रामः। यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ५। यथा शाकुन्तले। सूत्र० नटीम्प्रति "तवास्मि गीतिरागेण हारिणा प्रसभं हृतः। एष

राजेव दुष्मन्तः सारङ्गेणातिरंहसा"। ततो राज्ञः प्रवेशः। योऽप्यन्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि। अत्र आमुखे उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि यथालाभानि। नखकुट्टस्तु "नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा। समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु"। एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत्। तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक्। प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत्। तत्र पूर्वं पूर्वरङ्गं सभापूजा ततः परम्। कथनं कविसंज्ञादेर्नाटकस्याभिधा ततः। रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः। रूपकस्य कवेराख्यां गोत्राद्यपि च कीर्त्तयेत्। ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः। तस्या प्ररोचना वीथी"।

**आमुप** पु० आमे पीडायै उप्यते वप–घञर्थे क। (गेठवाछ) वंशभेदे। [ मेदि० ४,११,९।

**आमुर्** त्रि० आ+मुर्व–क्विप्। हिंसके। "रायोयन्त आमुरः"

**आमुष्मिक** त्रि० अमुष्मिन् परलोके भवः ठक् सप्तम्याः अलुक् टिलोपः। परलोकभवे "कुर्यादामुष्मिकं श्रेयः" मनुः। स्त्रियां ङीप्। "नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्य्यातनाः" सा० द०।

**आमुष्यकुलका** न० अमुष्यकुलस्य भावः मनोज्ञा० वुञ् अलुक्। प्रशस्तकुलत्वे "आमुष्यायणामुष्यपुत्रिकामुष्यकुलिका" इति वार्त्तिकोक्तेः अस्य स्त्रीत्वमपि।

**आमुष्यकुलीन** त्रि० अमुष्यकुले साधु प्रतिज० खञ् तद्गणपाठात् षष्ठ्या अलुक्। अमुष्यकुले साधौ।

**आमुष्यपुत्रिका** स्त्री अमुष्य पुत्रस्य भावः मनोज्ञा० वुञ् अलुक्। अमुष्यपुत्रस्य भावे। आमुष्यकुलकाशब्दे प्रदर्शितवार्त्तिकात् स्त्रीत्वम्।

**आमुष्यायण** न० अमुष्य ख्यातस्यापत्यम् नडा० फक् अलुक्। प्रख्यातवंशोद्भवे "आमुष्यायणोवै तमिति" श्रुतिः।

**आमृष्ट** त्रि० आ+मृश–क्त। १आमर्शिते २मर्दिते च "आमृष्टास्तिलकरुचः स्रजोनिरस्ताः" माघः। आ+मृज–क्त। ३परिमार्जिते ४विशोधिते च। आ+मृष–क्त ५संसृष्टे च

**आ**[नाक] पु० आ+मुच–घञ्। परिधाने। ल्युट्। आमोचनमप्यत्र न०।

**आमोद** पु० आमोदयति आ+मुद–णिच्–अच्। १अतिदूरगे गन्धे "आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणं" रघुः "आमोदकर्मव्यतिहारमीयुः" माघः। उत्तमस्तोषात् २हर्षमिश्रासादिगन्धे च। "मुखामोदं मदिरया कृतानु-

व्याघट्टगिरन्” माघः । आ+मुद–घञ् । १प्रहर्षे ल्युट् । आमोदनमप्यत्र न० ।

**आमोदन** त्रि० आ+मुद–णिच् ल्यु । प्रहर्षजनके सुगन्धिसम्पादने “अनुलिप्तामोदनमोदनं जनाः” नैष० । भावे ल्युट् । १प्रहर्षसम्पादने २सुगन्धसम्पादने च ।

**आमोदित** त्रि० आ+मुद–णिच्–क्त । १प्रहर्षिते २कृतामोदे ३सुरभीकृते च ।

**आमोदिन्** त्रि० आमोदयति सुरभीकरोति आमोद+करोत्यर्थे णिच्–णिनि । मुखवासने १कर्पूरादौ । आमोद+अस्त्यर्थे इनि । २आमोदयुक्ते स्त्रियां ङीप् । “नवकुटजकदम्बामोदिनो गन्धवाहाः” ।

**आमोष** त्रि० आमुष्णाति–आ+मुष–पचाद्यच् । सम्यगपहारके चौरादौ । आ+मुष–भावे घञ् । २अपहरणे । “यथा विश्वदामोषमीयात्” शत० ब्रा० ।

**आम्नात** त्रि० आ+म्ना–क्त । १सम्यगभ्यस्ते २सम्यगधीते वेदादौ । ३कथिते च “समौ हि शिष्टैराम्नातौ” माघ० भावे क्त । ४सम्यगभ्यासे न० ।

**आम्नातिन्** त्रि० आम्नातमनेन इष्टा० इनि । १कृतवेदाद्यभ्यासे २कृतवेदाध्ययने च स्त्रियां ङीप् । “आम्नातिभिर्नीतिषु बुद्धिमद्भिः” भट्टिः ।

**आम्नान** न० आ+म्ना–भावे ल्युट् । १वेदादिपाठे २तदभ्यासे च “विष्णुर्वामावास्यायां शैलाम्नानात्” कात्या० श्रौ० १,२,२५ ।

**आम्नाय** पु० आ+म्ना–घञ् । १सम्यगभ्यासे २सम्यक्पाठे च अभ्यासस्य सम्यक्त्वं च नियमधारणपूर्वकत्वं गुरुमुखमन्त्रश्रवणपूर्वकत्वञ्च । कर्म्मणि घञ् । ३वेदे “आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्” जैमि० “आम्नाये स्मृतितन्त्रे च” रघु० टीका० । “आम्नायवचनं सत्यमित्ययं लोकसंग्रहः—आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः” भा० शा० २६१ अ० । ४कुले । अम्बरीषपुत्रविषयादौ ।

**आम्बरीषपुत्रक** पु० अम्बरीषपुत्र+चातुरर्थ्यां राजन्या० वुञ् ।

**आम्बष्ठ** पुंस्त्री० अम्बष्ठस्यापत्यम् शिवा० अण् । अम्बष्ठापत्ये अग्रजे । आम्बष्ठः । स्त्रियाम् चाप् ।

**आम्बिकेय** पु० अम्बिकाया अपत्यं शुभ्रा० ढक् । विचित्रवीर्य्यस्य क्षेत्रे काशिराजस्य मध्यमकन्यायाम् अम्बिकायां व्यासेनोत्पादिते १धृतराष्ट्रे स हि अकाले दिवं गतस्य विचित्रवीर्य्यस्य अम्बिकाम्बालिकयोः पत्न्योर्मध्ये अम्बिकायां ज्येष्ठभार्य्यायां सत्यवत्यानियुक्तेन व्यासेनोत्पादितः तत्कथा यथा “ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः । दीप्यमानेषु दीपेषु शरणं प्रविवेश ह । तस्य कृष्णस्य कपिला जटां दीप्ते च लोचने । बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् । संबभूव तया सार्द्धं मातुः प्रियचिकीर्षया । भयात् काशीसुता तन्तु नाशक्नोदभिवीक्षितुम् । ततो निष्क्रान्तमागत्य माता पुत्रमुवाच ह । अप्यस्यां गुणवान् पुत्रो राजपुत्रो भविष्यति ? । निशम्य तद्वचो मातुर्व्यासः सत्यवतीसुतः । प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः । नागायुतसमप्राणो विद्वान् राजर्षिसत्तमः । महाभागो महावीर्य्यो महाबुद्धिर्भविष्यति । तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः । किन्तु मातुः स वैगुण्यादन्ध एव भविष्यति” इत्युपक्रम्य पाण्डुविदुरोत्पत्तिमभिधाय “एते विचित्रवीर्य्यस्य क्षेत्रे द्वैपायनादपि । जज्ञिरे देवगर्भाभाः कुरुवंशविवर्द्धनाः” इत्युक्तम् भा० आ० प० १०६ अ० । अम्बिकायाश्च यथा विचित्रवीर्य्यभार्य्यात्वं तथोक्तं अम्बाशब्दे ३२८ पृष्ठे “आम्बिकेयेन दत्ते राज्ञा दुर्य्योधनेन च” भा० व० प० १२ अ० “परं श्रेयः पाण्डवेया । यथाह भीष्मस्य सुतस्याम्बिकेय” भा० व० प० ५ अ० । अम्बिकायाः पार्व्वत्याः अपत्यम् ढक् । २कार्त्तिकेये । तस्य तदुत्पत्तिकथा अग्निकुमारशब्दे ६५ पृष्ठे दृश्या ।

**आम्भसिक** पु० अम्भसा वर्त्तते ठक् । मत्स्ये त्रि० को० ।

**आम्भि** त्रि० अम्भसो जातादि बाह्वा० इञ् सलोपश्च । अम्भोजातादौ ।

**आम्र** पु० अम–गत्यादिषु रन् दीर्घश्च । १स्वनामख्याते वृक्षे तस्य फलम् अण् तस्य लुक् । २तत्फले च न० । आम्रस्य फलपुष्पादिगुणा उक्ता भा० प्र० । यथा “आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् । असृग्दुष्टिहरं शीतं रुचिकृत् ग्राहि वातलम् । आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तकृत् । तरुणं तु तदत्यम्लं रुक्षं दोषत्रयास्रकृत् । आमाम्रमं त्वचा हीनमातपेऽतीव शोषितम् । अम्लं स्वादु कषायं स्याद्भेदनं कफवातजित् । पक्वन्तु मधुरं वृष्यं स्निग्धं शुक्रबलप्रदम् । गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम् । कषायानुरसं वह्निश्लेष्मशुक्रविवर्द्धनम् । तदेव वृक्षसम्पक्वं गुरु वातहरं परम् । मधुराम्लं परं किञ्चित् भवेत् पित्तप्रकोपणम् । आम्रं कृत्रिमपक्वं यत्तद्भवेत् पित्तनाशनम् । रसस्याम्लस्य हानेस्तु माधुर्य्याच्च विशेषतः । चूषितं तत् परं रुच्यं बलवीर्य्यकरं लघु । शीतवं शीघ्रपाकि स्याद्वातपित्तहरं सरम् । तद्रसोगालितो बल्यो गुरुर्वात

हरः सरः। अक्तवृद्धस्तर्पणोऽतीव बृंहणः कफवर्द्धनः। तस्य पयः गुरु परं रोचनं चिरपाकि च। मधुरं बृंहणं बल्यं शीतलं पातनाशनम् वातपित्तहरं रुच्यं बृंहणं बलवर्द्धनम्। हृद्यं वर्णकरं स्वादु दुग्धाम्रं गुरु शीतलम्। मन्दानलत्वम् विषमज्वरञ्च रक्तामयं बद्धगुदोदरञ्च। आम्रातियोगो नयनामयञ्च करोति तस्मादति तानि नाद्यात्। एतदम्लाम्रविषयं मधुराम्रं परं न तु। मधुरस्य परं नेत्रहितत्वाद्या गुणा यतः। शुण्ठ्यम्बुसनुपानं स्यादाम्राणामतिभक्षणे। जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च। आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशनम्। ईषदम्लञ्च मधुरं तथा हृदयदाहनुत्। आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम्"। पल्लवमत्र नवदलम्। अस्य शाकपाकप्रकारस्तत्रैव "स्विन्ना निष्पीडिताः कामं कोकिलाहारपल्लवाः। घृतसिन्धूत्थसंसिद्धा-स्त्र्या रामठवासिताः। सर्पिषा सखण्डयुक्तास्ते तक्रितास्त्वाम्रपल्लवाः। सद्धार्द्रकसंयुक्तामरीचैः रुचिकारकाः"। अस्य पक्वमुकुलानां पाकप्रकारस्तत्रैव "आम्रस्य चैव नवताम्रदलप्रवालाः खण्डीकृतास्तु लवणमिश्रितपिण्डिताश्च। बाह्लीकधूपनसुधौतदुग्धसिक्ताः सन्दीपयन्ति पवनस्य बलायमेते। मुकुलं सहकारशाखिनः खण्डखण्डीकृतसैन्धवान्वितम्। दधिमन्थमरीचसंस्कृतस्थिरजातामरुचिं छिनत्ति हि। कफपित्तहरौ हृद्यौ मुखवैरस्यनाशनौ। वह्निसन्दीपनौ रुच्यौ चूतजौ पुष्पपल्लवौ। आम्रमामं जलस्विन्नं मर्दितं दृढपाणिना। सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम्। प्रपानकमिदं श्रेष्ठं भीमसेनविनिर्मितम्। सद्योरुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणमिति"। [ शाकभेदे राजनि०।

**आम्रगन्धक** पु० आम्रस्येव गन्धोऽस्य कप्। समष्टिलवृक्षे,

**आम्रगुप्त** पु० गोत्रप्रवर्त्तके ऋषिभेदे। तस्यापत्यम् उदीचां वृते फिञ्। आम्रगुप्तायनिः पु० स्त्री० प्राचान्तु इञ्। तदपत्ये सि०कौ०।

**आम्रपेशी** स्त्री० आम्रस्य पेशीव। शुष्काम्रकोषे (आमसी)

**आम्रमय** त्रि० आम्रस्य विकारः अवयवो वा वृद्धत्वात् मयट्। १आम्रविकारे। २तदवयवे च।

**आम्ररसाकृति** स्त्री आम्ररसस्येवाकृतिः स्वादो यस्याः। पीताख्यरसालाभेदे। तत्पाकप्रकारो यथा भा०प्र० "किञ्चित् कटुलवणसंयुक्तं विमलदधिनाशितम्। स्वर्करं भवेत् शीता पक्वाम्ररससन्निभा। पीता शिखरिणी या सा कथ्यो वर्षमती हि सा। हृद्या मधुरा बल्या वातपित्तहरा मता" अत्र पीताख्यशिखरिण्याः पक्वाम्ररसतुल्यत्वोक्त्या तथात्वम्। [ दायात्मके धने।

**आम्रवण** न० आम्रस्य वनम् नित्यं णत्वम्। आम्रवृक्षवन-

**आम्रात** पु० आम्रमाम्ररसमतति अत–गतौ० अच्। (आमड़ा) १वृक्षे २तत्फले न०। तत्फलस्याम्रतुल्यरसत्वात्तथात्वम्। "आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत् परम्। सुपक्वं मधुरं स्वादु रसपाकं हिमं स्मृतम्। तर्पणं कोमलं स्निग्धं वृष्यं विष्टम्भि बृंहणम्। गुरु बल्यं मरुत्पित्तक्षतदाहक्षयास्रजित्" भा०प्र०।

**आम्रातक** पु० आम्र इवातति आम्रात् किञ्चिन्न्यूनरसफलकत्वात् अत–ण्वुल्। (आमड़ा) १वृक्षे २तत्फले न०। आम्रेण तत्फलरसेन तक्यते प्रकाश्यते आ+तक–कर्मणि घञ्। शुष्काम्ररसनिर्म्मिते (आमट्) द्रव्यभेदे तत्करणप्रकारः भावप्र० उक्तः। यथा "आम्रस्य सहकारस्य पटे विस्तारितो रसः। धर्मशुष्को मुहुर्दत्त आम्रातक इति स्मृतः"।

**आम्रातकेश्वर** पु० आम्रातक इव ईश्वर ईश्वरलिङ्गमत्। शिवस्थानभेदे। "आम्रातकेश्वरे सूक्ष्मा सूक्ष्माख्या परमेश्वरी" देवीपु०।

**आम्रावती** स्त्री आम्र आम्ररसो विद्यतेऽस्यां मतुप् मस्य वः शरा० दीर्घः। नदीभेदे। तस्या आम्रतुल्यरसतोययुक्तत्वात्तथात्वम्।

**आम्रावर्त्त** पु० आम्रद्रव तुल्यरसतया ईषत् वर्त्तते आ+वृत–घञ्। १आम्रातकवृक्षे २तत्फले न०। आम्रेण आम्ररसेन आवर्त्त्यते निष्पाद्यते आ+वृत–णिच्–कर्मणि घञ् (आमट्) ख्याते ३पदार्थे आम्रातकशब्दे तत्करणप्रकार उक्तः "आम्रावर्त्तस्तृषाच्छर्द्दिवातपित्तहरः सरः। रुच्यः सूर्यांशुभिः पाकात् लघुश्च हि कीर्त्तितः" भावप्र०।

**आम्रिमन्** पु० अम्लोरसोऽस्त्यस्य प्रज्ञा० अण् दृढा० गणपाठात् रस्य लः ततो भावे दृढा० इमनिच्। अम्लत्वे रसभेदे वा ष्यञ्। आम्र्यमप्यत्र न०।

**आम्रेडित** त्रि० आ+म्रेड–उन्मादे घञ् आम्रेडेन उन्मत्तेनेवाचर्य्यते आम्रेड+आचारे क्विप् ततः क्त। उन्मत्तेन यथा कथितस्य पुनःपुनः कथनं क्रियते एवं द्विस्त्रिःकथिते "आम्रेडितयोऽन्त्यस्य तु वा" पा०।

**आम्लवेतस** पु० आम्लः अम्लरसयुक्तः वेतस इव। १अम्लवेतसवृक्षे राजनि० स्वार्थे संज्ञायां वा कन्। २तिन्तिडीवृक्षे (तेतुल)।

"आयतिं सर्व्वकार्य्याणां तदात्वं च विचारयेत्" मनुः "भूयसी तव यदायतायति" माघः "नियता लघुता निरायतेः" किरा० । आ+यम–क्तिन् । ४आयामे दैर्घ्ये । "सीमानमत्यायतयोऽत्यजन्त" माघः । ५संयमे "क्षेमक्ष्मामायतिभङ्गः" काद० ६प्रापणे ७उपक्रमे च अत्र क्तिन् नात्वान्न क्तीबिति भेदः । ८कर्म्मणि च "हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते । यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम्" मनुः । "आयतिक्षमं कर्म्मक्षमम्" कुल्लू० ।

**आयतीगव** अव्य० आयन्ति गावोऽत्र तिष्ठद्गुप्र० अव्ययी० नि० । गोनागमनकाले । "आ तिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्" भट्टिः ।

**आयतीसम** अव्य० आयन्ति समा अत्र तिष्ठद्गुप्र० नि० अव्ययी० । वत्सरागमनकाले ।

**आयत्त** त्रि० आ+यत–क्त । अधीने १वशीभूते "दैवायत्तं कुले जन्म मदायत्तं हि पौरुषम्" वेणी० । २कृतप्रयत्ने च ।

**आयत्ति** स्त्री आ+यत–क्तिन् । १स्नेहे, २वशत्वे, ३सामर्थ्ये, ४सीम्नि, ५यवने, ६प्रभावे ७आगतौ च उपाये च "अनायत्त्या च तत्कल्पनम्" शा० भा० ।

**आयथातथ्य** न० अ यथातथं तस्य भावः ष्यञ् वा पूर्व्वपदवृद्धिः । अनौचित्ये यस्य यद्रूपं नोचितं तद्रूपे । उत्तरपदवृद्धौ अयाथातथ्यमप्यत्र न० ।

**आयथापूर्व्य** न० पूर्व्वमनतिक्रम्य यथापूर्व्वं न०त० तस्य भावः ष्यञ् वा पूर्व्वपदवृद्धिः । यथापूर्व्वाननुसारित्वे उत्तरपदवृद्धौ तु अयाथापूर्व्यमप्यत्र न० ।

**आयन** न० अयनमेव स्वार्थे अण् आ+अयनं वा प्रा०स० । १सम्यग्गमने "आयने ते परायणे दूर्व्वा रोहन्तु पुष्पिणी" ऋ० १०,१४२,८ । अयनस्येदम् अण् । ग्रहाणां दक्षिणोत्तरगमनरूपायनस्य २सम्बन्धिनि त्रि० तच्च आयनवलनायनदृक्कर्म्मादि ज्योतिषप्रसिद्धं तत्रायनवलनं यथा सि०शि० "द्युतायनांशोत्थकोटिशिञ्जिनी जिनांशमौर्व्या १३९७ गुणिता विभाजिता । द्युमौर्व्यया स्पष्टकलास्तु कार्मुकम् भवेच्छरात्स्यायनदिक्कमायनम्" । "ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया गुणिता द्युज्यया भक्ता फलस्य चापमायनं वलनं भवति यस्मिन्नयने ग्रहोवर्त्तते तद्दिक् भवति" प्रमिता० । आयनदृक्कर्म्म सि०शि० उक्तं यथा । "आयनं वलनमस्फुटेषुणा संगुणं द्युगुणभाजितं हृतम् । पूर्व्वपूर्णधृतिलिप्तिकाहतव्यक्षभोदयहृदायनाः कलाः । अस्फुटेषुवलनाहतिस्तु वा व्यक्षकृत् फलकला स्युरायनाः । ता ग्रहेऽयनदृगत्वकयोः क्रमादेकभिन्नककुभोर्ऋणं धनम्" । "ग्रहस्य यदायनं वलनं तदस्फुटशरेण संगुण्य तद्द्युज्यया भजेत् । फलमष्टादशशते १८०० संगुण्य यस्मिन् राशौ ग्रहोवर्त्तते तस्य निरक्षोदयासुभिर्विभजेत् । फलमायनकला भवन्ति । अथ वायनवलनकला अस्फुटेन शरेण संगुण्य व्यक्षा विभजेत् । फलमायनकलाः स्वल्पान्तरा भवन्तीत्यनुकल्पः । ग्रहो यस्मिन्नयने वर्त्तते तस्यायनस्य ग्रहशरस्य च यद्येका दिक् तदा ता आयनाः कला ग्रहे ऋणं कार्य्याः । यदि तयोर्भिन्ना दिक् तदा धनं कार्य्याः । एवं कृतायनदृक्कर्म्मको ग्रहो भवति । अत्रोपपत्तिर्गोले सविस्तराभिहिता । अथेहापि किञ्चिदुच्यते । क्रान्तिवृत्ते यद्ग्रहस्थानचिह्नं तद्यदा क्षितिजे लगति न तदा ग्रहः । यतोऽसौ शराग्रे । शराग्रं हि कदम्बाभिमुखम् । यदोत्तरकदम्बः क्षितिजादुपरि भवति तदा तदुन्मुखेन शरेण ग्रहः क्षितिजादुन्नाम्यते । क्षितिजकदम्बयोरन्तरं तदेवोत्तरमायनं वलनम् । यदा क्षितिजादधः कदम्बस्तदा शरेण ग्रहो नाम्यते क्षितिजकदम्बयोरन्तरं तदा दक्षिणं वलनम् । अतो वलनवशेन ग्रहस्योन्नामनं नामनं च । उन्नामितो ग्रह आदावेवोदितः । नामितः पश्चादुदेष्यति । स च कियता कालेनेति तदायनं त्रैराशिकेन । यदि त्रिज्यातुल्ये कर्णे कदम्बक्षितिजयोरन्तरकला वलनसंज्ञा लभ्यन्ते तदा अस्फुटशरतुल्ये किमिति फलं ग्रहादधोऽवलम्बरूपाः कला भवन्ति । ग्रहस्थाने यद्द्युज्यावृत्तं तत्र ता जीवारूपाः । तासां त्रिज्यावृत्तपरिणामायान्योऽनुपातः । यदि द्युज्यावृत्तएतावती ज्या तदा त्रिज्यावृत्ते कियतीत्येवं याः फलकलास्ता एवासवः । फलस्य धनुः स्वल्पत्वाभावोत्पद्यत इति न कृतम् । तैः क्रान्तिवृत्तपरिणामायान्योऽनुपातः । यदि निरक्षोदयासुभी राशिकला अष्टादश शतानि लभ्यन्ते तदैभिरसुभिः किमिति फलं क्रान्तिवृत्तपरिणताः कला भवन्ति । यदोत्तरं किल वलनमुत्तरश्च विक्षेपस्तदा तेन विक्षेपेणोन्नामितो ग्रहो यावत् क्षितिजं नीयते तावत् क्रान्तिवृत्तग्रहस्थानात् पृष्ठतः क्रान्तिवृत्तं क्षितिजे लगति तदेव स्थानं कृतदृक्कर्म्मको ग्रहः । किं बहुना गोले क्रान्तिमण्डले यथास्थानं विक्षेपवृत्तं विन्यस्य तत्र ग्रहं च दत्त्वा चिह्नं कार्य्यम् । अथ ध्रुवाद्ग्रहोपरि नीयमानं हस्ताकारं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र

वर्द्धमायुर्योनेः सधस्थ धेनव' ऋ० २,५,५ । "आयुषोगम्भर" मा०उवट छान्दस "असि सोमास आयवः पवन्ते मद्यं मदम्" ऋ० ९,२३,४ । २आयुषि न० "कालक्रीडति गच्छत्यायुरित्युक्तेः कालगतत्वेन तस्य गामित्वात्तथात्वम् । जीवनस्य कालरूपत्वे तु कालस्य सततगामित्वात्तथात्वं युक्तमेव "अग्ने जरस्व स्वापत्य आयुन्यूर्जा" ऋ०२,३,७ । "वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः" ऋ० ९,१००,१ आयुनि आयुषि" भा० बाहुलकात् भाषायामपि उष् उक्त०। तेन "वायुना जगदायुना" वर्ष्मविवेक । "मा बधिषा जटायुं माम्" भट्टिः । "तटीं विन्ध्यस्याद्रेरमजत जटायोः प्रथमजः" इति अभिनन्दः।

**आयुक्त** त्रि० आ+युज-कर्मणि क्त । १सम्यग्व्यापारिते । "आयुक्तकुशलाभ्याञ्चासेवायाम्" पा० "आयुक्तः व्यापारित" सि०कौ० । "कुशलोऽन्ये प्रयस्याश्चमायुक्तो दूतकर्मणि" भट्टि २ईषद्युक्ते च "आसेवायां किम्? आयुक्ता गौः शकटे ईषद्युक्ता" सि०कौ० । भावे क्त । ३सम्यग्नियोजने न०। आयुक्तमनेन इष्टा०इनि । आयुक्ती सम्यग्नियोजनकर्त्तरि त्रि० स्त्रियां ङीप् ।

**आयुध** न० आयुध्यतेऽनेन आ+युध-करणे घञर्थे क । शस्त्रमात्रे । तस्य भेदाः समासतस्त्रिधा प्रहरणहस्तमुक्तयन्त्रमुक्तभेदात् । तत्र हस्तस्थितैर्यैः प्रह्रियते तानि प्रहरणानि यथा खड्गादीनि । हस्तमुक्तानि चक्रादीनि, यन्त्रमुक्तानि शरादीनि । तेषां सर्वेषां युद्धसाधनत्वादायुधत्वम् । "न मे त्वदन्येन विसोढमायुधम्" रघु० । "ऐमीन्द्रपाणिनिहितायुधलूनपक्षा" माघः । "न सुप्तं न विसन्नाहं न नग्नं न निरायुधम्" मनु ।

**आयुधधर्म्मिणी** स्त्री आयुधस्येव धर्म्मोऽस्त्यस्या इनि ङीप् । जयन्तीवृक्षे शब्दच०। तद्धि रोगनाशने आयुधसमा

**आयुधन्यास** पु० आयुधानां न्यास तत्तन्मन्त्रपाठपूर्व्वकं तत्तदङ्गस्थानमर्पणबुद्ध्या स्थापनम् । श्रीविद्यापूजाङ्गे "एवं कामकलारूपं देवतामयमात्मनः । वपुर्विचिन्त्य विधयोरायुधन्यासमाचरेत्" इत्यादिना ज्ञानार्णवोक्ते न्यासभेदे । तत्प्रकारे श्रीविद्यापूजाप्रकरणे विस्तरतो दृश्या ।

**आयुधागार** न० ६त० । राज्ञां प्रहरणस्थापनार्थे गृहे । "सद्धर्ममायुधागारमिदं तस्य दुरात्मनः" । "आयुधागारमादीप्य" इति च भा०आ०प०१४७,४८ श्लो०। "कोष्ठागारायुधागारदेवतागारभेदकान्" मनु । आयुधागारे नियुक्तः ठक् । आयुधागारिक तत्रनियुक्ते त्रि० । तच्च-लक्षणञ्च मात्स्ये । "स्वामिनाज्ञाततत्त्वज्ञः सततं प्रतिजाग्रत । राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यत"।

**आयुधिक** पु० आयुधेन तद्ग्रहणव्यापारेण जीवति ठञ् । शस्त्राजीवे पक्षे छ आयुधीयोऽप्यत्र । आयुधाजीवादयोऽप्यत्र ।

**आयुधिन्** पु० आयुधमस्त्यस्य इनि । शस्त्रधारके ।

**आयुध्य** न० युद्ध्यति युध-क न०त० ततो भावे ब्राह्मणादिपाठात् ष्यञ् ण लतद्धि । १योधृभिन्नत्वे । आ+युध-ल्यप् । २सम्यग्युद्धं कृत्वेत्यर्थे अव्य० ।

**आयुर्दाय** पु० आयुषोदायः दानम् । बलविशेषस्थितियोगादिभिः ज्योतिषोक्तैः ग्रहाधिभिः आयुषोदाने तद्विवरणं श्रीपतिपद्धतौ यथा

"आयुर्दायादेव होराफलानां कर्त्तुं यत्नाविष्करणं यत्र यतेऽत्र । आयुर्दायः सम्प्रदायागतोऽयं सत्पुरुषाणां प्रीतये कथ्यतेऽत्र । एकोनदीर्घितिसमादिह गच्छतो यद्रूपादिरूपचयसंकलितद्वयं स्यात् । भेदोपचरितजनय समतीविभक्तं तज्जायतेऽत्र गुणकद्वितयं तदाख्यम् । अन्ते भवेत्तां निजदीधितिभ्यः श्रेढीफले ते यदि रश्मियुक्ते । तदर्द्धिते स्वांशुभिरद्धृते ते तद्घातमूलं गुणकः स्फुटः स्यात्" । इति गुणकानयनमतातायं भेदशास्त्रीकायामक्तः । "अत्यार्थे तु किरणा चैकावशभक्ता भवेद्गुण । अधिकार्थे द्विरेकाक्तो दलिता गुणको भवेत्" "वर्गोत्तमे स्वभवने स्वनवांशके च स्वत्र्यंशके च गुणकोद्वितयं निरुक्तः । अध्यर्द्धरूप ३/२ मविमित्रदृष्टे सहृद्गृहे सत्र्यंशकं ४/३ समदृष्टे खलु रूपमेव । तत्र्यंशोनित २/३ रिपुदृष्टेऽथरिभे दल १/२ स्यादेभ्यो गुणो भवति य खलु कश्चिदेक । वेदोदूत समगुणो गुणकैः प्रदिष्टो होरादिवर्ग गुणकस्तु भवेत्तदङ्गम् । एतेऽपि गुणयागदितामस्फुरितपेक्ष्यामन्तरं वास्कानाम् । ७मगांशका ११इद्रमिताश्चमीद्राशौ सहृदे स्वानि मूर्च्छनाया । १९नवाम्बिनो १रूपसदाशरायौ २१कुजे घका १२विश्वसमा हिमांशे । लयो नगांशा अधियान् रायाविते भसंज्ञाश्रय राशिवर्लम् । वर्गोत्तमाजोमात्रा नवविभागस्थिते भस्ते तु द्वितयं २गुणयेत् । एतै रभीष्टादिपूर्वैर्मिन्त्र्याद्दोरितैराशिगुणं पुनःस्तम् । हृत्कादिके वर्गगणे स्वकीये द्विकोगुणस्त्रिघ्नविवर्ज्जितः स । अभीष्टभे मित्रदृष्टे नवांशा निम्नेऽस्य रूपञ्च समस्य नेष्टे । नवांशका यस्य विरोधराशौ गुणाश्रयः स्याद्भिवैरियोगे । पूर्वैस्यपूर्व्वोगुणकाय उक्ता वर्गेषु सम्प्रविष्टगुणसंज्ञाः । गुणयागुणैस्तैस्त्वधिकारसङ्ख्यैरुक्तं गुणं स्यादथ निश्रितैस्ते । स्फुटोर्द्धराश्रयसश्रितोऽयमस्य स्फुटस्यापि

मुनीन्द्रैः” । केशवोऽपि “लग्ने क्षीणबली बली षडधिके वीर्य्ये यदृच्छोदयः” । “सर्व एव खचरा दृढतोदजीवदमगदित हि तदायुः । यद्गृहे खोऽबलहीनः स चेत् षड्गृहोनो भवकाद्विमोच्योऽथ भागीकृतं धनम् । कुवेदर्त्तुभागैः ८६४१ ईतो वेदखाब्धै ५०४ र्विभक्तोदिनाद्यमथवात्ये वमायुः” अहोभ्यः शरामैः २० र्हृतेभ्योऽधिमाषाः यतः क्षैश्च तेभ्योभवेयुस्तदाब्दाः । अयकार्द्धहान्यादिकोऽन्योविधियः सपिण्डोऽत्रवायुर्य्यदेवात्र कार्य्यः” इति । आयुःस्वर्थैतेषु बलादग्रलग्ने विहाय राशीन् कलीकृतोऽत्र शक्ते द्विशत्या २०० फलमाद्यपूर्वं यत्स्यात् विलग्नायुषि तच्च योज्यम् । लग्नार्कयोरर्कशशाङ्कयोश्च लग्नोडुपत्योरपि वीर्य्यसाम्ये । तदायुषोरैक्यदलं भवेद्व्यत् तत् स्त्रोषराद्धैः स्फुटमायुरन्नाम्” इति लग्नायुः । “ये धर्म्मकर्म्मनिरता विजितेन्द्रियाये ये पथ्यभोजाजुषोहितदेवभक्ताः । लोकोत्तरन्दधति ये कुलशीललीला तेषामिदङ्कदितमायुरुदारधीभिः” । अष्टवर्गादपि आयुर्दायज्ञानं भवति तच्चाष्टवर्गशब्दे उक्तप्रायम् । ५२२ पृष्ठे द्रष्टव्यम् नक्षत्रायुःकेन्द्रायुः प्रभृतीनां विस्तरभयादिहानुक्तिराकरे तच्च द्रष्टव्यम् ।

**आयुर्द्रव्य** न० आयुःसाधनं द्रव्यम् शा०त० । १औषधे रत्नमा० २आयुःसाधने घृते च “आयुर्वै घृतमित्युक्तेर्घृतस्यायुर्जनकत्वात्तथात्वम् ।

**आयुर्योग** पु० उचितस्यायुषोज्ञापकः योगः । ज्योतिषोक्ते ग्रहयोगभेदे सचायुःशब्दे दृश्यः ।

**आयुर्वृद्धि** स्त्री आयुषो वृद्धिः । द्रव्यविशेषसेवनेनायुषो वृद्धौ तानि च द्रव्याणि कतिचिदुच्यन्ते । रस एव तावत् सर्वापेक्षयायुर्वृद्धिकरः ‘अभ्रकं तव वीजन्तु मम वीजन्तु पारदः । अनयोर्मेलनं देवि ! मृत्युदारिद्र्यनाशनम्” इति सर्व०द०गौरीं प्रति शिववाक्यम्’ कर्म्मयोगेन देवेशि । प्राप्यते पिण्डधारणम् । रसश्च पवनश्चेति कर्म्मयोगो द्विधा स्मृतः । मूर्च्छितो हरति व्याधीन् मृतो जीवयति स्वयम् । बद्धः खेचरतां कुर्य्याद्रसो वायुश्च भैरवि ।” इति सर्व्व०द० तन्त्रवाक्यम् । यथा च वायोर्निरोधेनैव आयुर्वृद्धिः । तथोक्तं काशी० ‘संनियम्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः । मध्यमस्योत्तमं चाथ प्राणायाममुपक्रमेत् । चलेऽनिले चलं सर्वं निश्चलं तत्र निश्चले । स्थाणुत्वमाप्नुयाद्योगीततोऽनिलनिरोधनात् । यावद्देहे स्थितः प्राणो जीवितं तावदुच्यते । निर्गते तत्र मरणं ततः प्राणं निरोधयेत् । प्राणायामेन युक्तेन सर्वव्याधिक्षयोभवेत् । अयुक्ताभ्यासयोगेन सर्वव्याधिसमुद्भवः” ततश्च प्राणायामस्य सर्वव्याधिहरत्वादप्यायुर्वृद्धिकरत्वम् । अस्य चायुर्वृद्धिकरत्वेऽन्यदपि कारणम् तथा हि “षड्भिश्वासैर्भवेत् प्राणः षट्प्राणा नाडिका मता । षष्टिर्नाड्यस्त्वहोरात्रो जपसंख्याक्रमो मतः । एकविंशतिसाहस्रं षट्शतानि महेश्वरि ! । जपति प्रत्यहं प्राणीति”तन्त्रोक्त्या २१६०० एतन्मिताः श्वासरूपाः प्राणक्रिया अहोरात्रे भवन्ति वत्सरसंख्यया ३६० गुणितास्ताः ७७७६००० एतन्मिता वत्सरे भवन्ति । ‘शतायुर्वै पुरुषः’ इति श्रुत्या मनुष्याणां स्वाभाविकशतायुष्ट्वोक्तेः शतेन गुणितास्ताः ७७७६००००० एतन्मिताः प्राणक्रिया मनुष्याणां जीवनकाले भवितुमर्हन्ति तत्र प्राणायामादिना प्राणवायोर्निरोधे प्राणक्रियानुत्पत्तेः प्राणक्रियारोधकाले च यावत्य प्राणक्रिया भवितुमर्हन्ति तावन्त कालाः आयुषो वर्द्धन्ते इति । उक्ताः प्राणक्रियाश्च सुस्थस्यैव भवन्ति रोगाद्युपसर्गे शीघ्रधावनादिपरिश्रमे च प्राणक्रियाधिक्यं भवति तेन स्वल्पकालमध्ये यावत्प्राणक्रिया क्रमेणोचितास्ततोन्यूनकालमध्ये तासामुत्पत्तावायुःक्षयः । शतायुष्ट्वञ्च स्वाभाविकं कर्म्मवशात् ततोन्यूनताऽपि जात्यायुर्भोगानां कर्म्मविपाकत्वस्य योगशास्त्रे उक्तेः । तादृशाल्पायुष्ट्वादिसूचको ग्रहविशेषयोगादिर्ज्योतिषे उक्तः । अन्नदोषादीनाञ्चाल्पायुष्ट्वप्रयोजकत्वं स्मृत्युक्तमदृष्टद्वारैव । वैद्योक्तापथ्यभोजनस्य तथात्वन्तु रोगोत्पत्तिद्वारेति भेदः । रोगोपसृष्टदेहे च जीवो दुःखेतत्वात् यत्नाद्युपद्रुतदेशवत् शीघ्रं परिजिहीर्षति । तथा च देहो यथा न रोगादिभिरुपसृज्येत” तथा यतितव्यमित्येतदर्थं शास्त्रेषु पथ्योपदेश इति बोध्यम् । एवं खेचरीमुद्रादीनामप्यायुर्वृद्धिकरत्वम् काशी० उक्तम् । “कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी । न पीड्यते स रोगेण न च लिप्येत कर्म्मणा । बाध्यते न स कालेन योमुद्रां वेत्ति खेचरीम् । चित्तं चरति खे यस्माज्जिह्वा चरति खे गता । तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता । यावद्बिन्दुः स्थिरोदेहे तावन्मृत्युभयं कुतः । यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति । उड्डीनं कुरुते यस्मादहोरात्रं महाखगः । उड्डीयानं ततः प्रोक्तं तत्र बन्धोऽभिधीयते । जठरे पश्चिमं भागं नाभेरूर्द्ध्वञ्च धारयेत् । उड्डीयानं ह्ययं बन्धो मृत्योरपि भयं जयेत् । बध्नाति हि शिराजालं अधोगामि न भोजनम् । एष जालन्धरोबन्धः कण्ठदुःखौघनाशनः । जलन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे ।

न पीयूषं पतत्यग्नौ न च वायुः प्रधावति । पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद्गुदम् । अपानमूर्द्ध्वमाकृष्य मूलबन्धोऽभिधीयते । अपानप्राणयोरैक्यं क्षये मूत्रपुरीषयोः । युवा भवति वृद्धोऽपि सततं मूलबन्धनात्” । एवमन्यान्यपि शास्त्राणि कर्म्माणि आयुर्वृद्धिकराणि “भ्रातृव्यान् मोषयतो हिंसाय दद्तोऽप्यायुश्चिरं वर्त्तते” “आयुष्यं प्राङ्मुखो भुङ्क्ते” इत्यादीनि ।

रसयस्त्वन्यान्यपि द्रव्याणि सेवितानि आयुर्वृद्धिकराणि सुश्रुते दर्शितानि तानि रसवत्त्वतया रसायनानि यथा

“अथातः सर्व्वोपघातशमनीयं रसायनं व्याख्यास्यामः । पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनम् । प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा । नाविशुद्धशरीरस्य युक्तो रासायनो विधिः । न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः । शरीरस्योपघाता ये दोषजा मानसास्तथा । उपदिष्टा प्रदेशेषु तेषां वक्ष्यामि वारणम् । शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः । त्रिशः समस्तमथ वा प्राक् पीतं स्थापयेद्वयः । तत्र विड़ङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत शीततोयं चानुपिबेदेवमहरहर्मासं तदेव मधुयुक्तं भल्लातककाथेन वा मधुकाथ्याककाथयुक्तं वा गन्ध्वामलकरसाभ्यां वा गुडूचीक्वाथेन वा । एवमेते पञ्च प्रयोगा भवन्ति जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात् । एते खल्वर्शांसि अपघ्नन्ति क्रिमीनुपघ्नन्ति ग्रहणधारणशक्तिं जनयन्ति मासेमासे प्रयोगे वर्षशतमायुषोऽभिवृद्धिर्भवति । विड़ङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं स्थिरमनसाऽश्मनि पिष्टमायसे दृढे कुम्भे मधूदकोत्तरं प्रक्षिप्य भस्मराशावन्तर्भूमेश्चतुरो मासान्निदध्यात् वर्षाविगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसम्पाताभिहुतं कृत्वा प्रातः प्रातर्यथाबलमुपयुञ्जीत, जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात् पांशुशय्यायां शयीत । तस्य मासादूर्द्ध्वं सर्व्वाङ्गेभ्यः कृमयो निष्क्रामन्ति तानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत् । द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत् चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते । अमानुषं आदित्यप्रकाशं वपुरधिगच्छति दूराच्छ्रवणानि दर्शनानि चास्य भवन्ति रजस्तमसी चापोह्य सत्त्वमधितिष्ठति । श्रुतनिगाद्यपूर्व्वोत्पादी गजबलोऽश्वजवः पुनर्युवाष्टौ वर्षशतान्यायुरवाप्नोति । तस्याणुतैलमभ्यङ्गार्थे । अजकर्णकषायमुत्सादनार्थे सोशीरं, कूपोदकं स्नानार्थे, चन्दनमनुलेपनार्थे, भल्लातकविधानवदाहारपरिहाराः । काश्मर्य्याणां निष्कुलीकृतानामेष एव कल्पः पांशुशय्याभोजनवर्ज्जम् । अत्र हि पयसा घृतेन भोक्तव्यम् आशिषश्च पूर्व्ववत् समानाः । शोणितपित्तनिमित्तेषु विकारेषु तेषामुपयोगः । बलोल्लागारं प्रविश्य बलामूलार्द्धपलं पलं वा पयसालोड्य पिबेत् । जीर्णे पयः सर्पिरोदन इत्याहारः । एवं द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति । एवं द्विरष्टरात्रमुपयुज्य वर्षशतं वयस्तिष्ठति । एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः । विशेषतस्त्वतिबलामुदकेन, नागबलाचूर्णं मधुना, विदारीचूर्णं वा क्षीरेण, शतावरीमप्येवं, पूर्व्ववच्चान्यत् समानमाशिषश्च तथा । एतास्त्वोषधयो बलकामानां शोषिणां वर्द्धयतां विरिच्यमानानां चोपदिश्यन्ते । वाराहीमूलतुलाचूर्णं कृत्वा ततो मात्रां मधुयुक्तां पयसालोड्य पिबेत् जीर्णे पयः सर्पिरोदन इत्याहारः । प्रतिषेधोऽत्र पूर्व्ववत् क्रियाप्रयोगमुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम् । एतेनैव चूर्णेन पयोऽवचूर्णं घृतशीतमभिमथ्याऽऽत्मनुत्पाद्य मधुयुक्तमुपयुञ्जीत सायम्प्रातरेककालं वा जीर्णे पयः सर्पिरोदन इत्याहारः । एवं मासमुपयुज्य वर्षशतायुर्भवति । जीर्णे पयः सर्पिरोदन इत्याहारः । चक्षुःकामः प्रावृट्काले वा शीतकषाराग्निमन्थमूलं निःक्वाथ्य मागधकं चाव-येत् तस्मिन् सिध्यति तिलकमूलानामक्षमात्रं कल्कं दद्यात् आमलकरसचतुर्थभागं ततः स्निग्धमनसाऽश्मनि सहस्रसम्पाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिभ्यां संसृज्योपयुञ्जीत यथाबलं लवणं परिहरन् भक्षयेत् जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नीयात् पयसा वा भावलवणमेताभ्यां प्रयोगाभ्यां चक्षुःसौपर्णं बलवत्तमश्चक्षुः बलवान् स्त्रीषु चाक्षयो वर्षशतायुर्भवतीति । भवति चात्र । पयसा सह सिद्धानि नरः समश्नानि च । भक्षयेत् पयसा सार्द्धं वयस्तस्य न शीर्य्यते ।

अथातो मेधायुष्कामीयं रसायनं चिकित्सितं व्याख्यास्यामः । मेधायुःकामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सह समालोड्य स्नेहकुम्भे सम्प्रयाप्य धान्यराशौ निदध्यात् सप्तरात्रमुद्धृत्य कृतदोषस्य यथाबलं पिण्डं प्रकल्प्योदिते सूर्य्ये उष्णोदकं चानुपिबेत् । भल्लातकविधान-

यथागारप्रवेशो जीर्णे चापराह्णे हिमाभिरद्भिः प-
रिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरे-
णौदनमश्नीयादेवं सप्ताहमुपयुज्य विगतपाप्मा बल-
वर्णोपेतः श्रुतिनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति ।
कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोर्मूत्रे-
णालोड्यार्द्धपलिकं पिण्डं विगतलौहित्ये सवितरि पाय-
येत्, अपराह्णे चाल्पलवणेनामलकयूषेण सर्पिष्मतौदनमश्नी-
यात् । एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति
एष पञ्चयोगश्चित्रकमूलानां, रजन्याश्चित्रकमूले विशेषो
हिमवित् पिण्डं परं प्रमाणं शेषं पूर्ववत् ।
कृतदोष एव प्रतिसंस्कृतभक्तो यथाक्रममागारं प्रविश्य
मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथा-
बलं पयसालोड्य पिबेत् पयोऽनुपानं वा तस्यां जीर्णायां
यवान्नं पयसोपयुञ्जीत तिलैर्वा सह भक्षयित्वा त्रीन्मासान्
पयोऽनुपानं जीर्णे पयः सर्पिरोदन इत्याहारः । एतदु-
पयुञ्जानः ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशत-
मायुरवाप्नोति त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्ष-
येत् । त्रिरात्रादूर्द्ध्वं पयःसर्पिरिति चोपयुञ्जीत ।
बिल्वमात्रं पिण्डं वा पयसालोड्य पिबेदेवं दशरात्रमुप-
युज्य मेधावी वर्षशतायुर्भवति । कृतदोष एवागारं प्रविश्य
प्रतिसंस्कृतभक्तो ब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं
कृत्वा यथाबलमुपयुञ्जीत जीर्णौषधश्चापराह्णे यवागूमल-
वणां पिबेत् क्षीरसात्म्यो वा पयसा भुञ्जीत । एवं सप्तरा-
त्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति । द्वितीयं सप्तरात्र-
मुपयुज्य ग्रन्थमीप्सितमुत्पादयति । नष्टञ्चास्य प्रादुर्भवति ।
तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति ।
एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति मूर्त्तिमती चैनं
वाग्देव्यनुप्रविशति सर्वाश्चैनं श्रुतय उपतिष्ठन्ति । श्रुतधरः
पञ्चवर्षशतायुर्भवति । ब्राह्मीस्वरसप्रस्थद्वये एतमस्य विकृ-
ततण्डुलानां कुडवं द्वे द्वे पले बलातिबलयोर्हरिद्रा हरीत-
क्यामलकविभीतकानि अष्टपिष्टाभ्यामाप्य काथ्यं साधयित्वा
पञ्चगुणं निदध्यात् । ततः पूर्वविधानेन मात्रां यथाबल-
मुपयुञ्जीत जीर्णे पयःसर्पिरोदन इत्याहारः । एतेनो-
र्द्ध्वमधश्च तिर्य्यक्कृमयो निःक्रामन्ति अलक्ष्मीरपक्रामति ।
शुद्धवर्णः स्थिरवयाः श्रुतनिगादी त्रिवर्षशतायुर्भवत्येतदेव
श्वविषमज्वरापस्मारोन्मादविषभूतपरेष्वन्येषु च महा-
व्याधिषु च संशोधनमादिशन्ति । कृतदोष एवागारं
प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं

पयसालोड्य पिबेत् जीर्णे पयःसर्पिरोदन इत्याहारः ।
एवं दशरात्रमुपयुञ्जीत ततोऽस्य श्रोत्रं विव्रियते हिर-
ण्याभात् स्मृतिमान् भवति हिरण्याभाच्छतसादस्य चतुर्द्द-
दशरात्रमुपयुज्य सर्व्वं तरति किल्विषं तार्क्ष्यदर्शनमुत्पद्यते
शतायुश्च भवति । द्वे द्वे पले स्थूलस्या वचाया निः-
क्वाथ्य पिबेत् पयसा सहान्नं भोजनं सदा पूर्वेषा-
मिव च । वचाशतपाकेन वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्ष-
शतायुर्भवति गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति ।
अथायुष्कामीयं रसायनम् । मन्त्रौषधसमायुक्तं संवत्सर-
फलप्रदम् । बिल्वस्य चूर्णं पुष्ये तु हुतं मासान् षडश्नतः ।
श्रीयुक्तेन नरः कल्ये सप्तवर्षाणि दिने दिने । सर्पिर्मधु-
युतं श्रियाद्दलक्ष्मीनाशनं परम् । त्वचं बिल्वस्य मूलस्य
मूलक्वाथं दिने दिने । प्राश्नीयात् पयसा सार्द्धं स्नात्वा
हुत्वा समाहितः । दशसाहस्रमायुष्यं कृतं पुष्करयं भवेत् ।
हुत्वा त्रिशाखाकाथन्तु मधुनाजेन संयुतम् । अमोघं
शतसाहस्रं युक्तं युक्तरथं स्मृतम् । सुवर्णपद्मबीजानि
मधुलाजाः प्रियङ्गवः । गव्येन पयसा पीतमलक्ष्मीं
प्रतिषेधयेत् । नीलोत्पलदलक्काथो गव्येन पयसा स्मृतः ।
सप्तवर्णतिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः । गव्यं पयः
सुवर्णञ्च मधूच्छिष्टञ्च माक्षिकम् । पीतं शतसहस्राभिहुतं
युक्तरथं स्मृतम् । वचाहस्तसुवर्णञ्च बिल्वचूर्णमिति त्रयम् ।
मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्द्धनम् । वचामूलतुला-
क्वाथे तैलपात्रञ्च साधितम् । हुत्वा सहस्रनप्लीया-
श्वमेध्यमायुष्यमुच्यते । यावकांस्तावकांश्छेदभिभूय यथा-
क्रमम् । पिप्पलीमधुसंयुक्तान् त्रिशाखारण्यवन्नयेत् । मधुका-
मलकचूर्णानि सुवर्णमिति च त्रयम् । प्राश्यारिष्टगृही-
तोऽपि मुच्यते प्राणसंशयात् । शतावरीघृतं सम्यगुपयुक्तं
दिने दिने । सक्षौद्रं सतुवर्णं च नरेन्द्रं स्थापयेद्वये । गोप-
न्दनामोघनिकामधुक माक्षिकं मधु । सुवर्णमिति संयोगः
मेध्य सौभाग्यमिच्छता । पद्मनीलोत्पलक्काथे यष्टीमधु-
कसंयुते । सर्पिराग्नादितं गव्यं सप्तवर्णं सदा पिबेत् ।
पयसानुपिबेत् सिद्धं तेषामेव समुद्भवे । प्रवदन्तीदं सदा-
युष्यं राज्याय सुभगाय च । यत्र मोदोदितो मन्त्रो योगे-
ष्वेतेषु साधने । अल्पिका तत्र सर्व्वत्र गायत्री त्रिपदी
भवेत् । प्राणाग्नं नाशयन्त्येता दग्धा चौषधयः श्रियम् ।
कुर्य्युर्नागबलं चापि मनुष्यममरोपमम् । सततामध्ययनं
वाद परतन्त्रावलोकनम् । तद्विद्याचार्य्यसेवा च बुद्धि-
मेधाकरो गणः । आयुष्यं भोजनं जीर्णे वेगानां चाविधा-

रणम्। ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनम्”। एवम् “सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट्” इत्याद्युक्तानि सुश्रुते हिताहितीयाध्याये हिततया चोक्तानि च आयुर्वृद्धिकराणि।

आयुर्वेद पु० आयुर्विद्यते लभ्यतेऽनेन विद्–लाभे करणे घञ् आयुर्वेत्त्यनेन विज्ञापनेन विद–ज्ञाने करणे घञ् वा। चिकित्साशास्त्रे तन्निरुक्त्यादिकं सुश्रुते दर्शितं यथा। “यथ्यं शालक्यमित्यादि अष्टाङ्गशब्दे ५२१पृष्ठे उक्त उपक्रम्य “इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च। आयुरस्मिन् विद्यते ऽनेन वा आयुर्विन्दतीत्यायुर्वेदः। तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय। एतद्ध्यङ्गं प्रथमं प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च। श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः। भवद्भ्यां यज्ञस्य शिरः सन्धातव्यम्। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः सन्धितमिति। अष्टास्वपि चायुर्वेदतन्त्रेष्वेतदेवाधिकमभिमतमाशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च। तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरञ्चेति। ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः। भवति चात्र। अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्। शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्”। स चाथर्ववेदस्योपवेदः “विधाताथर्व्वसर्व्वस्वमायुर्वेदं प्रकाशयन्। स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्” इति भावप्रकाशोक्तेः। चरणव्यूहमते ऋग्वेदस्योपवेदः आयुर्वेदः अथर्ववेदस्य तु शस्त्रशास्त्राण्युपवेदः। स च षोडशर्षिप्रणीतत्वात् षोडशविधः यथोक्तं ब्रह्मवै०पु० “ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः। विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः। कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः। स्वतन्त्रं संहितां तस्मात् भास्करश्च चकार सः। भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम्। प्रददौ पाठयामास ते चक्रुः संहितास्ततः। तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च। व्याधिप्रणाशबीजानि साध्वि। मत्तो निशामय। धन्वन्तरिर्दिवोदासः काशीराजोऽश्विनीसुतौ। नकुलः सहदेवार्की च्यवनो जनको बुधः। जाबालो जाजलिः पैलः करथोऽगस्त्य एव च। एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः। चिकित्सातत्त्वविज्ञानं नाम तन्त्रमनोपमम्। धन्वन्तरिश्च भगवान् चकार प्रथमे सति। चिकित्सादर्पणं नाम दिवोदासश्चकार सः। चिकित्साकौमुदीं दिव्यां काशीराजश्चकार ह। चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ। तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः। चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनम्। ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः। च्यवनो जीवदानञ्च चकार भगवानृषिः। चकार जनको योगी वैद्यसन्देहभञ्जनम्। सर्वसारं चन्द्रसुतो जाबालस्तन्त्रसारकम्। वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः। पैलो निदानं करथस्तन्त्रं सर्वधरं परम्। द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः। चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश। व्याधिप्रणाशबीजानि बलाधानकराणि च। मथित्वा ज्ञानमन्थानैरायुर्वेदपयोनिधिम्। ततस्तन्त्राण्युज्जह्रुर्नवनीतानि कोविदाः। एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्। आयुर्वेदं सर्व्वबीजं सर्वं जानामि सुन्दरि। व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः। आयुर्व्वेदस्य विज्ञाता चिकित्सासु यथार्थवित्। धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः”। तस्य लक्षणं यथा भा०प्र०। “आयुर्हिताहितं व्याधिनिदानं शमनं तथा। विद्यन्ते यत्र विद्वद्भिः स आयुर्वेद उच्यते” तस्य निरुक्तिस्तत्रैव। “अनेन पुरुषो यस्मात् आयुर्विन्दति वेत्ति च। तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः”। “देहजीवयोर्योगो जीवनं तेनावच्छिन्नः कालः आयुः आयुर्बोधकाराः आयुष्याण्यनायुष्याणि द्रव्यगुणकर्म्माणि ज्ञात्वा तेषां सेवनत्यागाभ्याम् आरोग्येणायुर्विन्दति तेनैव हेतुना परस्यायुर्वेत्ति च येन तद्बोधकारः स आयुर्वेदः” भा०प्र०। अथायुर्वेदस्य प्रादुर्भावस्तावदभिधीयते यथा भावप्र० “विधाताऽथर्वसर्वस्वमायुर्वेदं प्रकाशयन्। स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्। ततः प्रजापतिं दक्षं दक्षं सकलकर्मसु। विधिर्धीमानरीरधिः साङ्गमायुर्वेदमादिमत्। अथ दक्षप्रादुर्भावः। अथ दक्षः क्रियादक्षः सर्वज्ञोदेवसत्तम। वेदयामास विद्वांसौ सूर्य्यांशौ सुरयामौ।

अथाश्विप्रादुर्भावः "दक्षादधीत्य दस्रौ वितेनतुः संहितां स्वीयाम्। सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये धन्याम्। स्वयम्भुवः शिरश्छिन्नं रौद्रेण रूपाय तत्। अश्विभ्यां संहितं तस्मात्तौ जातौ यज्ञभागिनौ। देवासुररणे देवा दैत्यैर्ये क्षताः कृताः। अक्षतास्ते कृताः सद्योदस्राभ्यामद्भुतं महत्। वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां चिकित्सितः। सोमे निपतिते चेन्द्रस्ताभ्यामेव सुखीकृतः। विशीर्णदशनाः पूष्णो नेत्रे नष्टे भगस्य च। शशिनो राजयक्ष्माऽभूदश्विभ्यां ते चिकित्सिताः। भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः। वीर्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा। एतैश्चान्यैश्च बहुभिः कर्मभिर्भिषजा वरौ। बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम्। अथेन्द्रप्रादुर्भावः। संदृश्य दस्रयोरिन्द्रः कर्माण्येतानि यत्नवान्। आयुर्वेदं निरुद्वेग तौ ययाचे शचीपतिः। नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ। आयुर्वेदं यथाधीतं ददतुः शतमन्यवे। नासत्याभ्यामधीत्यैव आयुर्वेदं शतक्रतुः। अध्यापयामास बहूनात्रेयप्रमुखान् मुनीन्। अथात्रेयप्रादुर्भावः। एकदा जगदालोक्य गदाकुलमितस्ततः। चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः। किं करोमि क्व गच्छामि कथम् लोका निरामयाः। भवन्ति, आमयानेतान् शक्नोमि निरीक्षितुम्। दयालुत्वमत्यर्थं स्वभावो दुरतिक्रमः। एतेषां तु स्वतोदुःखं ममापि हृदयेऽधिकम्। आयुर्वेदं पठिष्यामि नैरुज्याय शरीरिणाम्। इति निश्चित्य गतवानात्रेयस्त्रिदशालयम्। तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः। सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः। भासयन्तं दिशोभासा भास्करप्रतिमत्विषा। आयुर्वेदमहाचार्य्यं शिरोधार्य्यं दिवौकसाम्। शक्रस्तु तं निरीक्ष्यैव त्यक्तसिंहासनो ययौ। तदर्घ्ये पूजयामास कृत्यं भूरिसपक्षगम्। कुशलं परिपप्रच्छ तथाऽऽगमनकारणम्। स मुनिर्वक्तुमारेभे निजागमनकारणम्। व्याधिभिर्व्यथिता लोकाः शोकाकुलितचेतसः। भूतले सन्ति, शक्राथ तेषां हन्तुं कृपां कुरु। आयुर्वेदोपदेशं मे कुरु कारुण्यतो नृणाम्। तथेत्युक्त्वा सहस्राक्षोऽध्यापयामास तं मुनिम्। मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः। अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम्। अथात्रेयो मुनिश्रेष्ठो भगवान् करुणापरः। स्वनाम्ना संहितां चक्रे नरचक्रानुकम्पया। ततोऽग्निवेशं भेडं च जातूकर्णं पराशरम्। क्षीरपाणिं च हारीतमायुर्वेदमपाठयत्। तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत्पुरा। ततो भेडादयश्चक्रुः स्वं स्वं तन्त्रं, कृतानि तु। श्रावयामासुरात्रेयं मुनिवृन्देन वन्दितम्। श्रुत्वा च तानि तन्त्राणि हृष्टोऽभूदत्रिनन्दनः। यथावत्सूत्रितत्वात्तु प्रहृष्टा मुनयोऽभवन्। दिवि देवर्षयो देवाः श्रुत्वा साध्विति तेऽब्रुवन्"। अथ भरद्वाजप्रादुर्भावः "एकदा हिमवत्पार्श्वे देशादागता मुनयो बहवस्तांश्च नामभिः कथयाम्यहम्। भरद्वाजो मुनिवरः प्रथमं समुपागतः। ततोऽङ्गिरास्ततो गर्गो मरीचिर्भृगुभार्गवौ। पुलस्त्योऽगस्तिरसितो वशिष्ठः सपराशरः। हारीतो गौतमः सांख्यो मैत्रेयश्च्यवनोऽपि च। जमदग्निश्च गार्ग्यश्च काश्यपः कश्यपोऽपि च। नारदो वामदेवश्च मार्कण्डेयः कपिष्ठलः। शाण्डिल्यः सह कौण्डिल्यः शाकुनेयश्च शौनकः। आश्वलायनसांकृत्यौ विश्वामित्रः परीक्षितः। देवलो गालवो धौम्यः काम्यकात्यायनावुभौ। काङ्कायनो वैजवापः कुशिको बादरायणिः। हिरण्याक्षश्च लौगाक्षिः शरलोमा च गोभिलः। वैखानसा वालखिल्यास्तथैवान्ये महर्षयः। ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च। तपस्तेजसा दीप्ताहूयमाना इवाग्नयः। सुखोपविष्टास्ते तत्र सर्वे चक्रुः कथामिमाम्। धर्म्मार्थकाममोक्षाणां मूलमुक्तं कलेवरम्। तच्च सर्वसिद्धये शक्तं भवेद्यदि निरामयम्। तपःस्वाध्यायधर्म्मणां ब्रह्मचर्य्यव्रतायुषाम्। हर्त्तारः पुरतो रोगा यत्र तत्र च सर्वत। रोगाः कार्श्यकरा बलक्षयकरा देहस्य चेष्टाहरा दृष्ट्यादीन्द्रियशक्तिसंक्षयकराः सर्वाङ्गपीडाकराः। धर्म्मार्थाखिलकाममुक्तिषु महाविघ्नस्वरूपा बलात् प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः प्राणिनाम्। तत्तेषां प्रशमाय कश्चन विधिश्चिन्त्यो भवद्भिर्बुधैर्योग्यैरित्यभिधाय सपदि भरद्वाज मुनिन्तेऽब्रुवन्। त्वं योग्यो भगवन्! सहस्रनयनं याहि हि शीघ्रं क्रमादायुर्वेदमधीत्य यद्भवाननुज्ञा भवामो वयम्। इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः। भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम्। तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम्। दृष्टवान् वृत्रहन्तारं दीप्यमानमिवानलम्। सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम्। ऋषीणां वचनं सम्यक् श्रावयामास सत्तमः। व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः। तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि। तदुवाच मुनिं साङ्गमायुर्वेदं शतक्रतुः। जीवेद्वर्षसहस्राणि देही नीरुङ्गियस्य यम्। सोऽनन्तपारन्त्रिस्कन्धमायुर्वेदं महामतिः। यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः। तेनायुः सुचिरं लेभे भरद्वाजो निरामयम्। अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः।

र्गेणाः। समाः स्युर्यास्तु पूर्व्ववत् स्यादेष्योऽप्यायुरथांशजे। इष्टघ्नलवाप्तिस्मा दशभक्तास्च यत् फलम्। वर्षमासादिकं ज्ञेयं भवेद् द्वादशभिः स्फुटम्। जैवे परायुरंशांशो ग्रहायुः परमोच्चगे। लग्नभशसमन्वायुर्द्द्यात्तोय्यंयुगं च भे·। सर्व्वमर्द्धं तृतीयोऽंश पादः पञ्चाष्टभागकौ। व्ययाद्वाम विशोधेत पापे स्वर्द्धं शुभग्रहे। एकभावगतानां यो बली भागहरस्तु सः। अस्तगता गतोऽर्द्धन्ति त्यक्त्वा शुक्रशनैश्चरौ। कुजन्त्यक्त्वा शत्रुभस्थैस्त्रिभागो नाश्यते निजः। लग्ने सपापे· लग्नस्तनवांशमात् ह्रायुप। अष्टोत्तरः शतांशः स्याद्धीनं सौम्येक्षिते दलम्। उच्चचक्रगतास्त्रिघ्नं द्विघ्नं स्वांशोत्तमादिगाः। ददत्यायूंषि ह्रासे चेद्युती नित्यं स्वमादिगाः। अपि त्रिद्वेक चतुष्पदाः केन्द्रादावित्ति केचन। लग्ने सपापे हानिर्यो नासावंशजमायुषि। हानिद्वयेऽधिकैव स्याद्युणोऽप्येवं नराङ्गगो·। वाक्ताःपरायुर्नरदन्तिनो· १२० स्याद्वन्ता ३२ हयानां च जिना २४ वृषादे। खरोष्ट्रयोस्त्वसमा· २५ शुनोऽर्का १२ व्याघ्राद्यनादेर्हिंस्रपा· १६ परायः। आयुर्द्धरेत् समानीय स्वस्वपूर्णायुषा हतम्। स्वपरायुर्हृतं स्पष्टं गजाद्यायुर्भवेदिति। दीपस्तैलादियुक्तोऽपि यथा वाते विनश्यति। अजितेन्द्रियतापथ्यैरेवमायुर्विनश्यति"।

अत्र हयाना दन्तैर्यथायुर्ज्ञानं तथोक्तमश्वशब्दे ५०१ पृष्ठे जयदत्तकृताश्वशास्त्रात्तद्विशेषोऽव गन्तव्यः। दन्ताद्वात्रिंशद्वर्षा इत्युक्तम्

एवमायुश्च सदाचारादेव, अपथ्याजितेन्द्रियादिभ्यस्तु आयुःसत्त्वेऽपि नाश उक्तजातकपद्धतिवचनात् अतएव भा० आनु०प०१०४ अध्याये सदाचारादितएव आयुर्वृद्धिरुक्ता "शतायुरुक्तः पुरुष शतवीर्य्यश्च जायते। कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह।। आयुष्मान् केन भवति अल्पायुर्व्वाऽपि मानवः। केन वा लभते कीर्त्तिं केन वा लभते श्रियम्। तपसा ब्रह्मचर्य्येण जपहोमैस्तथौषधैः। कर्म्मणा मनसा वाचा तन्मे ब्रूहि पितामह।। भीष्म उवाच। अत तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि। अल्पायुर्येन भवति दीर्घायुर्व्वाऽपि मानवः। येन वा लभते कीर्त्तिं येन वा लभते श्रियम्। यथा वर्त्तयन् पुरुषः श्रेयसा सम्प्रयुज्यते। आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्। आचाराल्लभते कीर्त्तिं पुरुषः प्रेत्य चेह च। दुराचारो हि पुरुषो नेहायुर्विन्दते महत्। त्रस्यन्त्यस्मात् भूतानि तथा परिभवन्ति च। तस्मात् कुर्य्यादिहाचारं यदीच्छेद्भूतिमात्मनः। अपि पापशरीरस्य आचारो हन्त्यलक्षणम्। आचारलक्षणो धर्म्मः सन्तश्चारित्रलक्षणाः। साधूनाञ्च यथा वृत्तमेतदाचारलक्षणम्। अप्यदृष्टं श्रवादेव पुरुषं धर्म्मचारिणम्। भूतिकर्म्माणि कुर्व्वाणं तं जनाः कुर्व्वते प्रियम्। ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः। अधर्म्मज्ञा दुराचारास्ते भवन्ति गतायुषः। विशीला भिन्नमर्य्यादा नित्यं सङ्कीर्णमैथुनाः। अल्पायुषो भवन्तीह नरा निरयगामिनः। सर्व्वलक्षणहीनोऽपि समुदाचारवान्नरः। श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति। अक्रोधनः सत्यवादी भूतानामविहिंसकः। अनसूयुरजिह्मश्च शतं वर्षाणि जीवति। लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः। नित्योच्छिष्टः सङ्कुसुको नेहायुर्व्विन्दते महत्। ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत्। उत्थायाचम्य तिष्ठेत पूर्व्वां सन्ध्यां कृताञ्जलिः। एवमेवापरां सन्ध्यां समुपासीत वाग्यत। नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्। ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्। तस्मात्तिष्ठेत्सदा पूर्व्वां पश्चिमाञ्चैव वाग्यत। ये न पूर्व्वामुपासीरन् द्विजाः सन्ध्यां न पश्चिमाम्। सर्व्वांस्तान् धार्म्मिको राजा शूद्रकर्म्माणि कारयेत्। परदारा न गन्तव्याः सर्व्ववर्णेषु कर्हिचित्। नहीदृशमनायुष्यं लोके किञ्चन विद्यते। यादृशं पुरुषस्येह परदारोपसेवनम्। यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्म्मिताः। तावद्वर्षसहस्राणि नरकं पर्य्युपासते। प्रसाधनञ्च केशानामञ्जनं दन्तधावनम्। पूर्व्वाह्ण एव कार्य्याणि देवतानाञ्च पूजनम्। पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत् कदाचन। नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते। नाज्ञातैः सह गच्छेत नैकोन वृषलैः सह। पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च। वृद्धाय भारतप्ताय गर्भिण्यै दुर्ब्बलाय च। प्रदक्षिणं प्रकुर्व्वीत परिज्ञातान् वनस्पतीन्। चतुष्पथान् प्रकुर्व्वीत सर्व्वानेव प्रदक्षिणान्। मध्यन्दिने निशाकाले अर्द्धरात्रे च सर्व्वदा। चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च। उपानहौ च वस्त्रञ्च धृतमन्यैर्न धारयेत्। ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत्। अमावास्यां पौर्णमास्यां चतुर्द्दश्याञ्च सर्व्वशः। अष्टम्यां सर्व्वपक्षाणां ब्रह्मचारी सदा भवेत्।। वृथा मांसं न खादेत पृष्ठमांसं तथैव च। आक्रोशं परिवादञ्च पैशुन्यञ्च विवर्ज्जयेत्। नारुन्तुदः स्यात्

ततस्तज्जनितज्ञानचक्षुषा ऋषयोऽखिलाः । गुणान् द्रव्याणि कर्म्माणि दृष्ट्वा तद्विधिमाश्रिताः । आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम् । आयुर्व्वेदोक्तविधिनाऽन्येऽपि सुमुनयो यथा"।

अथ चरकप्रादुर्भावः "यदा मत्स्यावतारेण हरिणा वेद उद्धृतः । तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् । अथर्व्वान्तर्गतं सम्यगायुर्व्वेदं च लब्धवान् । एकदा स महीवृत्तं द्रष्टुं चर इवागतः । तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् । स्थलेषु बहुव्याकुलान् म्रियमाणांश्च दृष्टवान् । तान् दृष्ट्वाऽतिदयायुक्तस्तेषां दुःखेन दुःखितः । अनन्तश्चिन्तयामास रोगोपशमकारणम् । सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह । यतश्चर इवायातो न ज्ञातः केनचिद्यतः । तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले । स भाति चरकाचार्य्यो देवाचार्य्यो यथा दिवि । सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः । आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् । मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् । तेषां तन्त्राणि संस्कृत्य संगृह्य विपश्चिता । चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः । अथ धन्वन्तरिप्रादुर्भावः । एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीड़िताः । तान् दृष्ट्वा हृदयं तस्य दयया परिपीड़ितम् । दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह । धन्वन्तरे ! सुरश्रेष्ठ ! भगवन् ! किञ्चिदुच्यते, । योग्योभवसि भूतानामुपकारपरो भव । उपकाराय लोकानां केन किं न कृतं पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् । तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय । इत्युक्त्वा सुरशार्द्दूलः सर्व्वभूतहितेच्छया । समस्तमायुर्व्वेदं धन्वन्तरिमुपादिशत् । अधीत्य चायुर्व्वेदमिन्द्राद्धन्वन्तरिः पुरा । आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि । नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चचार च महत्तपः । यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् । ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते । हिताय देहिनां लोके संहिता विहिताऽधुना । अयं विद्यार्थिनो लोकान् संहितां तामपाठयत्" । अथ सुश्रुतप्रादुर्भावः । अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽवदन् । अयं धन्वन्तरिः काश्यां काशीराजोऽयमुच्यते । विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान् । वत्स ! वाराणसीं गच्छ विश्वेश्वरवल्लभाम् । तत्र नाम्ना दिवोदासः काशीराजोऽस्ति बाहुजः । स हि धन्वन्तरिः साक्षादायुर्व्वेदविदांवरः । आयुर्व्वेदं ततोऽधीष्व लोकोपकृतिहेतवे । सर्व्वप्राणिदयातीर्थमुपकारो महामखः । पितुर्व्वचनमाकर्ण्य सुश्रुतः काशिकां गतः । तेन सार्द्धं समध्येतुं मुनिपुत्रशतं ययौ । अथ धन्वन्तरिं सर्व्वे वानप्रस्थाश्रमे स्थितम् । ब्रह्मवन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम् । काशीराजं दिवोदासन्तेऽपश्यन् विनयान्विताः । आगतं च इति प्राह दिवोदासो यशोधनः । कुशलं परिपप्रच्छ तथाऽऽगमनकारणम् । ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम् । भगवन्मानवान् दृष्ट्वा व्याधिभिः परिपीड़ितान् । क्रन्दतोऽपि समाश्रित्य जाताऽस्माकं हृदि व्यथा । आमयानां शमोपायं विज्ञातुं वयमागताः । आयुर्व्वेदं भवानस्मानध्यापयितुमर्हति । अङ्गीकृत्य वचस्तेषां कृपयैतानुपादिशत् । आज्ञातं तेन ते यस्मात् सम्यङ्मुनयो मुदा । काशीराजं यथायोग्यमभिनन्द्य मुदान्विताः । सुश्रुताद्याः सुविद्यार्थास्तन्त्रं चक्रुः स्वकं स्वकम् । प्रथमं सुश्रुतस्तेषु स्वतन्त्रं कृतवान् स्फुटम् । सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि तेनिरे । सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुमन्यते । तस्मात्तत् सुश्रुतं नाम्ना विख्यातं क्षितिमण्डले" चरके तु आयुर्व्वेदनिर्गमस्तन्मतभेदेन योऽन्यथाख्यायि यथा "ब्रह्मणा हि यथा प्रोक्तमायुर्व्वेदं प्रजापतिः । जग्राह निखिलेनादावश्विनौ तु पुनस्ततः । अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम् । ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्" ब्रह्मादिभरद्वाजान्तं यद्यप्युक्तं ततो यथा भरद्वाजस्य प्राप्तिस्तदपि तत्रैवोक्तम् । यथा कतिचिन्मुनीनुपक्रम्य 'ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च । तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः । सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम् । धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् । रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च । प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् । कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः । अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा । स वक्ष्यति शमोपायं यथावदमरप्रभुः । कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् । अहमर्थे नियुज्येयमत्रेति प्रथमं वचः । भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः । स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् । ददर्श बलहन्तारं दीप्यमानमिवानलम् । सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् । प्रोवाच भगवान् धीमानृषीणां वाक्यमुत्तमम् । व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः । तद्ब्रूहि मे शमोपायं यथावदमरप्रभो' ।

तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः । पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये । हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् । त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः । सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः । यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः । तेनायुरमितं लेभे भरद्वाजः सुखान्वितम् । ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् । ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् । दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः । तेनर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा । सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म्म च । समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः । लेभिरे परमं शर्म्म जीवितञ्चाप्यनश्वरम् । अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्व्वसुः । शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया । अग्निवेशश्च भेडश्च जातूकर्णः पराशरः । हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्व्वचः । बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः । तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत् । अथ भेडादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च । श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः । श्रुत्वा च सूत्रणामर्थानामृषयः पुण्यकर्म्मणाम् । यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे" । एवमायुर्वेदं प्रशस्य तस्य निरुक्तिस्तत्र दर्शिता यथा "हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते । शरीरेन्द्रियसत्त्वात्मसंयोगधारि जीवितम् । नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते । तस्यायुषः पुण्यतमो वेदो वेदविदां मतः । वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः" ।

एवं बहूनामायुर्वेदानां सत्त्वेऽपि तेषां विरलप्रचारतया लुप्तप्रायत्वात् सुश्रुतचरकयोर्लोके प्रचाराच्च तन्मतविषयास्तावत् संक्षेपेणोच्यन्ते । तत्र सुश्रुतस्यायुर्वेदस्याष्टाङ्गत्वम् तच्च अष्टाङ्गशब्दे १२१ पृष्ठे शल्यं शालाक्यमित्यादि दर्शितम् । तच्छास्त्रस्य प्रयोजनं रोगचिकित्सा सा च पुरुषविषयैवेति पुरुषस्वरूपतदुत्पत्तिगर्भादिक्रमेणाभिधाय तदीयशरीरसंस्थानं रोगनिदानरोगोपशमनद्रव्यादीनि क्रमेणोक्तानि । तदेतत् संक्षेपेण सुश्रुते उक्तम् "अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रिया सोऽधिष्ठानम्, कस्मात् ? लोकस्य द्वैविध्यात् । लोको हि द्विविधः स्थावरो जङ्गमश्च । द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात् । पञ्चात्मको वा । तत्र चतुर्व्विधो भूतग्रामः स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः । तत्र पुरुषः प्रधानं तस्योपकरणमन्यत् । तस्मात् पुरुषोऽधिष्ठानम् । तद्दुःखसंयोगा व्याधय इत्युच्यन्ते । ते चतुर्व्विधा आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति । तेषामागन्तवोऽभिघातनिमित्ताः । शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः । मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति । स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः । त एते मनःशरीराधिष्ठानाः । तेषां संशोधनसंशमनाहाराचाराः सम्यक् प्रयुक्ताः निग्रहहेतवः । प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च । स षट्सु रसेष्वायत्तो रसाः पुनर्द्रव्याश्रयाः । द्रव्याणि पुनरोषधयस्ताः द्विविधाः स्थावरा जङ्गमाश्च । तासां स्थावराश्चतुर्व्विधाः । वनस्पतयो वृक्षा वीरुध ओषधय इति । तास्वपुष्पाः फलवन्तो वनस्पतयः । पुष्पफलवन्तो वृक्षाः । प्रतानवत्यः स्तम्बिन्यश्च वीरुधः । फलपाकनिष्ठा ओषधय इति । जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः । इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः । तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तो जङ्गमेभ्यश्चर्म्मनखरोमरुधिरादयः । पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः । कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्त्वयनादयः संवत्सरविशेषाः । त एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमनप्रतीकारहेतवः प्रयोजनवन्तश्च । भवन्ति चात्र । शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः । चये कोपे शमे चैव हेतुरुक्तश्चिकित्सकैः । आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि । मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया । शरीरपतितानान्तु शारीरवदुपक्रमः । मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः । एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम् । तत्र पुरुषग्रहणात्तत्सम्भवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांससिरास्नायुप्रभृतयः । व्याधिग्रहणाद्वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः सर्व्व एव व्याधयो व्याख्याताः । ओषधिग्रहणात् द्रव्यगुणरसवीर्य्यविपाकप्रभावाणामादेशः । क्रियाग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्म्माणि व्याख्यातानि । कालग्रहणात् सर्व्व-

शाः । समाः स्वर्य्यात् पूर्व्ववत् स्यादेभ्योऽप्यायुरथांशजे । इष्टपञ्चसमाघ्निघ्ना दशभक्ताश्च यत् फलम् । वर्षमासादिकं ज्ञेयं भवेद् द्वादशभिः स्फुटम् । जीवे परायुः षष्ठांशो मन्दायुः परमोच्चगे । लग्नभशसमन्वायुर्द्द्याद्दीर्घ्यं युरं च भैः । सर्वमर्द्धं तृतीयोऽंश प्रादः पञ्चाङ्गभागकौ । व्ययाद्वाम विलोमेन पापे स्वर्द्धं शुभग्रहे । एकभावगतानां यो बली भागहरस्तु सः । अस्तमस्तु गतोऽन्ति त्यक्ता शुक्रशनैश्चरौ । कुजन्यक्षा गतभस्यैस्त्रिभागो नाश्यते निजः । लग्ने सपापैः लग्नस्थभागशमाहरायुषः । अष्टोत्तरः शतांशः स्यात्क्षीणं सौम्येक्षिते दलम् । उच्चवक्रगतास्त्रिघ्नं द्विघ्नं स्वांशोत्तमादिगाः । दद्युरायुर्महात्मेवकेतुभौ नित्यं स्वमादिगाः । अपि त्रिघ्न कारुणदाः केन्द्रादाविति केचन । लग्ने सपापे हानिर्यो नागारंशभवायुषि । हानिद्वयेऽधिकैव स्याद्गुणोऽप्येवं पराङ्गगो । स्वार्काःपरायुर्नरदन्तिनोः १२० स्याहन्ता २२ हयानां च जिना २४ हमाद्रेः । खरोष्ट्रयोस्तत्त्वसमाः २५ गुणोऽर्का १२ व्याघ्राद्यजादेर्हि रूपाः १६ परायुः । आयुर्भवेत् समानीय स्वस्वपूर्णायुषा हतम् । स्वपरायुर्हृतं स्पष्टं गजाद्यायुर्भवेदिति । दीपस्तैलादियुक्तोऽपि यथा वाते विनश्यति । अजितेन्द्रियतापथ्यैरेवमायुर्विनश्यति" ।

अत्र हयानां दन्तैर्वयोज्ञानं तथोक्तमश्वशब्दे ५०३ पृष्ठे जयदत्तकृताश्वशास्त्रात्तद्विशेषोऽव गन्तव्यः । दन्ताद्यालिङ्गवर्णा इतो ह्युक्तम्

इत्थमायुश्च सदाचारादेव, अपथ्याजितेन्द्रियादिभ्यस्तु आयु सत्त्वेऽपि नाश उक्तजातकपद्धतिवचनात् अतएव भा० आनु०प० १०४ अध्याये सदाचारादितएव आयुर्वृद्धिरुक्ता "शतायुरुक्त पुरुष शतवीर्य्यश्च जायते । कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ आयुष्मान् केन भवति अल्पायुर्वाऽपि मानवः । केन वा लभते कीर्त्तिं केन वा लभते श्रियम् । तपसा ब्रह्मचर्य्येण जपहोमैस्तथौषधैः । कर्म्मणा मनसा वाचा तन्मे ब्रूहि पितामह ॥ भीष्म उवाच । अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि । अल्पायुर्येन भवति दीर्घायुर्वाऽपि मानवः । येन वा लभते कीर्त्तिं येन वा लभते श्रियम् । यथा वर्त्तयन् पुरुषः श्रेयसा सम्प्रयुज्यते । आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् । आचाराल्लभते कीर्त्तिं पुरुषः प्रेत्य चेह च । दुराचारो हि पुरुषो नेहायुर्विन्दते महत् । त्रस्यन्त्यस्मात् भूतानि तथा परिभवन्ति च । तस्मात् कुर्य्यादिहाचारं यदीच्छेद्भूतिमात्मनः । अपि पापशरीरस्य आचारो हन्त्यलक्षणम् । आचारलक्षणो धर्म्मः सन्तश्चारित्रलक्षणाः । साधूनाञ्च यथा वृत्तमेतदाचारलक्षणम् । अप्यदृष्टं श्रवादेव पुरुषं धर्म्मचारिणम् । भूतिकर्म्माणि कुर्व्वाणं तं जनाः कुर्व्वते प्रियम् । ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः । अधर्म्मज्ञा दुराचारास्ते भवन्ति गतायुषः । विशीला भिन्नमर्य्यादा नित्यं सङ्कीर्णमैथुनाः । अल्पायुषो भवन्तीह नरा निरयगामिनः । सर्व्वलक्षणहीनोऽपि समुदाचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति । अक्रोधनः सत्यवादी भूतानामविहिंसकः । अनसूयुरजिह्मश्च शतं वर्षाणि जीवति । लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः । नित्योच्छिष्टः सङ्कुसुको नेहायुर्व्विन्दते महत् । ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् । उत्थायाचम्य तिष्ठेत पूर्व्वां सन्ध्यां कृताञ्जलिः । एवमेवापरां सन्ध्यां समुपासीत वाग्यतः । नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् । ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् । तस्मात्तिष्ठेत्सदा पूर्व्वां पश्चिमाञ्चैव वाग्यतः । ये न पूर्व्वामुपासीरन् द्विजाः सन्ध्यां न पश्चिमाम् । सर्व्वांस्तान् धार्म्मिको राजा शूद्रकर्म्माणि कारयेत् । परदारा न गन्तव्याः सर्व्ववर्णेषु कर्हिचित् । न हीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् । यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्म्मिताः । तावद्वर्षसहस्राणि नरकं पर्य्युपासते । प्रसाधनञ्च केशानामञ्जनं दन्तधावनम् । पूर्व्वाह्ण एव कार्य्याणि देवतानाञ्च पूजनम् । पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत् कदाचन । नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते । नाज्ञातैः सह गच्छेत नैकोन वृषलैः सह । पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च । वृद्धाय भारतप्ताय गर्भिण्यै दुर्ब्बलाय च । प्रदक्षिणं प्रकुर्व्वीत परिज्ञातान् वनस्पतीन् । चतुष्पथान् प्रकुर्व्वीत सर्व्वानेव प्रदक्षिणान् । मध्यन्दिने निशाकाले अर्द्धरात्रे च सर्व्वदा । चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च । उपानहौ च वस्त्रञ्च धृतमन्यैर्न धारयेत् । ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत् । अमावास्यां पौर्णमास्यां चतुर्द्दश्याञ्च सर्व्वशः । अष्टम्यां सर्व्वपक्षाणां ब्रह्मचारी सदा भवेत् ॥ वृथा मांसं न खादेत पृष्ठमांसं तथैव च । आक्रोशं परिवादञ्च पैशुन्यञ्च विवर्ज्जयेत् । नारुन्तुदः स्यान्

भवतीह चाष्टौ । ग्रहैस्त्रिभिर्मीनगतैरष्टमस्थैः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिः । अन्यैस्त्रिभिर्गगनदृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम् । चक्रे शनिर्मीनगतेह मयातश्छिद्रे च षष्ठे च चतुष्टये वा । कुजेन सम्प्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् । सौरिस्मरस्थे यदि वा विलग्ने जन्मस्थलग्ने शशिवृश्चिके वा । सौम्येषु केन्द्रोपगतेषु सद्यो जातस्य मृत्युर्यवनोपदिष्टः । नीचस्थे देवपूज्ये तु भौमक्षेत्रगतेऽथ वा । षष्ठित्रयेऽपि जातस्तु मासान्मृत्युं स गच्छति । नक्षत्रसन्धौ तिथिराशिसन्धावेकत्र तावद्भवतस्त्रिपञ्चात् । जातश्च मृत्युं समुपैति सद्यः शुक्रेऽह्नि जीवे इति नन्दिकोक्तम् । मघ्नां जातस्यार्कलग्ने कुजे वा गण्डान्ते वा मृत्युयोगेऽथ वापि । भौमे हन्ति प्राणिनां तत्क्षणेन जीवेक्षिते चेन्न भवेत् प्रजातः । सौम्योदये तद्दिवसे शशेन्दौ होरेश्वरे चारभूने शशाङ्के । जात सुखी ब्रह्मपद प्रयाति प्रभावनाद्यैरिह मन्त्रसिद्धा । वर्गोत्तमे लग्नगते कुलीरे केन्द्रे गुरौ भूमिसुते कलत्रे । सिंहासनांशे भृगुजे विशेषाद्ब्रह्मवनाद्यैरमितायुरेति । कर्मान्त्यलग्ने सबुधे कलत्रे जीवे यदा गोपुरभागयुक्ते । मृद्वंशके वा दिननाथपुत्रे जातस्त्वशत्यायुरुपैति जन्तुः । देवलोकांशके शुक्रे केन्द्रस्थे धरणीसुते । सिंहासनांशके जीवे केन्द्रे जातस्त्वसंख्यकः । उत्तमांशे भृगौ केन्द्रे शनौ पारावतांशके । स्वर्गलोके गुरौ केन्द्रे त्वौपमाधारसंख्यक । गोपुरांशे गुरौ केन्द्रे शुक्रे पारावतांशके । त्रिकोणे कर्किलग्ने तु युगान्त स तु जीवति । चापांशे कर्किलग्ने च तस्मिन् देवेन्द्रपूजिते । त्रिचतुर्भिर्ग्रहैः केन्द्रे जातो ब्रह्मपद लभेत् । तृतीयैकादशे शुक्रे गोपुराख्यांशकान्विते । वृषे वर्गोत्तमे लग्ने ब्रह्मणः परम पदम् । लग्ने शुक्रे गुरौ कामे कर्मांशेऽमरनायके । चापमेषांशके लग्ने जातो याति परं पदम् । पञ्चमे बुधसंयुक्ते गोपुराख्यांशकान्विते । गुरौ घटे विलग्नेऽस्मिन् जातो ब्रह्मपदं लभेत् । केन्द्रे गुरौ लाभगतेऽर्कपुत्रे धने रवौ मन्दयुते कलत्रे । भाग्ये धराजनुयुतेऽत्र जातो युगान्तकाल समुपैति मर्त्यः । त्रिकोणगौ जीवबुधौ विशेषाल्लग्ने वृषे तत्र युते धराजे । निशाकरे गोपुरभागयुक्ते जात सहस्रद्वयवर्षमेति । पक्षे सिते जन्म यदाह्नि काले केन्द्रे गुरौ वा शशिभे विलग्ने । दारे कुजे भानुसुते सुखस्थे जातस्तु जीवेद्युतान्द्वसंख्यम् । जीवमन्दारशुक्राणामन्योन्यं केन्द्रसंभवे । त्रिकोणे वा यदा याते जातस्त्वयुतवत्सरैः ।

शुभैर्युक्ते चतुष्केन्द्रे पापैः षट्त्रिभवान्वितैः । सिंहलग्ने यदा जातो जीवेत् षड्युतानि सः । कर्कादिस्थैर्ग्रहैः सर्वैर्गुरुचन्द्रादिभिर्यदा । शन्यन्तैः परमोच्चस्थैश्चिरञ्जीवी भवेन्नरः । शन्यादिभौमपर्यन्ता लग्नादौ खचराः स्थिताः । वैशेषिकांशसंयुक्ता जातस्त्वमरसन्निभः । आकल्पं जीवति नरो मृगे लग्ने कुजादिकाः । रव्यन्ताः खचरा वर्गे लोके जीवेऽह्नि जन्मनि । मेषान्त्यलग्ने सगुरौ भृगौ वा निशाकरे गोधनमध्यमांशे । सिंहासनांशे यदि वा धराजे जातस्त्वसंख्यायुरुपैति मर्त्यः । स्थिरे रवौ सोमसुतेन युक्ते चन्द्रे वृषस्थे मिथुने च शुक्रे । गुरौ कुलीरे यदि वा विलग्ने शनौ तुलायां मुनिसाम्यमेति । देवलोकांशके मन्दे भौमे पारावतांशके । सिंहांशके गुरौ लग्ने जातो मुनिसमो भवेत् । मेषलग्ने रवौ माने जीवे लोक्षसमन्विते । त्रिपञ्चायगते पापे जातो मुनिसमो भवेत् । इति चिन्तामणौ प्रोक्ता आयुःसंख्या मनीषिणाम् यदुक्तं पूर्व्वकैः सर्व्वैस्तदेव मयाऽधुना" । पारिजातांशाद्यास्तु सर्व्वा॰ चिन्त दर्शिताः । "मूलत्रिकोणकोणोच्चस्वर्क्षकेन्द्रेशसमांशकाः । सप्तवर्गोद्भवाः स्वामस्वाधिमित्रांशमित्रकाः । वर्गा इमे दश प्रोक्ताः पूर्व्वाचार्य्यैर्महर्षिभिः । वर्गद्वयादिसंयोगैः पारिजातादिसंज्ञकाः । उत्तमं तु त्रिवर्गैक्यं चतुर्वर्गं तु गोपुरम् । वर्गपञ्चकसंयोगे सिंहासनमिहोच्यते । वर्गद्वयं पारिजातं षट्कं पारावतांशकम् । सप्तकं देवलोकाख्यं स्वर्गलोकस्तथाऽष्टकम् । ऐरावतन्तु नवकं फलं तेषां पृथक् पृथक्" । जातकपद्धतौ तु रिष्टभङ्गसहितायुर्योगविशेषः गणनाद्यायुःप्रमाण सहित उक्त यथा

"लग्नसप्तमगौ पापौ चन्द्र पापयुतो यदा । शुभग्रहैर्न दृष्ट स्यादचिरान्मृत्युकारक । क्षीणेन्दौ व्ययगे पापैर्लग्नाष्टमनिवासिभिः । केन्द्राणि शुभहीनानि यदि चेत् तदा मृतिः । पापयुक्त शशी लग्नसप्ताष्टद्वादशस्थित । केन्द्रान्यस्थानगैः सौम्यैर्न दृष्टो मृत्युदायक । पापे राश्यन्तगे सन्ध्याकाले होरा विधोर्यदा । मृत्युर्वा स्याच्चन्द्रपापैर्युते सर्व्वचतुष्टये । कर्कान्त्यगे चक्रपूर्व्वे चतुर्थे पापवत्युते । मृत्युर्षाष्टमकेन्द्रस्थैः पापैः क्षीणे विधौ तनौ । षष्ठद्वादशगैः पापैरथवा द्व्यष्टसंस्थितैः । लग्ने वा पापमध्यस्थे सप्तमे वा मृतिं व्रजेत् । चन्द्रे षष्ठेऽष्टमे वापि मरणं पापवीक्षिते । शुभैरवेक्षिते वर्षात्पञ्चानुमिश्रैश्चाष्टकं । शुभैः षष्ठाष्टगे पापैस्त्रिभिः प्रविलोकिते । मासान् मृत्युः

देवभक्तस्तनम् अत्रास्तुष्वे यत्र पञ्चान्तं सत्सार्थनामोक्तं खलम् । सामवेदिनाश्चैतत् पाठ्यं वेदभेदेऽन्यदाकारे ज्ञेयम् ।

**आयुस्** न० इण–उसि णिच्च । जीवितकाले "आयुरारोग्य मतुल देहि देवि ! नमोऽस्तु ते" देवीस्तुति । "आयुर्देहातिगैः पीतं रुधिरं च पतत्त्रिभिः" रघु । "चतुर्थमायुषोभागमुषित्वाद्यं गुरौ द्विज । द्वितीयमायुषोभागं कृतदारो गृहे वसेत्" मनु० "समारुरुक्षुर्दिवमायुषः क्षये" रघु । "आयूंषि त्वचु निर्भिद्य प्राणस्तानिरमोचयत्" भट्टि० । "अष्टमं चायुषः स्थानमष्टमादष्टमञ्च यत्" इति पराशरोक्तेः जन्मलग्नावधिके अष्टमस्थाने तृतीयस्थाने च तद्विवेच्यम् । स्थानविशेषे च ग्रहविशेषयोगदृष्ट्यादिवशात् आयुर्विशेष अष्टमस्थाने चिन्तनीयपदार्थसहित "सर्वा० चिन्ता० दर्शित० । यथा "मरणाज्जीवितमरणं गुह्यस्थानं च मरणहेतुश्च । अन्तर्मुखमरणदेशं परिभवमपि चिन्तयेत् प्राज्ञः" । रन्ध्रेश्वरे पापयुतेऽन्त्यराशावल्पायुरस्येति वदन्ति षष्ठे । तत्रापि लग्नेश्वरयोगजाते स्वल्पायुरस्येति वदन्ति सन्तः । स्वक्षेत्रसंस्थे सति रन्ध्रनाथे दीर्घायुराहुर्मुनयो महान्तः । मन्देन वा चिन्त्यमशेषमायुः स्वक्षेत्रमित्रोच्चगृहस्थितेन । रन्ध्रेश्वरेणापि युते विलग्ननाथे रिपौ वा व्ययराशियुक्ते । षष्ठान्त्यपे वा यदि लग्नयुक्ते दीर्घायुरस्येति शुभेक्षितश्चेत् । कर्मेश्वरेणापि विचिन्त्यमायुर्दीर्घं स्वतुङ्गस्वोच्चयुतेन तेन । केन्द्रस्थितैः कर्मविलग्नरन्ध्रनाथैस्तथैवायुरुदाहरन्ति । मोक्षप्रषड्व्योमचरैस्त्रिभिर्वा सभानुजैः केन्द्रगतैस्तथैव । स्वक्षेत्रकोणादिगतैर्विशेषाद्वदन्ति दीर्घायुरुदारचित्ताः । चतुरस्रे शुभैर्युक्ते लग्नेशे शुभसंयुते । गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् । केन्द्रान्विते विलग्नेशे गुरुशुक्रसमन्विते । ताभ्यां निरीक्षिते वापि दीर्घमायुर्विनिर्दिशेत् । त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः । लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् । षट्सप्तरन्ध्रभावेषु शुभग्रहसहितेषु च । त्रिषडायेषु पापेषु पूर्णमायुर्विनिर्दिशेत् । रन्ध्राधिपे विलग्नस्थे गुरुशुक्रेक्षिते युते । लग्नेशे केन्द्रराशौ वा दीर्घमायुर्विनिर्दिशेत् । रन्ध्राधिपे तु केन्द्रस्थे गुरुशुक्रेक्षिते युते । लग्नेशे बलसंयुक्ते दीर्घमायुर्विनिर्दिशेत् । लग्नाधिपो यदा केन्द्रे लग्नादेशादशालये । सर्वग्रहकृतं रिष्टमेकोऽपि विलयं नयेत् । उच्चान्वितैस्त्रिभिः खेटैर्लग्नरन्ध्रेशसंयुतैः । रन्ध्रे पापविहीनैश्च दीर्घमायुर्विनिर्दिशेत् । रन्ध्रस्थितैस्त्रिभिः खेटैः स्वोच्चमित्रस्वगेहगैः । लग्नेशे बलसंयुक्ते दीर्घमा० । पारावतादिभागस्थाः पापाः सर्वे शुभास्तथा । केन्द्रत्रिकोणनिलयाः पूर्णमायुर्विनिर्दिशेत् । षष्ठाष्टमव्यये पापा लग्नेशे दुर्बले यदि । अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते । क्रूरषष्ठांशके वापि रन्ध्रेशे भानुजेऽपि वा । पापान्विते पापदृष्टे स्वल्पमायुर्विनिर्दिशेत् । चतुष्टयगते पापे शुभदृष्टिविवर्जिते । बलहीने विलग्नेशे स्वल्पमायुर्विनिर्दिशेत् । व्ययार्थौ पापसंयुक्तौ शुभदृष्टिविवर्जितौ । क्रूरषष्ठांशगौ वापि स्वल्पमायुर्विनिर्दिशेत् । आयुर्योगस्त्रिधा प्रोक्तः स्वल्पमध्यचिरायुषः । द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् । सप्तत्याः प्राक्, ततः पूर्णमायुरत्र वदन्ति हि । अल्पायुर्दिननाथस्य शत्रौ लग्नाधिपे यदा । समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत् । बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे । षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम् । शुभे केन्द्रत्रिकोणस्थे शनौ बलसमन्विते । षष्ठे वाप्यष्टमे पापे मध्यमायुरुदाहृतम् । लग्ने त्रिकोणे केन्द्रे वा मध्यमायुः स मिश्रिते । अल्पायुर्योगजातानां विपत्पाके मृतिप्रदः । मध्यमे प्रत्यरिभे स्यान्मृतिं दद्याद्विशेषतः । अष्टमे यद्दशा कष्टा पूर्णायुर्योगसंज्ञके । योगायुरिति निश्चित्य जातस्यैवं वदेद्बुधः । आयुर्विलग्नाधिपतौ बलेन हीने धरासूनुसहितेऽथ सौम्ये । युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण वा तन्मरणं विशेषात् । रन्ध्राङ्गनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ सचन्द्रौ । व्रणेन युद्धे मृतिमाहुरार्याः शस्त्रेण वा तन्मरणं विशेषात् । रन्ध्राङ्गनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ समन्दौ । तद्भुक्तिकालेऽप्यथ वा विपाके शस्त्रेण चौरैर्मरणं प्रयाति । रन्ध्राङ्गपौ वाहननाथयुक्तौ तयानात् मृतिं तस्य वदन्ति तज्ज्ञाः । मृतिं स्वजीर्णाद्गुरुसंयुतौ तौ देहेशजीवौ रिपुगावजीर्णात् । लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते स्वजीर्णात् । देहेश्वरे वाहनवित्तभावनाथान्विते वा मरणं स्वजीर्णात् । रन्ध्रेशयोगान्मरणं दशायामन्तर्दशायामथ वा वदन्ति । पित्रादिभावाधिपयोगदृष्ट्या पित्रादिकानां मरणं तथैव । मृत्यङ्गपौ भानुसुतेन युक्तौ दुस्थानगौ वा विषभक्षणेन । राहुध्वजाभ्यां सहितौ च दुस्थावुद्बन्धमाप्तस्य मृतिं वदन्ति । षष्ठेश्वरे भानुसुते सराहुकेतौ मृगाद्भीतिमुदाहरन्ति । जीवेन युक्ते गजभीतिमस्य जातस्य चन्द्रेण युतेऽश्वभीतिम् । सूर्यान्विते ताहृशभानुपुत्रे मृगात्खभक्षात् शुनकात् सभौमे । षष्ठस्थिते भानुसुतेऽपि चैवं विना स्वतुङ्गस्वगृहं सखेटे । स्वक्षेत्रभाग्ये शविलग्ननाथास्त्रिकोणगाः केन्द्रगताश्च सर्वे । भुक्तौ यदा तत्परिपाककाले

पिता षड्भिर्मातृस्थितैश्च मातृः । रन्ध्रे शशाङ्के फणिनाथयुक्ते क्षीणे स्वपस्मारयुतं वदन्ति । तत्र स्थिते क्षीणबले शशाङ्के पिशाचपीडा च जलाच्च विपाश । भौमार्कि-मन्दान्यतमेन युक्ते क्षीणे शशाङ्के निधनस्थितेऽपि । दुःस्थे स्वपस्मारभयान्मृतिःस्यात्पिशाचबाधादथ वा क्षतिस्तु । रन्ध्रे धराज्ञौ यदि वा शनौ तौ चातुर्थिका-पीड़नमाशु तस्य । रन्ध्रेश्वरेणापि युते तथैव क्रूरादि-षड्वर्गयुते तु सत्यम् । नीचस्थिते वाऽमरनायके वा षष्ठाष्टमस्थे यदि पापदृष्टे । राज्ञां प्रकोपानुमरणं विषश्च तत्पीडया वित्तविनाशमेति" । अधिकमल्पायुः-शब्दे ४१२ पृष्ठे उक्तम् । अस्य पुरुषादिपूर्व्वपदकत्वे अच् समा० "पुरुषायुषजीविन्य" रघुः । नरायुषम् मनुष्यायुष मित्यादौ वा० अच् समासान्तः ।

आयुर्योगश्च ज्यो० चि० दर्शितः यथा "अथायुर्योगः । केचिद्योगं प्रशंसन्ति दशा केचिद्वदन्ति हि । तद्विना चायुषां ज्ञानं न शक्यन्तु मनीषिभिः । त्रिविधश्चायुषो योगः स्व-ल्पायुर्मध्यमोत्तमः । द्वात्रिंशत्पूर्व्वमल्पन्तु तदूर्द्ध्वं मध्यमं भवेत् । आ सप्ततेस्तदूर्द्ध्वन्तु दीर्घायुरिति सम्मतम् । उत्तमायुः शतादूर्द्ध्वं ज्ञाने शंसन्ति तद्विदः । आ द्वा-दशाब्दाज्जन्तूनामायुर्ज्ञानं न शक्यते । जपहोमचिकित्साद्यै-र्बालरक्षां तु कारयेत् । पित्रोर्दोषैर्मृता केचित्केचिद् बालग्रहैरपि । अपरे रिष्टयोगाच्च त्रिविधाऽकालमृत्यवः । जन्मतः प्रयत्नेनैव बालानां शुभवर्द्धनम् । कथयेदपरेषां तु तथा योगैर्निरूपितः । अल्पायुर्लग्नपे नाशे यत्नो मध्य-स्तु मध्यमे । मित्रे लग्नेश्वरे तस्य दीर्घमायुरुदाहृतम् । अल्पायुर्योगजातस्य विपत्तारे मृतिं वदेत् । जातस्य मध्यमे योगे प्रत्यरौ तु क्षतिर्भवेत् । दीर्घायुर्योगजातानां वधमे तु क्षतिर्भवेत् । त्रिषु योगेषु सर्व्वेषु प्रत्येकं त्रिविधं भवेत् । अल्पायुरल्पमध्यं तु पूर्णायुस्त्रिविधं स्मृतम् । मध्यमादल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् । दीर्घायुषोऽल्पमध्ये तु पूर्णायुस्त्रि-विधं भवेत् । एवं नवविधं प्रोक्तमायुषां तु विनिर्णये । पञ्च-म्याराद्दशा मृत्युं दद्यात् षष्ठी गुरोस्तथा । शनेश्चतुर्थ्यां मृत्युः स्याद्दशा राहोश्च सप्तमी । विपत्प्रदशा कष्टा प्रत्यरीश-दशा तथा । वधभेशदशा कष्टा पापा स्याद्दशुभेक्षिता । नीचारातिविमूढस्था विपत्प्रत्यरिनैधना । दशा दद्युर्मृतिं तस्य पापैर्युक्ता विशेषतः । राशिसन्धिषु ये जातास्ते बाला मृतजीविनः । पापदृष्टो सुतो वाऽपि निःसंशयमृतिप्रदः । गण्डान्तेषूद्भवो मर्त्त्यः पितृमातृकुलान्तकः । यदि जीवेत्स-गजाश्वो गजवाजिसमन्वितः । स्तोत्रगौ मातृनिशाकरौ वा क्रूरवर्गगौ क्रूरनिरीक्षितौ च । व्याधिं भरण्यापि वदन्ति तत्र मासैस्त्रिवर्षमात्रं त्वविलम्बमेतत् । चन्द्रात् चरे-षामरनाथभौमौ कुजादयो वा मरणं दशाहात् । उच्चाद्रे च जामित्रे यस्य स्याद्दारुणो ग्रहः । क्षीणचन्द्रे विलग्नस्थे सद्योऽहरति जीवितम् । आपोक्लिमे स्थिताः सर्व्वे ग्रहा बलविवर्ज्जिताः । एकमासं द्विमासं वा तस्यायुः समुदाहृतम् । विलग्नाधिपतिर्नीचे निधने चार्कसंयुते । सचन्द्रे च जीवनं विन्द्येन्मृतप्रायो भविष्यति । केतोरुदये पूर्व्वे पश्चाद्-स्ताग्निपतनमिषोतः । रौद्रे शर्वे च मुहूर्त्ते प्राणैर्मु-च्यते जन्तु । षड्घनपरिवेषकाले जातः पापान्विते विलग्नस्थे । लग्नेशे बलहीने जीवति पक्षत्रयं त्रिमासं वा । अधिपतिर्जन्मपतिर्लग्नपश्चास्तमुपागतो यस्य । लग्नावसानमरणं भवेत् कतिपयाहेन । सन्धि-चतुष्टयकाले जाते मृत्युः समादिशेत्तज्ज्ञः । पापयुते दृष्टे वा शीघ्रं सौम्यैरदृष्टयुते । राहौ केन्द्रे पापयुक्ते-क्षिते वा क्षिप्रं नाशं याति सौम्यैरदृष्टे । पापैः केन्द्रे चार्कलग्ने त्रिकोणे सौम्यैः षष्ठे चाष्टमेऽन्त्ये वदन्ति । जातः क्षीणे शीतगौ लग्नसंस्थे पापैर्दृष्टे नाशमाशु प्रयाति । उच्चस्थितो मेषराशिं च हित्वा राहुर्युक्तो भूमिप प्राप्य नाशं । लग्नात्सप्तान्त्यौ पापयुक्तौ यदि स्यात्तत्प्रजान्ते वा विनश्येत् क्षणेन । लग्नाद्यष्टे चाष्टमे पापचारे क्षीणे क्षीणे त्वष्टमाब्द च जीवेत् । केन्द्रे चन्द्रात्पापयुक्ते रसौम्यैः स्वर्गं याति प्रोच्यते वत्सरेण । जन्माधिपे लग्नगे क्रूर-युक्ते पञ्चत्वार्किर्वाष्टमे जीववर्गे । षष्ठे वर्षे द्वादशे वाऽष्टमे वा सन्धौ राशेर्जातको मृत्युमेति । षष्ठेऽष्टमे वा द्विमनौ च यस्य क्षीणे चन्द्रे पापयुक्तेऽथ वापि । सौम्यैर्दृष्टे त्वष्ट-माब्दश्च जीवेत् पापैः सौम्यैर्मिश्रितैस्तद्वच्च स्यात् । जीवे-विलग्ने मिथुने तुलायां शुक्रेण युक्ते शशितनुना च । पापैर्दृष्टे मृत्युराशिस्थिते वा जीवेद्वर्षं चाष्टम चैव बालः । लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः पापा-न्तस्थे निधनहिबुके द्यूनयुक्ते च चन्द्रे । एवं लग्ने भवति मदनच्छिद्रसंस्थे च पापे माता साकं यदि च न शुभैर्वीक्षितः शक्तिमद्भिः । राहुग्रस्ते शीतरश्मौ विलग्ने क्रूरे युक्ते चाष्टमे भूमिपुत्रे । माता सार्द्धं चन्द्रवच्चारकरेण पक्षौ वा तेनायुः मृत्युं प्रयाति । अस्तकृते दिनपतौ रविजे विलग्ने भौमे ऽथ वापि निधनं प्रयाति त्रिवर्षात् । एवं स्थितेऽपि द्विमनाथशुभैरदृष्टे राहुयुते च निधन

धर्मोः सेकः सर्पिषा च तथाप्यति" । इति गजायुर्वेदः ।

अथाश्वायुर्वेदः तत्रैव "अश्ववाहनसारं च वक्ष्येऽश्वस्य चिकित्सितम्" इत्युपक्रम्य "दधो निम्बपटोल्यौ च गुडूची च समार्जिका । सिंहास्यकण्टकारी पिप्पली स्वेदश्च शिरसस्तथा । हिङ्गुपुष्करमूलञ्च नागरं साम्लवेतसम् । पिप्पलीसैन्धवयुतं शूलघ्नमुष्णवारिणा । नागराऽतिविषा मुस्ता सानन्ता बिल्वमालिका । क्वाथमेषां पिबेद्वाजी सर्व्वातीसारनाशनम् । प्रियङ्गुलोध्रमधुभिः पिबेद्दधिरसं हयः । क्षीरं वा पञ्चकोलाढ्यं श्वासनादिप्रणश्यति । विस्फोटेषु च सर्व्वेषु श्रेयश्चादौ विशोधनम् । अभ्यङ्गावर्त्तनिस्नेहनस्यवस्ति क्रमः स्मृतः । ज्वरितानां तुरङ्गाणां पयसैव क्रियाक्रमः । लोध्रकरञ्जयोर्मूलं मातुलुङ्गाग्निनागराः । कुष्ठं हिङ्गु वचा रास्ना लेपोऽयं शोथनाशनः । मञ्जिष्ठा मधुकं द्राक्षा बृहत्यौ रक्तचन्दनम् । त्रपुषीबीजमूलानि शृङ्गाटककशेरुकम् । अजापयःशृतमिदं सशीतं शर्करान्वितम् । पीत्वा निरशनो वाजी रक्तमेहात् प्रमुच्यते । मन्याहनुनिगालस्थशिरःशोफोगलग्रहः । अभ्यङ्गः कटुतैलेन तत्र तेषूष शस्यते । प्रत्यक्पुष्पी तथा वह्निः सैन्धवं सौरभो रसः । कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति । निशे ज्योतिष्मती पाठा कृष्णकुष्ठं वचा मधु । जिह्वास्तम्भे च लेपोऽयं गुडमूत्रयुतो हितः । तिलैर्यष्ट्या रजन्या च निम्बपत्रैश्च योजिता । क्षौद्रेण शोधनी पिण्डी सर्पिषा व्रणरोपणी । अभिघातेन खञ्जन्ति येऽश्वास्तीव्रवेदनाः । परिषेकक्रिया तेषां तैलेनाशु रुजापहा । दोषकोपाभिघाताभ्यां पक्वजे लिङ्गिते तथा । शान्तिमत्स्नाम्बुपक्वाभ्यां पक्वमन्नमथ क्रमात् । अश्वत्थोडुम्बरप्लक्षमधूकवटवल्कलैः । प्रभूतसलिलक्वाथः सुखोष्णो व्रणशोधनः । शताह्वा नागरं रास्नामञ्जिष्ठाकुष्ठसैन्धवैः देवदारुवचायुग्मरजनीरक्तचन्दनैः । तैलं सिद्धं कषायेण गुडूच्याः पयसा सह । अक्षयं पक्विनसे च योज्यं सर्व्वत्र लिङ्गिते । रक्तस्रावो जलौकाभिर्नेत्रान्ते पित्तरोगिणः । खादिरोदुम्बराश्वत्थकषायेण च धावितम् । धात्रीदुरालभातिक्ताप्रियङ्गुकुसुमैः समं । गुडूच्या च कृतः क्वाथः सक्षौद्रो विनिमिते । शरत्काले शिशिरे श्राव्ये सम्यक्पोषे तथैव च । त्रिप्रकारेषि दोषे च सद्योवेधनमिष्यते । लोध्रकसुवर्च्चिकाकुष्ठरजनीतिलसर्षपैः । गवां मूत्रेण पिष्टैश्च मर्द्दनं कण्डुनाशनम् । शीतोमधुयुतः क्वाथो मालिकायाः सशर्करः । रक्तपित्तहरः पानात् पञ्चघृतोऽपि तथैव च । वसन्ते वसन्ते देयमश्वानां लवणं दिने । तथा भक्तवतां देया अतिपाते तु वारुणी । जीवनीयैः समधुरैर्मृद्वीकाशर्करायुतैः । सपिप्पलीकैः शरदि प्रतिपानं सपद्मकैः । विडङ्गपिप्पलीधान्यशताह्वालोध्रसैन्धवैः । सचित्रकैस्तुरङ्गाणां प्रतिपानं हिमागमे । लोध्रप्रियङ्गुकायुक्ता पिप्पली विश्वभेषजैः । सक्षौद्रं प्रतिपानं स्याद्वसन्ते कफनाशनम् । प्रियङ्गुपिप्पलीलोध्रयष्ट्याह्वैः समहौषधैः । निदाघे सगुडा देया मदिरा प्रतिपानके । लोध्रकाष्ठं सलवणं पिप्पल्यो विश्वभेषजम् । भवेत्तैलयुतैरेभिः प्रतिपानं घनागमे । निदाघेऽर्कतापार्त्ताः शरत्सु दुष्टशोणिताः । प्रावृट्सु श्लेष्मपुरीषाश्च पिबेयुर्वाजिनो घृतम् । पिबेयुर्वाजिनस्तैलं कफवाय्वधिकास्तु ये । स्नेहव्यापद्भवो येषां तेषां कार्य्यं विरूक्षणम् । त्र्यहं यवागूरूक्षा स्याद्भोजनं तक्रसंयुतम् । शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः । वर्षासु शिशिरे चैव वसौ यमकमिष्यते । गुर्व्वभिष्यन्दिभक्तानि व्यायामं स्नानमातपम् । वायुवेगञ्च वाहस्य स्नेहपीतस्य वर्ज्जयेत् । स्नानपानं सततं दृष्टमश्वानां सलिलागमे । अत्यर्थं दुर्दिने काले पानमेकं प्रशस्यते । युक्तं शीतातपे काले द्विः पानं श्रवणं सकृत् । ग्रीष्मे त्रिः स्नानपानं स्याच्चिरं तस्यावगाहनम् । निस्तुषाणां प्रदातव्या यवानां चतुराढकी । चणकव्रीहिमौद्गानां कलायान् वापि दापयेत् । अहोरात्रेण वाहस्य यवसस्य तुला दश । अष्टौ शुष्कस्य दातव्याश्चतस्रोऽथ बुषस्य वा । दूर्व्वा पित्तं, यवः कासं, बुषः श्लेष्मसंक्षयम् । नाशयत्यर्ज्जुनः श्वासं, तथा माषो बलक्षयम् । वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः । न रोगाः पीड़यिष्यन्ति दूर्व्वाहारं तुरङ्गमम् । द्वौ रज्जुबन्धौ कुर्व्वाणः पश्चयोरुभयोरपि । पश्चाद्बन्धश्च कर्त्तव्यो दूरकीलव्यपाश्रयः । वसेयुस्तास्तृते स्थाने कृतधूपनभूमयः । घनोपन्यस्तयवसाः सप्रदीपाः सुरक्षिताः । कृतवन्धाय कपयो धार्य्याश्चाश्वगृहे मृगाः" इत्यश्वायुर्वेदः । अधिकं जयदत्तकृतेऽश्वशास्त्रे द्रष्टव्यम् ।

अथ गवायुर्वेदः । अग्निपु० "गवाम्माहात्म्यमुक्तं हि चिकित्साञ्च तथा शृणु" इत्युपक्रम्य । "शृङ्गामयेषु धेनूनां तैलं दद्यात् ससैन्धवम् । शृङ्गवेरबलामांसीकल्कसिद्धं समाक्षिकम् । कर्णमूलेषु शूलेषु मञ्जिष्ठाहिङ्गुसैन्धवैः । सिद्धं तैलं प्रदातव्यं रसोनेनाथ वा पुनः । बिल्वमूलमपामार्गो धातकी च सपाटला । कुटजं दन्तमूलेषु लेपः शूलनाशनः । दन्तशूलहरैर्द्रव्यैर्घृतं

चापि विपाचितम् । सर्वरोगहरं ह्येयं जिह्वारोगेषु पू-
जितम् । शृङ्गवेरं हरिद्रे द्वे त्रिफला च गलग्रहे ।
हृच्छूले वस्तिशूले च वातरोगक्षये तथा । त्रिफला घृतमिश्रा
च गवां पाने प्रशस्यते । अतीसारे हरिद्रे द्वे पाठाञ्चैव
प्रदापयेत् । सर्वेषु कोष्ठरोगेषु तथा शाखागतेषु च ।
शृङ्गवेरञ्च भार्गीं च कासश्वासे च दापयेत् । दातव्या
भग्नसन्धाने प्रियङ्गुर्लवणान्विता । तैलं वातहरं पित्ते मधु-
यष्टिविपाचितम् । कफे व्योषञ्च समधु रक्तपित्तकरोऽप्यतो ।
तैलाज्यं हरितालञ्च भग्नक्षतपरं ददेत् । माषास्तिलाः
सगोधूमाः पशुक्षीरं घृतन्तथा । एषां पिण्डी स-
लवणा वत्सानां पुष्टिदा स्मृता । बलप्रदा दृषाणां स्यात्
ग्रहनाशाय धूपकः । देवदारुवचामांसीहिङ्गुगुग्गुल-
सर्षपाः । ग्रहादिगदनाशाय एष धूपो गवां हितः । घण्टा चै-
व गवां कार्या धूपेनानेन धूपिता । अश्वगन्धातिलैः शुक्लैः
स्तेन गौ क्षीरिणी भवेत्" । इति गवायुर्वेद

अथ वृक्षायुर्वेदस्तत्रैव "वृक्षायुर्वेदमाख्यास्ये प्लक्ष-
श्चोत्तरतः शुभः । प्राग्वटो याम्यतस्त्वाम्र आप्ये ऽश्वत्थ
क्रमेण तु । दक्षिणादिशुत्पन्नाः समीपे कण्टकिद्रुमाः ।
उद्यानं गृहवासे स्यात्तिलानप्यथ पुष्पितान्" इत्युपक्रम्य
"अरिष्टाशोकपुन्नागा शिरीषाः सप्रियङ्गवः । अशोकक-
दलीजम्बुस्तथा बकुलदाडिमाः । सायं प्रातस्तु घर्मान्ते
शीतकाले दिनान्तरे । वर्षारात्रौ तु भूः शोषे सेक्तव्या रोपिता-
द्रुमाः । उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् ।
स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशान्तरम् ।
विफलाः स्युर्घनाः सर्वे शस्त्रेणादौ हि शोधनम् ।
विडङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा । फलनाशे
कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः । घृतशीतपयःसेकः फल-
पुष्पाय सर्वदा । आविकाजशकृच्चूर्णं यवचूर्णं
तिलानि च । गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत् ।
उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः । मत्स्याम्भसाऽ-
थ सेकेन वृद्धिर्भवति शाखिनः । विडङ्गतण्डुलोपेतं मत्स्यं
मांसं हि दोहदम् । सर्वेषामविशेषेण वृक्षाणां रोगमर्द-
नम्" । इहवर्षहितोक्तो वृक्षायुर्वेद आरामशब्दे दृश्यः ।
आयुर्वेदमधीते वेद वा उक्था० ठक् । आयुर्वैदिकः
आयुर्वेदाभिज्ञे त्रि० । आयुर्वेदे साधु कथा० ठक् ।
आयुर्वैदिक आयुर्वेदे साधौ त्रि० । [ न्तरी ।

**आयुर्वेदमय** पु० आयुर्वेदेन प्रचुरः प्राचुर्ये मयट् । धन्व-

**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि ।
आयुर्वेदाभिज्ञे चिकित्साशास्त्रस्य वेत्तरि वैद्ये ।

**आयुषज्** त्रि० आयुषा सजते सन्ज-क्विप् षत्वम् । आयुः
सम्बन्धे "सोमः पवत आयुषक्" ऋ०९,२५,५ । "पवस्व
देवायुषगिन्द्रं गच्छतु ते मदः" ऋ०९,६३,२२ ।

**आयुष्क** पु० आयुषा कायति कै-क । आयुषा प्रकाशमाने
प्रशस्तायुष्के ।

**आयुष्काम** त्रि० आयुः कामयते काम-णिङ्-अण्
उप०स० । आयुरभिलाषुके "अथात आयुष्कामीय रसा-
यनम्" इति सुश्रुत । "आयुष्कामेण यष्टव्यं न जातु पर-
योषिति" मनुः ।

**आयुष्कृत्** त्रि० आयु करोति कृ-क्विप् तुक् । आयुर्वृद्धि-
करे रसरसायनादौ च यूर्वृद्धिशब्दे ७७५ पृष्ठे तान्यु-
क्तानि । ट । आयुष्कर त्रत्यर्थत्र त्रि० स्त्रियां ङीप् ।

**आयुष्टोम** पु० आयु साधन स्तोम शाक०त० षत्वम् ।
१ आयु साधने त्र्यृचसदायात्मके स्तोमभेदे २ तत्स्तोमयुक्ते-
यागभेदे च ।

**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप् । १ चिरजीविनि "आयु-
ष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने" "आयुष्मन्त
सुतं सूते यशोमेधासमन्वितम्" मनु स्त्रियां ङीप् ।
२ विष्कम्भावधिके तृतीये योगे पु० । "विष्कम्भ प्रीतिरायु-
ष्मान्" ज्यो०ति० । आयुरिति शब्दोऽस्त्यस्य मतुप् । ३ आ-
युःशब्दयुक्ते मन्त्रभेदे "आयुष्मानिति शान्त्यर्थं जप्त्वा-
चैव समाहित" छ०प० । तत्र आयुष्यसूक्तशब्दे
दृश्यम् । भवदादिषु पाठात् तस्मिन् परे भवमार्थेऽपि तदि-
तादि । ततआयुष्मान् तत्रायुष्मान् ।

**आयुष्य** त्रि० आयु प्रयोजनमस्य "स्वर्गादिभ्यो यत्" पा०मा०
यत् । आयु साधने आयुर्वृद्धिशब्दोक्ते रसरसायन-
द्रव्यकर्मादौ । "आयुष्य प्राङ्मुखोभुङ्क्ते यश भुङ्क्ते दक्षिण-
मुखः" "इद यशस्यमायुष्यमिदं नि श्रेयस परम्" "धन्यं
यशस्यमायुष्यं स्वर्ग्य स्वातिथिपूजनम्" इति च मनुः
"आयुष्योऽन्या अस्यैव आत्मनिष्क्रयणो भवति" शत०ब्रा० ।

**आयुष्यसूक्त** न० कर्मधा० । "आयुष्मानिति शान्त्यर्थं जप्त्वा
तत्र समाहित" छ०प० उक्ते "आभ्युदयिकश्राद्धादिषु जप्ये
सूक्तभेदे तच्च सूक्तम् । "आयुर्विश्वायुर्विश्वमायुरशीमहि ।
प्रजात्वष्टधार निधेह्यस्मे यत जीवेम शरदां वयन्ते ।
आयुषे पवस्व वर्चसे मे पवस्व विदं पृथिव्या दिवोजनि-
त्राः शृण्वन्त्वापोऽध्यक्षरन्ती सोमोमोऽङ्गाय ममायुषे
मम प्रजावर्चसाय यजमानस्यास्यै आयुष्य राज्याय" भव-

वैश्वामित्रपौरणेति १०। एतेषां दशानां कुशिकानां विश्वामित्रपदानुवृत्तेर्मिथः समानप्रवरत्वम्। अगस्तीनाम् आगस्त्यदार्ढ्यच्युतेध्मवाहेति। दार्भवाहानामगस्त्यागस्त्यदार्ढ्यच्युतदार्भवाहेति १। शाम्भवाहानामागस्त्यदार्ढ्यच्युतशाम्भवाहेति २। सोमवाहनानामागस्त्यदार्ढ्यच्युतसोमवाहेति ३। यज्ञवाहानामागस्त्यदार्ढ्यच्युतयज्ञवाहेति ४। चतुर्णामगस्तीनामागस्त्यपदानुवृत्त्या मिथः समानप्रवरत्वमिति प्रवरनिर्णयः। अत्र संग्रहश्लोकाः। "एकोऽपि च ऋषिर्येषां प्रवरेष्वनुवर्त्तते। सगोत्रास्ते मिथोज्ञेया भृगुमङ्गिरसं विना। शुनकाः गृत्समदैः काश्यपैः शाण्डिल्या अपि। भारद्वाजास्तथा गर्गाः पञ्च तुल्यर्षिदर्शनात्"। तथा। "जमदग्निर्गौतमोऽगस्त्योभरद्वाजोऽत्रिकश्यपौ। विश्वामित्रोवशिष्ठश्च यद्गणप्रवरेष्वमी। वर्त्तन्ते ते सगोत्राः स्युः काश्यपैः शाण्डिल्यास्तथा। शुनकाः गृत्समदैर्भारद्वाजैश्च गर्गकाः" इति। अत्र प्रमादेन समानगणगोत्रप्रवरकन्योद्वाहे चान्द्रायणोत्तरकालं मातृवदेनां बिभृयात्। गर्भस्ते दुत्पन्नः स न दुष्यति। काश्यपो भवति गोत्रेण। आत्मा गच्छन् गुरुतल्पगः। तद्रूपमस्य चण्डालवद्भवति। ब्राह्मणमपि सगोत्रप्रवराय न देयमित्याहुः। प्रवरविज्ञानात् विद्वानो भवति एतत्समस्तं सम्प्रधार्य निश्चितं दास्यामीति तेषामुक्तं ते स्पृहयन्ति"।

तत्रैव अथ मतान्तरम्। "सर्वे समानगोत्राः स्युरिति गाणगारिः। कथं ह्यामोहनानि भवेयुः। कथं प्रयाजा इत्यपि। नानागोत्राः स्युरिति शौनकः। तन्त्रस्याव्यापित्वात् स्वस्पतिगोत्रान्यथाविशेषात्। तस्य राद्धि-रनुराद्धिः। सर्वेषां प्रवरास्तावन्तोन्तु आचार्यधर्मित्वात्। जामदग्न्या वत्सादय पञ्चार्षेयाः। यथा भार्गवच्यावनाप्नवानौर्वजामदग्न्येति। वत्सश्रीवत्सयोश्च तथैव। आर्ष्टिषेणानां भार्गवच्यावनाप्नवानौर्वार्ष्टिषेणेति। विदानां भार्गवच्यावनाप्नवानौर्वविदेति। यास्कवाधूलमौलमौकसार्करात्निमार्ष्टिसावर्णिशालङ्कायनदैवन्त्यायनानां भार्गववैतहव्यसावेदेति। शैन्यानां भार्गवशैन्यपार्थेति। मित्रयूनां भार्गवदैवोदासवाध्र्यश्वेति। शुनकानां भार्गवशौनकगार्त्समदेति। गौतमानामाङ्गिरसायास्यगौतमेति। उतथ्यानामाङ्गिरसौतथ्यगौतमेति। राहूगणानामाङ्गिरसराहूगणगौतमेति। सोमराजकीनामाङ्गिरससौमराजिगौतमेति। वामदेवानामाङ्गिरसवामदेवगौतमेति। बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति। पार्षदश्वानामाङ्गिरसपार्षदश्ववैरूपेति। अष्टादंष्ट्रा इत्येके ब्रुवते अतीत्याङ्गिरसम्। अष्टादंष्ट्रपौरुकुत्सत्रासदस्यवेति। ऋक्षाणामाङ्गिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति। कक्षीवतामाङ्गिरसगौतमौशिजकाक्षीवतेति। दीर्घतमसामाङ्गिरसौतथ्यदैर्घतमसेति। भारद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति। मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति। तार्क्ष्यं हैके ब्रुवते अतीत्याङ्गिरसं तार्क्ष्यभार्म्यश्वमौद्गल्येति। विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्यवेति। गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति। आङ्गिरसशैन्यगार्ग्येति वा। हरितकुत्सपिङ्गशङ्खदर्भभैमगवानाम् आङ्गिरसाम्बरीषयौवनाश्वेति। सङ्कृतिपूतिमाषतण्डिशम्भुशैवगवानाम् आङ्गिरसगौरुवीतसांकृत्येति। शाक्त्यगौरुवीतसांकृत्येति वा। काण्वानामाङ्गिरसाजमीढकाण्वेति। घोरमिहैके ब्रुवते अतीत्याजमीढम्। आङ्गिरसघोरकाण्वेति। कपीनामाङ्गिरसामहय्यवार्षंय्येति। अथ यौगन्धरयः। भरद्वाजाः शुङ्गाः कता शैशिरयः। तेषामुभयतः प्रवृणीते एकमितरोद्वावितरे त्रीनितरे। न हि चतुर्णां प्रवरोऽस्ति न पञ्चानाम्। आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि। कपी प्रसिद्धावुदिताविह द्वौ स्वतन्त्र एकस्त्वपरोऽस्वतन्त्र। तत्र स्वतन्त्रस्य कपेर्विवाहः मिथो भरभाजकुलेन चाहुः। अथात्रीणामात्रेयार्चनानसश्यावाश्वेति। गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति। विकितगालवकालवमनुतन्तुकुशिकानां वैश्वामित्रदेवरातौदलेति। श्रौमतकामकायनानां वैश्वामित्रदैवश्रवसदैवोदासेति। धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति। अजानां वैश्वामित्रमाधुच्छन्दसरौहिणेति। पूरणवारिधापयन्तानां वैश्वामित्रदेवरातपौरणेति। कतानां वैश्वामित्रकात्याक्षीलेति। अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति। रेणूनां वैश्वामित्रगाथिनरैणवेति। वेणूनां वैश्वामित्रगाथिनवैणवेति। शालङ्कायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति शालङ्कायनकौशिकेति वा। काश्यपानां काश्यपावत्सारासितेति। निध्रुवाणां काश्यपावत्सारनैध्रुवेति। रेभाणां काश्यपावत्साररैभ्येति। शाण्डिलानां काश्यपावत्सारदैवलेति शाण्डिल्यासितदैवलेति वा। वासिष्ठवसिष्ठानां योऽन्यउपमन्युपराशरकुण्डिनेभ्य। उपमन्यूनां वासिष्ठाभरद्वसिन्द्रप्रमदेति। पराशराणां वासिष्ठशाक्त्यपाराशरेति। कुण्डिनानां वासिष्ठमैत्रावरुण-

कौण्डिन्येति । अगस्तीमामागस्त्यदार्ढ्च्युतेध्मवाहेति । सोमवाहामामागस्त्यदार्ढ्च्युतसोमवाहेति । पुरोहितप्रवरो राज्ञाम् । अथ यदि सार्ष्टं प्रवृणीरन् । मानवैड-पौरूरवसेति प्रस्तावि । तान्यदक्षिणानि । तेषामन्ते ज्योतिष्टोमः पृष्ठशमनीयसहस्रदक्षिणः । अन्यो वा प्रजातदक्षिण । दक्षिणायता पृष्ठा शमनीयेरमिति विज्ञायते । स एव हेतुः प्रकृतिभाषे । "भृगूणां न विवाहोऽस्ति चतुर्णामादितोमिथः । शुनादयस्त्रयस्तेषां विवाहो मिथ इष्यते । यस्मात् ये गोतमादीनां विवाहोनेष्यते मिथ । दीर्घतमसत्योतथ्यः कक्षीवांश्चैव गोतमः । भरद्वाजाग्निवैश्यर्गाः गौङ्गाः कात्याश्च गैरिराः । एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै । उपमन्युश्च हरिता विष्णुवृद्धाः कण्वोऽगस्त्यो हारित सङ्कृतिः । यस्कश्चैषां मिथ इष्टोविवाहः सर्वैरन्येर्जामदग्न्यादिभिश्च । त्र्यार्षेयाणां त्र्यार्षेयसन्निपाते न विवाहः । त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते न विवाह । "एते समानगोत्राः स्युर्विश्वामित्रोऽनुवर्त्तते । अत्रयश्च वसिष्ठाश्च कश्यपाश्च पृथक् पृथक् । जमदग्निर्गोतमश्च भरद्वाजोऽत्रयस्तथा । विश्वामित्र कश्यपश्च वसिष्ठोऽगस्त्ययोऽष्टमा" । सप्तानामृषीणामगस्त्यष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते "एकएव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते । तावत् समानगोत्राः स्युर्भृगुमङ्गिरसं विना । वसिष्ठौ द्वौ च विज्ञेयौ ब्रह्मपुत्रोऽथ वारुण । मैत्रावरुणिरित्येष वासिष्ठोवि-पक्षान्तरात् । ब्रह्मात्मजात्क्ष्णपराशरव्यासशुकादय । ज्ञेयो विवेकस्त्वनयोर्द्वितीयात् कुण्डिनादय । अतएव भिन्नपदोरत्वात् भिन्नगोत्रप्रवरत्वाच्च वसिष्ठवासिष्ठगणयो-र्विवाहः । जामदग्न्यविश्वामित्राणां देवरातवर्ज सर्वत्र विवाह । अत्रिविश्वामित्राणां धनञ्जयवर्ज सर्वत्र विवाहः इति" प्रवरनिर्णय ।

अथ श्रौतप्रवराः तत्रैव "जामदग्न्यावीतहव्यागार्त्समदा वाध्र्यश्वावैन्या गोतमाः भरद्वाजाः कपयोहारीता काण्वा विरूपा मौद्गला विष्णुवृद्धा आत्रेया विश्वामित्राः कश्यपा वासिष्ठा आगस्त्या इत्यष्टादश गणाः स्युः । आदितः पञ्चगणा भृगवो भवन्ति । भृगुजामदग्न्या वत्सश्रीवत्सच्यवनाप्नवानाः । और्वसावर्णिजीवन्तिसाक्षास्यतिवाध्रायणवैरोहित्यावटमण्डुमादीनयोः-श्यार्ष्टिषेणानां भृगवो न मिथो विवाह्या । वीतहव्ययास्कवाधूलमौनमौकवावेदसा भृगवो न मिथो वि-वाह्याः । गार्त्समदशौनका भार्गवौ न मिथो विवाह्यौ । वाध्र्यश्वमित्रयवौ भार्गवौ न मिथो विवाह्यौ । वैन्यपार्थौ भार्गवौ न मिथो विवाह्यौ । आङ्गिरसायास्योतथ्यौशिजकाक्षीवततामदेयवहदुक्थान्ता गौतमा न मिथो विवाह्याः । आङ्गिरसबार्हस्पत्यभारद्वाज-कुकुटाग्निवेश्यसौव्यापमर्षत्तम्भसम्युद्गलशैशिरिचित्र-अवान्दनमात्यसत्तभकपिगार्ग्यकपिगर्भ्यान्ता भरद्वाजा न मिथो विवाह्याः । आङ्गिरसबरप्रमहायोहाजः कपयश्च न मिथो विवाह्याः । आङ्गिरसपौरु-पितार्षरोपयोवमाक्षमान्धातसहपित्रदर्भकुत्सहारिता न मिथो विवाह्याः । आङ्गिरसाजमीढकण्वा न मिथो विवाह्याः । आङ्गिरसविरूपरथपदश्वरथीतरराष्ट्रादंष्ट्रा विरूपा न मिथो विवाह्याः । आङ्गिरसमौद्गल्यतपोहृन्ना न मिथो विवाह्याः । आङ्गिरसविष्णुवृद्ध-त्रासदस्यवापसर्पणभद्रणभद्रणबादरायणौपमित्यौपगविसात्यकिसात्यकाम्यारुणिमित्रयुन्द्यावाविष्णुवृद्धा न मिथो विवाह्याः आत्रेयार्चनानसश्यावाश्वगविष्ठिरवनञ्ज्यातिथिसमन्नवामरथ्यपोनयाप्यसहस्रान्ता आत्रेया न मिथो विवाह्याः । विश्वामित्रदेवरातचिकितमधुच्छन्दसौदकिवालकियप्रवरकोत्-कलपूष्पदग्निवभ्रुयाज्ञवल्क्यशालाङ्कायनकात्यवरौद-रथ्यौमतकामकायनदेवश्रवःश्यमाधुच्छन्दसधनञ्जयाष्टकलो-हितपूरणपारिधायायमर्षणकौशिककतसुतपनसधूम्नजठरवा-मलौकाहव्याग्निदैव्यन्ता विश्वामित्रा न मिथो विवाह्या । काश्यपावत्सारनैध्रवरेभरैभशाण्डिल्यशाण्डिल्यदेवराताषि-तान्ता काश्यपा न मिथो विवाह्याः । वसिष्ठव्याघ्र-पराशरवासिष्ठा न मिथो विवाह्या । आगस्त्यदार्ढ्च्युतेध्मवाहदार्भवाहसाम्भवाहसोमवाहयज्ञवाहान्ता आगस्तयो न मिथो विवाह्या" । एवं प्रवरज्ञानस्य विवाहोपयोगितोक्ता । अस्य होमविशेषोपयोगिताऽपि आर्षेयपदे वक्ष्यते । मिश्र वसिष्ठौ अत्र कश्चिद्विशेष उक्तो यथा । "अथ गोत्राणि प्रवराश्चोच्यन्ते । तत्र बौधायनः गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्" ।

"तत्र सप्त भृगवः वत्सा विदा आर्ष्टिषेणा यस्का मित्रयवावैन्याः शुनका इति ७। वत्सानां भार्गवच्यवनाप्नवानौर्वजामदग्न्येति १ । भार्गवौर्वजामदग्न्येति वा भार्गवच्यवनाप्नवानेति वा । विदानां पञ्च भार्गवच्यवनाप्नवानौर्ववैदेति २ । भार्गवौर्वजामदग्न्येति वा एतौ

द्वौ जामदग्न्यवंशौ। आर्ष्टिषेणानाम् भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति। भार्गवार्ष्टिषेणानूपेति वा। एषामुभयोषां परस्परमविवाहः। यास्कानाम् भार्गवच्यावनाप्नवानेति वत्सपुरोधसयोः पञ्च भार्गवच्यावनाप्नवानशात्सप्रपौरोधसेति। वैजवनमिमतिथयोः पञ्च भार्गवच्यावनाप्नवानवैजवनमैमतिथेति। एते त्रयः कश्चित् एषामपि पूर्वैरविवाहः। अत्र तत्तत्प्रवाक्यप्रयोऽन्यस्य विशेष स्मृतते प्रवरदर्पणे ज्ञेयः। यस्कानाम् भार्गववैतहव्यसावेदसेति। मित्रयूनाम् भार्गववाध्र्यश्वदिवोदासेति। भार्गवच्यवनदिवोदासेति वा वाध्र्यश्वत्येको वा। वैन्याना भार्गववैन्यपार्थेति। एतएव स्युर्ता। शुनकानां शुनकेति वा गार्त्समदेति वा भार्गवगार्त्समदेति द्वौ वा भार्गवशौनहोत्रगार्त्समदेति त्रयो वा। वेदविश्वज्योतिषां भार्गववेदवैश्वज्योतिषेति। शाठरमाठराणां भार्गवशाठरमाठरेति एतौ द्वौ कश्चित् यस्कादीना स्वगणन्यत्रा सर्वैर्विवाहः। तदुक्तं स्मृत्यर्थसारे "यस्कामित्रयवावैन्याः शुनकाः प्रवरैःक्रमात्। स्वं स्वं हित्वा गणं सर्वे विवहेयुः परापरैरिति"।

'अथाङ्गिरस 'ते गौतमा' भरद्वाजा' केवलाङ्गिरसेति त्रिधा। अत्र गौतमा दश आयास्याः शरद्वन्त कौमण्डादीर्घतमसः औशनस कारेणुपाला' राहूगणा' सोमराजका' वामदेवा' बृहदुक्थाश्चेति तत्रायास्यानाम् आङ्गिरसायास्यगौतमेति शरद्वताम् आङ्गिरसगौतमशारद्वतेति। कौमण्डाना आङ्गिरसौतथ्यकाक्षीवदिति गौतमकौमण्डेति वा। आङ्गिरसानामायास्यौशिजगौतमकाक्षीवदिति वा आङ्गिरसौतथ्यगौतमौशिजकाक्षीवदिति वा। आङ्गिरसौशिजकाक्षीवदिति त्रयो वा। दीर्घतमसाम् आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वा। औशनसानाम् आङ्गिरसगौतमौशनसेति त्रय। कारेणुपालानाम् आङ्गिरसगौतमकारेणुपालेति त्रय' राहूगणानां आङ्गिरसराहूगणगौतमेति। सोमराजकानाम् आङ्गिरससोमराजकगौतमेति। वामदेवानाम् आङ्गिरसवामदेव्यगौतमेति बृहदुक्थानाम् आङ्गिरसवार्हदुक्थगौतमेति। आङ्गिरसवामदेववार्हदुक्थेति वा। उतथ्यानामाङ्गिरसौतथ्यगौतमेति। औशिजानामाङ्गिरसौशिजकाक्षीवदित्यापस्तम्ब। आङ्गिरसायास्यौशिजगौतमकाक्षीवदिति कात्यायन'। एतौ द्वौ कश्चित् रघुवाणाम्। आङ्गिरसराघुवन गौतमेति केचित्। तत्र मूलं चिन्त्यम्। एषां सर्वेषां गौतमानामविवाहः।

अथ भरद्वाजा' ते चत्वारः। भरद्वाजा गर्गा' ऋक्षा' कपय इति भरद्वाजानामाङ्गिरसवार्हस्पत्यभारद्वाजेति त्रयः। गर्गाणामाङ्गिरसवार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्च। आङ्गिरसशैन्यगार्ग्येति वा अन्त्ययोर्व्यत्ययो वा। भारद्वाजगार्ग्यशैन्येति वा। गर्गभेदानाम् आङ्गिरसतैत्तिरकापिभुवेति ऋक्षाणां कपिलानां चाङ्गिरसवार्हस्पत्यभरद्वाजवान्दनमात्वचसेति पञ्च। आङ्गिरसवान्दनमात्वचसेति त्रयो वा। कपिलानामाङ्गिरसामहीयवऋक्षयसेति। आत्मभुवाम् आङ्गिरसभारद्वाजवार्हस्पत्यमनन्तरात्मभुवेति पञ्च। अथ कश्चित् भरद्वाजानां सर्वेषामविवाह।

अथ केवलाङ्गिरस हरितानाम् आङ्गिरसाम्बरीषयौवनाश्वेति। आद्योमान्धाता वा। कुत्सानाम् आङ्गिरसमान्धातृकौत्सेति। कण्वानामाङ्गिरसाजमीढकाण्वेति आङ्गिरसघोरकाण्वेति वा। रथीतराणामाङ्गिरसवैरूपराथीतरेति आङ्गिरसवैरूपपार्षदश्वेति वा। अष्टादंष्ट्रपार्षदश्ववैरूपेति वा। अन्त्ययोर्व्यत्ययो वा। मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति आद्यस्थाने तार्क्ष्य वा आङ्गिरसतार्क्ष्यमौद्गल्येति वा। विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्यवेति। एषां स्वगणं विहाय सर्वैर्विवाहो भवति। हरितकुत्सयोस्तु न भवति।

अथात्रय ते चत्वार' आत्रेया' वाद्भुतका गविष्ठिराः मुद्गला इति। आद्यानामात्रेयार्चनानसश्यावाश्वेति। वाद्भुतकानाम् आत्रेयार्चनानसवाद्भुतकेति। धनञ्जयानाम् आत्रेयार्चनानसधानञ्जयेति कश्चित्। गविष्ठिराणामात्रेयार्चनानसगविष्ठिरेति। आत्रेयगाविष्ठिरपौर्वातिथेति वा। मुद्गलानामात्रेयार्चनानसपौर्वातिथेति। वामरथ्यसुमङ्गलवैजवापानामात्रेयार्चनानसातिथेति आत्रेयार्चनानसगाविष्ठिरेति वा। सुमङ्गलानाम् अत्रिसुमङ्गलश्यावाश्वेति केचित्। अत्रे पुत्रिकापुत्राणाम् आत्रेयवामरथ्यपौत्रिकेति। अत्रीणां सर्वेषामविवाह'।

अथ विश्वामित्रा ते दश कुशिका लौहिता रौक्षकाः कामकायना' कताः धनञ्जया' अघमर्षणाः पूरणा' इन्द्रकौशिका इति कुशिकानां विश्वामित्रदेवरातौदलेति। लौहितानां विश्वामित्राष्टकलौहितेति। अन्त्ययोर्व्यत्ययो वा वैश्वामित्रमाधुच्छन्दसाष्टकेति वा। विश्वा-

मित्राष्टकेति द्वौ वा । रौक्षकाणां वैश्वामित्रगाथिनरैवणेति वैश्वामित्ररौक्षकरैवणेति वा । कामकायनानां वैश्वामित्रदेवश्रवसदैवतरसेति वा । अजानां वैश्वामित्रमाधुच्छन्दसाजेति वैश्वामित्राश्मरथ्यवाधूलेति वा अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । पूरणानां वैश्वामित्रपौरणेति द्वौ वा । वैश्वामित्रदेवरातपौरणेति वा इन्द्रकौशिकानां विश्वामित्रेन्द्रकौशिकेति द्वौ । धनञ्जयानां विश्वामित्रमाधुच्छन्दसधानञ्जयेति । वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा कतानां वैश्वामित्रकात्याक्षीलेति एते बौधायनोक्ताः । रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । रेणूनां वैश्वामित्रगाथिनरैणवेति । जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति । आश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधूलेति । वेणूनां वैश्वामित्रगाथिनवैणवेति एते आश्वलायनाद्युक्ताः अन्येऽपि षड्गणा उक्ताः तेऽन्यत्र तत्कृतौ ज्ञेयाः एषां विश्वामित्राणामविवाहः ।

अथ काश्यपाः ते पञ्च निध्रुवाः काश्यपाः शाण्डिल्याः रेभा लौगाक्षयश्च । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । काश्यपानां काश्यपावत्सारासितेति । रेभाणां काश्यपावत्साररैभेति । शाण्डिल्यानां काश्यपावत्सारशाण्डिल्येति । अन्त्यस्थाने देवलोऽसितो वा । शाण्डिल्यासितदेवलेति वा । काश्यपासितदेवलेति वा । अन्त्ययोर्व्यत्ययो वा देवलासितेति द्वौ वा । लौगाक्षीन् वक्ष्यामः । एषां काश्यपानामविवाहः ।

अथ वसिष्ठाः ते पञ्च वसिष्ठाः कुण्डिनाः उपमन्यवः पराशराः जातूकर्ण्याश्चेति । वासिष्ठेन्द्रप्रमदाभरद्वस्विति वासिष्ठेत्येव वा । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति । उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वस्विति । वासिष्ठाभरद्वस्विन्द्रप्रमदेति वा । आद्ययोर्व्यत्ययो वा पराशराणां वासिष्ठशाक्त्यपाराशर्येति । जातूकर्ण्यभिन्नां वासिष्ठानां सर्वेषामविवाहः । अन्यत्राऽत्रिभिश्च ।

अथागस्त्याः ते चत्वार इध्मवाहाः साम्भवाहाः सोमवाहाः यज्ञवाहाश्चेति आद्यानाम् आगस्त्यदार्ढ्यच्युतैध्मवाहेति आगस्त्येको वा । सोमवाहानाम् आगस्त्यदार्ढ्यच्युतसोमवाहेति । साम्भवाहानां साम्भवाहोऽन्त्यः आद्यौ पूर्ववदेव सोमवाहानां तदन्तास्त्रयः दर्भवाहानां तदन्तास्त्रय ।

अगस्तीनामागस्त्यमाहेन्द्रमायोभुवेति पूर्णमासानाम् आगस्त्यपौर्णमासपारणेति । हिमोदकानाम् आगस्त्यहैमवर्चिहैमोदकेति । पाणिकानामागस्त्यपैनायकपाणिकेति । एते षट्-क्वचित् । अगस्तीनां सर्व्वेषामविवाहः ।

अथ द्विगोत्राः शौङ्गशैशिरीणाम् आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्च कात्याक्षीलयोः स्थाने शौङ्गशैशिरी वा आङ्गिरसकात्याक्षीलेति त्रयो वा एषां भरद्वाजैर्विश्वामित्रैश्चाविवाहः । एवं कपिलानां कतानाञ्च संकृतिपूतिमाषादीनाम् आङ्गिरसगौरुवीतसांकृत्येति शाक्त्यगौरुवीतसांकृत्येति वा एषां स्वगणस्यैर्वसिष्ठैः शौङ्गशैशिरैर्लौगाक्षिभिश्चाविवाहः । काश्यपैश्चेति प्रयोगपारिजाते । लौगाक्षीणां काश्यपावत्सारवासिष्ठेति काश्यपावत्सारासितेति वा एतेऽहर्वसिष्ठा नक्तं काश्यपा एषां वसिष्ठैः काश्यपैः संकृताद्यैश्चाविवाहः । देवरातस्य जामदग्न्यैर्विश्वामित्रैश्चाविवाह इति प्रयोगपारिजाते यदुक्तं बह्वृचस्मृतौ “यद्येवाङ्गिरस समुपेयात्तत्र प्रवृताम् । आङ्गिरसोऽजन्मनाप्याजीगर्त्तिः श्रुत कविरित्याङ्गिरसगणस्यत्वेन भार्गवजामदग्न्यत्वस्मृतेर्बाधात् । तेन मत्स्यस्मृत्या हरिवंशादिस्मृतेश्च बाधात् तेन द्वौ देवरातौ एक आङ्गिरस उक्तः अन्यो भार्गव तयोः कल्पभेदेऽप्याङ्गिरसेन देवरातेन जामदग्न्यैर्भवत्येव विवाहः भार्गवेण तु नेति तत्त्वम् । धनञ्जयानां विश्वामित्रैरत्रिभिश्चाविवाहः जातूकर्ण्यानां वसिष्ठैरत्रिभिश्चाविवाहः एवं दत्तक्रीतकृत्रिमस्वयंदत्तपुत्रिकापुत्रादीनाम् उत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति प्रवरमञ्जरी नारायणवृत्तिप्रयोगपारिजातादय । अत्र सर्वत्रोपपत्तय मूलं च तत्कृते प्रवरदर्पणे ज्ञेयमिति दिक् । क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवरावेवेति सर्वसिद्धान्तः यद्यपि बह्वृचपरिशिष्टे कपिभरद्वाजयोर्विवाह उक्तस्तथापि “भरद्वाजाश्च कपयो गर्गा रौक्षायणा इमे । चत्वारोऽपि भरद्वाजगोत्रैक्यान्नोद्वहेयुर्मिथ । कपिगर्गभरद्वाजाभिधा रौक्षायणा द्विजाः । नोद्वहेयुः सगोत्रत्वात् प्रवरैक्याच्च कुत्रचिदिति” इत्यर्थसाराद्युक्तेरविवाह एव तयोरिति प्रवरमञ्जर्य्यां यद्यपीदमुक्तम् तथापि भृग्वङ्गिरोगणेषु तु भवत्येव यथा बह्वृचपरिशिष्टे बौधायन “एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते । तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात्” माधवीये स्मृत्यन्तरं “पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयो । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेदिति” एवं विश्वादर्शप्रयोगपारिजाताचारमाधवीय-

निर्णयसिन्धुप्रभृतिषु भृग्वङ्गिरोगणेषु पञ्च प्रवराणां मध्ये त्रिषु साम्ये। त्रिषु प्रवरेषु द्वयोः साम्येऽपि शेषगोत्राणामेकर्षिसाम्येऽपि समानप्रवरत्वाद्विवाहाभाव सिद्धमेतेन अमूनानतिरिक्तप्रवार्षस्याकत्वेन समानार्षत्व यत् रघुनन्दनेनोक्तं तन्निर्मूलत्वादग्राह्यं बौधायनादिस्मृतिविरुद्धत्वात्तद्दर्शनविजृम्भितत्वाच्च एवं वत्ससावर्णिगोत्रप्रवरेषु आप्नुवत्प्रवरत्वकथनमपि प्रवराध्यायाज्ञानविजृम्भितम्। अधिकमार्षेयशब्दे वक्ष्यते। ऋषेरयं अण्। ऋषिकृतस्मरणे। वेदे यन्मन्त्रं येन ऋषिणा कल्पादौ स्मृतं तन्मन्त्रस्य तदार्षत्वम्। "आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः" योगिया०। [शब्दे २उक्तार्षविवाहे च।

**आर्षधर्म्म** पु० न० कर्म्म०। १मन्वादिप्रोक्ते धर्म्मे। आर्ष-

**आर्षभ** त्रि० ऋषभस्य वृषस्येदम् अण्। वृषसम्बन्धिनि। "यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्। गोमिनामेव तत् सर्वं मोघं स्कन्दितमार्षभम्" मनुः। ऋषभदेवचरिते न०। [ऋषभभेदे।

**आर्षभि** पु० ऋषभस्यापत्यम् इञ्। ऋषभदेवपुत्रे चक्रवर्त्तिनि

**आर्षभी** पु० ऋषभस्येयं प्रिया अण् ङीप्। १कपिकच्छ्वाम् राजनि०। ऋषभस्येयम् तुल्याकारत्वात् अण् ङीप्। वायुपुराणोक्ते मध्यमार्गस्थवीथीत्रयमध्ये वीथीभेदे ऐरावतीशब्दे विवृतिः

**आर्षभ्य** पु० ऋषभस्य प्रकृतिः ञ्य। वृषकतायोग्ये वत्से वत्सो हि वयःक्रमेण वृषभतां प्राप्नोतीति तस्य वृषभप्रकृतित्वात् तथात्वम् [यक्। ऋषिधर्म्मे

**आर्षिक्य** न० ऋषिरेव ऋषिकः ऋषिकस्य भावः पुरो०

**आर्षिषेण** पु० स्त्री ऋषिषेणस्य गोत्रापत्यम् विदा० अञ्। ऋषिषेण ऋषेर्गोत्रापत्ये स्त्रियां ङीप्। ऋष्टिषेण इति वा गणे पाठे आर्ष्टिषेणस्तदपत्ये आर्षशब्दे प्रवरनिर्णये उदा०।

**आर्षेय** न० ऋषीणां समूहः ढक्। ऋषिगणरूपे प्रवरभेदे तत्स्मरणस्य विवाहोपयोगिता आर्षशब्दे उक्ता। होमभेदोपयोगिताऽपि प्रवराध्याये दर्शिता यथा। "प्रवरान् व्याख्यास्याम आर्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्या इति विज्ञायते तद्वै न मनुष्यैरार्षेयं वृणीत ऋषिभिरेवार्षेयं वृणीत इति विज्ञायत आर्षेयमन्वाचष्ट ऋषिणा हि देवाः पुरुषमनुबुध्यन्त" इत्युक्तस्य। "योवा अन्य सन्तथान्यस्यार्षेयं प्रवृणीते स वा अस्य तत् ऋषिरिष्टं पीतं वृङ्क्ते इति विज्ञायते। त्रीन् वृणीते मन्त्रकृतो वृणीते यद्यपि मन्त्रकृतो वृणीत इति विज्ञायतेऽथैकेषामेकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीत इति विज्ञायते। तत ऊर्द्धमध्वर्युर्वृणीते सुतरेर्वाचोहोतेति विज्ञायते। पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते। भृगूणामेवाग्रे व्याख्यास्यामो जामदग्न्या वत्सास्तेषां पञ्चार्षेयः प्रवरो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमुहैके भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदित्येष वा विकृतः। सावर्णिजीवन्तिजाबालैतिशासनवैरोहित्यावटमण्डुमाण्डूकयोग्यानामथार्ष्टिषेणानां पञ्चार्षेयो भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति। अनूपवदार्ष्टिषेणवदाप्नुवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमुहैके भार्गवार्ष्टिषेणानूपेति अनूपवदार्ष्टिषेणवद्भृगुवदिति। अथ वीतहव्या यास्कवाधूलमौनमौकास्तेषां त्र्यार्षेयो भार्गववैतहव्यसावेदसेति सवेदोवद्वीतहव्यवद्भृगुवदिति। गार्त्समदाः शुनकास्तेषामेकार्षेयो गार्त्समदेति होता वदति गृत्समदवदित्यध्वर्युः अथ वाध्र्यश्वा मित्रयवस्तेषामेकार्षेयो वाध्र्यश्वेति होता वदति वध्र्यश्ववदित्यध्वर्युः। अथ वैन्याः पार्थास्तेषां त्र्यार्षेयो भार्गववैन्यपार्थिवेति। पृथिवोवद्वेनवद्भृगुवदिति। इमे भृगवो व्याख्याताः। अथातोऽङ्गिरसामायास्यगोतमास्तेषां त्र्यार्षेय आङ्गिरसायास्यगौतमेति। गोतमवदयास्यवदङ्गिरोवदिति। अथौचथ्या गोतमास्तेषां त्र्यार्षेय आङ्गिरसौचथ्यगौतमेति गोतमवदुचथ्यवदङ्गिरोवदिति। अथौशिजा गोतमास्तेषां त्र्यार्षेयः आङ्गिरसौशिजकाक्षीवदिति कक्षीवदुशिजवदङ्गिरोवदिति। अथ वामदेवा गोतमास्तेषां त्र्यार्षेय आङ्गिरसवामदेवबार्हदुक्थेति बृहदुक्थवद्वामदेववदङ्गिरोवदिति। अथ भरद्वाजानां त्र्यार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजेति भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्येष वा विकृतः। कुक्कुटाग्निवेश्योच्छायनानां सर्वेषां च स्तम्बस्तम्भशब्दानामथ ह्राडप्यायणानां कुलानाम्। यथा शुङ्गशैशिरयो भारद्वाजाः शुङ्गाः कताः शैशिरयस्तेषां पञ्चार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीवदिति अक्षीवत्कतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमुहैके आङ्गिरसकात्याक्षीवदिति अक्षीवत्कतवदङ्गिरोवदिति। अथ ऋक्षाणां पञ्चार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति। मातवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमुहैके आङ्गिरसवान्दनमातवचसेति मातवचोवद्वन्दनवदङ्गिरोवदिति। अथ

कपीनां त्र्यार्षेय आङ्गिरसामहीयवौरुक्षयेति उरुक्षयवदमहीयुवदङ्गिरोवदिति। अथ गर्गाणां त्र्यार्षेय आङ्गिरसगार्ग्यशैन्येति शिनिवद्गर्गवदङ्गिरोवदिति। भरद्वाजस्त्वेकेऽङ्गिरसःस्थाने भरद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदिति। अथ हरितानां त्र्यार्षेय आङ्गिरसाम्बरीषयौवनाश्वेति युवनाश्ववदम्बरीषवदङ्गिरोवदिति। मान्धातारस्त्वेकेऽङ्गिरसःस्थाने मान्धात्राम्बरीषयौवनाश्वेति। युवनाश्ववदम्बरीषवन्मान्धातृवदिति। अथ कुत्सानां त्र्यार्षेय आङ्गिरसमान्धात्रकौत्सेति। कुत्सवन्मान्धातृवदङ्गिरोवदिति। अथाजमीढाः काण्वास्तेषां त्र्यार्षेय आङ्गिरसाजमीढकाण्वेति कण्ववदजमीढवदङ्गिरोवदिति। अथ विरूपा रथीतरास्तेषां त्र्यार्षेय आङ्गिरसवैरूपपार्षदश्वेति पृषदश्ववद्विरूपवदङ्गिरोवदिति अष्टादंष्ट्रस्त्वेकेऽङ्गिरसःस्थाने आष्टादंष्ट्र वैरूपपार्षदश्वेति पृषदश्ववद्विरूपवदष्टादंष्ट्रवदिति। अथ मुद्गलानां त्र्यार्षेय आङ्गिरसभार्म्यश्वमौद्गल्येति मुद्गलवद्भृम्यश्ववदङ्गिरोवदिति। तृक्षस्त्वेकेऽङ्गिरसःस्थाने तार्क्ष्यभार्म्यश्वमौद्गल्येति मुद्गलवद्भृम्यश्ववत्तृक्षवदिति। अथ विष्णुवृद्धानां त्र्यार्षेय आङ्गिरसपौरुकुत्सत्रासदस्यवेति। त्रसदस्युवत् पुरुकुत्सवदङ्गिरोवदित्येष एव विहितः। अघमर्षणभद्रणमद्रणबादरायणौपमित्यौपगविसात्यकिसात्यकाम्यारुणिनित्युन्दोनामथात्रीणां त्र्यार्षेय आत्रेयार्चनानसश्यावाश्वेति श्यावाश्ववदर्चनानसवदत्रिवदिति। अथ गविष्ठिराणां त्र्यार्षेय आत्रेयार्चनानसगाविष्ठिरेति गविष्ठिरवदर्चनानसवदत्रिवदिति। अथातिथीनां त्र्यार्षेय आत्रेयार्चनानसातिथेति अतिथिवदर्चनानसवदत्रिवदित्येष एव वा विहितो वामरथ्यसुमङ्गलबीजवापी नाम्। अथ विश्वामित्राणां देवराताऽश्विकितमनुतन्त्वौलकिबालखिल्ययज्ञवल्क्यौलूकदृषद्ग्निबभ्रुगालवशालङ्कायनकालवास्तेषां त्र्यार्षेयो वैश्वामित्रदेवरातौदलेति। उदलवद्देवरातवद्विश्वामित्रवदिति। अथ श्रौमतकामकायनानां त्र्यार्षेयो वैश्वामित्रदैवश्रवसदैवतरसेति देवतरसवद्देवश्रवोवद्विश्वामित्रवदिति। अथाजानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसाज्येति। अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति। अथ धनञ्जयानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसधानञ्जयेति धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रवदिति। अथाष्टकालोहितास्तेषां द्व्यार्षेयो वैश्वामित्राष्टकेति। अष्टकवद्विश्वामित्रवदिति। अथ पूरणवारिधापयन्तास्तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति पूरणवद्विश्वामित्रवदिति। अथ कतानां त्र्यार्षेयो वैश्वामित्रका-

त्यात्कीलेति अत्कीलवत्कतवद्विश्वामित्रवदिति। अथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयो वैश्वामित्राघमर्षणकौशिकेति कुशिकवदघमर्षणवद्विश्वामित्रवदिति। अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति निध्रुववदवत्सारवत्कश्यपवदिति। अथ रेभास्तेषां त्र्यार्षेयः काश्यपावत्साररैभेति। रेभवदवत्सारवत्कश्यपवदिति। अथ शाण्डिलानां द्व्यार्षेयो दैवलासितेति। असितवद्देवलवदिति। त्र्यार्षेयस्त्वेके काश्यपदैवलासितेति असितवद्देवलवत्कश्यपवदिति आर्षेयास्त एव न्यायेनैकार्षेया वसिष्ठा अन्यत्र पराशरेभ्यो वासिष्ठेति होता वसिष्ठवदित्यध्वर्युः त्र्यार्षेयस्त्वेके वासिष्ठैन्द्रप्रमदाभरद्वस्वेति अभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति। अथ पराशराणां त्र्यार्षेयो वासिष्ठशाक्त्यपाराशर्येति पराशरवच्छक्तिवद्वसिष्ठवदिति अथ कुण्डिनानां त्र्यार्षेयो वासिष्ठमैत्रावरुणकौण्डिन्येति। कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति। अथ संकृतिपूतिमाषाणां त्र्यार्षेय शाक्त्यसांकृत्यगौरिवीतेति। गुरुवीतवत्संकृतिवच्छक्तिवदिति। अथागस्तीनाम् एकार्षेय आगस्त्येति होताऽगस्त्यवदित्यध्वर्युः त्र्यार्षेयस्त्वेके आगस्त्यदार्ढच्युतैध्मवाहेति इध्मवाहवद्दृढच्युतवदगस्त्यवदिति। अथ क्षत्रियाणां यद्यु ह वा आर्षेयं प्रवृणीरन्नेव एषां प्रवरो मानवैडपौरूरवसेति पुरूरवोवदिडवन्मनुवदिति अथ येषामु ह मन्त्रकृतो न स्युः पुरोहितप्रवरास्ते प्रवृणीरन् अथ येषां स्युः पुरोहितप्रवरास्ते पुरोहितप्रवरार्षेयं यास्तेषां न्यायेनैकार्षेया एव विशां वात्स्येति होता। वत्सप्रीवदध्वर्युः। अथाम्नातबन्धु राजार्षेयस्यायणमनु प्रवृणीताचार्यप्रवरं प्रवृणीताथ ह तासिक्रम एकार्षेय सार्ववर्णिकं समामनन्ति मानवेति होता मनुवदित्यध्वर्युर्मानव्यो हि प्रजा इति हि ब्राह्मणम्"। एवं प्रवरभेद निर्णीय होमविशेषोपयोगिता तदुत्तरग्रन्थे गोक्ता। "आर्षेयाणि व्यूहपतेः प्रवरित्वात्मादीनां मुख्यानाम्" आश्व०श्रौ० "आर्षेयवरणे व्यूहपतेः प्रथमं वरित्वा आत्मादीनां मुख्यानां प्रवृणीते" इति वृत्तिः। अपि कुटस्याक्षि आरभ्य अयं प्रवरस्यार्थेऽकि मूलपुरुषावधिप्रवरविभेदश्चैवा एवायः यथोक्तं "आर्षेयं प्रवृणीते ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति। तस्मादार्षेयं प्रवृणीते परस्तादर्वाक् प्रवृणीते। परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय उ चैवैतं निह्नुवत इदं हि पितैवाग्रेऽथाप्तोऽथ पौत्रस्तस्मात्परस्तादर्वाक् प्रवृणीते। स आर्षेयमुक्ताह" शत०ब्रा०। "होतर्कर्ता

प्रवरो विधीयते। तत्र धर्म्मविशेषमाह परस्तादिति तत्रिप्रार्षेयप्रवरणे कूटस्थऋषिमारभ्य तत्पुत्रपौत्रादि क्रमेणार्वाचीनं वरणं कर्त्तव्यम्। यथा आङ्गिरसबार्ह-स्पत्यभारद्वाजेत्यादि। तथा च ज्येष्ठस्य पतये एवैतं निह्नुते अनेन प्रवरणेन निवेदयति भा०"। "असमानार्षेयां कन्यां वरयेत्" विष्णुः। "प्रवरस्तु गोत्रप्रवर्त्तक मुनेर्व्यावर्त्तको मुनिगणः" इति माधवाचार्य्यः।

ऋषिरेव स्वार्थे ठक्। ३मन्त्रद्रष्टरि ऋषौ "प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयं, देवा द्वितीयां चितिमपश्यन् देवा एव तस्या आर्षेयम्, इन्द्राग्नी च विश्वकर्म्मा च तृतीयां चितिमपश्यंस्त एव तस्या आर्षेयम् ऋषय-श्चतुर्थीं चितिमपश्यन् ऋषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयं स यो हैतदेवं चितीनामार्षेयं वेदार्षेयवत्यो हास्य चन्द्र मत्यश्चितयो भवन्ति" इति शत०ब्रा०

**आर्ष्टिषेण** पु० १चन्द्रवंश्ये शलन्तपात्मजे नृपभेदे "शल-पुत्रात्मजस्तस्य सुनहोत्रो महायशाः। सुनहोत्रस्य दायादा-स्त्रयः परमधार्म्मिकाः। काशः शलश्च द्वावेतौ तथा गृत्स-मदः प्रभुः। पुत्रो गृत्समदस्यापि शुनकोयस्य शौनकः। ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च। शलात्मज आर्ष्टिषेणस्तनयस्तस्य काश्यपः" | हरि०वं०२०१अ०। आर्ष्टिषेणोदिलीपश्च महात्मा चाप्युशीनरः" म०भा०व०। २गोत्रप्रवरभेदे आर्षपक्षे उदा०।

**आर्ष्टिषेणाश्रम** न० ६त०। तीर्थभेदे तच्च व०प० १५९अध्याये दर्शितं यथा। "अनेनैव पथा राजन् ! प्रतिगच्छ यथागतम्। नरनारायणस्थानं बदरीत्यभिविश्रु-तम्। तस्माद्यास्यसि कौन्तेय ! सिद्धचारणसेवितम्। बहुपुष्पफलं रम्यमाश्रमं वृषपर्वणः। अतिक्रम्य च तं पार्थ। आर्ष्टिषेणाश्रमे वसे"।

**आर्हत** त्रि० अर्हत इदम् अण्। १जैनसम्बन्धिनि। २तन्मते न० तन्मतस्वार्हताब्दे २८२ पृष्ठे दर्शितम्।

**आर्हन्ती** स्त्री न० अर्हतो भावः ब्राह्म० ष्यञ् तम् च षित्त्वात् ङीष् यलोपः। योग्यतायाम्। "श्रीतार्हन्तीचणश्चर्मं दर्विभिरहमितम्" सि० कौ०। स्त्रीत्वाभावपक्षे। आर्हन्त्यमित्यपि तत्रार्थे न०।

**आर्हायण** स्त्री अर्हस्यापत्यम् अश्वा० फञ्। अर्हाभा-वर्षे गोत्रापत्ये। स्त्रियां ङीप्।

**आर्हीय** पु० अर्हमभिव्याप्य आर्हम् तत्र · तस्येदम् वा छ्त्वात् छ। "आर्हात् इत्यारभ्य "तदर्हति" इत्यन्त सूत्रजातेन तत्तदर्थेषु पाणिनिविहिते १प्रत्ययभेदे। २तद्बोध्ये तत्तदर्थे च। "आर्हीयेष्वर्थेषु" सि०कौ०

**आल** न० आलति भूषयति आ+अल–भूषादौ अच्। १ह-रिताले तद्धि वर्णोत्कर्षेण स्वयुक्तपदार्थं भूषयतीति तस्य तथात्वम्। "ततो हरिद्राम्लहधूमरोधूमलाङ्गूलैः समनः-शिलालैः"। "मन शिलालमधुकष्टचन्दनपद्मकैः" "रसाञ्जनं चन्दनसैन्धवञ्च मनःशिलाले लशुनञ्च तुल्यम्" सुश्रु०। हरितालभेदगुणाद्युक्तम् भा० प्र०। "हरि-तालं तु तालं स्यादालं तालकमित्यपि। हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञितम्। तयोराद्यं गुणश्रेष्ठं ततोहीन-गुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्यं तालकं विद्याद् गुणाढ्यं तद्रसायनम्। निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्प गुणं तत् पिण्डतालकम्। हरितालं कटु स्निग्धं कषा-योष्णं हरेद्विषम्। कण्डूकुष्ठास्यरोगास्रकफपित्तकफव्रणान्। हरति च हरितालं चारुता देहजातां सृ-जति च बहुतापानल्पपञ्चोपपीडाः। वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धं मारितं चाप्यसम्यक्"। आ+अल–पर्य्याप्तौ अच्। २अनल्पे ३श्रेष्ठे च त्रि०।

**आलचि** त्रि० आ+लच–इन्। घ्रातरि स्त्रियां गौरा०ङीष्।

**आलचित** त्रि० आ+लच–क्त। १सम्यग्घ्राते, २चिह्नेन घ्राते च

**आलक्ष्य** त्रि० आ+लक्ष–यत्। १सम्यग्ज्ञेये २लक्षणेन वेद्ये च "आलक्ष्यपारिप्लवसारसानि" रघु०। आलक्ष्यार्थैव पुरुषा कुले जाता महागुणा" भा०व०२०७। ल्यप्। ३सम्यक् ज्ञात्वेत्यर्थे अव्य०।

**आलगर्द्द** पु० अलगर्द्द एव स्वार्थे अण्। जलसर्पे। [ङीप्

**आलजि** त्रि० आ+लज–इन्। आभाषके स्त्रियां गौरा०

**आलब्ध** त्रि० आ+लभ–क्त। १संस्पृष्टे २संयुक्ते "चन्दनेन समालब्धे कुङ्कुमेन विलिपिते" दुर्गार्चामन्त्रः। ३स्पृष्टे ४हिंसिते च। [ क्तिन्नन्तत्वेऽपि गौरा० वा ङीष्।

**आलब्धि** स्त्री आ+लभ–क्तिन्। स्पर्शे २हिंसायां च

**आलभन** न० आ+लभ–ल्युट्। १हिंसायां २स्पर्शे। पक्षे नुम्। ३मर्द्दने च। "नित्या भक्षयितव्याश्च सदा त्वालम्भनञ्च तैः" भा०आ० प०६८अ०। तत्रार्थे "आलम्भनम्" कात्या०६,२,१८।

**आलभनीय** त्रि० आ+लभ–अनीयर्। १स्पृश्ये २हिंसनीये च नुम्। ३मर्द्दनीये

न्तुमस्तरान्” । यागादौ आलम्भनीयः पशुः ।

**आलभ्य** त्रि० आ+लभ–यत् । १स्पृश्ये २हिंस्ये आ+लभ–ल्यप् । १स्पृष्ट्वेत्यर्थे ४हिंसित्वेत्यर्थे च अव्य० ।

**आलम्ब** पु० आ+लबि–कर्म्मणि घञ् । आश्रयणीये, “निरालम्बो लम्बोदरजननि ! कं यामि शरणम्” जगन्नाथः “इह हि भवतां नास्त्यालम्बो न चापि निवर्त्तनम्” शान्ति० “रामे प्रव्रजिते याते सीता शून्ये यथासुखम् । निरालम्बां हरिष्यामि” रामा० । ३वैशम्पायनान्तेवासिभेदे आलम्बिशब्दे द०२६ठे विवृतिः । भावे घञ् । ४आश्रयणे

**आलम्बन** न० आ+लबि–कर्म्मणि–ल्युट् । १आश्रयणीये “यमादेव विभावादिसमूहालम्बनात्मकः” सा०द० उक्ते २रसालम्बने नायकादौ । “आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्” इति तस्यालम्बनशब्दार्थत्वे कारणमुक्तं तत्रैव । रसभेदे आलम्बनभेदाश्च सा०द०उक्ता यथा शृङ्गारे “परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् । आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः” । रौद्रे “आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्” । हास्ये “विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्” । करुणे । “शोच्यमालम्बनं मतम्” । वीरे “आलम्बनविभावास्तु विजेतव्यादयोमताः” भयानके । “यस्मादुत्पद्यते भीतिस्तदेवालम्बनं मतम्” । जुगुप्सायाम् । “दुर्गन्धमांसपिशितन्तदेवालम्बनं मतम्” । विस्मये । “विस्मये च वस्तु लोकातिगमालम्बनं मतम्” शान्ते “अनित्यत्वादिनाऽशेषवस्तुनोऽसारता तु या । परमात्मस्वरूपं वा तस्यालम्बनमिष्यते” । ४बौद्धमतसिद्धे प्रत्ययभेदे च “चत्वारः प्रत्ययाः प्रसिद्धा आलम्बनसमनन्तरसहकार्य्याधिपतिरूपा” इति विभज्य “तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलोल्लेखिप्रत्ययात् नीलाकारता भवतीति” सर्वदर्श० । अधिकमालयविज्ञानशब्दे वक्ष्यते ।

**आलम्बि** स्त्री आलम्बस्य ऋषिभेदस्यापत्यम् इञ् । वैशम्पायनान्तेवासिन आलम्बस्यापत्ये स्त्रियां गौ० ङीष् । सा च शुक्लयजुर्वेदशाखान्तर्गतर्षिभेदा “आलम्बीपुत्रात् आलम्बीपुत्रः” शत०ब्रा० । इञन्तात् यूनि फञ् । आलम्बायनः तस्य यूनपत्ये स्त्रियां ङीष् । सा च शुक्लयजुर्वेदशाखान्तर्गतर्षिभेदमाता । “आलम्बायनीपुत्रादालम्बायनीपुत्रः” शत०ब्रा० ।

**आलम्बित** त्रि० आ+लबि–क्त । १धृते २गृहीते च ।

**आलम्बिन्** त्रि० आ+लबि–णिनि । आश्रयिणि । “गजाजिनालम्बि दुकूलधारि वा” कुमा० “देवस्त्रजमुत्तालम्बीजैत्रमध्यास्त राघवः” रघु० । “आलम्बिमिचन्द्रकिणी कलापैः” माघः स्त्रियां ङीप् । आलम्बेन वैशम्पायनान्तेवासिभेदेन प्रोक्तमधीयते णिनि । आलम्बप्रोक्ताध्यायिषु ब०व० ।

**आलम्भ** पु० आ+लभ–घञ् नुम् । १स्पर्शे । वर्ज्जयेदित्युपक्रमे “स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च” मनुः २हिंसने च । “अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम्” आदिपु० । “अष्टाजामामीमधीनां जाताः श्च स्वयं वने । वृथालम्भोऽनुगच्छेद्गां दिनमेकं पयोव्रतम्” मनुः” । “सा च प्रीताध्यमालम्भायानुमन्यते तयानुमतमालभते” शत०ब्रा० । “आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ । महर्षयो महाभाग ! बभूवुः कृपयान्विताः” भा०आ०९१ अध्याये । [गौः” सि०कौ”

**आलम्भ्य** त्रि० आ+लभ–नुम् ण्यत् । हिंस्ये । “आलम्भ्यो

**आलय** पु० आलीयतेऽस्मिन् आ+ली–आधारे अच् । १गृहे २आधारे च “हिमालयोनाम नगाधिराजः” कुमा० “तत्रामरालयमरालमरालकेशी” नैष० । “न हि दुष्टात्मनामार्य्या निवसत्यालये चिरम्” रामा० “आलय देवशत्रूणां सुघोरं आलयं वनम्” भा० आ० २२१ अ० । भावे घञ् । ३संश्लेषे मर्यादायामव्ययी० । ४लयपर्य्यन्ते अव्य० । “पिबत भागवतं रसमालयम्” भाग० ।

**आलयविज्ञान** न० आलय लयपर्य्यन्तस्थायि विज्ञानम् । बौद्धमतसिद्धे अहमास्पदे विज्ञानभेदे । “तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्” तेषां मते हि विज्ञानातिरिक्तो बाह्यपदार्थो नास्ति, ज्ञानस्यैवाकारविशेष अर्थोल्लेखी । आलयविज्ञानस्य सदातनत्वेऽपि कदाचित् नीलाद्युल्लेखिता तथा हि विभादाव्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखना कादाचित्कत्वात् इति विज्ञानस्य कादाचित्कत्वसिद्धि “तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव न, वासनापरिपाकप्रत्ययस्य कादाचित्कत्वात् कदाचिदुत्पाद इति वेदितव्यम् । विज्ञानवादिमते हि वासनानामेकसन्तानवर्त्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः तस्याश्च स्वकार्य्योत्पादं प्रत्याभिमुख्यं परिपाकः तस्य च प्रत्ययः कारणं स्वसन्तानवर्त्ति पूर्व्वक्षणः कश्चोक्रियते सन्तानान्तरनिबन्धनत्वानङ्गीकारात् । ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्त्तिवासनापरिपाकं प्रति सर्व्वोऽप्यालयविज्ञानवर्त्ति क्षः

खाः समर्था एवेति वक्तव्यम् । न चैवं कोऽपि न समर्थः स्यादालयविज्ञानसन्तानवर्त्तिस्याविशेषात् । सर्व्वे समर्था इति पक्षे कार्य्यवैषम्यानुपपत्तिः ततश्च कादाचित्-कत्वनिर्व्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादि विषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते इति चतुरेषानिरूक्ताप्यन्वयमतिना चानुभवमनान्वाद्य परिच्छेत्तव्यम् । ते चत्वारः प्रत्यया प्रसिद्धाः आलम्बन-समनन्तरसहकार्य्यधिपतिरूपाः । तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलालम्बनप्रत्ययात् नीला-कारता भवति, समनन्तरप्रत्ययात् प्राचीनज्ञानाद्बोधरूपता, सहकारिप्रत्ययादालोकात्, चक्षुषोऽधिपतिप्रत्ययाद्विषय-ग्रहणप्रतिनियमः । विदितस्य ज्ञानस्य रसादिसाधारण्य-प्राप्तेर्नियामकं चक्षुरधिपतिर्भवितुमर्हति लोके नियामक-स्याधिपतित्वोपलम्भात् । एवं चित्तचैत्तात्मकानां सुखा-दीनां चत्वारि कारणानि द्रष्टव्यानि । एवं चित्तचैत्तात्म-कस्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसं-ज्ञकः । तत्र रूप्यन्त एभिर्विषया इति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः । आलय-विज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः । प्रागुक्त-स्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदना-स्कन्धः । गौरित्यादिशब्दोल्लेखिविज्ञानप्रवाहः संज्ञास्कन्धः वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्म्माधर्म्मौ च संस्कारस्कन्धः" सर्वद० विज्ञानानां क्षणिकत्वेऽपि पूर्व्वपूर्व्वक्षणिकविज्ञानसंस्कारा-णामुत्तरोत्तरविज्ञाने संक्रमः तत्संक्रमाच्च स्मरणं, सुषुप्तौ च आलयविज्ञानस्य सत्त्वात् तत्रैव सर्व्वसंस्काराणामव-स्थितेः सुप्तोत्थितस्य स्मरणसम्भव इत्यतो बौद्धैः आलय-पर्य्यन्तं क्षणिकविज्ञानव्यक्तिधारायां स्थायित्वमङ्गीक्रियते ।

**आलर्क** न० अलर्कस्येदम् अण् । क्षिप्तकुक्कुरविषे । "निघ्नन्ति विषमालर्कं मेघशब्दमिवानिशम्" सुश्रु० ।

**आलवण्य** न० न लवणं न०त० अलवणस्य भावः ष्यञ् । लवणरसभिन्नत्वे । नास्ति लवणं यत्र बहु० तत्त्व वा न ष्यञ् । अलवणता स्त्री अलवणत्वं त्व न० लवणशून्यत्वे

**आलवाल** न० समन्तात् लवं जललवमालाति आ+ला—क । वृक्षमूले सेकार्थं मृदादिनिर्म्मिते जलाधारे सेतौ । "विश्वा-साय विहङ्गानामालवालाम्बुपायिनाम्" रघु । "विपुला-लवालभ्रतशारिदर्पण" माघ । पु०सर्व्वस्य दर्शयन्त्योऽपि "जट-रुमटणगिभिरिव जटालवालकमण्डलधरै" (पादपै) काद० ।

**आलस** त्रि० आलसति ईषत् व्याप्रियते अच् । १क्रियामन्दे अलसस्यापत्यम् विदा० अञ् । २अलसापत्ये पु० स्त्री० यूम्य-पत्ये हरिता० फञ् । आलसायन तस्य यून्यपत्ये पु स्त्री० ।

**आलस्य** न० अलसस्य भावः ष्यञ् । विहितक्रियाकरणायाटत्वाख्ये आलस्ये "किमालस्यं च कः शोकः" इति यक्षप्रश्ने "धर्म्म-निष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते" भा०व० ३१२ अ० युधिष्ठिरेण लक्षितम् । "शक्तस्य चाप्यनुत्साहः कर्म्मस्वालस्य-मुच्यते" सुश्रुतेन लक्षितञ्च बोध्यम्" सा०द० उक्ते व्यभि-चारिभावभेदे च "आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासिता-दिकृत्" यथा "न तथा भूषयत्यङ्गं न तथा भाषते सखीम् । जृम्भते मुहुरासीना बाला गर्भभरालसा" सा०द० "आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" मनु । भारतोक्तधर्मक्रियाशून्यत्वरूपम् चत्रालस्यम् ।

**आलात** न० अलातमेव स्वार्थेऽण् । अलाते वह्निदीप्ताङ्गारे ।

**आलान** न० आलीयतेऽत्र आ—ली—ल्युट् । १गजबन्धन-स्तम्भे करणे ल्युट् । २तद्बन्धनरज्ज्वाम् भावे ल्युट् । ३बन्धनमात्रे च । तत्र स्तम्भे । "अरुन्तुदमिवालानमनि-र्वाणस्य दन्तिनः" रघु । "इभमदमलिनमालानस्तम्भयुग-लमुपहसन्तमियोरुदण्डद्वयेन" काद० "तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः" बन्धने "गजालानपरिक्लि-ष्टैरक्षोटैः सार्द्धमानताः" रघुः ।

**आलानिक** त्रि० आलानमिव स्वार्थे विनयादि० ठक् । १आलाने । आलानं बन्धनं प्रयोजनमस्य ठक् । गजबन्धन-साधने काष्ठादौ "आलानिकं स्थाणुमिव द्विपेन्द्रः" रघुः

**आलाप** पु० आ+लप—करणे—घञ् । स्वरसाधनाथ्रे शारिग-मादौ (आलापचारी) "आलापैरिव गान्धर्व्वमदीप्यत पदातिभिः" माघ "आलापैः स्वरसाधनैरक्षरविशेषैः" मल्लि० । भावे घञ् । २कथनमात्रे च" "काव्यालापाश्च ये केचित् गीतकान्यखिलानि च" विष्णुपु० आ+लप—णिच्—अच् । ३परस्परकथने । "अये दक्षिणेन पुष्पवा-टिकामालापइव श्रूयते" शकु० । एकस्य कञ्चित् प्रति कथने तेन तत्कथनप्रेरणात् त प्रति कथ्यते इति परस्परकथनस्य इतरेतरकथनप्रयोज्यत्वात्तथात्वम् ।

**आलापन** न० आ+लप—णिच्—करणे ल्युट् । १परस्पर कथोपकथने आभाषणे आलापशब्दोऽस्य प्रवृत्तिहेतुत्व-मुक्तम् "स्यादालापनमाभाषः" इत्यमरः २स्वस्तिवाचने च "मङ्गलालापनैर्होमैः" रामा० । [ २आभाष्ये

**आलाप्य** त्रि० आ+लप—कर्म्मणि ण्यत् । १कथनीये णिच्—यत् ।

**आलाबु(वू)** स्त्री अलाबु पृ० पूर्व्वपदोदर्षे वा वृद्धिः। (लाउ) तुम्ब्याम् शब्दरत्नावली।

**आलावर्त्त** न० आलं पर्य्याप्तमावर्त्त्यते आ+वृत-णिच् कर्म्मणि-अच्। वस्त्रनिर्म्मिते व्यजने हेम०। [तालवृन्ते न०

**आलास्य** पु० आलं पर्य्याप्तमास्यं यस्य। कुम्भीरे। मा०स०।

**आलि** पु० आलति दृशे समर्थो भवति आ+अल-पर्य्याप्तौ इन्। १वृश्चिके २भ्रमरे ३तज्जातिस्त्रियां स्त्री ङीप्। आलयति भूषयति अलभूषणे-णिच्+इन्। ४सख्यां वयस्यायाम् "असमसमदृशमसी मतालिपरिवेष्टिता। वर न वहते राजन्। भूमिर्नेरवधूरिव" उद्भटः वा ङीप्। आलीत्यप्यत्र। "आलीव मम प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली" नैष०। "तत्कालमालीभिरहृष्यताशम्" नैष०। "सखालि। प्राचीनैः मधुरसुकृतैरद्य फलितम्" उद्भट। "निवार्य्यतामालि! किमप्ययं वटुः" कुमा० "चिरमनुपगतामालीं दृष्ट्वा समञ्जसवाञ्छितम्" सा०द०। "आलति वारयति जलम् आ+अल-इन् वा ङीप्। आगन्तुकस्य खेलस्य च जलस्य निवारके ५सेतौ"। "मतालिपरिवेष्टितेति' आ+अल-पर्य्याप्तौ इन् वा ङीप्। ६पङ्क्तौ श्रेणौ च वनाली नैष० "तोयान्तर्भास्करालीव रेजे मुनिपरम्परा" कुमा० लीनामालीमिव तरवीचिमाणाः" माघः। ७रेखायाञ्च स्त्री वा ङीप् "विषमच्छदिचन्द्रनालिना" माघ०। ८सुखान्तःकरणे ९अनर्थे च त्रि० मेदि०।

**आलिगव** पुंस्त्री अलिगोरपत्यं गर्गा० यञ्। आलिगुसनेरपत्ये स्त्रियां यञन्तत्वात् ष्फ षित्वात् गौरा० ङीष्। आलिगव्यायनी।

**आलिङ्गन** न० आ+लिगि-ल्युट्। आश्लेषणे अङ्गेनाङ्गसंयोजनभेदे। "आलिङ्गनान्यधिकृता स्फुटमापुरेव" माघ। "प्रियालिङ्गननिर्वृतिम्" रघु। तच्च अष्टधा। आमोदालिङ्गनं उद्दिष्टालिङ्गनं नगालिङ्गनं मानसालिङ्गनं रूप्यालिङ्गनम् मदनालिङ्गनम् विनोदालिङ्गनमिति भेदात्।

**आलिङ्गित** त्रि० आ+लिगि-कर्म्मणि क्त। १आश्लिष्टे "तरुणयालिङ्गित कण्ठे नितम्बस्थाममाश्रितः" सा०द०। टीकाष्टतमहेलिका "योगीनाम्यमितोमत न परिचस्-नालिङ्गिता कामिनी कृत्य जन्म निरर्थकं चितिमलोऽरण्ये यथा मालती" सा०द०। "विश्वस्यामिन्त्र्यमर्य्योयः सादालिङ्गितो द्युमी" तन्त्रसारोक्ते विंशत्यक्षरावधि लिं शद्रक्षरके २मन्त्रभेदे पु०

**आलिङ्गिन्** त्रि० आ-लिगि-णिनि। आलिङ्गनकर्त्तरि स्त्रियां ङीप्।

**आलिङ्ग्य** पु० आ+लिगि-ण्यत्। आलिङ्गनीये मित्रादौ २आलिङ्ग्य वादनीये मृदङ्गभेदे पु० स च "यवमध्यस्त्वलिङ्ग्योऽत्र ह्यान्मुखे चैकाङ्गुलेन च। यवाकृतिस्तु आलिङ्ग्य आलिङ्ग्य स हि गद्यते" इति सङ्गीतदामोदरलक्षणः। आ+लिगि-ल्यप्। २आश्लिष्येत्यर्थे अव्य०

**आलिङ्ग्यायन** पु० आलिङ्ग्यस्य मृदङ्गभेदस्यायनं यत्र। १ग्रामभेदे तस्यादूरभवं नगरम् अण् वरणा० तस्य लुप्। तद्ग्रामस्यादूरभवे नगरे। "लुपि व्यक्तिवचने' पा० लिलुक्ते' नगरेऽपि पुंस्त्वम्। [इकवृपादे त्रिका०।

**आलिञ्जर** पु० अलिञ्जर एव स्वार्थे अण्। (जाला) मृण्मये

**आलिन्द** पु० अलिन्द एव स्वार्थे अण्। १बहिर्द्वारप्रकोष्ठे २स्वक्षाद्यन्तरयायार्थवेद्याञ्च शब्दर०। ३गृहैकदेशे अमरमा०। स्वार्थे कन्। आलिन्दकः तत्रार्थेषु पु०।

**आलिप** त्रि० आ+लिप-क। आलेपनकारके।

**आलिप्त** त्रि० आ+लिप-क्त। १कृतालेपने २दहनादीपने च

**आलिम्पन** न० आ+लिप-ल्युट् पृ०मुम्। तण्डुलचूर्णमिश्रितोदकेन मङ्गलार्थं दीयमाने आलेपने आदीपने। (आलिपना,) त्रिका०।

**आलीढ** त्रि० आ+लिह-क्त। १आस्वादिते २क्षते "सैन्यान्य मालीढमिवासुरास्त्रैः" रघु। "स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रत। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्य्यय" इत्युक्तलक्षणे अग्रतो दक्षिणं पाद व्यवस्थाप्य वामपादाकुञ्चनेन स्थितिरूपे ३युद्धार्थे धन्विनां स्थानभेदे न०। "चतिवदालीढविशेषशोभिना" रघु। "पायादसीलोत्पलाभा रविशशिविलसत्कुण्डलालीढपादा' तन्त्रसा० रत्नाकालोध्या० अग्निपुराणे तु समपदादीन्यन्यथा निरुक्तानि यथा "अङ्गुष्ठगुल्फपार्ष्ण्यग्रैः श्लिष्टा स्युः सहिता यदि। इष्टं समपदं स्थानमेतल्लक्षणतस्तथा। बाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुबलायतौ। त्रिवितस्त्यन्तरे स्थानमेतद्वैशाखमुच्यते। हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी। चतुर्वितस्त्या विच्छिन्ने तदिदं मण्डलं स्मृतम्। भुजवामपदं पश्चात्, स्तब्धजानूरुदक्षिणम्। वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितम्। एतदेव विपर्य्यस्तं प्रत्यालीढं प्रकीर्त्तितम्" विकटादिस्थानं धन्विस्थानवस्त्रे वक्ष्यते।

"नतांसमाकुञ्चितसव्यपादम्" कुमा० टी० मल्लिनाथेन आकुञ्चितसव्यपादत्वेन आलीढस्थानके स्थितमिति व्याख्यातम्। स्वार्थे कन् तत्रैव। शुभ्रा० पाठात् ढक्। आलीढेय' तद्भवे त्रि०। संज्ञायां कन्। आलीढकम्। धनुषाणां स्थानेषु क्रीड़नभेदे न०

**आलीन** त्रि० आ+ली—कर्त्तरि क्त। १आश्लिष्टे भावे क्त। २संश्लेषे न०। तत्र साधु अण्। ३यक्ष्मे धातुभेदे तस्य धात्वन्तरसंश्लेषकारकत्वात् तथात्वम् संज्ञायां कन्। तत्रैव। तद्वृत्तादि रङ्गशब्दे वक्ष्यते।

**आलु** पु० आलाति आ+ला—मित० डु। अ—उ गिष्ठ रस वा।१पेचके २भेलके शब्दरत्ना० खलत्वादिधानिकायां सनाले ३जलपात्रभेदे (भारी) स्त्री०। ४कन्दभेदे न० राज-नि०। तस्य भेदा नानाविधाः "कन्दो बहुविधो लोके आलुशब्देन भण्यते। कष्ठालु चैव वरटालु पिण्डालु शर्करा-दिकम् वालालु चैवमाद्यं स्यात् तस्य भेदा अनेकशः"। इत्युक्तेः। आलुकशब्दे विवृतिः।

**आलुक** पु० आ+लाति दर्व्वीं कासरोगं वा आ+ला—मित० डु संज्ञायां कन्। १शेषनागे २कासालौ च। आलु+स्वार्थे कन् कन्दभेदे न० तद्भेदगुणादि भा०प्र० उक्तं यथा। "आलुकमथालूकं तत् कथितं वीरसेनक। काष्ठालुकशङ्खालुक-हस्त्यालुकानि कथ्यन्ते। पिण्डालुकमध्वालुकरक्तालुकानि कथितानि" तत्र काष्ठालुकं काठिन्ययुक्त (काठालु) शङ्खालुक श्वेततायुक्त शङ्खाकारम् (शांखआलु) हस्त्यालुक दीर्घतायुक्तं महाशरीरम् (गुवड़ीआलु) पिण्डालुकं वर्त्तुलाकार (सथनी) मध्वालुक माधुर्य्ययुत दीर्घसुखं शर्करालु (शकरकन्द) रक्तालुकं रक्ततायुक्तं (रताल) तेषां गुणास्तत्रोक्ताः "आलुक शीतलं सर्वं विष्टम्भि मधुरं गुरु। सृष्टमूत्रमलं रूक्षं दुर्जरम् रक्तपित्तहृत्। कफानिलकरं बल्यं वृष्यं स्तन्यविवर्द्धनम्"। गौरा० ङीष्। दीर्घाकारशुभ्रयुक्तरक्तालुके स्त्री। "रक्तालुभेदो वा दीर्घा तन्वी च मथितालुकी। आलुकी-वलकृत् स्निग्धा गुर्वी शुक्रकफनाशिनी। विष्टम्भकारिणो-तैले वलिताऽतिबलप्रदा" भावप्र०

**आलुञ्चन** न० आ+लुन्च ल्युट्। उत्पाटने। केशादेः कर्त्तने च। [आलुञ्चितमूर्द्धजा"।

**आलुञ्चित** त्रि० आ+लुन्च—क्त। उत्पाटिते असंयते केशादौ

**आलुण्टन** आ+लुट—ल्युट्। बलादपहरणे (लुट)।

**आलुल** त्रि० आ+लुल—क। उक्तार्थे बलीभूते। भया० म्रर्थे क्यङन्त—आलुलायितः असंयते त्रि०।

**आलू** पु० आलूनाति आ+लू—क्विप्। आलुशब्दार्थे स्वार्थे कन् तत्रैव। "आलुकमथालूकमिति" भाव०प्र०। "आलूकं शीतलं सर्व्वमिति" भाव०प्र० पाठान्तरम्।

**आलून** त्रि० आ+लू—क्त। १ईषच्छिन्ने २सम्यक्छिन्ने च "तेनामरवधूहस्तैः सदयालूनपल्लवाः" कुमा०। [लेखपत्ते।

**आलेख** पु० आ+लिख—घञ्। १सम्यक्लेखने। आधारे घञ्।

**आलेखन** न० आ+लिख—भावे ल्युट्। १सम्यग्लेखे। आ-लिखति ल्यु। २आलेखनकर्त्तरि त्रि०। ३ आचार्ये पु० तस्योपदेशकर्त्तृत्वात्तथात्वम्। "संस्थिते ऽभायती-सवत्सरं गमयेयुरित्यालेखनः"। आश्व०श्रौ०। आलेखन आचार्यः"इति वृत्तिः। करणे ल्युट् लेखनसाधने स्त्रियां ङीप्

**आलेख्य** त्रि० आ+लिख—ण्यत्। चित्रादौ लेख्यदेवादिप्रति-बिम्बे "विधातुमालेख्यमशक्नुवन्तः" माघः "इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः" माघ। "अहोरूपमालेख्यस्य" शकु० २लेखनीये त्रि०। आधारे ण्यत्। ३चित्रे।

**आलेख्यशेष** त्रि० आलेख्यं चित्रमेव शेषो यस्य बहु०। मृते, प्रेम०। मृतस्य हि चित्रे एव प्रकृतिरूपेण अवस्थानात् तथात्वम्। "आलेख्यशेषस्य पितुर्विवेश"। रघुः।

**आलेप** पु० आ+लिप—घञ्। १उपलेपे २आलिम्पने च। (आलिपना) ल्युट् तत्रैवार्थे न०। "जाताताङ्का-रचयति चिरं चन्दनालेपनानि" सा०द०। आलिप्यते कर्म्मणि ल्युट्। ३आलिप्यमाने च।

**आलोक** पु० आलोक्यतेऽनेन आ+लुक—लोक—वा करणे घञ्। (आलो) १सूर्यादिप्रकाशे, "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयो" भाषा० उक्ते चक्षु आलोकसंयोगस्य द्रव्यचाक्षुषप्रत्यक्षे कारणत्वम् इति नैयायिकाः अन्धकारस्य द्रव्यत्ववादिना मते तद्भिन्न-द्रव्यप्रत्यक्षे कारणत्वमिति भेदः। तथाहि मेचकादिचा-क्षुषस्य आलोकसंयोगमन्तरेणैव उत्पत्तिदर्शनात् आलोकसंयोगस्य न सर्व्वत्र कारणत्वमित्यतोऽन्धकारेऽपि तथा कल्प्यमिति। एतदभिप्रायेणैव "दिवान्धा प्राणिनः केचिन्निशान्धाश्चाथा परे। केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टय इति" देवीमा० केषाञ्चिद्दिवान्धत्वोक्तिः। "आलोकमार्गं सहसा व्रजन्त्या" कुमा० रघुश्च। भावे घञ्। २दर्शने। "आलोकमात्रेण सुरानशेषान्" कुमा०। "धनुषालोकप्रवर्त्तिना" रघुः। "वैवस्वतं कल्पमेरस्यपार्श्वा-लोकाश्रयोपकृत्" सा०द०। "क्षीणा प्रियालोकफलो हि वेशः" कुमा०। "मलिनो हि यथादर्शो रूपालोकस्य

**आलाबु(बू)** स्त्री अलाबु पृ० पूर्व्वपदोदर्घः वा ऊङ्। (लाउ) तुम्बाम् शब्दरत्नावली।

**आलावर्त्त** न० आलं पर्य्याप्तमावर्त्तं यते आ+वृत-णिच् कर्म्मणि-अच्। वस्त्रनिर्म्मिते व्यजने हेम०। [सम्यग्रत्वे न०

**आलास्य** पु० आलं पर्य्याप्तमास्यं यस्य। कुम्भीरे। शब्दच०।

**आलि** पु० आलति दृढे समर्थो भवति आ+अल-पर्य्याप्तौ इन्। १वृश्चिके २भ्रमरे ३तज्जातिस्त्रियां स्त्री ङीप्। आलयति भूषयति अलभूषणे-णिच्+इन्। ४सख्यां वयस्यायाम् "अवसन्नवद्रुमरसा शतालिपरिसेविता। फर न सहते राजन्। भूमिर्मेध्यधूरिव" उद्भट वा ङीप्। आलोत्यप्यत्र। "आलीव यस्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली" नैष०। "ततृकालमालीभिरहस्यतालम्" नैष० "ससालि। माधीने. मधुरसलतैरद्य फलितम्" उद्भट। "निवार्य्यतामालि! किमप्ययं बटु" कुमा० "स्मितसुमगतामाली दृष्ट्वा सलज्जमवस्थितम्" सा०द०। "आलति वारयति जलम् आ+अल-इन् वा ङीप्। आगन्तुकस्य चेतस्यस्य च जलस्य निवारके ५सेतौ"। "शतालिपरिसेवितेति" आ+अल-पर्य्याप्तौ इन् वा ङीप्। ६वलतौ श्रेणौ च वनाली नैष० "तोयान्तर्भास्करालीव रेजे मुनिपरम्परा" कुमा० सीमामालीमिव तरसोविभ्राणाः" माघ। ७रेखायाञ्च स्त्री वा ङीप् "विषमश्लिष्टचन्द्रमालिका" माघ। ८शुद्धान्तःकरणे ९अनर्थे च त्रि० मेदि०।

**आलिगव्य** पुंस्त्री अलिगोरपत्यं गर्गा० यञ्। अलिगुमनेरपत्ये स्त्रियां यञन्तत्वात् ष्फ. षित्वात् गौरा० ङीप्। आलिगव्यायनी।

**आलिङ्गन** न० आ+लिगि-ल्युट्। आश्लेषणे अङ्गेनाङ्गसंयोजनभेदे। "आलिङ्गनान्यधिकताः स्फुटमापुरेव" माघ "प्रियालिङ्गननिर्वृतिम्" रघुः। तच्च अष्टधा। आमोदालिङ्गनं छुरितालिङ्गनं भेदालिङ्गनं आस्यालिङ्गनं रुष्यालिङ्गनम् मदनालिङ्गनम् विमोदालिङ्गनमिति भेदात्।

**आलिङ्गित** त्रि० आ+लिगि-कर्म्मणि क्त। १आश्लिष्टे "तरुणालिङ्गित कण्ठे नितम्बस्थामभाश्रित:" सा०द० टीकाधृतमल्लिका "योगोमाप्यसितोमत न चरितम्—नालिङ्गिता कामिनी इत्थं जन्म निरर्थकं स्थितमहोऽरण्ये यथा मालती" सा०द०। "विधास्यखात्रिं यदयोयः स्यादालिङ्गितो द्वयौ" तन्त्रसारोक्ते विंशाक्षरात्मके त्रिं मृदङ्गकरके २तस्मिन्भेदे पु०

**आलिङ्गिन्** त्रि० आ-लिगि-णिनि। आलिङ्गनकर्त्तरि स्त्रियां ङीप्।

**आलिङ्ग्य** पु० आ+लिग-ण्यत्। आलिङ्गनीये मिदाटौ २आलिङ्ग्य वादनीये मृदङ्गभेदे पु० स च "भाण्डप्रमाणो ऽङ्गुष्ठाङ्गुले पंकाङ्गुलेन यः। यवाकृतिःस आलिङ्ग्य आलिङ्ग्य स हि वाद्यते" इति शब्दार्णवोक्तलक्षणः। आ+लिगि-ल्यप्। ३आश्लिष्येत्यर्थे अव्य०

**आलिङ्ग्यायन** पु० आलिङ्ग्यस्य मृदङ्गभेदस्यायनं यत्र। १ग्रामभेदे तस्यादूरभवं नगरम् अण् वरणा० तस्य लुप्। तद्ग्रामस्यादूरभवे नगरे। "लुपि व्यक्तिवचने" पा० विलुप्ते नगरेऽपि पुंस्त्वम्। [ हस्तमात्रे त्रिका०।

**आलिञ्जर** पु० अलिञ्जर एव स्वार्थे अण्। (जाला) मृत्पात्रे

**आलिन्द** पु० अलिन्द एव स्वार्थे अण्। १बहिर्द्वारप्रकोष्ठे २गृहाभ्यन्तरपर्य्यायवेद्याञ्च शब्दर० ३गृहैकदेशे अमरटी०। स्वार्थे कन्। आलिन्दक तेष्वर्थेषु पु०।

**आलिप** त्रि० आ+लिप-क। आलेपनकारके।

**आलिप्त** त्रि० आ+लिप-क्त। १कृतालेपने २दत्तादीपने च

**आलिम्पन** न० आ+लिप-ल्युट् ह०मुम्। तण्डुलचूर्णमिश्रितोदकेन मङ्गलार्थं दीयमाने आलेपने आदीपने। (आलिपना) त्रिका०।

**आलीढ** त्रि० आ+लिह-क्त। १आस्वादिते २क्षते "सैन्यान्यमालीढमिवासुरास्त्रैः" रघु। "स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्य्यये" इत्युक्तलक्षणे अग्रतो दक्षिणं पादं व्यवस्थाप्य वामपादाकुञ्चनेन स्थितिरूपे २युद्धार्थे धन्विना स्थानभेदे न०। "अतिष्ठदालीढविशेषशोभिना" रघु। "पायात्सोऽलीढपत्राभा रविशशिविलसत्कुण्डलालीढपादा" तन्त्रसा० रक्षाकालीध्या० अग्निपुराणे तु समपदादीन्यन्यथा निरुक्तानि यथा "अङ्गुष्ठगुल्फपार्ष्ण्यग्राः श्लिष्टाः स्युः सहिता यदि। दृष्टं समपदं स्थानमेतल्लक्षणतस्तथा। वाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुबलायतौ। त्रिवितस्त्यन्तरे स्थानमेतद्वैशाखमुच्यते। हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी। चतुर्वितस्त्या विच्छिन्ने तदिदं मण्डलं स्मृतम्। भुग्नवामपदं पश्चात् स्तब्धजानूरुदक्षिणम्। वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितम्। एतदेव विपर्य्यस्तं प्रत्यालीढं प्रकीर्त्तितम्" विकटादिस्थानं धन्विस्थानशब्दे वक्ष्यते।

"नतांसमाकुञ्चितसव्यपादम्" कुमा० टी० मल्लिनाथेन आकुञ्चितसव्यपादत्वेन आलीढस्थानके स्थितमिति व्याख्यातम्। स्वार्थे कन् तत्रैव। शुभ्रा० पाठात् ढक्। आलीढेयः तद्भवे त्रि०। संज्ञायां कन्। आलीढकम्। धनुष्मतां स्थानेषु क्रीडनभेदे न०

**आलीन** त्रि० आ+ली—कर्त्तरि क्त। १आश्लिष्टे भावे क्त। २संश्लेषे न०। तत्र साधु यत्। ३वङ्गे धातुभेदे तस्य धात्वन्तरसंश्लेषकारकत्वात् तथात्वम् संज्ञायां कन्। तत्रैव। तद्गुणादि रङ्गशब्दे वक्ष्यते।

**आलु** पु० आलाति आ+ला—मित० डु। अ—उ पित्र रस्य लः वा। १पेचके २भेलके शब्दरत्ना० सत्यधारिधानिकायां स्त्रा०३ जलपात्रभेदे (झारी) स्त्री०। ४कन्दभेदे न० राजनि०। तस्य भेदा नानाविधाः "कन्दो बहुविधो लोके आलुशब्देन भण्यते। कष्ठालु चैव वल्ल्यालु पिण्डालु शर्करादिकम् काष्ठालु चैवमाद्यं स्यात् तस्य भेदा अनेकशः"। इत्युक्तेः। आलुकशब्दे विवृतिः।

**आलुक** पु० आ+लाति दृष्टौ कासरोगं वा आ+ला—मित०डु संज्ञायां कन्। १शेषनागे २कासालौ च। आलु+स्वार्थे कन् कन्दभेदे न० तद्भेदगुणादि भा०प्र० उक्तं यथा। "आलुकमप्यालूकं तत् कथितं वीरसेनस्य। काष्ठालुकशङ्खालुक-हस्त्यालुकानि कथ्यन्ते। पिण्डालुकमध्यालुकरक्तालुकानि कथितानि" तत्र काष्ठालुकं काठिन्ययुक्त (कठालु) शङ्खालुकं श्वेततायुक्तं शङ्खाकारम् (शाखआलु) हस्त्यालुकं दीर्घतायुक्तं महाशरीरम् (घुवड़ोआलु) पिण्डालुकं वर्त्तुलाकार (सुथनी) मध्यालुकं माधुर्य्ययुतं दीर्घसखं शर्करालु (शकरकन्द) रक्तालुकं रक्ततायुक्त (रतालु) तेषां गुणास्तत्रोक्ताः "आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु। सृष्टमूत्रमलं रूक्षं दुर्जरम् रक्तपित्तहृत्। कफानिलकरं बल्यं वृष्यं स्तन्यविवर्द्धनम्"। गौरा० ङीष्। दीर्घाकारगुणयुक्तरक्तालुके स्त्री। "रक्तालुभेदो वा०दीर्घा तन्वी च प्रथितालुकी। आलुकीवलकृत् स्निग्धा गुर्व्वी स्तृतकफनाशिनी। विष्टम्भकारिणी-तैले तलिताऽतिरुचिप्रदा" भावप्र०

**आलुञ्चन** न० आ+लुञ्च ल्युट्। उत्पाटने। केशादे-स्त्वपाटित्वे च। [आलुञ्चितसूर्द्धजा"।

**आलुञ्चित** त्रि० आ+लुचि—क्त। उत्पाटिते असंयते केशादौ

**आलुण्ठन** आ+लुटि—ल्युट्। बलादपहरणे (लुट्)।

**आलुल** त्रि० आ+लुल—क। उन्मुक्ते चलीभूते। भया०प्रर्थे कयङ्क—आलुलायितः असंयते त्रि०।

**आलू** पु० आलूनाति आ+लू—क्विप्। आलुशब्दार्थे स्वार्थे कन् तत्रैव। "आलुकमप्यालूकमिति" भाव०प्र०। "आलूकं शीतलं सर्व्वमिति" भाव०प्र० पाठान्तरम्।

**आलून** त्रि० आ+लू—क्त। १ईषच्छिन्ने २सम्यक्छिन्ने च "तेनामरवधूहस्तैः सदयालूनपल्लवाः" कुमा०। [लेखपत्रे।

**आलेख** पु० आ+लिख—घञ्। १सम्यक्लेखने। आधारे घञ्।

**आलेखन** न० आ+लिख—भावे ल्युट्। १सम्यग्लेखे। आलिखति ल्यु। २आलेखनकर्त्तरि त्रि०। ३ आचार्य्ये पु० तस्योपदेशकर्त्तृत्वात्तथात्वम्। "संस्थिते ऽप्यायतीअवध्यं गमयेयुरित्यालेखनः"। आश्व०श्रौ०। आलेखन आचार्य्यः" वृत्तिः। करणे ल्युट् लेखनसाधने स्त्रियां ङीप्।

**आलेख्य** त्रि० आ+लिख—ण्यत्। चित्रादौ लेख्यदेवादिप्रतिबिम्बे "विधातुमालेख्यमशक्नुवन्तः" माघः "इति संरम्भिणो वाणीबलस्यालेख्यदेवताः" माघ। "अहोरूपमालेख्यस्य" शकु० २लेखनीये त्रि०। आधारे ण्यत्। ३चित्रे।

**आलेख्यशेष** त्रि० आलेख्यं चित्रमेव शेषो यस्य बहु०। मृते, प्रेत०। मृतस्य हि चित्रे एव प्रतिकृतिमेव अवस्थानात् तथात्वम्। "आलेख्यशेषस्य पितुर्विवेश"। रघुः।

**आलेप** पु० आ+लिप—घञ्। १उपलेपे २आलिम्पने च। (आलिपना) ल्युट् तत्रार्थे न०। "जातानाह्लादयति चिरं चन्दनालेपनानि" सा०द०। आलिप्यते कर्म्मणि ल्युट्। ३आलिप्यमाने च।

**आलोक** पु० आलोक्यतेऽनेन आ+लुक—लोक—वा करणे घञ्। (आलो) १सूर्य्यादिप्रकाशे, "स्पृशन्ति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" भाषा० उक्तं आलोकसंयोगस्य द्रव्यचाक्षुषप्रत्यक्षे कारणत्वम् इति नैयायिकाः अन्धकारस्य द्रव्यत्ववादिना मते तद्भिन्नद्रव्यप्रत्यक्षे कारणत्वमिति भेदः। तथाहि पेचकादिचक्षुषस्य आलोकसंयोगमन्तरेणैव उत्पत्तिदर्शनात् आलोकसंयोगस्य न सर्व्वत्र कारणत्वमित्यतोऽन्धकारेऽपि तथा कल्प्यमिति। एतदभिप्रायेणैव "दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे। केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टय इति" देवीमा०केषाञ्चिद्दिवान्धत्वोक्तिः। "आलोकमार्गं सहसा व्रजन्त्या" कुमा० रघुश्च। भावे घञ्। २दर्शने। "आलोकमात्रेण सुरानशेषान्" कुमा०। "मधुपालोकप्रवर्त्तिना" रघु। "वैवस्वतं कम्पवेरसपार्श्वा-लोकास्त्रयोपपत्तत्" सा०द०। "स्त्रीणां प्रियालोकफलो हि वेशः" कुमा०। "मलिनो हि यथादर्शो ह्यात्मालोकस्य

